॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥



श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

**संपुटम् ६ – जन्माधिकरणात् अधिकरणचतुष्टयम्**


प्रकाशनम्

**श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्**

श्रीमन्मध्वाचार्यमूलमहासंस्थानम्, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।।

श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

## परिमळाद्युपेता

सम्पुटम् – ६

## जन्माधिकरणात् अधिकरणचतुष्टयम्

प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीमन्मध्वाचार्यमूलमहासंस्थानम्

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



| | |
|---|---|
| **श्रीमन्न्यायसुधा** | **Śrīman-Nyāyasudhā** |
| परिमळाद्युपेता | Parimaḷādyupetā |
| **सम्पुटम् – ६** | **Volume - 6** |
| प्रथमं मुद्रणम् - ई.सन् २००५ | First Edition -2005 A.D. |

पार्थिव संवत्सर, शके १९२७, ज्येष्ठ कृष्ण त्रयोदशी, सोमवासरः

श्री विजयीन्द्रतीर्थस्वामिनां आराधनामहोत्सवः


*Published by :*

**Śrī Gurusārvabhauma Saṁskṛt Vidyāpīṭham**

**Śrīman Madvāchārya Mūla Mahāsamsthāna**

**Śrī Rāghavendra Swāmy Mutt**

Mantrālayam - 518 345

India.

✻ मुद्रकः ✻

धनंजयाचार्य बाळाचार्य वरखेडकरः

| | |
|---|---|
| **सुधा मुद्रणम्** | **SUDHA MUDRANA** |
| शंकरपुरम्, बेंगळूर - ५६० ००४ | Shankarpuram, Bangalore - 560 004 |
| दूरवाणी– २६६७६९४२, ५७६० २८३६ | Phone : 2667 6942, 5760 2836 |



# समर्पणपत्रिका

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यमन्दबिरुदवृन्दविभूषित-
सर्वतन्त्रस्वतन्त्र-श्रीमद्वैष्णवसिद्धान्तस्थापनाचार्य-
षड्दर्शनाचार्यवर्य-नास्तिकदर्शननिराकरणधुरन्धर-
आस्तिकदर्शनमहाचार्य-
श्रीमन्मूलरघुपतिवेदव्यासदेवदिव्यश्रीपादपद्माराधक-

**श्रीमन्मध्वाचार्यसमलंकृतमूलमहासंस्थानाधिष्ठितानां**

श्रीमद्द्वैतसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वराणां
परमपूज्यानां कामधेनुकल्पवृक्षसदृशानां

**श्रीश्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानां**

हृत्कमलनिवासि-

**श्रीरामकृष्णवेदव्यासाभिन्न-**

**श्रीमूलरघुपतिपादकमलयोः**

समर्पितोऽयं ग्रन्थः ॥

सुजयीन्द्रकृपापूर्णसुशमीन्द्रयतीश्वरैः ।
श्रीमन्न्यायसुधाग्रन्थ अर्पितोऽयं मुदा हरेः ॥

  



॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्धंसनामकपरमात्मसमारब्धपरम्परागत-श्रीमत्परमहंसेत्यादिबिरुदभूषित-

श्रीमदानन्दतीर्थभगवत्पादाचार्य-मूलमहासंस्थानाधीश्वर-

**श्रीमद्राघवेन्द्रगुरुसार्वभौम-**

वेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वर-

**श्रीमत्सुयमीन्द्रतीर्थश्रीपादकरकमलसञ्जात-**

**श्रीमत्सुजयीन्द्रतीर्थश्रीपादवरकुमारक-**

**श्री श्रीमत्सुशमीन्द्रतीर्थश्रीपादानाम्**

# अनुग्रहवचनम्

अस्मत्प्रियशिष्यान् तथैव अस्मन्मठीयान् नैकान् आस्थानविद्वज्जनान् वयं अस्मद्गुरुवराणां श्रीमत्सुजयीन्द्रतीर्थश्रीमच्चरणानामाज्ञामनुरुद्ध्य परिमलादि-बहुटिप्पणीभिर्युक्तां श्रीमन्न्यायसुधां संशोध्य प्रकाशयितुमादिष्टवन्तः स्मः।

अस्मदादेशमनुरुध्य ग्रन्थमिमं संशोध्य मुद्रणप्रतिमपि संशोधितवद्भ्यः प्रधानसम्पादकेभ्यः वैकुण्ठवासिभ्यः साणूरु भीमभट्टेभ्यः तथा ग्रन्थमिमं प्रकाशितवद्भ्यः श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयेभ्यः एवं ग्रन्थसंशोधने तथा मुद्रणप्रतिसंशोधने सहायमाचरितवद्भ्यः अस्मद्विद्यापीठाध्यापकेभ्यः, तथाऽन्येभ्यो विद्वद्भ्यः, एवमल्पकाले सुष्ठु मुद्रणं कृतवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः धनंजयाचार्येभ्यः तथा सर्वेभ्यः एतद्ग्रन्थाध्ययन-अध्यापनादिकर्तृभ्यः अस्मदुपास्यः श्री श्रीमद्राघवेन्द्र-तीर्थगुर्वन्तर्गत-श्रीभारतीरमण-मुख्यप्राणान्तर्गतः श्रीसीतापतिः श्रीमूलरामचन्द्रदेवः इतोऽप्यतिशयिता-युरारोग्यैश्वर्यादीनि, ज्ञानभक्तिवैराग्यादीनि च दत्वा अनुगृह्णातु इत्याशास्महे ।

*इति नारायणस्मृतिः।*

मन्त्रालयक्षेत्रम्,<br>
पार्थिव संवत्सर<br>
ज्येष्ठ शुक्ल तृतीया



श्रीमन्मध्वाचार्यमूलमहासंस्थान-श्रीराघवेन्द्रस्वामिमठाधीशानां

श्री श्री सुजयीन्द्रतीर्थश्रीपादानां वरकुमारकाणां

## श्री श्री सुशमीन्द्रतीर्थश्रीपादानां

परमानुग्रहेण सम्पादितोऽयं ग्रन्थः ।

# सम्पादकविद्वन्मण्डली

**प्रधानसम्पादकाः**

## वैकुण्ठवासिनः श्री आचार्य साणूरु भीमभट्टाः

आस्थानविद्वांसः, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

**सम्पादकाः**

विद्वान् श्री कु. सुशीलेन्द्राचार्याः, *प्रांशुपालाः श्री गु.सं.वि., मन्त्रालयः*

विद्वान् श्री एन्. वादिराजाचार्याः

विद्वान् श्री पुराणिक सुब्रह्मण्याचार्याः

विद्वान् आहिताग्नि श्री वरखेडकर भीमसेनाचार्याः

**निर्वाहकाः**

## श्रीपादपुत्राः राजा एस्. राजगोपालाचार्याः

श्री श्री सुशमीन्द्रतीर्थश्रीपादानां आप्तकार्यदर्शिनः,

श्रीमन्मध्वाचार्यमूलमहासंस्थान-श्रीराघवेन्द्रस्वामिमठः,

मन्त्रालयः



# श्रीमन्न्यायसुधा

## परिमळाद्युपेता

### टिप्पणीनां क्रमः तथा सङ्क्षिप्तनामानि

| क्र.सं. | कर्तृनाम | टिप्पणीनाम | सङ्क्षिप्तनाम |
|---|---|---|---|
| १ | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः | बिन्दुः— |
| २ | श्री राघवेन्द्रतीर्थाः | परिमळः | परि०— |
| ३ | श्री श्रीपादराजतीर्थाः | वाग्वज्रः | वाग्वज्रः— |
| ४ | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका | गु०दी०— |
| ५ | श्री यदुपत्याचार्याः | टिप्पणी | यादु०— |
| ६ | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः | वं०प०— |
| ७ | श्री गलगली नरसिंहाचार्याः | आनन्दः | आनन्दः— |
| ८ | श्री कंबालूरु रामचन्द्रतीर्थाः | विवृतिः | कं०रा०— |
| ९ | श्री श्रीनिधितीर्थाः | टिप्पणी | श्रीनिधि०— |
| १० | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका | वा०चं०— |
| ११ | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका | शे०चं०— |
| १२ | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला | वा०र०— |
| १३ | श्री सत्यव्रततीर्थाः | सुधाविवृतिः | स०व्र०— |
| १४ | श्री कुण्डलगिरिआचार्याः | रसकूलङ्कषः | कुण्डल०— |
| १५ | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः | स०ना०— |
| १६ | श्री विठ्ठलभट्टाः | टिप्पणी | विठ्ठ०— |
| १७ | श्री विष्णुतीर्थाः | रसरञ्जनी | रस०— |
| १८ | श्री अडवी कृष्णाचार्याः | लघुरसरञ्जनी | ल०र०— |
| १९ | श्री मन्नारी कृष्णाचार्याः | चषकः | चषकः— |
| २० | श्री एरी बाळाचार्याः | उपस्पर्शः | ए०बा०— |
| २१ | श्री काशी आचार्याः | काशी टिप्पणी | काशी०— |
| २२ | श्री गूढकर्तृकाचार्याः | गूढकर्तृका | गूढ०— |
| २३ | श्री प्रदीपकाराः | प्रदीपः | प्रदीपः— |
| २४ | श्री पांघ्री श्रीनिवासाचार्याः | टिप्पणी | पांघ्री०— |
| २५ | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि | हुग्गि०— |



# टिप्पणीविषये स्पष्टीकरणम्

श्रीमज्जयतीर्थविरचितं महामेरुतुल्यं श्रीमन्न्यायसुधाग्रन्थमनेके व्याचख्युः। साम्प्रतमस्माभिः, उपलब्धाः श्रीमन्न्यायसुधाव्याख्याः सङ्गृह्यैकत्र मुद्रापयितव्याः इत्येकमात्रोद्देशेन अनेकव्याख्यासहिततया श्रीमन्न्यायसुधाग्रन्थः मुद्रापितः।

श्रीमद्विजयीन्द्रतीर्थश्रीपादानां श्रीमद्राघवेन्द्रतीर्थश्रीपादानां च सुधाव्याख्यानयोः इदानीं मुद्रापितायां यस्यां कस्याञ्चित् सुधाव्याख्यायां यस्मिन् कस्मिंश्चिद्विषये भिन्नाभिप्राये सति (विरुद्धाभिप्राये सति) सः तद्व्याख्यातॄणामभिप्राय एव। सः श्रीमद्विजयीन्द्रतीर्थश्रीपादानां वा परिमलकाराणां वा सम्पादकानां वा प्रकाशकानां वा सम्मत इति न मन्तव्यमिति एतन्मूलकतया स्पष्टीकुर्मः।

इत्थम्

**सम्पादकाः**



॥ श्रीमन्मूलरामो विजयते ॥

# प्रकाशकीयम्

द्वापरे श्रीगौतममहर्षिभिः शप्तेषु साधुजनेषु व्याकुलीभूतेषु श्रीब्रह्मरुद्रेन्द्रादिभिः प्रार्थितो भगवान्नारायणः श्रीवेदव्यासत्वेनावतीर्य राशीभूतान् वेदान् विभज्य, वेदार्थनिर्णायकानि (५६४) चतुःषष्ट्यधिकपञ्चशत-ब्रह्मसूत्राणि व्यरचयत्।

एषां ब्रह्मसूत्राणां श्रीवाय्ववतारिणः सर्वज्ञाः श्रीमदानन्दतीर्थभगवत्पादाः भाष्यं, श्रीमदनुव्याख्यानं, न्यायविवरणं, अणुभाष्यं चेति ग्रन्थचतुष्टयं विरचय्य महदुपाकुर्वन्।

श्रीमदाचार्याणां प्रियान्तेवासिनां श्रीत्रिविक्रमपण्डिताचार्याणां "व्यक्ततर्कततिं कुरु" इति प्रार्थनामनुरुध्य श्रीमदाचार्याः उपर्युक्तग्रन्थेष्वन्यतमं श्रीमदनुव्याख्यानग्रन्थं रचयामासुः।

अनुव्याख्यानस्यास्य इन्द्रांशसंभूताः श्रीमज्जयतीर्थश्रीमच्चरणाः श्रीमन्न्यायसुधानाम्नीं मेरुतुल्यामनुपमां टीकां व्यरचयन्।

ग्रन्थोऽयं चित्रपदपुञ्जमण्डितः, महागाम्भीर्यवान् महापण्डितवरेण्यानामपि महान्तं गर्वपर्वतं खण्डयितुं दक्षश्चकास्ति।

अस्यामोघस्य ग्रन्थस्य महत्त्वम् एतद्ग्रन्थस्य एतदीयानामनेकासां व्याख्यानां सङ्ख्यैव व्यञ्जयति।

| | व्याख्यातारो महाभागाः | व्याख्यानस्य नाम |
|---|---|---|
| १) | श्री श्रीपादराजतीर्थाः | वाग्वज्रम् |
| २) | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः |
| ३) | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका |
| ४) | श्री राघवेन्द्रतीर्थाः | परिमलः |
| ५) | श्री यदुपत्याचार्याः | टिप्पणी |
| ६) | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः |
| ७) | श्री गलगली नरसिंहाचार्याः | आनन्दः |
| ८) | श्री कंबालूरु रामचन्द्रतीर्थाः | विवृतिः |
| ९) | श्री श्रीनिधितीर्थाः | टिप्पणी |
| १०) | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका |



| | | |
|---|---|---|
| ११) | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला |
| १२) | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका |
| १३) | श्री कुण्डलगिरि आचार्याः | रसकूलङ्कषः |
| १४) | श्री सत्यव्रततीर्थाः | सुधाविवृतिः |
| १५) | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः |
| १६) | श्री विठ्ठलभट्टाः | टिप्पणी |
| १७) | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि |
| १८) | श्री विष्णुतीर्थाः | रसरञ्जनी |
| १९) | श्री अडवि कृष्णाचार्याः | लघुरसरञ्जनी |
| २०) | श्री मन्नारि कृष्णाचार्याः | चषकः |
| २१) | श्री एरी बाळाचार्याः | उपस्पर्शः |
| २२) | श्री काशी तिम्मणणाचार्याः | काशी टिप्पणी |
| २३) | श्री गूढकर्तृकटिप्पणीकाराः | टिप्पणी |
| २४) | श्री प्रदीपकाराः | प्रदीपः |
| २५) | श्री पांग्री श्रीनिवासाचार्याः | टिप्पणी |
| २६) | श्री रोट्टि वेङ्कटभट्टाः | सुधाविवृतिः |
| २७) | श्री ताम्रपर्णी आचार्याः | टिप्पणी |
| २८) | श्री उमर्जी प्रह्लादकृष्णाचार्याः | उमर्जी |
| २९) | श्री व्यासतत्त्वज्ञतीर्थाः | कुलिशम् |
| ३०) | श्री महेश्वरसूरिः | टिप्पणी |
| ३१) | श्री पुट्ट तंबि आचार्याः | टिप्पणी |
| ३२) | श्री रत्नगर्भ ओडेयर् | टिप्पणी |
| ३३) | श्री अनन्तभट्टाः | टिप्पणी |
| ३४) | श्री सत्यनाथाचार्याः | टिप्पणी |
| ३५) | श्री जयवेङ्कटाचार्याः | टिप्पणी |
| ३६) | श्री गूढकर्तृकाचार्याः | सुधासारसङ्ग्रहः |
| ३७) | श्री गलगली गोविन्दाचार्याः | पञ्चरत्नस्तबकः |
| ३८) | श्री श्रीमुष्णाचार्याः | पञ्चाधिकरणी |
| ३९) | श्री लिङ्गेरि श्रीनिवासाचार्याः | सिद्धान्तप्रभा |
| ४०) | श्री पाण्डुरङ्गि केशवाचार्याः | सुधावाक्यार्थविनोदः |
| ४१) | श्री उडुपि राघवेन्द्रतीर्थाः (पुत्तिगे मठः) | टिप्पणी |



| | | |
|---|---|---|
| ४२) | श्री सत्यनाथाः | न्यायसुधापरशुः |
| ४३) | श्री सुमतीन्द्रतीर्थाः | भावरत्नकोशः |
| ४४) | श्री पाण्डुरङ्गि केशवाचार्याः | मञ्जरी |
| ४५) | श्री व्यासतत्त्वज्ञतीर्थाः | लघुरसरञ्जनी |
| ४६) | श्री व्यासतत्त्वज्ञतीर्थाः | गुरुरसरञ्जनी |
| ४७) | श्री भीमराव् कुलकर्णी कुम्बारगेरी | टिप्पणी |
| ४८) | श्री सत्यपराक्रमतीर्थाः | सुधाफक्किका |
| ४९) | श्री हुलिगि श्रीपत्याचार्याः | टिप्पणी |
| ५०) | श्री अहोबिलाचार्याः | टिप्पणी |
| ५१) | श्री सत्यप्रज्ञतीर्थाः | टिप्पणी |

एतादृशस्य अत्युत्तमग्रन्थस्य मुद्रणकार्यं श्रीमत्परमपूज्यानां प्रातःस्मरणीयानां श्रीमत्सुजयीन्द्रतीर्थ-श्रीमच्चरणानामादेशं सदिच्छां चानुरुध्य सम्प्रति श्रीराघवेन्द्रस्वामिमठीयपीठाधीश्वराः पूज्याः श्री १००८ श्रीमत्सुशमीन्द्रतीर्थश्रीपादाः कारयन्तीति अस्माकं परमं प्रमोदस्थानम् ।

अस्य ग्रन्थस्य संशोधनकार्ये अस्मद्विद्यापीठीयप्राच्यग्रन्थालयस्थाः अधोनिर्दिष्टाः टिप्पण्यः हस्तप्रति-कृतयोऽपि उपयोजिता इति निवेदयितुं नितान्तं तुष्यामः ।

संशोधनादिकार्येष्वनुकूलयितुं श्रीसुधाव्याख्यानं श्रीनिधितीर्थीयं तालपत्रस्थं अनुगृहीतवद्भ्यः परम-पूज्येभ्यः श्रीपुत्तिगेमठाधीश्वरेभ्यः सभक्ति प्रणामगणं समर्पयामः । एवमेव मुद्रणकार्येऽस्मिन् साक्षाद्वा परोक्षे वा सहकृतवद्भ्यः परमपूज्येभ्यः श्रीमठाधीश्वरेभ्यः सर्वेभ्यः सभक्तिप्रणामगणं कार्तज्ञ्यमाविष्कुर्मः । श्रीनिधितीर्थीयं व्याख्यानं तालपत्रस्थं तौलवलिपिगतं देवनागरिलिपिगतं कृतवतः विद्वान् श्री साणूरु भीमभट्टतनूजः श्री कृष्णमूर्ति महाशयान् सन्दर्भेऽस्मिन् सप्रश्रयं स्मरामः ।

ग्रन्थस्यास्य प्रधानसम्पादकेभ्यः विद्वद्भ्यः वैकुण्ठवासिभ्यः श्री आचार्य साणूरु भीमभट्टमहाशयेभ्यः तथा एतद्ग्रन्थसम्पादकेभ्यः विद्वद्भ्यः श्री कुरुडि सुशीलेन्द्राचार्येभ्यः, तथा विद्वद्भ्यः आहिताग्नि श्री वरखेडकर भीमसेनाचार्येभ्यः, एवं विठ्ठलभट्टीयां टिप्पणीं तथा एरी बाळाचार्याणां टिप्पणीं दत्तवद्भ्यः विद्वद्भ्यः श्री व्यासनकेरे प्रभञ्जनाचार्येभ्यः, तथा पांग्री श्रीनिवासाचार्याणां टिप्पणीं दत्तवद्भ्यः विद्वद्भ्यः श्री पांग्री लक्ष्मणाचार्येभ्यः, तथा वाक्यार्थरत्नमालां टिप्पणीं, सत्यनाथतीर्थीयां टिप्पणीं, हुग्गि टिप्पणीं च दत्वा उपकृतवद्भ्यः पंढरपुरीय पूर्णप्रज्ञमतोन्नाहिनीपाठशालाप्रांशुपालेभ्यः विद्वद्भ्यः श्री वरखेडकर भीमसेनाचार्येभ्यः, तथा वाक्यार्थरत्नमाला-टिप्पण्याः प्रतिकृत्यन्तरं दत्तवद्भ्यः विद्वद्भ्यः श्री के. टि. पाण्डुरङ्गि महाशयेभ्यः एवमेव प्रदीपटिप्पणीं दत्तवद्भ्यः मद्रपुरसर्वकारीयग्रन्थालयव्यवस्थापकेभ्यः श्रीमद्भ्यः, श्रीमन्न्यायसुधाबिन्दुनाम्नीं टिप्पणीं दत्तवद्भ्यः श्रीमद्भ्यः केरलराज्यीय तिरुवाङ्कूरु ग्रन्थभाण्डारव्यवस्थापकेभ्यः, तथा रसरञ्जनी-लघुरसरञ्जनीद्वयं दत्तवद्भ्यः विद्वद्भ्यः श्री गंगूरु



हनुमेशाचार्येभ्यः, एवं ग्रन्थस्यास्य प्रतिकृति-संशोधने श्रीमद्भिः सम्पादकैः सहकृतवद्भ्यः विद्वद्भ्यः श्री कडपा राघवेन्द्राचार्येभ्यः, विद्वद्भ्यः श्री पुराणिक सुब्रह्मण्याचार्येभ्यः, विद्वद्भ्यः श्री एन्. वादिराजाचार्येभ्यः, विद्वद्भ्यः श्री पुरोहित नरसिंहाचार्येभ्यः, विद्वद्भ्यः श्री अग्निहोत्री वादिराजाचार्येभ्यः, विद्वद्भ्यः श्री गंगूरु हनुमेशाचार्येभ्यः, विद्वद्भ्यः श्री उंदारु पांडुरंग श्रीनिवासमूर्ती आचार्येभ्यः, एवं विशेषतः अल्पीयस्येव काले महता परिश्रमेण सश्रद्धं ग्रन्थानां प्रतिकृति-संशोधने श्रीमद्भिः सम्पादकैः सहकृतवद्भ्यः तथा सर्वाङ्गसौन्दर्येण मुद्राप्य दत्तवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः विद्वद्भ्यः श्री वरखेडकर धनंजयाचार्येभ्यः, तथा ग्रन्थस्यास्य अध्ययनाध्यापनादिकर्तृभ्यः सर्वेभ्यः श्रीभगवान् सीताजानिः श्रीमूल-रघुपतिवेदव्यासः आयुरारोग्यैश्वर्यादीनि चानुगृह्य संरक्षत्विति अनन्यया भक्त्या सम्प्रार्थयामहे ।

अत्र मुद्रापितासु टिप्पणीषु काश्चन टिप्पण्यः प्राचीनहस्तप्रतिरूपेण शिथिलाः मध्ये मध्ये त्रुटिताः कदाचिदसमग्रा अपि तेनैव रूपेण पण्डितैः संशोध्य मुद्रापिताः । अत्र प्रकाशितभागे यदि कुत्रचित् स्खलितानि प्राज्ञैर्विद्वद्भिः विलोकितानि चेत् ते अस्मान्प्रति संसूचयेयुः । तेन वयं शुद्धिपत्रिकायां अग्रिमसम्पुटेषु वा तत्सर्वं समीकृत्य विदुषां पुरः उपस्थापयितुं शक्ष्यामः । येषां समीपे अस्माभिरमुद्रितटिप्पण्यः उपलभ्यन्ते ते कृपया तान् ग्रन्थान् अस्मभ्यं प्रेषयन्ति चेत् तत्सर्वमागामिसम्पुटेषु वयं सम्यक् संशोध्य मुद्रापयितुं महता सन्तोषेण स्वीकुर्मः ।

इत्थम् ।

भवदीयम्

**श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्,**

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः





॥ श्रीमन्मूलरामो विजयते ॥

# प्रस्तावना

**यत्पदं वेदसंवेद्यं कटाक्षेणापि वीक्षितुम्।**
**न क्षमन्ते विमतयः तमुपासे श्रियःपतिम् ॥**

भूर्भुवस्स्वरादिचतुर्दशभुवनात्मकसंख्यातिगब्रह्माण्डकोटीः रोमकूपे सन्निवेश्य सकललोकजनन्या श्रिया सह सर्पतल्पे शयानेन भगवता सृष्टेषु भूलोकखण्डेष्वन्यतमेऽस्मिन् भरतखण्डे जनिमतामस्माकं महद्भागधेयमिदं यदत्र भगवान् तत्तद्युगेष्ववतीर्य बलकार्यं ज्ञानकार्यं च सम्पाद्य स्वभक्तानन्वग्रहीत् । तत्रापीदमतिशयितं वक्तव्येष्वाद्यं वचनं यदत्र तद्भक्ताग्रणीः पावनः पवमानः अनेकधाऽवतीर्य तत्रापि तृतीयेऽवतारे श्रीमध्वनाम्नाऽत्र प्रकटीभूय सज्जनानुददीधरत् । तदीयभक्तानुग्रहकार्येषु आचन्द्रार्कं दीप्यमानानि बहूनि कार्याणि यद्यपि वक्तव्यानि सन्ति तथाऽपि समस्तशास्त्रार्थसारभूतानां श्रीबादरायणसंज्ञकेन श्रीवेदव्यासमहर्षिणा निर्मितानां ब्रह्मसूत्राणां भाष्य-अणुभाष्य-अनुभाष्य-न्यायविवरण-ग्रन्थानां निर्माणमतितरां सर्वैरपि अध्यात्मविद्यारसिकैः विचारविमर्शकैः प्रशंसनीयं सर्वदा स्मरणीयं कार्यमिति निश्चप्रचं दृढतरं वयं वक्तुं शक्नुमः ।

तत्र च सूत्रसंबन्धिग्रन्थचतुष्टये ब्रह्मसूत्र-अनुव्याख्यान-ग्रन्थराजः नभसि नक्षत्रपुञ्जमध्ये चन्द्रमा इव चकास्ति । तस्यास्य ग्रन्थराजस्य इन्द्रावतारभूतैः प्रातःस्मरणीयैः परमपूज्यश्रीजयतीर्थमस्करिवरैः रचितम् अनुव्याख्यानव्याख्यानं न्यायसुधानामकं नैकाभिष्टिप्पणीभिः समलंकृतं श्रीराघवेन्द्रतीर्थगुरुवर्याणां प्रेरणया अनुग्रहेण च इदानीं सम्प्रकाश्य हरिगुरुभक्तानां करकमलयोः समर्पयितुं मोमुद्यते अस्माकं चेतः ।

उपनिषत्प्रस्थान-गीताप्रस्थान-सूत्रप्रस्थाननामकप्रस्थानत्रये सूत्रप्रस्थानमेव अन्तिमं निर्णायकं समस्तैः शिरसा धारणीयं च भवति । किं बहुना समस्तेषु वेदेषु समस्तेषु पुराणेष्वन्यत्राप्यभ्यर्हणीयवैदिकवाङ्मयेषु च उक्तानामर्थानां निर्णयाय सूत्राण्येव अस्माकमवलम्बभूतानि महार्णवे तरतामाधारभूतनौकास्थानीयानि । तेषां सूत्राणां व्याख्यानभूतानुव्याख्यानस्य व्याख्यानरूपा इयं सुधा देवलोकीयसुधातोऽप्यभ्यर्हिततमा जन्ममृत्यु-जरादिकं सर्वमपहृत्य स्वरूपानन्दाविर्भावरूपं मोक्षं दापयितुं समर्था । अस्य ग्रन्थस्य प्रशंसा कथं कार्या, कियती कार्या इत्यादिविषयाः आलोच्यमानाः अस्माकं जिह्वां पुरःसर्तुमेव न मुञ्चन्ति । यतो हि ग्रन्थकाराः श्रीमज्जयतीर्थश्रीमच्चरणाः पूर्वाश्रमे नाममात्रेण गृहस्थाश्रमप्रवेशं लब्ध्वा केनापि अनालोचनीयेन केवलं भगवता क्लृप्तेन घटनाविशेषेण संसारमिमं तुच्छीकृत्य स्वीये तरुणे वयसि संन्यासाश्रमं प्रविश्य स्वगुरूणां विद्यारण्यारण्यच्छेदकानां श्रीमदक्षोभ्यतीर्थगुरुवर्याणां सविधे शुकवत् शिक्षिता भूत्वा स्वीयया अलौकिकप्रज्ञया आचार्याणां अनेकग्रन्थानां टीकाः विरचय्य प्रायः अन्ते इमां न्यायसुधां भक्तेभ्यः नाकीन्द्रः सुधां इव प्रादुः । अस्य ग्रन्थस्य माहात्म्यं शेषोऽपि वर्णयितुं नालम् । बाल्यादारभ्य यौवनपर्यन्तं प्रायः संस्कृतभाषायाः वेदादिशास्त्राणां च परिचयहीना अपि केवलं गुर्वनुग्रहेण शास्त्राण्यभ्यस्य अनन्तरं किञ्चित्समयपर्यन्तं सरस्वतीं संसेव्य तदनुग्रहेण घण्टां (लेखनीं) पूगं च लब्ध्वा



लेखनकार्यं प्रारभन्त जयतीर्थश्रीमच्चरणाः। तत्रापि गुहाया अन्तरुपविश्य पञ्चषशिष्यान् पाठयन्तः स्वयमेव वाणीकृपया लब्धया लेखन्या आचार्याणां ग्रन्थान् व्याख्यान्तः, अनन्तरं तदुपरि पूगेन सम्मार्जनमात्रेण तत्सर्वं त्रुटिलेशरहितं भगवत्कृपया आविर्भावयन्तः ते लोके टीकाचार्याः इत्येव निरुपपदगौरवनाम्ना प्रथिताः बभूवुः।

महानुभावाः जयतीर्थश्रीमच्चरणाः मठीयवैभवादीन् हित्वा शिष्यैः भिक्षया आनीतेन यावनालान्नेन (भक्करि) जीवनं निरवहन्।

महानुभावाः जयतीर्थश्रीमच्चरणाः गुरुभक्तिविषये अन्यादृशम् आदर्शम् अस्माकं पुरतः उपस्थापयामासुः। तद्यथा—

**न शब्दाब्धौ गाढा न च निगमचर्चासु चतुरा**
**न च न्याये प्रौढा न च विदितवेद्या अपि वयम्।**
**परं श्रीमत्पूर्णप्रमतिगुरुकारुण्यसरणिं**
**प्रपन्ना मान्याः स्मः किमपि च वदन्तोऽपि महताम्॥**

अनेन श्लोकेन प्रदर्शितः विनयः अनन्यसाधारणः लोकातिशायी सहृदयान् जिज्ञासून् रोमाञ्चयति। एतदपेक्षया अधिकः गुरुप्रवणः गुरोः दासानुदासः लोके यत्र कुत्रापि नोपलभ्येत इत्येवं सर्वैः सर्वथा अनुभूयते एव।

अल्पीयसा अनेहसा स्वकीयप्रखरबुद्धिवैभवेन निर्मितस्य अस्य सुधाग्रन्थस्य वैशिष्ट्यं वर्णयितुं सहस्रवदनः शेषोऽपि नालम्, किमुत अल्पप्रज्ञाः तृणकल्पाः वयम्। एतदीयग्रन्थस्य माहात्म्यं संवर्णयन् कविरेकः एवमुद्गिरति स्म। यथा—

**आमूलाग्रनिबद्धतर्कजटिलं शब्दैकजीवातुकं**
**मीमांसानुनयं च शङ्करवचो हुङ्कारभङ्गप्रदम्।**
**शास्त्रं तन्त्रचतुष्टयात्मकमिदं निस्स्वप्रतन्त्रान्तराः**
**व्याख्यास्यन्ति पठन्ति वा कथमहो किं वा कलौ दुर्घटम्॥**

'अध्यात्मविद्या विद्यानाम्' इति श्रीकृष्णोक्त्यनुसारेण अद्वितीयाध्यात्मविद्याख्य-सूत्रव्याख्यानरूपा इयं न्यायसुधा नैकाभिष्टिप्पणीभिः सह संयोज्य, संशोध्य, संमुद्र्य अत्र प्रकाशं नीयते। महदिदं साहसकार्यं महापुरुषोत्तमस्य श्रीहरेः अविच्छिन्नभक्ताग्रेसर-श्रीमन्मुख्यप्राणावताराणां श्रीमदानन्दतीर्थभगवत्पादानां परमानुग्रहेणैव सम्पन्नः प्रह्लादावतारभूतानां श्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानाम् आराधनसमये तत्करकमलाभ्यामेव श्रीमन्मूलरामचन्द्रदेवस्य पादकमलयोः तद्भक्तवृन्देन सप्रश्रयं सभक्ति समर्प्यतेतमाम्। श्रीकृष्णार्पणमस्तु॥

**आचार्याः साणूरु भीमभट्टाः**

प्रधानसम्पादकाः



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

**श्रीमज्जयतीर्थयतिकृता**

# श्रीमन्न्यायसुधा

## संपुटम् – ६

## जन्माधिकरणात् अधिकरणचतुष्टयम्

**विषयानुक्रमणिका**





***





✻ ✻ ✻





✻✻✻



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

## जन्माधिकरणात् अधिकरणचतुष्टयम्

### ॥ अथ जन्माधिकरणम् ॥

### ॥ १-१-२ ॥

॥ श्रीगुरुभ्यो नमः ॥

॥ हरिः ॐ ॥

**॥ अथ जिज्ञास्यस्य ब्रह्मणः प्रसिद्ध-लक्षणकथनम् ॥**

१ **सु०— प्रथमसूत्रे विहिता ब्रह्मजिज्ञासा जन्मादिसूत्रैः क्रियते।**

**परि०—** उत्तरसन्दर्भस्य पूर्वानन्तर्ये बीजं वदन्नभिधेयमाह **प्रथमेति**। **विहितेति**। कर्तव्यत्वेन बोधितेत्यर्थः। **जन्मादिसूत्रैरिति**। एतेनेक्षतेरित्यादिसूत्रैर्ब्रह्म विचार्यत इति वदन्तो निरस्ताः। व्यक्तं ह्येतत्समन्वयसूत्रे चन्द्रिकायाम्।

**यादु०—** सङ्गतिं दर्शयति **प्रथमसूत्र इत्यादिना**। **जन्मादिसूत्रैरिति**। 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' इत्येतदन्तैरित्यर्थः।

**आनन्दः—** ननु जन्माद्यस्य इत्यनेन लक्षणकथनमयुक्तम्, प्रतिज्ञाननुगुणत्वात्। ब्रह्मविचारस्य प्रतिज्ञातत्वात् लक्षणविचारस्य चाब्रह्मत्वविचारत्वादित्यत आह **प्रथमसूत्र इति**। तथा च लक्षणविचारस्यापि ब्रह्मविचारत्वाल्लक्षणकथनं युक्तमिति भावः।





**श्रीनिधि०**— प्रथमसूत्रे विहिता ब्रह्मजिज्ञासा जन्मादिसूत्रैः क्रियते **जन्मादिसूत्रैरिति**। जन्मसूत्रमादिर्येषां शास्त्रयोन्यादिसूत्राणां तानीति अतद्गुणसंविज्ञानबहुव्रीहिः।

**वा०चं०**— नन्वन्तःसमुद्रगमित्युत्तरभाष्यमसङ्गतम् । न चोत्तरसूत्रतात्पर्यप्रतिपादनं तदिति वाच्यम् । सन्दर्भसङ्गत्याकाङ्क्षायाः प्राथमिकत्वादुत्तरसूत्रेणावान्तरसङ्गतेश्चावश्यवक्तव्यत्वात् तामनुक्त्वा तात्पर्यमात्रकथने न्यूनत्वापत्तेः इत्यतः स्पष्टत्वात् तत्सन्दर्भसङ्गत्यकथनम् । तात्पर्यकथनेनैवावान्तरसङ्गतिसूचनान्न न्यूनता इत्याशयेन भाष्यकृदभिप्रेतामुभयविधसङ्गतिं दर्शयन्नुत्तरभाष्यमवतारयति **प्रथमसूत्र इति**। **विहितेति**। प्रतिज्ञातेत्यर्थः। एवं च प्रतिज्ञातोक्त्या प्रपञ्च्यप्रपञ्चकभावः सङ्गतिरित्युक्तं भवति। यद्वा विषयादिमत्त्वोपपादनेन कर्तव्यत्वेन प्रतिपादितेत्यर्थः । एवं च प्रथमसूत्राभावे शास्त्रारम्भासिद्ध्या उत्तरसूत्रादिसमस्तशास्त्रस्य प्रथमसूत्रेण हेतुहेतुमद्भावलक्षणा सङ्गतिरिति सन्दर्भसङ्गतिकथनमेतदिति द्रष्टव्यम् ।

**वा०र०**— प्रथमसूत्र इत्यादिना सन्दर्भसङ्गत्यवान्तरसङ्गत्योर्भाष्यकृता अनुक्तयोरपि कथनं मूले कुतः कृतमित्यतः तत्सङ्गमयति **नन्वन्तःसमुद्रगमित्यादिना** । **सन्दर्भेति** । जन्मादिसूत्रादिसमस्तशास्त्ररूपसन्दर्भसङ्गतीत्यर्थः। **उत्तरसूत्रेणेति**। प्रथमसूत्रस्योत्तरभूतजन्मादिसूत्रेणेत्यर्थः। यद्यप्युत्तरसूत्रस्य पूर्वसूत्रेण सङ्गतेरित्येव व्यवहारः प्राप्नोति। तथापि सङ्गतेरुभयधर्मत्वात्पूर्वोत्तरग्रन्थयोः सङ्गतिरित्यपि व्यवहाराच्चोभयथापि व्यवहारोपपत्तिरित्याशयेनोत्तरसूत्रेणेत्युक्तम्। वक्ष्यति च उत्तरसूत्रादिसमस्तशास्त्रस्य प्रथमसूत्रेणेतीति ज्ञेयम्। अत्र सन्दर्भादिसङ्गत्या आकाङ्क्षाया एव प्राथमिकत्वात् सन्दर्भसङ्गतेरुत्तरसूत्रेण अवान्तरसङ्गतेश्चावश्यवक्तव्यत्वात् तामिति पाठः स्वरस एव । सन्दर्भसङ्गत्याकाङ्क्षायास्तात्पर्यकथनापेक्षया प्राथमिकत्वस्य च सन्दर्भावान्तरसङ्गत्योरविशेषेऽपि एकैकत्रैकैकोक्तिः सन्दर्भसङ्गत्याकाङ्क्षाया इत्यत्र अवान्तरसङ्गत्याकाङ्क्षाया इत्युपलक्षणया ग्राह्यम्। प्राथमिकत्वादित्यनन्तरं सन्दर्भसङ्गतेरित्यस्योपलक्षणया पूरितस्य वा सन्दर्भसङ्गतेरिति बुद्ध्या विवेकेनानुवृत्तस्य वादिविद्यमानत्वात् अवान्तरसङ्गतेश्चेति समुच्चयसम्भव इति भावेनेति नानुपपत्तिरिति ज्ञेयम् । **तामनुक्त्वेति** । उक्तोभयविधसङ्गतिस्तदा परामृश्यते । वक्ष्यति च **उभयविधसङ्गतिमिति** । अवान्तरसङ्गतिसूचनादित्यनन्तरं पृथक् तदकथनं च इति पूरणीयम् । तत्र तत इत्यस्योभयविधसङ्गत्यभिधानस्यावश्यकत्वाभावादित्यर्थः । तेन न कश्चिद्दोष इति ज्ञेयम्। उत्तरसूत्रैरित्यादिनोक्तसङ्गतिस्फोरणाय विहितेत्येतद्व्याख्याति **प्रतिज्ञातेत्यर्थ इति**। **प्रपञ्चेति** । उत्तरसूत्रादिसमस्तशास्त्रस्य प्रथमसूत्रेणेत्येतद्वक्ष्यमाणं आकृष्यते । एवं तदुक्तसङ्गत्यन्तरस्फोरणाय प्रकारान्तरेण व्याख्याति **यद्वेति** । **सङ्गतिरितीत्यनन्तरम्** एवं द्वेधेति पूरणीयम्। तेन पूर्वस्या अपि सन्दर्भसङ्गतित्वलाभ इति ज्ञेयम् ।

**स०व्र०**— पूर्वाधिकरणसङ्गतिं दर्शयति **प्रथमसूत्रे विहितेति**।

**विठ्ठल०**— **ॐ जन्माद्यस्य यतः ॐ** ॥ अधिकरणविच्छेदज्ञापनाय सूत्रपठनम्। एवमुत्तरत्रापि । सङ्गतिप्रदर्शनपूर्वकमुत्तरग्रन्थप्रतिपाद्यं दर्शयति **प्रथमेति** । जन्मादिसूत्रैरित्यादिग्रन्थपरिसमाप्तेरिति ग्राह्यम् ।





तर्ह्युत्तरसूत्रैरित्येव किं नोच्यत इति ईक्षत्यादिसूत्रेण न ब्रह्म विचार्यत इति वादिनिरासाय द्वितीयसूत्रमारभ्य प्रतिसूत्रग्रहणसूचनार्थत्वात् ।

**चषकः**— वर्तिष्यमाणाधिकरणे वृत्ताधिकरणनिरूपितां सङ्गतिं दर्शयति **प्रथमसूत्र इत्यादिना** । **विहितेति** । विधायकप्रत्ययाधीनकर्तव्यत्वप्रकारकप्रतिपादनक्रियाकर्मीभूतेत्यर्थः । धातोः फलावच्छिन्न-व्यापारार्थकतामते धात्वर्थताऽवच्छेदकीभूतफलान्वय्याधेयता द्वितीययेव प्रकृतेऽपि व्युत्पत्तिवैचित्र्येण तदेक-देशविधायकप्रत्ययान्वयिनी घटकता सप्तम्या प्रत्याप्यते । कर्मलकारप्रकृतिभूतधातूपस्थाप्योत्पादनक्रियान्वयिनी करणता तृतीयया । एवं च शास्त्रारम्भसमर्थकप्रथमसूत्रेणानावृत्तिसूत्रान्तस्य हेतुहेतुमद्भावलक्षणा सङ्गतिरभिहिता भवति । विहितेत्यस्य प्रतिज्ञातेत्यर्थतामुपेत्य प्रपञ्च्यप्रपञ्चकभावः सङ्गतिरित्यपि स्थितम्।

**२ सु०— स्वरूपसाधनफलजिज्ञासा हि ब्रह्मजिज्ञासोच्यते ॥ ब्रह्मण इति 'कर्मणि षष्ठी'परिग्रहेऽपि प्रधानेनाप्रधानोपलक्षणस्याङ्गीकृतत्वात् साधनादिजिज्ञासामन्तरेणाकाङ्क्षा-नुपरमाच्च तत्र साधनफलयोर्ब्रह्मोपहितत्वात् ब्रह्मणश्च स्वप्रधानत्वात् अभ्यर्हितत्वेन तत्स्वरूपजिज्ञासैव प्रथमं प्राप्ता । स्वरूपजिज्ञासा च लक्षणप्रमाणाभ्यां (सं)भवति । तत्रापि लक्षणेन स्वेतरसमस्तवस्तुव्यावृत्ततया स्वरूपे प्रतिपादिते प्रमाणाकाङ्क्षा जायत इति लक्षणस्यैव प्राथम्यं युक्तम् ।** इत्याशयवान् सूत्रतात्पर्यमाह **अन्तःसमुद्रगमिति** ।

**अनु०— अन्तःसमुद्रगं विश्वप्रसूतेः कारणं तु यत् ।**
**सूक्तोपनिषदाद्युक्तं जन्माद्यस्येति लक्ष्यते ॥**

**ब्र०सू०— ॥ ॐ ॥ जन्माद्यस्य यतः ॥ ॐ ॥**

**परि०**— पूर्वोत्तराध्यायद्विकद्वयस्य पौर्वापर्ये बीजं सूचयन्नस्य नयस्य द्वितीयत्वे बीजं वदन् भाष्यमवतारयति **स्वरूपेति** । ननु शेषषष्ठ्या निषेधेन कर्मणि षष्ठ्याः स्वीकारेण स्वरूपजिज्ञासाया एव प्राधान्येन प्राप्त्या साधनफलजिज्ञासायाः कथं प्राप्तिरित्यत आह **ब्रह्मण इतीति** । उपलक्षणे बीजमाह **साधनादीति** । यद्वाऽऽकाङ्क्षाबलात् तल्लाभ इति भावेनाह **साधनादीति** । ब्रह्मज्ञानाय विचारः कार्य इत्युक्ते केन साधनेन कस्मै फलायेत्याकाङ्क्षायाः साधनफलविचारं विनाऽनिवृत्तेरित्यर्थः । **ब्रह्मेति** । ब्रह्मज्ञानसाधनं ब्रह्मज्ञानफलमिति ब्रह्मनिरूपितत्वादित्यर्थः । साधनफलयोरित्युक्त्या तयोः पौर्वापर्यात्

तद्विचारपरयोरुत्तरयोरध्याययोरपि पौर्वापर्ये बीजं सूचितम् **प्रथमं प्राप्तेति** । तद्विचारः पूर्वाध्यायद्वये क्रियत इति भावः ।

**गु०दी०— साधनफलयोर्ब्रह्मोपहितत्वात्** इत्यत्र **ब्रह्मोपहितत्वात्** ब्रह्मोपाधिग्रस्तत्वात् । ब्रह्मवत् स्वप्रधानत्वाभावादित्यर्थः ।

**यादु०—** नन्विदमयुक्तम्, तृतीयचतुर्थयोः साधनफलजिज्ञासाकरणेन ब्रह्मजिज्ञासाऽकरणात् इत्यत आह **स्वरूपसाधनेति** । ननु 'जिज्ञास्योऽयं विधीयते' इति 'ब्रह्मजिज्ञासा' इत्यत्र कर्मणि षष्ठी व्याख्याता; तेन ब्रह्मस्वरूपकर्मिकैव जिज्ञासा पूर्वं विहितेति प्राप्नोति न साधनफलयोः । यदेयं शेषषष्ठी तदैव परब्रह्मसम्बन्धिनोः साधनफलयोरपि जिज्ञासा पूर्वं विहिता स्यात्; सा च नेष्टा । अतः कथमेतदित्यत आह **ब्रह्मण इतीति** । **प्रधानेनेति** । राजाऽयं गच्छतीत्यादौ राजपदेनाप्रधानपरिवारादेरिव कर्मतयाऽभ्यर्हितत्वेन च प्रधानं ब्रह्म, तत्प्रतिपादकेन ब्रह्मपदेनाप्रधानयोः साधनफलयोरप्युपलक्षणाङ्गीकारात् साधनफलजिज्ञासे अपि पूर्वं विहिते इत्यर्थः । साधनफले स्वपदेनोपादाय ब्रह्मैव कुतो न लक्ष्यत इत्याशङ्कापरिहाराय प्रधानेनेत्युक्तम् । एतेन गुणप्रधानभावरूपः शक्यसम्बन्धोऽप्युक्तो भवति । लक्षणास्वीकारे प्रयोजनमप्याह **साधनादीति** । ब्रह्मस्वरूपे जिज्ञासया निर्णीतेऽपि किं मया कार्यमित्याकाङ्क्षाऽनुपरमाच्चेत्यर्थः । नन्वेवं जिज्ञासात्रयस्यापि पूर्वं विहितत्वेन ब्रह्मस्वरूपजिज्ञासाया एव कुतः प्राथम्यमित्यत आह **तत्र साधनफलयोरिति** । ब्रह्मज्ञानसाधनं ब्रह्मज्ञानफलमिति साधनफलयोर्ब्रह्मोपहितत्वेन तज्ज्ञानाधीनज्ञानत्वादित्यर्थः । **स्वप्रधानत्वादिति** । अनन्याधीनत्वादित्यर्थः । अत्र हेतुमाह **अभ्यर्हितत्वेनेति** । यद्वा । चन्द्रिकोक्तप्रकारेण स्वप्रधानत्वादित्यस्य साधनादिज्ञानाधीनज्ञानत्वाभावा-दित्यर्थः । **अभ्यर्हितत्वेनेति** । स्वरूपजिज्ञासायाः प्राथमिकत्वे हेत्वन्तरम् । **प्रमाणाकाङ्क्षेति** । लक्षणविशिष्टे स्वरूपे या प्रमाणाकाङ्क्षा सा न लक्षणविशिष्टस्वरूपाप्रतिपादने भवितुमर्हतीति भावः ।

**वं०प०— शब्दादिति** । 'ब्रह्मजिज्ञासा' इत्यत्र समासे उपसर्जनतया प्रकृतस्य ब्रह्मण इत्यर्थः । 'मम योनिः' इत्यम्भ्रणीसूक्तम् । 'सप्तार्धगर्भा', 'ऋचो अक्षरे' इति वामनसूक्तम् ।

**आनन्दः—** ननु लक्षणजिज्ञासायाः कथं ब्रह्मजिज्ञासात्वमित्यत आह **स्वरूपेति** । ननु जिज्ञासेत्यत्र कर्मषष्ठ्याः स्वीकृतत्वात् ब्रह्मकर्मकजिज्ञासा एव ब्रह्मजिज्ञासा न तु साधनफलजिज्ञासायास्तत्त्वमित्यत आह **ब्रह्मण इतीति** । न चोपलक्ष्यतावच्छेदकाभावात्कथं प्रधानब्रह्मशब्देन अप्रधानसाधनस्याप्युपलक्षणमिति वाच्यम् । ब्रह्मसम्बन्धित्वस्यैव तत्त्वात् । साधनादेश्च तथात्वादिति भावः । ननु तर्हि ब्रह्मसम्बन्धित्वस्य सर्वत्रापि सत्त्वेन तन्निरूपणमप्यत्र कर्तव्यमित्यत आह **साधनादीति** । **आदि**पदेन फलपरिग्रहः । अत एव समन्वयाविरोधाभ्यां इत्यनेनाकाङ्क्षाप्रदर्शनमिति भावः । नन्वेवमपि स्वरूपजिज्ञासायाः प्राथम्यं कुत इत्यत आह **तत्रेति** । स्वरूप-





साधनफलजिज्ञासायाः कर्तव्यत्व इत्यर्थः । उपाधिज्ञानं विनोपहितपदार्थज्ञानस्यासम्भवादिति भावः । ननु तत्रापि प्रमाणजिज्ञासैव प्रथममस्त्वित्यत आह **तत्रापीति** । स्वरूपजिज्ञासायाः कर्तव्यत्व इत्यर्थः ।

**वा०चं०**— नन्वाद्याध्यायाभ्यां समन्वयाविरोधयोस्तृतीयचतुर्थाभ्यां तु साधनफलयोर्विचार्यत्वेन ब्रह्मजिज्ञासायाः क्वाप्यननुष्ठानान्नेदं सङ्गतिकथनमुपपन्नमित्यत आह **स्वरूपेति** । ननु ब्रह्मजिज्ञासेत्यत्र कर्मणि षष्ठीपरिग्रहेण स्वरूपजिज्ञासाया ब्रह्मजिज्ञासात्वप्राप्तावपि साधनादिजिज्ञासाया न ब्रह्मजिज्ञासात्वलाभः, तल्लाभे वा प्रतिज्ञातत्वाविशेषात्साधनादिजिज्ञासातः स्वरूपजिज्ञासायाः प्राथमिकत्वे न नियामकमस्ति, अस्तु वा स्वरूप-जिज्ञासायाः प्राथमिकत्वं लक्षणादिजिज्ञासायास्तु किमायातम् । तस्याः कथञ्चिल्लक्षणादिजिज्ञासात्वेऽपि लक्षण-जिज्ञासायाः प्रमाणजिज्ञासापूर्वभावो नियामकशून्य एवेत्यत आह **ब्रह्मण इतीत्यादिना** । ब्रह्मज्ञानसाधनं ब्रह्मज्ञान-फलमिति प्रमाणादिस्वरूपप्रतिपत्तेर्ब्रह्मज्ञानाधीनज्ञानत्वं **ब्रह्मोपहितत्वम्** । ब्रह्मणः स्वप्रधानत्वं स्वरूपप्रतिपत्तौ साधनादिज्ञानानधीनत्वम् । प्रमाणादिस्वरूपविचारसाधनस्यान्यार्थत्ववद्ब्रह्मस्वरूपविचारसाधनस्यान्यार्थत्वाभावात् स्वरूपतः प्रधानत्वं च अभ्यर्हितत्वम् । हेत्वन्तरं चैतत् । **तत्रापीति** । व्यावृत्तस्वरूपस्य बुद्ध्यनारोहे तत्र प्रमाणाकाङ्क्षानुदयादिति भावः ।

**वा०र०**— **अननुष्ठानादिति** । ब्रह्मविचारस्य क्वाप्यकृतत्वादित्यर्थः । **कर्मणि षष्ठीति** । एतच्च ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति षष्ठीसमास इत्यभिधाय प्रवृत्ते षष्ठी च कर्मणीति पूर्वमूले तट्टीकायां च स्पष्टम् । परोक्तशेषषष्ठीपरिग्रहनिराकरणाय कर्मषष्ठीपरिग्रहमुपपाद्य सम्बन्धे षष्ठीपरिग्रहे ब्रह्मसम्बन्धिसाधनादिजिज्ञासायाः प्रतिज्ञातत्वप्राप्तावपि कर्मणि तत्परिग्रहे स्वरूपमात्रविचारप्रतिज्ञापत्त्या साधनादिविचारस्यासङ्गतत्वापातादित्या-शङ्काप्रसराय राजायमागच्छतीत्युक्तेऽपि सपरिकरराज्ञः आगमनप्रतिपादनलाभवत् ब्रह्मस्वरूपजिज्ञासेत्युक्त एव साधनादिसहितब्रह्मविचारस्य प्रतिज्ञातत्वलाभान्नासङ्गतिरिति तस्या विनाप्यभिधानेन लाभादिति पूर्वमूलाभिप्रेतं परिहारं मनसि कृत्वा आह **तल्लाभे वेति** । शिष्टमुत्तरमूलानुसारेण व्यावर्त्याशङ्काप्रदर्शनम् । स्वप्रधानत्वात् अभ्यर्हितत्वेनेत्युक्तयोरभेदान्न हेतुहेतुमद्भावः सम्भवतीत्यतस्तदुभयं भिन्नं यथा स्यात् तथा निर्वक्ति **ब्रह्मणः स्वप्रधानत्वमित्यादिना** । मूले चशब्दाभावाद्धेतुहेतुमद्भावेन प्रतीतेश्च तन्निरासाय चशब्दपूरणाभिप्रायेणाह **हेत्वन्तरं चैतदिति** ।

**स०व्र०**— ननु प्रथमसूत्रे विहिता ब्रह्मजिज्ञासा उत्तरसूत्रैः क्रियत इत्युक्तमयुक्तम्, कथयिष्यमाण-साधनादिजिज्ञासाया ब्रह्मजिज्ञासात्वाभावात् इत्यत आह **स्वरूपेति** । कर्मणि षष्ठीपरिग्रहे ब्रह्मण एव जिज्ञासा-कर्मत्वप्राप्तिः न साधनादेरित्यत आह **ब्रह्मण इति कर्मणि षष्ठीपरिग्रहेऽपीति** । प्रधानेनाप्रधानस्येति शक्य-सम्बन्धकथनम्, तात्पर्यानुपपत्तिर्बीजमिति भावः । कीदृशं ब्रह्म, कथं च ज्ञानं साधनं, कीदृशो मोक्षः, इत्याकाङ्क्षात्रयमुदेति; तत्र च यदि ब्रह्मजिज्ञासामात्रमेव क्रियेत तदा 'समन्वयाविरोधाभ्यां सञ्जाते वस्तुनिर्णये । किं मया कार्यम्' इत्येवंरूपाया आकाङ्क्षाया अनुपरमाच्च तदन्यथाऽनुपपत्त्या च साधनादिजिज्ञासाऽपि ब्रह्मजिज्ञासा





उच्यत इति पूर्वेण सम्बन्धः । **उच्यत** इत्यस्याभिप्रेयत इत्यर्थः । यद्वा कर्मतया प्रधानभूतब्रह्मपदेन अप्रधानयोः साधनफलयोः उपलक्षणाङ्गीकारादित्यर्थः । साधनफले स्वपदेनोपादाय ब्रह्मैव किं नोपलक्ष्यत इत्याशङ्कापरिहाराय प्रधानेनेत्याद्युक्तम् । एतेन गुणप्रधानभावरूपः शक्यसम्बन्धोऽप्युक्तो भवति । लक्षणास्वीकारप्रयोजकीभूत-मुख्यार्थानुपपत्तिमप्याहुः । **साधनादिजिज्ञासामिति** । ब्रह्मस्वरूपे जिज्ञासया निर्णीतेऽपि किं मया कार्यमि-त्याकाङ्क्षाया अनुपरमाच्चेत्यर्थः । **तत्र साधनफलयोरिति** । ब्रह्मज्ञानसाधनं ब्रह्मज्ञानफलमिति ब्रह्मोपहितत्वेन तज्ज्ञानाधीनज्ञानत्वादित्यर्थः । **जिज्ञासा च लक्षणप्रमाणाभ्यां सम्भवतीति** । न च लक्षणस्यैव केवलव्यतिरेकि-हेतुविशेषत्वेन तस्यैव प्रमाणत्वात् पुनः प्रमाणान्तरं व्यर्थमिति वाच्यम् । लक्ष्यनिष्ठतया ज्ञातस्यैव लक्षणस्य प्रमाणत्वेन तद्विशिष्टप्रमाणस्यापेक्षितत्वादिति भावः ।

**विठ्ठल०**— तर्हि साधनफलाध्याययोर्ब्रह्मविचाराभावात्कथं एतदित्यत आह **स्वरूपेति** । ननु शेषे षष्ठीति पक्षे साधनफलजिज्ञासयोरपि ब्रह्मसम्बन्धिजिज्ञासात्वात् उक्तं युज्यते । भवद्भिस्तन्निषेधेन कर्मणि षष्ठी स्वीकारात् स्वरूपजिज्ञासाया एव प्राप्त्या कथं साधनफलजिज्ञासयोः प्रसक्तिरित्यत आह **ब्रह्मण इतीति** । **प्रधानेति** । राजा गच्छतीत्यादौ राजपदेन भृत्यानामपि लक्षणया स्वीकारात् इति भावः । एतेन गुणप्रधानाभावसम्बन्धोऽप्युक्तो भवति । उपलक्षणे बीजभूतमुख्यार्थानुपपत्तिं च दर्शयति **साधनादीति** । आकाङ्क्षाबलाद्वा तल्लाभ इति भावेनाह **साधनादीति** । ब्रह्मस्वरूपे निर्णीते, किं मया कार्यं, कृतेन तेन किं फलं भवतीत्याकाङ्क्षानुपरमाच्चेत्यर्थः । एवं प्रथमसूत्रेण समग्रशास्त्रस्य सङ्गतिं प्रदर्श्याध्यायद्वयस्य प्राधान्ये निमित्तमाह **तत्रेति** । ब्रह्मोपहितत्वाद्ब्रह्मज्ञान-साधनं तत्फलं चेत्येवं ब्रह्मा-नुबन्धित्वादित्यर्थः । तथा च स्वरूपनिरूपणपराध्यायद्वयस्य प्राधान्यं युक्त-मित्याशयः । तत्रापि समन्वयाध्यायस्य समस्तगुणपूर्णत्वमपि प्रधानलक्षणं सिद्ध्यतीति वक्ष्यमाणन्यायेन लक्षण-प्रतिपादकत्वाददिमत्वं युक्तमिति सूचयन् तृतीयादिसूत्रापेक्षया जन्मादिसूत्रस्य प्राथम्योपपादनपूर्वकमनुभाष्य-मवतारयति **तत्रापीति** ।

**चषकः**— नन्वाद्यद्विकस्य समन्वयाविरोधयोरुत्तरद्विकस्य च फलसाधनयोरेव प्रतिपादकाभिमततया ब्रह्मविचारस्य क्वाप्यनुपलम्भेन नेयं सङ्गत्यभिहितिः सङ्गच्छत इत्याशङ्कायामाह **स्वरूपेति** ।

ननु सूत्रघटकब्रह्मजिज्ञासेतिखण्डे सुपो धात्विति लुप्ताशैषिकी षष्ठीति कल्पे फलसाधनजिज्ञासयोः स्वज्ञानसाधनविषयकत्वस्वज्ञानसाध्यफलविषयकत्वसम्बन्धितया ब्रह्मसम्बन्धित्वलाभेऽपि सिद्धान्तिना तत्कल्प-मवज्ञाय जिज्ञास्योऽयं विधीयत इति निर्देशेन, कर्मणि षष्ठ्येव तेन सूत्रेण लुप्तेति कल्पस्यैव आश्रिततया स्वरूपजिज्ञासायाः ब्रह्मकर्मकजिज्ञासात्वानपायेन तत्सङ्ग्रहेऽपि फलसाधनजिज्ञासयोस्तदपायितया तदसङ्ग्रहप्रसङ्ग इत्याशङ्कायां राजाऽसौ गच्छतीत्यादौ राजपदेन सपरिवारो राजा यथा लक्ष्यते तद्वत्प्रकृतेऽपि ब्रह्मपदेन फल-साधनोपहितब्रह्मण एव लक्षिततया न क्षतिरित्याह **ब्रह्मण इतीति** । फलसाधनाभिधायकपदे निर्दिश्यैव ब्रह्म कुतो न लक्षितमिति शङ्काऽपनुत्तये प्रधानपदोपादानम् । तदर्थस्तु प्रधानवाचकपदेनैवेति । **अप्रधानोपलक्षण-**





**स्येति** । अप्रधानघटितधर्मावच्छिन्नोपलक्षणस्येत्यर्थः । राजाऽसौ गच्छतीत्यादौ राजत्वावच्छिन्नवाचकपदस्य परिवारविशेषितराजत्वावच्छिन्नलक्षकतावद्ब्रह्मत्वावच्छिन्नवाचकपदस्यापि लक्षणप्रमाणसाधनफलोपहितब्रह्मत्वावच्छिन्न-लक्षकत्वस्योपगमान्न फलसाधनजिज्ञासयोरप्रतिज्ञाततताप्रसङ्ग इति भावः । 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति वचनेन घटत्वावच्छिन्नवाचकघटपदस्य नीलघटत्वेनान्वयबोधतात्पर्येण प्रयोगदशायां स्वशक्यनिरूपिततादात्म्यरूपसम्बन्धो नीलघटत्वावच्छिन्ने यथा तद्वत्प्रकृतेऽपीत्यर्थः । उक्तं हि चन्द्रिकायां 'स्वपक्षे, कर्मणिषष्ठ्यामपि प्रमाणसाधनप्रयोजनादिपरिकरयुक्तस्यैव ब्रह्मणो जिज्ञासाकर्मत्वान्न प्रमाणादिविचारस्याप्रतिज्ञाततताप्रसङ्ग' इति । एतेन गुणप्रधानभावरूपः शक्यसम्बन्धोऽप्युक्तो भवतीत्यपि व्याचक्षते । लक्षणोपगतेः फलमभिधत्ते **साधनादीति** । 'किं मया कार्यमित्येव स्याद्बुद्धिरधिकारिणः' इत्युक्तेरिति भावः । विशेषणचतुष्टयविशेषितजिज्ञासायाः प्रतिज्ञातत्वे उत्तरतद्द्वयजिज्ञासाया अपि प्रतिज्ञाततया तुल्यकक्षापन्नतज्जिज्ञासाद्वयमन्तरेण विशेष्यजिज्ञासाप्राथम्यं निर्बीजमित्याशङ्कायां तद्बीजं दर्शयति **तत्रेति** । **साधनफलयोरिति** । विषयिताप्रत्यासत्त्या ब्रह्मावच्छिन्नं यज्ज्ञानमनुकूलतासंसर्गेण तदवच्छिन्नसाधनस्य । तादृशप्रत्यासत्त्या तद्विशेषितं यत् तज्जन्यतासम्बन्धेन तदवच्छिन्नफलस्य चेत्यर्थः । **ब्रह्मोपहितत्वादिति** । स्वावच्छिन्ननिरूपितविषयितात्वावच्छिन्नव्यापकब्रह्मत्वावच्छिन्ननिरूपितविषयितात्वावच्छिन्नकत्वरूपब्रह्मघटितत्वकत्वादित्यर्थः । ब्रह्मज्ञानसाधनं ब्रह्मज्ञानफलमिति प्रतीत्योरुक्तदिशा रक्तदण्डवानितिवद्विशिष्टप्रतियोगिकवैशिष्ट्यावगाहितया तत्र च विशेषणतावच्छेदकप्रकारकनिर्णयविधया, विशिष्टबुद्धौ विशेषणज्ञानविधया वा ब्रह्मज्ञानस्य हेतुत्वादिति भावः । **स्वप्रधानत्वादिति** । फलसाधनगोचरप्रतिपत्तिनियन्त्रितप्रतिपत्तिकत्वाभावादित्यर्थः । **अभ्यर्हितत्वेनेति** । इदं च हेत्वन्तरम् । ब्रह्मस्वरूपं फलसाधनगोचरजिज्ञासाप्रागभावकालीनजिज्ञासाविषयः तत्प्रतिपत्त्यसमवधानकालीनप्रतिपत्तिगोचरत्वादभ्यर्हितत्वाच्चेति अनुमानद्वयं ध्वन्यते ।

**लक्षणप्रमाणाभ्यामिति** । तृतीया वैशिष्ट्यार्थिका । तदुभयविशेषितविषयिणी या जिज्ञासा सैव स्वरूपजिज्ञासापदाभिधेया न ततोऽन्येति स्वरूपजिज्ञासा तदुभयोपहितवस्त्ववगाहिनीत्यर्थः । **तत्रापीति** । लक्षणप्रमाणयोर्मध्य इत्यर्थः । **प्रमाणाकाङ्क्षेति** । एकधर्मावच्छिन्नविषयकज्ञानाद्धर्मान्तरावच्छिन्नविषयैकेच्छोत्पादवारणाय समानधर्मितावच्छेदकज्ञानेच्छयोर्हेतुहेतुमद्भावस्य स्थिततया विषयिताप्रत्यासत्त्या लक्षणोपहितार्थविशेषितप्रमितिसाधनज्ञानत्वावच्छिन्नविषयकेच्छायां तद्धर्मावच्छिन्नविषयकज्ञानस्य हेतुतया तादृशज्ञानस्य च धर्मितावच्छेदकघटकीभूतलक्षणोपहितार्थज्ञाननिबन्धनतया लक्षणविशेषिताप्रतिपादने सा दुरुत्पादेति भावः ।

**३ सु०— समुद्रस्यान्तः अन्तःसमुद्रम्, तद् गच्छति इति अन्तःसमुद्रगम् । विश्वप्रसूतेः मूलप्रकृतेः । सूक्तम् अम्भ्रणीसूक्तं वामनसूक्तं च । उपनिषद् 'अम्भस्यपारे' इत्यादिका । आदिग्रहणात् 'आपो नाराः' इत्यादिका स्मृतिः । अन्तःसमुद्रगत्वादिना यत्सूक्ताद्युक्तं तत् 'जन्माद्यस्य यतः' इति सूत्रेण; लक्ष्यते स्वेतरसमस्तवस्तुव्यावर्तकधर्मवत्तया प्रतिपाद्यते ॥**





**निर्विशेषस्वरूपमात्रमिह जन्मादिसूत्रे लक्ष्यतयाऽभिप्रेतमिति केचिद्व्याचक्षते, तन्निरासा(र्थम्)य 'अन्तःसमुद्रगम्' इत्यु(त्याद्यु)क्तम् । अत्र हि सूत्रे यत इति श्रवणात्तदिति लभ्यते । तच्च शब्दादुपसर्जनतया प्रकृतत्वेऽप्यर्थतः प्राधान्याद्ब्रह्मैव सम्बध्यते । न चामुख्यं ब्रह्म जात्यादिकमिह लक्ष्यमिति परस्यापि सम्मतम् । मुख्यं तु ब्रह्म सविशेषमेव, समुद्रान्तर्गतत्वाद्यनेकविशेषणविशिष्टं वस्तूक्त्वा तदेव ब्रह्म परमं कवीनामिति तस्यैव मुख्यब्रह्मत्वाभिधानादिति।**

**तदिदमाह 'ब्रह्मणो लक्षणमाह' इति भाष्येण।**

**परि०—** समुद्रगस्यान्तः अन्तःसमुद्रगमित्यन्यथाप्रतीतिं निराह **समुद्रस्यान्तः अन्तःसमुद्रमिति** । 'अव्ययम् विभक्ति' इत्यादिना अव्ययीभावः । उक्तमित्यन्तमूलस्य अवैयर्थ्यायाह **निर्विशेषेति** । सूत्रे सविशेषमेवोच्यत इत्यत्र किं ज्ञापकमित्यत आह **अत्र हीत्यादिना** । **तच्चेति** । जन्मादिकारणतया तत्पदेनोच्यमानमित्यर्थः । **शब्दादिति** । राजपुरुष इत्यादौ राज्ञ इव ब्रह्मजिज्ञासेति पूर्वसूत्रे षष्ठीनिर्दिष्टतया षष्ठ्यन्तशब्दादुपसर्जनतयेत्यर्थः । **अर्थत इति** । जिज्ञास्योऽयं विधीयत इत्युक्तदिशा ब्रह्मज्ञानायेत्युद्देश्यविशेषणतया अर्थतः प्राधान्यादित्यर्थः । **परस्यापीति** । निर्विशेषब्रह्मेह सूत्रे लक्ष्यत इति वदतोऽपीत्यर्थः ।

**यादु०—** समुद्रगस्यान्तरन्तःसमुद्रगमित्यन्यथाप्रतीतिनिरासायाह **समुद्रस्यान्तरिति** । **शब्दादुपसर्जनतयेति** । पूर्वसूत्रे ब्रह्मजिज्ञासेति समासे जिज्ञासोपसर्जनतया ब्रह्मणः प्रकृतत्वेऽपीत्यर्थः । **तदिदमिति** । उक्तरीत्या सङ्गतिं मनसि निधाय सूत्रतात्पर्यमित्यर्थः ।

**वं०प०—** **शब्दादिति** । ब्रह्मजिज्ञासेत्यत्र समासे उपसर्जनतया प्रकृतस्य ब्रह्मण इत्यर्थः । **परस्यापि** निर्विशेषमिह सूत्रे लक्ष्यत इति वदतोऽपीत्यर्थः ।

**आनन्दः—** ननु यज्जिज्ञास्यतयोक्तं तद्ब्रह्म लक्ष्यत इत्येव वक्तव्ये अन्तःसमुद्रमित्यादि किमर्थमुक्तमित्यतस्तन्निवार्यां शङ्कां दर्शयति **निर्विशेषेति** । नन्वेतावता सविशेषं जन्मादिसूत्रे लक्ष्यत इति कथं सम्पन्नमित्यत आह **अत्र हीति** । नन्वत्र तच्छब्देन जिज्ञासाया एव परामर्शः कर्तव्यो विशेष्यत्वेन प्रधानत्वात् । तस्य च जन्मादिकारणत्वं न सम्भवति । अतः कथमेतदित्यत आह **तच्चेति** ।

**श्रीनिधि०—** **लक्ष्यतया** लक्षणत्वेन प्रतिपाद्यतया । अन्तःसमुद्रगमित्याद्युक्त्या कथं तन्मतनिरास इत्यतस्तद्दर्शयति **अत्र हि सूत्र** इत्यादिना **मुख्यब्रह्मत्वाभिधानात्** इत्यन्तेन । नन्वेवमपि कथमिदं ब्रह्मलक्षणतया





ज्ञातुं शक्यं, तद्वाचकपदाश्रवणात् । न च तत्पदमेव सामर्थ्यलब्धम् । तदुपस्थापकमिति वाच्यम् । तत्पदं हि प्रकृतपरामर्शकम् । तथा च यत्प्रधानतया पूर्वं प्रकृतं तदेव परामृष्टं युक्तम् । ब्रह्मज्ञानाय वेदविचारः कर्तव्य इति ।

**वा०चं०**— समुद्रगमित्यनेनान्वयेऽन्तःशब्दस्य वैयर्थ्यादाह **समुद्रस्येति** । प्रसूतिशब्दवैयर्थ्यादाह **विश्वेति** । भाष्यकारीयोक्तोपपादनानुसारेण सूक्तादिशब्दान् व्याख्याति **सूक्तमित्यादिना** । लक्षणया बोध्यत इति प्रतीतिनिवारणाय प्रकृतोपयुक्ततया लक्ष्यत इत्यस्यार्थमाह **स्वेतरेति** । विशेषणान्तरोपादानेनापि सविशेषत्वलाभेऽप्यन्तःसमुद्रगत्वादीनामेव विशिष्योपादानं सविशेषत्वोपपादनप्रकारविशेषलाभार्थमित्यभिप्रेत्य मुख्यं (ही)त्वित्यादिना तदुपपादयितुम् अस्तु ब्रह्मशब्दमुख्यार्थत्वं सविशेषस्य तथापि लक्षणसूत्रे ब्रह्मशब्दाभावाल्लक्षणं निर्विशेषस्यैव किं न स्यादित्याशङ्कापरिहारकत्वेन तत्पीठिकारूपं स्वपरसम्मताध्याहारानुषङ्गादिकं दर्शयति **अत्र हीत्यादिना** । **तच्चेति** । अध्याहृततच्छब्दविशेष्यं त्वित्यर्थः । **तदिदमिति** । ब्रह्मणो विशेष्यत्वेन सम्बन्धादिकमित्यर्थः ।

**वा०र०**— **वैयर्थ्यादिति** । अन्तरित्यस्य समुद्रान्तरित्यर्थोपस्थापकत्वाभावेनार्थान्तरस्य चाप्रतिभासादिति भावः । **आहेति** । अन्तशब्दस्याधिकरणप्रधानाव्ययीभावतामाश्रित्य समुद्रपदेनान्वयमाहेत्यर्थः । अन्तःस्वान्तमिति ऋग्भाष्यटीकाप्रथमपद्यगतप्रयोगोपपादनपरं स्वान्ते मनसि अन्तरित्येतदुपपादयद्भिरस्माभिर्बहु प्रमेयं प्रतिपादितमस्ति । अध्यात्मगैश्चेत्युत्तरानुव्याख्यानमूलविचारावसरे च न्यायविवरणटीकानुसारेण प्रमेयं वक्ष्यते तदत्रोपयोगानुसारेण ज्ञेयम् । किञ्चिल्लेख्यं च । **वैयर्थ्यादिति** । विश्वकारणमित्येतावतैव पूर्तेरिति भावः । **उपपादनेति** । अम्भस्य पार इत्युक्तेति पूरणीयम् । **प्रकृतेति** । लक्षणकथनरूपप्रकृतेत्यर्थः । **विशेषणान्तरेति** । शुद्धचिदानन्दगुणकमित्यादिविशेषणेत्यर्थः । प्रकारविशेषो मूले उत्तरत्र स्पष्टः । **अध्याहारानुषङ्गादिकमिति** । तदित्यध्याहारः । मूलस्थशब्दादित्यस्य ब्रह्मशब्दादित्यर्थात् तेन शब्देनार्थतः प्राधान्येन ब्रह्मैव सम्बध्यत इत्युक्त्या वाक्यपरिसमाप्तिरूपोऽनुषङ्गो दर्शितः । आदिपदेन जात्यादिरूपामुख्यार्थनिवारणं गृह्यत इति ज्ञेयम् । **तच्चेति** मूलेनाध्याहृततत्पदपरामर्शः प्रतीयते तथा च ब्रह्मैवेत्युत्तरवाक्यासङ्गतिरित्यत आह **अध्याहृतेति** । विशेष्यत्वं च शब्दद्वारा विवक्षितमिति न दोषः ।

**स०व्र०**— **आदिग्रहणादापो नारा इत्यादिकेति** । आदिशब्देन 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इति स्मृतिर्ग्राह्या । **शब्दादुपसर्जनतयेति** । पूर्वसूत्रे ब्रह्मजिज्ञासेति समासोपसर्जनतया प्रकृतत्वादित्यर्थः । यथा 'राजपुरुषा' इत्युक्ते 'तस्य राज्ञ' इति बुद्ध्या निष्कृष्टस्य परामर्शः, एवमिहापि बुद्ध्या निष्कर्षे गुणत्वबुद्ध्यभावात् परामर्श इत्यर्थः ।

**विठ्ठल०**— **इत्यादिस्मृतिरिति** । इत्यादिशब्देन चन्द्रिकोपात्तस्य 'जन्माद्यस्य यतोऽन्वयादि'त्यादेः सङ्ग्रहः । अन्तःसमुद्रमित्यादि पादत्रयस्य प्रकृतोपपादनायाह **अत्र हीत्यादिना** । **तच्चेति** । **सूत्रे यत इति** ।





जगत्कारणतयोक्तं च राजपुरुष इत्यादाविव ब्रह्मजिज्ञासेत्यत्र समासे षष्ठ्यन्तब्रह्मशब्दादप्रधानतया प्रकृतत्वेऽपि तज्ज्ञानोद्देशेन जिज्ञासाविधाने कुतोऽप्राधान्यमिति प्रागुक्तरीत्याऽर्थतः प्राधान्यकब्रह्मशब्दोक्तमेव सम्बध्यत इत्यर्थः । तथापि तद्ब्रह्म जात्यादिकं किं न स्यादित्यत आह **न चेति** । **परस्यापि** निर्विशेषमिह लक्ष्यत इति वदतोऽपि । **तदिदमाहेति** । एतेन स्पष्टतार्थ इत्यत्रोक्तम् । क्वापि सङ्क्षिप्तस्य विस्तरणमेतत् तत्र तत्रोदाहरिष्याम इति प्रतिज्ञातं दर्शितमिति ज्ञातव्यम् ।

**चषकः**— समुद्रगपदेनाव्ययीभावेऽन्तःशब्दवैयर्थ्यापत्त्या समुद्रशब्देन तं प्रदर्श्य कर्तृसाधनडप्रत्ययान्तस्य कर्तृकर्मणोरित्यनुशिष्टाव्ययीभावप्रकृतिकया कर्मणि षष्ठ्या समासमभिप्रेत्याह **समुद्रस्येति** । 'सुपो धातु....' इत्यव्ययीभावप्रकृतिकसुपो लोपे अन्तःसमुद्रगमित्यसैत्सीदिति भावः । **मूलप्रकृतेरिति** । क्तिनः करणसाधनत्वादिति भावः । **तच्चेति** । अध्याहृतपदोपस्थाप्यमित्यर्थः । **शब्दादुपसर्जनतयेति** । पूर्वसूत्रघटकसमासावयवभूतब्रह्मशब्दात् लुप्तविभक्त्यनुसन्धानपक्षे जिज्ञासान्वितकर्मत्वविशेषणतया, तदनुपगन्तृमते व्युत्पत्तिवैचित्र्येण स्ववृत्तिकर्मतानिरूपकत्वरूपभेदसंसर्गेणान्वये जिज्ञासाविशेषणतया, नामार्थयोरिति व्युत्पत्त्यादरेण तत्पुरुषे पूर्वपदे सम्बन्धिनि लक्षणोपगमे जिज्ञासान्वितसम्बन्धिविशेषणतयेत्यर्थः । ज्ञानजन्येच्छा तज्जन्यसंस्कार इत्यादौ शाब्दप्राधान्यमतन्त्रीकृत्यार्थिकप्राधान्यादरेण ज्ञानपरामर्शोपगमादिति भावः । **तदिदमिति** । उक्तदिशा अभिहितसूत्रतात्पर्यमित्यर्थः । ब्रह्मणो विशेष्यत्वेन सम्बन्धादिकमित्यप्यर्थापयन्ति ।

**॥ इति जिज्ञास्यस्य ब्रह्मणः प्रसिद्ध-लक्षणकथनम् ॥**

* * *

**॥ अथ लक्षणदोषशङ्कापरिहारः ॥**

**॥ तत्रादौ लक्षणस्य (अव्याप्त्यसम्भवाभावद्योतिकायाः) लक्ष्यधर्मतायाः प्रदर्शनम् ॥**

**४ सु०— ननु च बृहद्ब्रह्मेति समस्तगुणपूर्णत्वं ब्रह्मत्वं प्रसिद्धमेव; तत्किं लक्षणान्तरेण ॥ सत्यम् । तथाऽपि तदुपपादनार्थमेतदित्यदोषः । प्रसिद्धेन ह्यसाधारणेन धर्मेणाप्रसिद्धं वस्तु समस्तव्यावृत्ततयाऽवगन्तव्यम् । न च परमेश्वरस्य समस्तगुणपूर्णत्वं प्रसिद्धम्, येन लक्षणतया निर्देष्टुं शक्येत । अनेन तु लक्षणेन लक्षिते ब्रह्मणि समस्तगुणपूर्णत्वमपि प्रधानलक्षणं सिद्ध्यति, अविनाभावा(वित्वा)त् ।**

**परि०— प्रसिद्धमेवेति** । 'बृहन्तो ह्यस्मिन् गुणाः' इत्यादाविति भावः । 'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये । ब्रह्मणो लक्षणं प्रोक्तम्' इत्यानन्दमयनयानुव्याख्यानोक्तं हृदि कृत्वाऽऽह





**तदुपपादनार्थमेतदितीति** । तस्य लक्ष्यधर्मतोपपादनार्थमित्यर्थः । कथमित्यत आह **प्रसिद्धेनेति** । **न च परमेश्वरस्य समस्तगुणसम्पूर्णत्वं प्रसिद्धमिति** । लोके क्वाप्यदर्शनेनासम्भावनापराहतत्वात् इति भावः । **अनेन त्विति** । जगज्जन्मादिकारणत्वेनेत्यर्थः । एतच्च कार्यस्य घटादेः कर्त्रविनाभावदर्शनेन महदादिसर्वकार्यकर्ता नासम्भावितो वक्ष्यमाणदिशाऽनेकप्रमाणप्रमितश्चेत्यनुपदमेव विवरिष्यत इति भावः । 'कर्तृत्वात्सगुणं ब्रह्म' इति भागवतोक्तिं हृदि कृत्वाऽऽह **अविनाभावित्वादिति** ।

**यादु०— समस्तगुणपूर्णत्वमिति** । पूर्णत्वमेव ब्रह्मशब्दार्थः । इतरद्योग्यताबललभ्यमिति ध्येयम् । **प्रसिद्धमेवेति** । व्याकरणादिनेति शेषः । **लक्षणान्तरेणेति** । निर्वचनलभ्यस्यैवान्तरङ्गस्य लक्षणत्वसम्भवे किं तदविनाभूतलक्षणान्तरेणेत्यर्थः । **तदुपपादनार्थमिति** । तस्य लक्ष्यधर्मतोपपादनार्थमित्यर्थः । **प्रसिद्धेन हीति** । लक्ष्यनिष्ठतया प्रसिद्धेन हीत्यर्थः । तथा च निर्वचनलभ्यस्य गुणपूर्णत्वस्य व्याकरणादिना प्रसिद्धत्वेऽपि लक्ष्यभूतजीवव्यतिरिक्तेश्वरनिष्ठतया प्रसिद्ध्यभावान्न प्रथमं तल्लक्षणतयोच्यत इति भावः ।

**आनन्दः**— ननु जिज्ञासादिकमेवात्र कुतो न लक्ष्यते तस्या अपि यथाकथञ्चित् ब्रह्मशब्दार्थत्वादित्यत आह **प्रसिद्धेन हीति** । **अविनाभावित्वादिति** । जन्मादिकारणत्वस्यानन्तगुणपूर्णत्वेन सहाविनाभावित्वादित्यर्थः ।

**वा०चं०**— अत्र सृष्टिरित्युत्तरवाक्ये जगज्जन्मादिकारणत्वरूपब्रह्मलक्षणस्य प्रसिद्धत्वोक्त्या लक्षणान्तरस्याप्रसिद्धिः सूचिता । न च लक्षणान्तरमप्रसक्तमिति वाच्यम् । ब्रह्मशब्दयौगिकप्रवृत्तिनिमित्तत्वेनैव तत्प्रसक्तेः । एवं च ब्रह्मशब्दबललब्धलक्षणसम्भवेऽतादृशलक्षणाभिधानेन सूत्रकारानौचित्यं निरस्तं भवतीत्याशयेन लक्षणान्तरप्रसक्तिं, प्रधानलक्षणत्वेन तस्याप्यत्राभिप्रेतत्वं, तदप्रसिद्धिं, प्रसिद्धताया लक्षणत्वोपयोगम्, अस्य लक्षणस्य तत्साधकत्वं च दर्शयन्नेवाकाङ्क्षाक्रमेणोत्तरवाक्यमवतारयति **ननु चेत्यादिना**।

**वा०र०**— ननु चेत्युत्तरग्रन्थमवतारयति **अत्र सृष्टिरित्यादिना** । अत्रेति बुद्धिप्रकृतत्वादुक्तम् । सूचितेत्यस्य सूचयिष्यत इत्यर्थः । **एवं चेति** । लक्षणान्तरस्याप्रसिद्धिसूचनेनेत्यर्थः । लक्षणसम्भवे तदनभिधाय ब्रह्मशब्दबलेनालभ्यं यल्लक्षणं तदभिधानेन प्राप्तं यत्सूत्रकारस्यानौचित्यं तन्निरस्तमित्यर्थः । प्रसक्तिमित्यादिचतुष्टयस्य दर्शयन्नित्युत्तरेण सम्बन्धः ।

**विठ्ठल०**— ननु प्रथमसूत्रोक्तब्रह्मशब्दार्थतयैव गुणपरिपूर्णतारूपलक्षणलाभात्किमनेन लक्षणेनेति शङ्कते **ननु चेति** । तदुपपादनार्थमित्येतदुपपादयति **प्रसिद्धेनेति** । लक्ष्यनिष्ठतयेति शेषः । व्याकरणादिषु शब्दार्थतया प्रसिद्धिमात्रस्याप्रयोजकत्वात् । **अविनाभावित्वात् इति** । ज्ञानानन्दशक्तिचातुर्यादिगुणगणाभावे जगन्निर्माणाऽसम्भवात् इति भावः ।





**चषकः—** **बृहदिति** । बृहेः पूर्त्यर्थकतया मन्प्रत्ययस्य चाश्रयार्थकतया पूर्त्याश्रयमात्रलाभेऽपि तन्निरूपकतापन्नाखिलगुणानां प्रमाणान्तरजनितेशधर्मिकतदबाधप्रतिसन्धानसाचिव्येन लाभ इत्यवसेयम् । **प्रसिद्धेन हीति** । लक्ष्यवृत्तित्वेनेत्यादिः । प्रकृतिप्रत्ययसमभिव्याहारनियन्त्रितोपस्थितिगोचरगुणकर्तृकपूर्तिकर्मत्वस्य पाणिनीयदिशा प्रथितत्वेऽपि लक्ष्याभिमतजीवान्यव्यक्तिवृत्तितया विश्रुतत्वाभावेनाऽऽदितस्तल्लक्षणतया दुर्वचमिति भावः ।

**५ सु०— ननु 'जन्मादिकं वा लक्षणत्वेनात्राभिमतं तत्कारणत्वं वा । नाद्यः तस्य प्रपञ्चधर्मत्वात् । न द्वितीयः ब्रह्मवत्तदीयजगज्जन्मादिकारणत्वस्याप्यप्रसिद्धत्वात् । न च अनुमानात्तत्सिद्धिः उत्तरसूत्रविरोधात् । अतः कथमेतदपि लक्षणम् ।' इत्यत आह सृष्टिरिति ।**

**अनु०— सृष्टिः स्थितिश्च संहारो नियतिर्ज्ञानमावृतिः ।**
**बन्धमोक्षावपि ह्यासु श्रुतिषूक्ता हरेः सदा ॥**

**जगज्जन्मादिकारणत्वमेव लक्षणम् । अस्य प्रत्यक्षादिप्रमाणसिद्धतया प्रकृतस्य समस्तप्रपञ्चस्य, यथासम्भवं जन्मादि, यतो भवति, तद्ब्रह्म; इति सम्बन्धात् । न चैतदपि अप्रसिद्धम्, यतः अस्य जगतः सृष्ट्यादयः; आसु श्रुतिषु प्रसिद्धासु भाष्योदाहृतासु, हरेरुदिताः । सदेत्यविगानं सूचयति ॥ न च वाच्यं 'समस्तगुणसम्पूर्णता च श्रुतिप्रसिद्धैवातः सैव लक्षणत्वेनोच्यतामि'ति, तस्याः श्रुतिप्रसिद्धाया अप्यसम्भावनाशङ्काग्रस्तत्वात् । जगज्जन्मादिकारणत्वं तु श्रुतिप्रसिद्धं युक्त्याऽप्यनुगृह्यत इति द्वितीये वक्ष्यते । सकलगुणपूर्णतायां तु युक्तिर्जगज्जन्मादिकारणत्वमेवेत्येतदेवादौ वक्तव्यमिति ।**

**परि०— उत्तरेति** । तत्र कारणत्वस्य शास्त्रैकसमधिगम्यत्वोक्तेरिति भावः । **एतदपीति**। न केवलं सम्पूर्णगुणत्वमित्यपेरर्थः । प्राग्विकल्पितयोर्द्वितीयमङ्गीकरोति **जगदिति** । तत्सूत्रारूढं दर्शयितुं सूत्राक्षरार्थमाह **अस्येति** । **तद्ब्रह्मेतिसम्बन्धादिति** । तल्लाभप्रकारश्च प्रागेवोक्तः । 'हिशब्दो हेतौ' इत्युपेत्य श्लोकं योजयति **यत इत्यादिना** । हरेः सकाशादिति सन्न्यायरत्नावल्युत्त्या हरेरिति पञ्चम्यन्तमुपेत्याह **अस्येति** । इयं शेषोक्तिः अनुवृत्तिर्वा । तस्यार्थो **जगत इति** । **सृष्ट्यादय इति** । मूले सुधायां च प्रयोजकव्यापारवाचिना सृष्ट्यादिशब्देन प्रयोज्यव्यापारो जन्माऽऽदिर्लक्षणया बोध्यः ।





तथैव चन्द्रिकोक्तेः । **भाष्येति** । 'य उ त्रिधातु पृथिवीम्' इत्यादिभाष्योक्तास्वित्यर्थः । **अविगानमिति** । सर्वकारणवाक्यानां ब्रह्मकारणत्वे विरोधाभावमिति वा । सृष्टिवेलायां न स्थितिः स्थितिदशायां न सृष्टिसंहारौ संहृतिवेलायां न सृष्ट्यादि, विरोधात्; किन्तु कालभेदेनैव सृष्ट्यादि; इति रामानुजाद्युक्तदिशा न भवति । स्रष्टृत्वादयो गुणाः सदैव सन्ति हराविति स्रष्टृत्वादिधर्माणां सर्वेषामपि सार्वकालीनत्वोक्त्याऽविरोधमिति वाऽर्थः । तत्प्रपञ्चितं चन्द्रिकायां रामानुजमतनिराकरणप्रस्तावे । **द्वितीय इति** । अध्याय इति योज्यम् । तत्र चेतनत्वसर्वस्वातन्त्र्यसर्वशक्तिमत्वादियुक्तीनां वक्ष्यमाणत्वादिति भावः । गुणपूर्तिरप्येवं स्यादित्यत आह **सकलेति** ।

**यादु०— द्वितीये वक्ष्यत इति** । 'श्रुतेस्तु शब्दमूलत्वात्', 'आत्मनि चैवं विचित्राश्च हि', 'सर्वोपेता च तद्दर्शनात्', 'विकरणत्वान्नेति चेत्तदुक्तम्', 'न प्रयोजनवत्त्वात्' इत्याद्यधिकरणेषु वक्ष्यत इत्यर्थः । यद्वा । 'न तु दृष्टान्तभावात्' इत्येतत्सूत्रव्याख्यानरूपे 'उत्पत्तिनाशकारी हि बुद्धिमान् दृश्यते क्वचित् । तद्दृष्टान्तेन सर्वत्र कर्ता किं नानुमीयते ॥' इत्यादावित्यर्थः । **जगज्जन्मकारणत्वमेवेति** । यद्यपि सकलगुणपूर्णत्वेऽपि 'सर्वधर्मोपपत्तेश्च' इत्यत्र स्वतन्त्रत्वरूपा युक्तिरन्या द्वितीये वक्ष्यते, तथाऽपि स्वसत्तादौ परानपेक्षत्वरूपस्वातन्त्र्योपपादकतया तत्रापि जगज्जन्मादिकारणत्वमेव वक्तव्यमित्यभिप्रेत्यैतदुक्तमित्यवधेयम् ।

**वं०प०— असम्भावनाशङ्केति** । सन्ति खलु तेऽप्यर्था ये प्रमाणप्रमिता अप्यसम्भावनया अपोद्यन्ते; यथा देवगवानामुत्तानानां वहनमिति भावः।

**आनन्दः**— नन्वनन्तगुणपूर्णत्वस्याप्रसिद्धिः किमधिकरणविशेषे वा श्रुत्यादौ वा । नाद्यः । जगज्जन्मादिकारणत्वस्याप्यधिकरणविशेषे प्रसिद्धत्वात् । न द्वितीयः । श्रुत्या जगज्जन्मादिकारणत्वस्यैवानन्तगुणपरिपूर्णत्वस्यापि प्रसिद्धत्वादित्याशयेन शङ्कते **ननु जन्मादिकं वेति** । **उत्तरसूत्रेति** । तत्र श्रुत्यादिशास्त्रस्यैव प्रमाणीकृतत्वादिति भावः । किमत्र लक्षणमिति पृष्टे सृष्ट्यादयो हरेरित्युक्तम् । एवमपि विकल्पितपक्षद्वये कः पक्षः स्वीकृत इति न ज्ञायते इत्यत आह **जगदिति** । ननु तर्हि सूत्रविरोधः । तत्र जन्मादिरेव लक्षणतया उक्तत्वादित्यतो व्याख्याति **अस्येति** । ननु जगतोऽप्रत्यक्षत्वात्तत्रेदंशब्दप्रयोगोऽनुपपन्न इत्यत आह **प्रत्यक्षादीति** । ननु जन्मादिकारणत्वमप्यसम्भावितमित्यत आह **जगदिति** । ननु पूर्णगुणत्वमपि युक्त्यानुगृहीतमित्यत आह **सकलेति** ।

**वा०चं०— जन्मादिकं वेति** । अत्र लक्षणसूत्रे यतोऽस्येत्यस्योपसर्जनत्वेन जन्मादीत्यस्य विशेष्यतया प्राधान्येन प्रतीतेस्तस्यैव लक्षणत्वपक्षस्य प्रसक्तिः । यतस्तद्ब्रह्मेति सम्बन्धविवक्षया द्वितीयस्येति बोध्यम् । अस्येत्यस्य भाष्ये सम्बन्धेन अस्य सृष्ट्यादयो हरेरुक्ता इत्युक्त्या भाष्यकारेण जन्मादिकारणस्यैव तल्लक्षणत्वसूचनेन सूचितां सूत्रयोजनामाह **अस्येति** । सृष्ट्यादीनां सदातनत्वाभावात्सदेत्यस्य सृष्ट्यादय इत्यनेन वैयर्थ्याद्दुदिता





इत्यनेन चान्वयासम्भव इत्यतः, उदिता इत्यनेनैवान्वयः, अविगानं च तदर्थः, सप्रयोजनत्वाच्च न वैयर्थ्यम्; इत्यभिप्रेत्य तत्सूचितार्थमाह **सदेतीति** । अविगानेन श्रुत्युदितत्वसूचनेन लब्धं प्रयोजनं वक्तुं तन्निवर्त्यां शङ्कां दर्शयति **न च वाच्यमिति** । **युक्त्याऽप्यनुगृह्यत इति** । 'न तु दृष्टान्तभावात्' इत्यादिना सूत्रकारेणैवानुग्राहक-युक्तिकथनादिति भावः ।

**वा०र०**— जन्मादिकं वेत्यादि विकल्पोत्थानमुपपादयति **अत्रेति** । सृष्टिरित्यादिभाष्ये अस्येत्यस्यानुक्तेः भाष्ययोजनावसरे यतोऽस्येत्यनुवादायोग इत्यतस्तत्र अस्येत्यस्य भाष्येऽध्याहारेणाभिप्रेतत्वात् अस्येत्येतदन्त-र्भावेन भाष्ययोजनायां नानुपपत्तिरित्याह **अस्येत्यस्येति** । अनेनास्य प्रत्यक्षादीत्युक्तसूत्रयोजनासूचकत्वेन यतोऽस्येत्यादिना भाष्ययोजनोक्तेति ध्वनितं भवति । **सृष्ट्यादय इत्यनेनेति** । अन्वयासम्भव इति वक्ष्यमाणेन अन्वयः । **वैयर्थ्यादिति** । उदिता इत्यनेन च वैयर्थ्यादन्वयासम्भव इति योज्यम् । **अविगानमिति** । विवादाभाव इत्यर्थः । पूर्णता चेत्यस्य नापीत्यर्थो मूले । **अनुग्राहकेति** । 'उत्पत्तिविनाशकारी च बुद्धिमान्पश्यते क्वचित् । तद्दृष्टान्तेन सर्वत्र कर्ता किं नानुमीयते ।' इत्यनुभाष्यमूलोपदर्शिता 'विमतं कार्यं चेतनोत्पाद्यं कार्यत्वात्पटवत्, चेतनविनाश्यं च तद्वदेवे'त्यादिकानुग्राहकयुक्तिर्द्रष्टव्या **कथनादिति** । युक्तिपादे असदधिकरण इति शेषः ।

**विठ्ठल०**— उक्तं लक्षणं सूत्रारूढतया दर्शयति **अस्येति** । मूले हि मतो अस्येति दोष इत्याशयेन योजयति **यत इति** । **भाष्योदाहृतास्विति** । 'यतो वा', 'य उ त्रिधा तु', 'चतुर्भिः साकं' इत्याद्यास्विति । हरेरिति पञ्चमी । हरेरेव सकाशादिति सन्न्यायरत्नावल्युक्तेः, द्वितीयेऽध्याये इति शेषः । श्रुतिप्रसिद्धजन्मादिकारणत्वस्य युक्त्यनुग्रहादसम्भवित्वाभावो यथा तथा श्रुतिसिद्धगुणपूर्णताया अपि युक्त्यनुग्रहेण गुणपूर्णताया अप्यसम्भावना-परिहारे ब्रह्मशब्दार्थतया प्राप्तं गुणपूर्णत्वमेव लक्षणं भवतीति पुनर्द्वितीयसूत्रोक्तलक्षणवैय्यर्थ्यमित्यत आह **सकल-गुणपूर्णतायां त्विति** । यद्यपि सर्वधर्मोपपत्तेश्चेतिं गुणपूर्णत्वे स्वातन्त्र्यरूपा युक्तिरुच्यते, स्वतन्त्रत्वात् सुखसज्ज्ञानशक्तिगुणैः पूर्णः सर्वदैवाखिलैश्चेति हि निर्णये तथापि स्वातन्त्र्योपपादकतया च जगत्कारणत्वमेव युक्तिरित्याशयेनैतदेवादौ वक्तव्यमित्युक्तमिति ध्येयम् ।

**चषकः— द्वितीये वक्ष्यत इति** । युक्तिचरणे श्रुतेस्तु शब्दमूलत्वादित्यादिकयोगैरित्यादिः ।

**६ सु०— आद्यस्य हिरण्यगर्भस्य जन्म यतस्तद्ब्रह्मेति सूत्रं व्याचक्षते केचित् । जन्म आदिर्यस्यावस्थानस्य तज्जन्मादीत्यपरे, जगत्पालको हि भगवान्विष्णुरिति प्रसिद्धिः । अन्ये तु जन्मादीति तद्गुणसंविज्ञानबहुव्रीहिमुपादाय सृष्टिस्थितिभङ्गं समासार्थ इति व्याकुर्वते । तदिदमयुक्तम् । श्रौतं हि ब्रह्मणो लक्षणमिहोच्यते, श्रुतयश्च कृत्स्नस्यापि प्रपञ्चस्य सृष्ट्याद्यष्टककारणं परमेश्वरमभिदधति; इत्यतः सृष्ट्याद्यष्टकं जन्मादिपदार्थ इति भावेनाह सृष्टिरिति ।**





**परि०**— नन्वेवं यथासूत्रं सृष्ट्यादिर्यासु श्रुतिषु हरेरुदित इति वाच्ये अनेकधा आदिपदार्थोक्तेरुपयोगं न पश्याम इत्यतस्तदनुरोधेनान्यथाऽप्यवतारयति **आद्यस्येत्यादिना** । अतद्गुणसंविज्ञानबहुव्रीहिमुपेत्य तस्य प्रसिद्धिमाह **जगत्पालको हीति** । 'विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः' इत्यादौ प्रसिद्धिरित्यर्थः । **तद्गुणेति** । तस्य गुणभूतस्यान्यपदार्थे संविज्ञानं यस्मिन्बहुव्रीहौ स तद्गुणसंविज्ञानबहुव्रीहिः; तमुपादायेत्यर्थः । सृष्टिस्थितिभङ्गमिति समाहारः । **इहेति** । सूत्रे । **श्रुतयश्चेति** । 'यतो वा इमानि भूतानि' इति 'य आत्मानमन्तरो यमयति' इति 'त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो' इत्येवंरूपाश्चन्द्रिकोक्ता द्रष्टव्याः । आद्यश्रुतौ सृष्टिस्थितिप्रलयमोक्षाणाम्, 'य' इत्यत्र नियमनस्य, 'त्वम्' इत्यत्र ज्ञानाज्ञानबन्धमोक्षाणां श्रवणात् । यद्वा सन्न्यायरत्नावल्युक्ताः 'यतः प्रसूता जगतः प्रसूती', 'सर्वे निमेषा जज्ञिरे', यस्मिन्निदं सं च विचैधि सर्वम्' इत्यादयो नारायणानुवाकस्थाः श्रुतयो ग्राह्याः ।

**यादु०**— **जगत्पालको हीति** । तथा च अतद्गुणसंविज्ञानबहुव्रीहिरिति भावः । **तद्गुणसंविज्ञानेति** । तच्छब्देन बहुव्रीह्यर्थोऽन्यपदार्थ उच्यते; तस्य गुणत्वेन संविज्ञानं यस्मिन्समासे स तथोक्तः । सर्वस्य विशेषणत्वे समासासम्भवात्समासार्थैकदेशो विशेषणमिति लभ्यत इति कल्पतरौ व्याख्यातम् । विवरणेऽपि अनेनैवाभिप्रायेण विशेष्यैकदेशमेव विशेषणं कृत्वा समासस्तद्गुणसंविज्ञानः, यथा 'लम्बकर्णो देवदत्तः' इत्यत्र देवदत्तैकदेशमेव विशेषणं कृत्वा देवदत्तो बोध्यत इत्युक्तम् । प्रकृते च यद्यपि समासार्थभूता जन्मस्थितिभङ्गास्त्रयोऽपि विशेष्यस्तथाऽपि तदेकदेशस्य जन्मनो विशेषणत्वविवक्षयाऽयं समासस्तद्गुणसंविज्ञान इत्युच्यत इति भावः । जन्म आदिर्ययोः स्थितिभङ्गयोस्तौ जन्मादी इत्यन्यपदार्थो यदि विशेषणरूपेण विवक्ष्यते तर्हि जन्मादी अस्येति निर्देशे गौरवं स्यात् तन्मा भूदिति सामान्यविवक्षया नपुंसकप्रयोगः सूत्रे कृतः । तत्र नपुंसकैकवचनप्रयोगार्हं समाहारमाह **सृष्टिस्थितिभङ्गमिति** ।

**वं०प०**— **श्रुतयश्चेति** । 'यतो वा इमानि भूतानि' इति, 'य आत्मानमन्तरो यमयति' इति, 'त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो' इत्येवंरूपाश्चन्द्रिकोक्ता ज्ञातव्याः ।

**आनन्दः**— प्रकारान्तरेणैतदेव व्याख्यातुं तन्निवर्त्यमाह **आद्यस्येति** । **तद्गुणसंविज्ञानेति** । ते गुणाः संविज्ञायन्ते कार्यभक्तेन यस्मिन् बहुव्रीहौ स तद्गुणसंविज्ञानः सम्भवति इति । दीयमानविशेषणस्य सम्भवे उपपन्नत्व इत्यर्थः ।

**वा०चं०**— एवं हरेः सकाशाज्जगत्सृष्ट्यादयः श्रुतिषूक्ता इत्युक्तिसूचितार्थं व्युत्पाद्य सौत्रादिशब्दार्थतया स्थित्यादिकथनेन जन्माद्यस्येति पदच्छेदसूचनेन तेषां चाष्टानामुपादानेन सूचितमर्थं व्युत्पादयितुं तद्व्यावर्त्य-

मपव्याख्यानमित्याशयेन तत्स्वरूपं दर्शयति **आद्यस्येति** । **तद्गुणेति** । तदा बहुव्रीह्यर्थोऽन्यपदार्थो गृह्यते । तस्य गुणत्वेन संविज्ञानं यत्र समासे स तथा । सर्वस्य विशेषणत्वे समासायोगात्तदर्थैकदेशस्तथा । एवं च विशेष्यैकदेशं विशेषणं कृत्वा समास इत्यर्थः । सृष्टिस्थितिभङ्गमिति नपुंसकलिङ्गं तु जन्मादीति सूत्रानुसारेण समाहारविवक्षयेति द्रष्टव्यम् । अत्र तद्गुणेतिविशिष्यग्रहणेनाव्यवहितपूर्वमतद्गुणसंविज्ञानः स इति सूचयति । श्रुतिषु कृत्स्नप्रपञ्च-सृष्ट्याद्यष्टककारणत्वोक्तावपि सूत्रे हिरण्यगर्भजन्मादिमात्रोक्तौ न किञ्चिद्बाधकमिति हेत्वप्रयोजकत्वशङ्काऽनुत्थानाय पीठिकामारचयति **श्रौतं हीति** । सङ्कोचकारणाभावाद्योग्यतया सम्बद्धकृत्स्नप्रपञ्चस्य सृष्ट्यादेरित्यर्थकथनेनास्येति पदच्छेदसूचनेनाद्यस्य, सृष्ट्याद्यष्टकमिति चोत्तरद्वयस्य, निराससूचनम् ।

**वा०र०— स्थित्यादिकथनेनेति** । भाष्यकारीयस्थित्यादिकथनेन यज्जन्म आदिरस्येति पदच्छेदसूचनं तेनेत्यस्य सूचितमर्थमित्युत्तरेण सम्बन्धः । **तेषां चेति** । जन्मादीत्यत्र जन्मपदादिपदाभ्यां सङ्गृहीतसृष्ट्यादीना-मित्यर्थः । शब्दस्योपादानेन चेति सम्बन्धः । **तत्स्वरूपम्** अपव्याख्यानस्वरूपमित्यर्थः । समस्यमानपदार्थ इत्यादिप्रक्रियावाक्यशेष्यम् । यत्र बहुव्रीहौ समस्यमानपदस्यार्थोऽन्यपदार्थस्य विशेष्यस्यैकदेशोऽवयवो भवति । स तद्गुणेति व्याख्यातं तन्मनसि कृत्वाह **तदेति** । तच्छब्देनेत्यर्थः । **स तथेति** । स तद्गुणसंविज्ञान इत्यर्थः । **तथेति** । विशेषणमित्यर्थः । अत्रान्यपदार्थस्यापि वर्तिपदार्थत्वमित्यादिकं प्रमेयं जनार्दनस्त्वात्मचतुर्थ एवेत्येत-द्दृष्टान्तेन तथाप्यबुद्धिपूर्वत्वादुक्तदोष इति 'पुरुषाश्मवदि'त्येतत्सूत्रीयानुव्याख्यानव्याख्यानमूलटीकायां प्रतिपादितम्। तत्र तदुपपादनं च अस्मदीयमस्ति । तथा जन्माधिकरणीयचन्द्रिकायामपि 'एकस्य वस्तुन' इत्यादिकं पराप-व्याख्याननिराकरणावसरे उक्तम्। कल्पतर्वादौ च। 'प्र वो यह्वं पुरूणामि'त्येतदृग्भाष्यस्थस्तोममित्यन्तादौ च तद्विचारः तट्टीकादौ । सर्वादीति सर्वेति सूत्रकुसुमविकासे सर्वशब्दे रूपद्वयाश्रयणेन सर्वाद्यन्तःपातात्सर्वशब्दस्यापि ग्रहणम् । तद्यथा देवदत्तशालास्था ब्राह्मणा इत्याद्युक्तम् । तथा स्त्रियाः पुंवद्भाषितेति सूत्रीयावरणी प्रियादिष्विति पुंवद्भावनिषेधस्यापूरणीप्रामाण्योरिति सूत्रविहिताप्प्रत्ययस्य च व्यवस्थापकपुंवद्भावनिषेधोऽप्प्रत्ययश्चेति प्रक्रिया-वाक्यविचारशेष्यां कल्याणी पञ्चमरात्रय इत्याद्युदाहरणे रात्र्या एवान्यपदार्थत्ववर्तिपदार्थत्वमित्याद्युक्तम् । तथा वैशेषिकाधिकरणस्थ 'येनैव च प्रकारेणात्यसिद्धमनुमीयते । तेनैव शशशृङ्गादेरि'त्येतदनुभाष्यमूले शशशृङ्गादेरिति अप्रामाणिकोपलक्षणमित्युक्तस्य टीकाकृता व्याख्यानं यत्कृतं तदुपपादनमस्माभिः करिष्यते । तथा 'चैत्रशालास्था आनीयन्तामि'त्यादिदृष्टान्तेन गुणस्यापि समासावयवत्वमित्यादिकं सर्वगतत्वाधिकरणटीकायामुक्तम् । तथा ग्रन्थादिः प्रकरणादिरुपक्रमः मङ्गलादीनि इत्यादावादिपदस्य प्रथमार्थकतया जन्म प्रथमं यस्येत्यर्थोऽपि प्रतीयते । अभिनवचन्द्रिका च । अन्यपदार्थानां देवानां यद्ब्रह्मरूपेन्द्रादित्वेति प्रथमगीताभाष्यटीकातद्विचारश्चास्मदीयोऽस्ति । तदेतत्सर्वं सावधानतया पर्यालोच्य लेख्यमस्ति । **सृष्टिस्थितिभङ्गमिति नपुंसकलिङ्गं त्विति** । सूत्रानुसारित्वेऽपि कथं साधुत्वमित्यत उक्तं **समाहारविवक्षयेति** । सर्वो द्वन्द्वो विभाषया एकवचन इति भावः । एतदपि चन्द्रिका-टीकाद्युक्तरीत्या व्याख्येयमस्ति । . . . . . . । **अव्यवहितेति** । आद्यस्येत्यादियोजनायां बहुव्रीहिप्रसक्त्यभावादव्यवहितेति विशेषणम् । **स इति** अस्यावस्थावस्थानप्रधानको बहुवीहिरित्यर्थः ।





**हिरण्यगर्भजन्मादीति** । हिरण्यगर्भजन्म च आदिपदेन स्थितिमात्रम् । त्रयं वा । तन्मात्रोक्तावित्यर्थः । अत्र सृष्ट्याद्यष्टकमिति मूलानुसारेण यत इत्येत-दर्थानन्तभविन जन्मादि इत्येवोक्तम् । **सङ्कोचेति** । एतच्च कृत्स्नप्रपञ्चसम्बन्धे हेतुसमर्पकम् । तथा च भाष्ये कृत्स्नप्रपञ्चस्येत्यनुक्तावपि योग्यतया तत्सम्बन्धोऽभिप्रेत इत्युक्तं भवति । तत्सम्बन्धे उपायकथनं **योग्यतयेति** । कात्स्न्र्ये निमित्तं **सङ्कोचे कारणाभावादिति** । यथासम्भवमिति पूर्वमुक्तं च द्रष्टव्यम् । **सृष्ट्यादे**रित्यर्थकथनेन पदस्येति पदच्छेदसूचनं तेनेति योज्यम् । **आद्यस्य** निराससूचनमिति सम्बन्धः । आद्य-स्यापव्याख्यानस्योत्तरद्वयस्यापव्याख्यानस्येति पूरणीयम् ।

**स०व्र०— जन्म आदिर्यस्यावस्थानस्येति** । अत्र अतद्गुणसंविज्ञानबहुव्रीहिः । **तद्गुणसंविज्ञानेति** । ते समस्यमानपदार्था गुणा उपसर्जनभूता संविज्ञायन्ते प्रधानभूतान्यपदार्थेन सहान्वये पदान्तरपदार्थान्वितत्या स्वीक्रियन्ते यस्मिन्बहुव्रीहौ स तद्गुणसंविज्ञान इत्यर्थः ।

**विठ्ठल०—** सूत्र इव भाष्येऽपि आदिपदेनैव सर्वग्रहणसम्भवाद्विशिष्यस्थित्यादीनां ग्रहणस्योपयोगं सूचयितुमवतारयति **आद्यस्येत्यादिना** । अतद्गुणसंविज्ञानबहुव्रीहिरित्यभिप्रेत्याह **जगत्पालको हीति** । ''विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मगोप्ता, स्थित्यादये हरिविरिञ्चे''त्यादि पुराणप्रसिद्धिरित्यर्थः । तथा च स्थितिकर्तृतामात्रं लक्षणमिति भावः । **तद्गुणेति** । तस्य गुणभूतश्रुत्यर्थस्यान्यपदार्थे संविज्ञानं साहित्येन ज्ञानं यस्मिन्बहुव्रीहौ स तथोक्तः । आदिपदेन स्थितिलययोरेव ग्रहणं तथा च सृष्टिस्थितिसंहारकर्तृत्वं लक्षणम् इति पराभिप्रायः ।

**चषकः— तद्गुणसंविज्ञानेति** । तस्मिन् गुणस्तद्गुण इति विग्रहोपगमेन समासशक्तिविषयतापन्नान्य-पदार्थनिष्ठविशेष्यतानिरूपितप्रकारतापन्नस्तद्गुणपदेन अभिधीयते स सम्यक्समभिव्याहृतपदार्थान्तरान्वयितया विज्ञायतेऽनेनेति व्युत्पत्त्या समभिव्याहृतपदार्थान्तरान्वयविषयतानिरूपितदर्शितप्रकारतापन्ननिष्ठविषयताशालि-शाब्दधीजनकत्वं तद्गुणसंविज्ञानत्वम् । तद्यथा लम्बकर्णमानयेत्यादौ आनयनक्रियायां कर्णादिरप्यन्वयात् । चित्रगुमानयेत्यादावानयनक्रियायां स्वामिन एवान्वयेन गवामनन्वयादतद्गुणसंविज्ञान इति तस्य व्यपदेशः । एवं च जन्मादीत्यत्र स्थितिभङ्गयोरेव ब्रह्महेतुकतापत्त्या जन्मनोऽन्यहेतुकताप्रसङ्गेनातद्गुणसंविज्ञानो नोपपद्यते । तद्गुणसंविज्ञानतायां समासार्थीभूतसमुदायविशेषणतापन्नसमुदायिभूतजन्मनोऽपि ब्रह्महेतुकतासिद्ध्या सामञ्जस्य-मित्याशयः । **सृष्टिस्थितिभङ्गमिति** । यद्यपि जन्मस्थितिभङ्गानां त्रयाणां समासजनितशाब्दधीविषयतया भङ्गपदस्य बहुवचनान्ततैव न्याय्या । तथाप्येकस्थानावस्थितमहीरुहेषु संहत्यवच्छिन्नेषु एकवचनान्तवनपद-व्यपदेशदर्शनेन प्रकृतेऽपि संहत्यवच्छिन्नानां समासार्थतया समाहारोपाधिकत्वेन 'सर्वो द्वन्द्वः विभाषयैकवद्भवति' इति कात्यायनोक्त्या चैकवचनस्याप्युपपत्तेः । समुदायसमुदायिनोरैक्येन विशेषशक्त्याहितभेदेन चान्यपदार्थवति पदार्थत्वे घटनीये इति भावः । प्रपञ्चितं चैतत्सर्वादीनीति सूत्रे शब्दकौस्तुभे । तस्यान्यपदार्थस्य गुणानां वतिपदार्थरूपाणां विशेषणानां कार्यान्वयितया संविज्ञानं यत्र स तद्गुणसंविज्ञान इत्यादिना । अत्र व्याचक्षाणाः ''तच्छब्देन बहुव्रीह्यर्थोऽन्यपदार्थ उच्यते । तस्य गुणत्वेन संविज्ञानं यस्मिन् समासे स तथोक्तः । सर्वस्य





विशेषणत्वे समासासम्भवात्समासार्थैकदेशो विशेषणमिति लभ्यत इति कल्पतरौ व्याख्यातम् । विवरणेऽप्यनेनैवाभिप्रायेण विशेष्यैकदेशमेव विशेषणं कृत्वा समासस्तद्गुणसंविज्ञानः, यथा 'लम्बकर्णो देवदत्तः' इत्यत्र देवदत्तैकदेशमेव विशेषणं कृत्वा देवदत्तो बोध्यत इत्युक्तम् । प्रकृते च यद्यपि समासार्थभूताः जन्मस्थितिभङ्गास्त्रयोऽपि विशेष्यास्तथापि तदेकदेशस्य जन्मनो विशेषणत्वस्य विवक्षयाऽयं समासस्तद्गुणसंविज्ञान इत्युच्यत इति भावः'' इति व्याचक्षते ।

**७ सु०— 'ननु सृष्ट्यादिहेतुत्वं प्रत्येकं ब्रह्मलक्षणम् उत मिलितम् । आद्येऽनेकलक्षणोक्तिवैयर्थ्यम् । न द्वितीयः, एकैकस्य व्यभिचाराभावात् । सम्भवे व्यभिचारे च विशेषणमर्थवत्' इत्यत आह सृष्टिरिति । अत्रासमासकरणेन प्रत्येकं लक्षणत्वं सूचयति । न चानेकलक्षणोक्तिवैयर्थ्यम् । जिज्ञास्यब्रह्मणो हि सर्वव्यावृत्तये लक्षणमत्रोच्यते । न च एकमेव सर्वत्र जिज्ञासाविधायकश्रुतिषु लक्षणं श्रूयते । किं त्वासु ब्रह्मजिज्ञासाविधात्रीषु श्रुतिषु क्वचित्सृष्टिः क्वचित्स्थितिरित्यष्टकं जिज्ञास्याद्धरेर्विश्वस्योक्तमित्यनेकलक्षणोक्त्युपयोगः ।**

**परि०—** नन्वथापि 'सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षा यत' इति भाष्योक्तिवदत्राप्यनुभाष्ये तथैव वक्तव्येऽसमासेन निर्देशो निर्बीज इत्यतः तदनुरोधेनान्यथाप्यवतार्य तात्पर्यमाह **ननु सृष्ट्यादीत्यादिना । सम्भवे व्यभिचारे चेति ।** पीतः शङ्ख इति विशेषणं नोपादेयम्, असम्भवात् । अतो यद्विशेषणं सम्भवति, यदभावे च व्यभिचारः अलक्ष्ये वृत्तिः पूर्वतनस्य, तद्विशेषणम् । तत्रार्थवदितीह विवक्षितार्थो ध्येयः । **इत्यनेकलक्षणोक्त्युपयोग इति ।** एतच्चोपलक्षणम् । आद्यपद्यव्याख्यानावसरोक्तदिशा विभवार्थाऽनेकलक्षणोक्तिरित्यपि ज्ञेयम् ।

**गु०दी०— सम्भवे व्यभिचारे च** इत्यत्र सम्भवे लक्ष्ये सम्भवे सति व्यभिचारे च सतीत्यर्थः । व्यभिचारे सति तद्व्यावर्तकं विशेषणमित्येवोक्ते पटादौ व्यभिचारवारकस्य घटत्वे सति पटत्वस्यापि घटलक्षणत्वं स्यात् । अतः सम्भवे सतीत्युक्तमिति भावः ।

**यादु०— सम्भवे व्यभिचारे चेति ।** यस्य विशेषणस्य विशेष्ये सम्भवस्तत्सजातीये व्यभिचारो व्यतिरेकश्च तदेव विशेषणं सजातीयव्यावर्तकतया सार्थकमिति भावः । यथा नीलोत्पलमित्यादौ नैल्यादि । प्रकृते च न जन्मादिकर्तृत्वेन सजातीये क्वचित्स्थित्यादिकर्तृत्वव्यतिरेकोऽस्ति । येन तद्व्यावर्तकतया स्थित्यादिकर्तृत्वं सार्थकं स्यादित्यर्थः । यद्वा यस्य विशेषणस्य विशेष्ये सम्भवः, यद्व्यतिरेके च विशेष्यनिष्ठधर्मस्य व्यभिचारोऽतिव्याप्तिः तदेव विशेषणं सार्थकमित्यर्थः ।





**आनन्दः**— **व्यभिचारे** पूर्वगृहीतस्येति शेषः। प्रत्येकलक्षणत्वाङ्गीकारे ज्ञापकमाह **अत्रेति**।

**वा०चं०**— **सम्भवे व्यभिचारे च विशेषणमर्थवदिति**। यद्विशेषणं लक्ष्यमात्रे सम्भवतीत्यव्याप्त्यसम्भवव्यावर्तकत्वसूचनं, यदनुपादाने व्यभिचार इत्यतिव्याप्तिव्यावर्तकत्वसूचनमिति भावः। अत्र भाष्यकारीयज्ञापकस्य अस्पष्टत्वात्स्वयमेवाह **अत्रेति**। अत्रापि पूर्ववदेवाप्रयोजकत्वशङ्कानिरासाय पीठिकारचनं **जिज्ञास्येति**। अत्र असमासकरणेन न केवलं प्रत्येकलक्षणत्वसूचनं किन्तु तदुपपादनप्रकारस्यापीत्याशयेनोपपादकांशे क्वचित्सृष्टिः क्वचित्स्थितिरित्युक्तम्।

**वा०र०**— तृजकाभ्यां कर्तरीत्येतत्सूत्रीयसामर्थ्यादिकस्य विशेषणार्थमिति काशिकाव्याख्यानमञ्जर्यां सम्भवे व्यभिचारे चेत्याद्युक्तम्। तस्य समानन्यायतया लक्षणविषयेऽपि मूले उक्तिः। तत्कुसुमविकासानुसारेण यद्विशेषणमित्यादि व्याख्यानम्। अतिव्याप्तिव्यावर्तकत्वे सूचनमित्यन्त एव पाठो मूलकोशे इति भाव इत्यधिकं लेखकप्रयुक्तम्। **अत्र भाष्येति**। एतद्योजनायामित्यर्थः। श्रौतं हीत्यादि पूर्वयोजनायामिवेति शेषः। **ज्ञापकस्य** प्रत्येकलक्षणत्वज्ञापकस्येत्यर्थः। अस्पष्टत्वादेवेति सम्बन्धः। स्वयमाहेत्यस्य स्वयं दर्शयतीत्यर्थः। **तदुपपादनप्रकारस्यापीति**। सूचनमिति बुद्ध्या विवेकेन वर्तते।

**स०व्र०**— **सम्भवे व्यभिचारे चेति**। यद्धर्मपुरस्कारेण विशेष्यमुपात्तं तद्धर्मवति कुत्रचिदसम्भवः उपात्ते तु सम्भवश्चेत् तर्हि सार्थकमित्यर्थः। नीलमुत्पलमिति यथा।

**विट्ठल०**— भाष्य इवात्रादिसमासपदेनैव निर्देशसम्भवेऽप्यसमासोक्तेरभिप्रायं व्यञ्जयन् तमेव श्लोकमवतारयति **नन्वित्यादिना**। **सम्भवे व्यभिचार इति**। यद्विशेषणं यस्मिन् लक्षणे सम्भवि यदभावे वाऽवशिष्टं लक्षणम् अतिव्यापकं तद्विशेषणमेव तस्मिन् लक्षणवाक्ये अर्थवत् इति प्रकृतानुसारेणार्थः।

**चषकः**— **सम्भवे व्यभिचारे चेति**। यादृशलक्षणवाक्यघटकपदबोध्यस्य विशेषणस्य प्रकृतलक्ष्यतावच्छेदकाभिमतधर्मावच्छेदेनावस्थितिः प्रकृतलक्ष्यतावच्छेदकाभिमतधर्मव्यापकधर्मपुरस्कारेण प्रकृतलक्ष्यसजातीये व्यभिचारो व्यतिरेकश्च तद्विशेषणमव्याप्त्यादिदोषत्रयव्युदासाख्यफलवदित्यर्थः। अत्र च सम्भवपदेन अव्याप्त्यसम्भवव्यावृत्तिर्ध्वन्यते। व्यभिचारपदेन चातिप्रसङ्गनिरास इति ध्येयम्।

**८ सु०— अथवा "तद्विजिज्ञासस्व तद्ब्रह्म" इति जिज्ञास्ये वस्तुनि ब्रह्मशब्दश्रवणात् तेन च तस्य समस्तगुणपूर्णता(त्वा)भिधानात् जीवस्य (च) तदभावात् जिज्ञास्यं वस्तु जीवातिरिक्तमिति पूर्वसूत्रे अभिहितम्। तत्र सन्देहः तद्ब्रह्मेत्ययं ब्रह्मशब्दः किं प्रसिद्धार्थपर उतार्थान्तरपर इति। न हि ब्रह्मशब्दो गुणपूर्तिवाचीत्येतावता सर्वत्र तत्परो भवति,**

**शक्तितात्पर्ययोरन्यत्रापि सत्त्वात् । तद्यदि ब्रह्मशब्दोऽयं प्रतीतार्थो न स्यात् तदैव (ए)तस्य गुणपूर्णतापरत्वं सम्भवतीत्यर्थवानेवायं विचारः । तत्र प्रसिद्धार्थ(पर) एवायं ब्रह्मशब्द इति पूर्वः पक्षः; लाघवात् । जीवो हि स्वरूपतः प्रसिद्धः तत्र ब्रह्मशब्दस्य शक्तिरप्यभिधानादि(ना)तः प्रसिद्धा (सिद्धा) । केवलं तात्पर्यं कल्प्यम् । तच्च शक्तिवशादेव प्रतीते त्यागकारणाभावादेव सिद्धम् । जात्यादिकं यद्यपि प्रसिद्धं तथाऽपि तस्य सुप्रसिद्धत्वेन तद्विजिज्ञासस्वेति जिज्ञास्यत्वानुपपत्तेः परित्यागः । कमलासनस्य(ापि) प्रसिद्धत्वेऽपि न तस्य जिज्ञास्यत्वम्, प्रयोजनाभावात् । भावेऽपि तस्योपासनायत्तत्वात् । उपासनायाश्चारोपितरूपेणापि सम्भवात् । जीवस्य स्वरूपतः प्रसिद्धत्वेऽपि देहादितोऽतिविविक्ततया न प्रसिद्धिः ॥ अप्रसिद्धार्थत्वे तु तस्यार्थस्य, तद्वाचितायाः, तत्र तात्पर्यस्य च कल्प्यत्वाद्गौरवम् । अतो जीवपर एवायं ब्रह्मशब्दः ॥'' इत्येवं प्राप्ते 'जन्माद्यस्य (यतः)' इति प्रतिविहितं सूत्रकारेण । अनेन कथमुक्ताशङ्कापरिहारो जात इत्याशङ्क्याह सृष्टिरिति ।**

**आसु श्रुतिषु जिज्ञासाविधात्रीषु 'तद्विजिज्ञासस्व तद्ब्रह्म' 'य आत्मा सोऽन्वेष्टव्यः' इत्याद्यासु जिज्ञास्याद्ब्रह्मात्मादिशब्दवाच्यात् (हरेः) विश्वस्य सृष्ट्यादिकं भवतीत्युच्यते, 'यतो वा इमानि भूतानि जायन्ते' इत्यादिपूर्वोत्तरवाक्यैः । सृष्ट्यादयश्च विश्वस्यासु श्रुतिषु भाष्योदाहृतासु हरेरेवोक्ताः । न (च ते) जीवे सम्भवन्ति । अतः प्रसिद्धार्थे बाधकसद्भावात् तद्ब्रह्मेत्यादिब्रह्मादिशब्दोऽलौकिकस्य हरेरेव प्रतिपादको न जीवस्य, इति युक्तं तस्य तेन गुणपूर्णत्वाभिधानमित्यभिप्रायः सूत्रकारस्य; इति भावः ॥**

**परि०**— नन्वेवं सृष्टिरित्यादेरुक्तव्याख्यानत्रयेऽपि 'जन्माद्यस्य यतः' इति सूत्रं श्रुत्यन्तरप्रसिद्धानेकलक्षणोक्तिपरमिति व्याख्यातं स्यात् । न च तद्युक्तम्, तथात्वे न्यायेन वेदार्थविषयकसंशयविपर्ययनिरासपूर्वं तन्निर्णयरूपोपकाराजनकत्वेनागमवद्बोधकतापत्त्या वेदेतिकर्तव्यतारूपन्यायसूत्रत्वभङ्ग इत्यतो योजनान्तरमप्याह **अथवेति** । यद्वा 'इत्यनेकलक्षणोक्त्युपयोगः' इत्ययुक्तम् । स्वेतरसर्वव्यावृत्ततया जिज्ञास्यवस्तुनोऽवधारणाय हि लक्षणकथनम् । तच्चैकत्र श्रुतौ उक्तैकलक्षणोक्त्यापि सम्भवतीत्यतो, नैवम्, जिज्ञासाविधायकनानावाक्येषु जिज्ञास्यस्य जीवत्वेन तदन्यपरत्वाभावशङ्कायां तत्र तत्र वाक्ये जिज्ञास्यस्य सामानाधिकरण्येन क्वचित्सृष्टिः क्वचित्स्थितिरित्येवं





जीवव्यावर्तकधर्माणाम् अष्टानां श्रवणात् तन्मध्येऽन्यतमस्यानुपादाने तद्धर्मोपेतवाक्ये जिज्ञास्यस्य जीवान्यत्वासिद्धेः सर्वोपादानं सार्थकमिति भावेन योजनान्तरमाह **अथवेति** ।

**तद्ब्रह्मेत्ययं ब्रह्मशब्द इति** । वैदिकब्रह्मशब्दमात्रस्यात्र संशयधर्मित्वम् । तद्ब्रह्मेत्ययमिति विशिष्य संशयधर्म्युक्तिः पूर्वोक्तजिज्ञासाक्षेपेण सङ्गतिं दर्शयितुमेव न तु तत्रैव सन्देहः । अन्यत्र विष्णु-वाचित्वा(भावा)भ्युपगमोऽस्तीति न भ्रमितव्यम् । तथैव चन्द्रिकोक्तेः । अन्यथा धर्मिकल्पनोक्ति-परोत्तरग्रन्थविरोधात् । **प्रसिद्धार्थेति** । जीवपर इत्यर्थः । ननु ब्रह्मशब्दः गुणपूर्तिवाची न वेत्येव सन्दिह्यतां किं तात्पर्यसन्देहेनेत्यत आह **न हीति** । वाचकत्वसिद्धावपि तात्पर्यासिद्ध्या तात्पर्यकोटिकसन्देह एव दर्शनीय इति भावः । **अन्यत्रापीति** । परस्परपरिहारेणापि सत्त्वादित्यर्थः । **आरोपितेति** । तथा च तत्त्वपरे शास्त्रे न तस्य विचार्यतेति भावः । जीवपक्षे कथं जिज्ञासोपपत्तिः तस्याप्यहंधीसिद्धत्वात् । 'जातमात्रा मृगा गाव' इत्यादिना भक्तिपादे 'देहादन्योऽनुभवत आत्मा भाति' इत्यादिना समयपादे च वक्ष्यमाणदिशा देहादिविविक्तत्वेनापि सिद्धत्वात्; इत्यत आह **जीवस्येति** । सिद्धान्तकोटौ बाधकमाह **अप्रसिद्धार्थत्वे त्विति** । **तद्वाचिताया इति** । वाचित्वाभावेऽपि लक्षणया तात्पर्यसम्भवेऽपि सिद्धान्तिना लक्षणानङ्गीकारात् तद्वाचिताया अपि कल्प्यत्वोक्तिः ।

**य आत्मेति** । 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य' इति छान्दोग्याष्टमाध्यायगतवाक्यम् । ब्रह्मात्मादिशब्दवाच्यादित्यनन्तरं हरेरिति मूलपदं योज्यम् । अस्येत्यध्याहृतस्यार्थो **विश्वस्येति** । इत्युच्यत इत्ययुक्तम्, तद्विजिज्ञासस्वेत्याद्युपात्तवाक्येऽनुपलम्भादित्यत आह **इत्यादिपूर्वोत्तर-वाक्यैरिति** । तद्विजिज्ञासस्वेत्यस्य यतो वा इत्यादि पूर्ववाक्यम् । य आत्मेत्यस्य तु अपहतपाप्मे-त्याद्युत्तरवाक्यम् । तत्र च 'अपहतः पाप्मा यस्मात्' इत्यादिबहुव्रीह्युपगमेन मोक्षो हरेर्भवतीत्येतत् ज्ञेयम् । एवं श्रुत्यन्तरेऽपि ध्येयम् । तावता जिज्ञास्यं जीवान्यत्कुतः जीव एव कुतो नेत्यतो योजना-न्तरमाह **सृष्ट्यादयश्चेति** । **भाष्येति** । य उ त्रिधा त्वित्यादिश्रुतिष्वित्यर्थः । हरेस्सदेत्यन्वये लब्धार्थमाह **हरेरेवेति** । हरेरितीदानीं षष्ठ्यन्तं बोध्यम् । हिशब्दस्य यस्मादिति हेत्वर्थकत्वबलेन लब्धार्थमाह **अत इति** । तस्यैवार्थः **प्रसिद्धार्थे बाधकसद्भावात् इति** । **अलौकिकस्य** इति विभागः । एतेनासु विचारविधात्रीषु श्रुतिषूक्तास्तद्ब्रह्मेत्यादिशब्दाः हरेस्सदा वाचका इत्यपि मूलयोजना सूचिता ।

**गु०दी०—— तस्योपासनायत्तत्वात्** इत्यत्र **तस्य** प्रयोजनस्योपासनाधीनत्वादित्यर्थः । जीवस्य तु देहातिरिक्ततया विचार्यतैव जिज्ञासा न तु उपासनमप्यत्रापेक्षितम् । स्वस्य स्वयमुपासनायोगादिति भावः । **गुणपूर्णत्वाभिधानमित्यभिप्राय** इत्यत्र न च विष्णोरपि विचारसाध्यप्रयोजनस्योपासनासाध्यत्वादुपासनायाश्च अविद्यमानार्थविषयत्वात् किं विद्यमानचर्चारूपविचारेणेति वाच्यम् । उपासनाया अविद्यमानार्थविषयत्वे विद्यमानार्थविषयकश्रवणमननजन्यत्वायोगेन तत्समानार्थकायास्तस्याः विद्यमानार्थविषयकत्वावश्यम्भावात् ध्यानस्य विपरीतभावनापरिहारकत्वेनोत्तराङ्गत्वं वदतस्तवापि मते ध्यानापरपर्यायोपासनस्य विद्यमानविषयत्वावश्यम्भावात् । अन्यथा विपरीतभावनादार्ढ्यहेतोस्त्वदभिलषिताङ्गत्वस्यैवायोगात् । कुतस्तर्हि कमलासनस्य अजिज्ञास्यतेति चेन्न । जिज्ञासाविधायकश्रुतिसूक्तजन्माद्यष्टकहेतुत्वायोगादिति सम्भावितशङ्कासमाधानं च द्रष्टव्यम् ।

**यादु०——** ननु ब्रह्मशब्दस्य 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः' इति श्रुत्या गुणपूर्तिवाचकतया पूर्वमुक्तत्वात्कथमल्पगुणजीवपरत्वकोटिसन्देहहेतुको विचारो युज्यत इत्यत आह **न हि ब्रह्मशब्द इति** । सत्यं ब्रह्मशब्दो गुणपूर्तिवाची तथाऽपि सर्वत्र प्रसिद्धार्थेऽपि, न समस्तगुणपूर्तिपरः । किं त्वप्रसिद्धार्थ एव । प्रसिद्धार्थे तु विवक्षिते सम्भवद्गुणपूर्तिपर एव भविष्यति । अतो युक्तः संशय इत्याशयः । एतेन सर्वत्रेति वचनेन क्वचिद्ब्रह्मशब्दस्य समस्तगुणपूर्णवस्तुवाचिताङ्गीकारावगमात्तस्यार्थस्य कल्प्यत्वादिति वक्ष्यमाणं कल्पनागौरवमेतद्वाक्यार्थेन विरुद्धमिति शङ्का निरस्ता । सर्वत्रेत्यस्य सर्वेषु ब्रह्मशब्दोपेतेषु वाक्येष्वित्यर्थकत्वे हि तथा स्यात् । न चैवं किन्तु प्रसिद्धाप्रसिद्धार्थयोरित्यर्थकत्वस्य प्रदर्शितत्वात् । एतदेव दर्शयति **तद्यदीति** । **प्रसिद्धार्थपर एवायमिति** । ननु वक्ष्यमाणकल्पनागौरवेण ब्रह्मशब्दस्य कुत्राप्यसिद्धार्थपरत्वं नास्तीति पूर्वपक्ष्याशयावगमात् कथमेवं विशिष्य पूर्वपक्षोपक्रमादिरिति चेत् । उच्यते । पूर्वोक्तजिज्ञासाक्षेपेण सङ्गतिं दर्शयितुं तावदयं ब्रह्मशब्द इति विशिष्य संशयधर्मिनिर्देशः कार्यः । अन्यथा सङ्गतेर्दर्शयितुमशक्यत्वात् । तदनुसारेणैव पूर्वपक्षोपक्रमोपसंहारावपि विशिष्योक्ताविति न काऽप्यनुपपत्तिः । चन्द्रिकायां तु न हि ब्रह्मशब्द इति वाक्यं क्वचिद्गुणपूर्तिवाचिताङ्गीकारेण न प्रवृत्तं किन्तु ब्रह्मशब्दो गुणपूर्तिवाची न वेत्येव सन्दिह्यतां किं तात्पर्ये सन्देहेनेति शङ्कायां वाचकत्वे सिद्धेऽपि तात्पर्यासिद्ध्या विवक्षितार्थासिद्धेर्नेत्थं सन्देहः किन्तु तात्पर्यसन्देह एव दर्शनीय इति परिहर्तुमत एवैतद्वाक्यं सन्देहावसर एव कृतमित्युक्तम् । **अप्रसिद्धत्वेऽपीति** । तस्य देवत्वेनातीन्द्रियत्वादिति भावः । **उपासनायाश्चेति** । तथा च न वस्तुतत्त्वव्यवस्थापकया तज्जिज्ञासया कृत्यमिति भावः । **न प्रसिद्धिरिति** । तथा च तद्विजिज्ञासस्वेत्यत्र जीवस्यैव देहाद्यन्यतया जिज्ञास्यताविध्यङ्गीकारात् न पूर्वसूत्रोक्ता सिद्धान्त्यभिमता जीवातिरिक्तब्रह्मजिज्ञासाक्षेपे युक्तेति निरस्तम् । **तद्वाचिताया इति** । लक्षणादिना तात्पर्योक्तौ गुणपूर्त्यलाभेन, योगेन वाच्यताया सिद्धान्तिना अवश्यं वाच्यत्वादिति भावः ।





**अलौकिकस्य हरेरेवेति** । 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम् ॥' इति श्रुतेः स्वर्गशब्दस्य चन्दनादिरूपप्रसिद्धार्थपरत्ववद्ब्रह्मशब्दस्यापि यतो वेत्यादिवाक्यशेषात् प्रसिद्धार्थत्यागेनालौकिकार्थपरत्वोपपत्तिरिति भावः ।

**वं०प०— जीवो हीति** । धर्मिकल्पनातो धर्मकल्पना लघीयसीति भावः । ननु ब्रह्मशब्दस्य प्रसिद्ध-जीवभिन्नार्थान्तरपरत्वं किं न स्यादित्याशङ्क्य तत्र बाधकमाह **अप्रसिद्धार्थत्वे त्विति** ।

**आनन्दः—** नन्वधिकरणत्वप्रयोजकविषयादेरभावादनधिकरणत्वमस्येत्यत आह **अथवेति** । ननु स देह एवायमनुपपन्नः । ब्रह्मशब्दस्य गुणपूर्णतावाचित्वेन तत्परत्वस्यैव निर्णीतत्वादित्यत आह **न हीति** । कथं न भवति तच्छक्तस्यैव तत्परत्वादित्यत आह **शक्तीति** । लक्षणास्थले शक्त्यभावेऽपि तत्परत्वस्य दृष्टत्वेन तयोर्भेद इत्यर्थः । विचारफलमाह **तद्यदीति** । **तच्चेति** । तात्पर्यमित्यर्थः । **जात्यादिकं यद्यपि प्रसिद्धमिति** । ब्रह्मशब्दार्थ-त्वेनेति शेषः । नन्वस्त्वेवं कमलासनजिज्ञासया सत्यादिलोकप्राप्त्यादिरूपं किञ्चित्फलमित्यत आह **भावेऽपीति** । प्रयोजनभावेऽपि तस्य प्रयोजनस्योपासनाधीनत्वादुपासनयैव तत्सम्भवेन न तस्य जिज्ञास्यत्वमित्यर्थः । ननूपासनार्थमेव कमलासनजिज्ञासा कर्तव्येत्यत आह **उपासनाया इति** । तर्हि जीवस्यापि सुप्रसिद्धत्वात् जिज्ञास्यत्वमित्यत आह **जीवस्येति** । **तस्यार्थस्य** अप्रसिद्धस्यार्थस्य । **तद्वाचितायाः** ब्रह्मशब्दस्याप्रसिद्ध-वाचितायाः । तत्र अप्रसिद्धेत्यतो भवति । तस्य ब्रह्मशब्दार्थत्वे भवदभिमतादन्यत एव रुद्रादेः सृष्ट्यादिसम्भवेन तस्यैव ब्रह्मशब्दार्थत्वं स्यादित्यत आह **सृष्ट्यादय इति** ।

**वा०चं०—** तत्तदुचिततयाऽऽसु श्रुतिष्वित्यादेः सर्वशेषत्वेनान्वयेऽपि तत्तदंशसूचिततत्तच्छङ्कापरिहार-परत्वेनैषां प्रकाराणां मिलितानां निष्कृष्टसूत्रतात्पर्यप्रतिपादकत्वेन पक्षान्तरत्वाभाववन्नोत्तरयोजनाया अंशविशेष-सूचितत्वं किन्तु विशिष्टस्यापि पूर्वपक्षनिरासकत्वेन पक्षान्तरत्वमेवेत्याशयेनाह **अथवेति** । पूर्वाधिकरणेनास्य आक्षेपिकी सङ्गतिरिति दर्शयन् पूर्वाधिकरणतात्पर्यमाह **तद्विजिज्ञासस्वेति** ।

ननु योगेन ब्रह्मशब्दस्य गुणपूर्तिवाचितायाः प्रदर्शितत्वेन तस्यार्थान्तरपरतायाः सिद्धत्वान्नेत्थं सन्देह इति व्यर्थोऽयं विचार इत्यत आह **न हीति** । योगेनेति शेषः । अप्रसिद्धार्थपरत्वसम्भवेऽपीति च । सर्वत्रेति त्वेकत्रापि न तत्परत्वं किमु सर्वत्रेति कैमुत्यसूचनायेति ज्ञेयम् । प्रसिद्धार्थपरत्वसम्भवेऽपि योगेनालौकिकार्थ-वाचित्वं सम्भवतीत्येतावताऽलौकिकार्थपरत्वं न हि क्वापि दृष्टं घटादिशब्दानामप्यलौकिकार्थपरत्वापत्तेरित्याशयः । तद्वाचित्वात् तत्र तात्पर्यमिति च शक्तितात्पर्ययोरेकत्वाद्वोच्यते शक्तेस्तात्पर्याविनाभावाद्वा । नोभयथाऽपीत्याह **शक्तीति** । **अन्यत्वात्** भिन्नत्वात् । शक्त्या लक्षणादिना वा प्रतिपादकत्वरूपत्वात् तात्पर्यस्येति भावः । अन्यत्वादित्यस्य शक्तेस्तात्पर्येण विनाऽपि सत्त्वादित्यप्यर्थः । गङ्गाशब्दस्य प्रवाहे शक्तावपि गङ्गायां घोष इत्यत्र तदप्रतिपादकत्वेन व्यभिचारादिति भावः । तर्हि स्वर्गापूर्वादिपदानामप्यलौकिकार्थपरत्वाभावेन तदसिद्धिरेव





स्यादित्यतस्तत्र प्रसिद्धार्थासम्भवेन वैदिकपदानर्थक्यासम्भवेनालौकिकार्थपरत्ववदत्रापि प्रसिद्धार्थासम्भव एव अप्रसिद्धार्थत्वं कल्पनीयमिति प्रसिद्धार्थासम्भवव्युत्पादनपर्यन्तं सन्देहानिवृत्त्या विचारसार्थक्यमेवेत्याह **तद्यदीति** । एवं च तद्ब्रह्मेत्ययमिति विशिष्य निर्देशस्तस्य प्रस्तुतत्वाभिप्रायेण न तु प्रयोगान्तरे तस्यार्थान्तरपरत्वाङ्गीकाराभिप्रायेण । तथा च नैतद्वाक्यानां पूर्वपक्षविरोधः । पूर्वपक्षीयायास्तद्वाचितायाः कल्प्यत्वोक्तिस्तु रूढेरभावाद्देशकालवस्त्वपरिच्छेदरूपवृद्ध्यर्थबृहतेर्निष्पन्नस्य ब्रह्मशब्दस्य गुणपूर्तेरेवाप्रसिद्धत्वेन अयोग्यतया वा 'अथ कस्मात्' इत्यत्र गुणशब्दस्य देशापरिच्छेदादिपरत्वेनाप्युपपत्तेः श्रुतिबलाद्वा तदर्थत्वासिद्धचेति द्रष्टव्यम् ।

यद्वा योगेन गुणपूर्तितावाचितायाः प्रतिपादितत्वेनार्थान्तरपरत्वस्य निर्णीतत्वान्न सन्देह इति शङ्काया उक्तरीत्या तद्वाचित्व एव विप्रतिपत्तेरित्येवोत्तरमभिप्रेतम् । तथा च सन्देहादर्थवानेव विचारः । ब्रह्मशब्दस्य तद्वाचित्वमन्यत्रार्थान्तरपरत्वं चाङ्गीकृत्यापि न तद्वाचकत्वादिमात्रेण सर्वत्र तत्परत्वसिद्धिरित्यतोऽपि विचारसार्थक्यमेवेत्याह **न हीति** । अथ यथाश्रुतमेव सर्वम् । यदि न तद्वाचित्वमात्रेण तत्परत्वसिद्धिः कथं तर्हि तत्सिद्धिरित्यत आह **तद्यदीति** । एवं च पूर्वपक्षप्रवृत्तिरभिप्रेतोत्तराभिप्रायेण न त्वङ्गीकारवादाभिप्रायेण । तत्त्वप्रकाशिकायां तु तद्वाचित्वाद्यभ्युपगमेनैव पूर्वपक्षः प्रदर्शितः । अत एव न्यायविवरणटीकायां पक्षद्वयमपि प्रदर्शितमिति ध्येयम् ।

यद्वा । सन्देहावसरे सन्देहबीजत्वेन सिद्धान्त्यभिमतगुणपूर्तिवाचित्वं, क्वचित्तत्परत्वाङ्गीकारेऽपि पूर्वपक्षस्य सिद्धान्त्यभिमतोन्मूलनेन प्रवृत्तेस्तत्र तद्वाचित्वादेः कल्प्यत्वोक्तिरुपपन्नेति द्रष्टव्यम् । चन्द्रिकायां तु 'ब्रह्मशब्दो गुणपूर्तिवाची न वेत्येव सन्दिह्यतां किं तात्पर्यसन्देहेनेत्यतो वाचकत्वे सिद्धेऽपि तात्पर्यासिद्ध्या विवक्षितार्थासिद्धेर्नेत्थं सन्देहः किन्तु तात्पर्यसन्देह एव प्रदर्शनीय इति परिहर्तुमेतद्वाक्यमत एव सन्देहावसर एव कृतम्' इत्युक्त्वा 'जीवे सम्भवद्गुणपूर्तेर्ब्रह्मशब्दप्रवृत्तिनिमित्तत्वाङ्गीकारेण पूर्वपक्षप्रवृत्तिर्वा' इति पक्षान्तरमुक्तम् ।

जीव एवायमिति न्यायविवरणीयावधारणानुसारेण परिशेषं दर्शयितुं प्रसक्तं प्रतिषेधति **जात्यादिकमिति** । **आदि**पदेन शब्दराशिग्रहणम् । **तस्य** इत्युपलक्षणम्, तत्प्रामाण्यादेश्चेत्यपि द्रष्टव्यम् । सुशब्देन लोकतः शास्त्रान्तरतश्च प्रसिद्धिं सूचयति ॥ **जीवस्येति** । एवं च जिज्ञासामात्रानाक्षेपेऽपि सिद्धान्त्यभिमतजिज्ञासाक्षेपेण पूर्वपक्ष इत्याशयः । न च शक्त्यभावेऽपि लक्षणादिना तात्पर्यसम्भवात्सिद्धान्तिनं प्रति शक्तेः कल्प्यत्वोक्तिरयुक्तेति वाच्यम्, लक्ष्येऽर्थे योगासम्भवेन तदधीनगुणपूर्त्यसिद्धेः सिद्धान्तिना लक्षणादेर्वक्तुमशक्यत्वात् ।

**अत इति** । एवं च 'यन्न दुःखेन सम्भिन्नमि'त्यादिरूपबाधकवशात् स्रक्चन्दनादिरूपप्रसिद्धार्थपरित्यागेन स्वर्गपदादेरप्रसिद्धार्थकल्पनावत्प्रकृतेऽपि वाक्यशेषोक्तबाधकवशात् प्रसिद्धार्थपरित्यागेनाप्रसिद्धार्थकल्पनं युक्तमिति भावः ।





**वा०र०**— अनेन क्वचिदिति मूलकारीत्यधिकोक्तेः फलमुक्तं भवति। सृष्टिरित्येतद्भाष्यव्याख्यानपूर्वग्रन्थे सूत्रतात्पर्यकथनपरतया योजनात्रयवत् अथवेत्युत्तरग्रन्थोक्तपक्षे सृष्टिरित्यादेस्तत्तात्पर्यकथनपरत्वं नास्तीति वक्तुं पूर्वयोजितपक्षप्रतिपाद्यादथवेत्युक्तपक्षप्रतिपाद्यस्य भेदमाह **तत्तदुचिततयेति**। **इति चेति**। शेष इति वर्तते। अत्र प्रसिद्धार्थत्यागेनार्थान्तरकथने निमित्तं तु तथा च नैतद्वाक्यानां पूर्वपक्षविरोध इत्यादिना स्वयमेव वक्ष्यति। क्वचित्तत्परत्वाङ्गीकारप्रतीतिवारणाय सर्वत्रेत्यस्य तात्पर्यमाह **सर्वत्रेतीति**। कुतो न भवतीत्यतस्तत्र मूलस्थ-हिशब्देन सूचितमतिप्रसङ्गरूपबाधकं वक्तुं श्रुतशेषयोर्मेलनेनार्थमाह **प्रसिद्धार्थेति**। द्वितीयकल्पनिरासपरत्वेन व्याचष्टे **अन्यत्वादित्यस्येति**। आनर्थक्यासम्भवेन चेति चशब्दः पूरणीयः। **असम्भव एवेति**। वैदिकपदा-नर्थक्यभयादिति शेषः। तर्हि ब्रह्मशब्दः प्रसिद्धार्थपर इत्यादिरेव सन्देहः प्रदर्शनीयः। तद्ब्रह्मेत्ययमिति तु कथम्। तेनान्यत्र तत्परतायाः प्राप्तेरित्यत आह **एवं चेति**। एवं शेषपूरणादिना न हीत्यादेर्विचार इत्यन्तग्रन्थस्य योजनायाः फलमाह **तथा चेति**। **पूर्वपक्षेति**। जीवो हीत्यादिपूर्वपक्षेत्यर्थः। योगेनेत्यादिपूरणस्याभिप्रेतत्वेन जीवरूपार्थान्तर-सम्भवप्रतिपादनस्योक्तचिन्तानुगुणत्वेन विरोधाभावादित्यर्थः। तथापि योगेनार्थान्तरवाचिताया अत्र स्वीकारात् कथं पूर्वपक्षे तद्वाचितायाः कल्पत्वोक्तिरित्यतस्तां घटयति **पूर्वपक्षीयेति**। योग्यतया वेत्यस्य तदर्थत्वासिद्धेश्चेति वक्ष्यमाणेन सम्बन्धः। अत्र पक्षे शेषपूरणादिना योजना कर्तव्या भवतीत्यपरितोषाद्वक्तव्यं शेषं बहिरेव प्रदर्श्य न हीत्यादि वाक्यानि योजयति **यच्चेति**। **सर्वमिति**। गुणपूर्तिवाचीत्यादिकं सर्वमित्यर्थः। योगेनेति प्रसिद्धार्थपरत्वसम्भवेऽपीति च शेषपूरणाभावात् सर्वत्रेत्यस्यार्थान्तराश्रयणाभावाच्चेति भावः। तर्हि तद्वाचित्वादेः कल्प्यत्वोक्तिरूपपूर्वपक्षानुपपत्तिरित्यत आह **एवं चेति**। एवं सन्देहबीजे सतीत्यर्थः। **अभिप्रेतोत्तरेति**। अभिप्रेतं यदुत्तरं तद्वाचित्व एव विप्रतिपत्तेरिति प्रागुक्तं तदभिप्रायेणेत्यर्थः। **अङ्गीकारेति**। गुणपूर्तिवाचित्वादन्यत्र तत्परत्वाङ्गीकारेत्यर्थः।.अतो न तद्विरोध इति शेषः। तद्वाचित्व एव विप्रतिपत्तेरित्युत्तरं यत्पक्षेऽभिप्रेत्य विचारस्यार्थवत्त्वमुक्तं तत्पक्षाभिप्रायेण पूर्वपक्षः प्रवृत्तः। न तु ब्रह्मशब्दस्येत्यादिनोक्तो योऽङ्गीकारेण प्रवृत्तो द्वितीयपक्षस्तदभिप्रायेणेति न तद्विरोध इति विवेकः। **तत्त्वप्रकाशिकायां त्विति**। ब्रह्मशब्दस्य जीवे रूढत्वात्। यद्यपि ब्रह्मशब्दो विष्णौ तथापि तस्य तत्र योगेनैव प्रवृत्तेरित्यादिना जीवे मुख्यत्वं विष्णौ त्वमुख्यत्वमिति प्रतिपादनात् तद्वाचित्वाद्यभ्युपगमेन तत्र पूर्वपक्षप्रवृत्तिः सिद्धेति भावः। तर्हि तत्त्वप्रकाशिकाग्रन्थस्यैतन्मूल-ग्रन्थस्य च विरोध इत्यतः प्रकारद्वयस्याप्यङ्गीकारानङ्गीकाराभ्यां ग्रन्थकृत्सम्मतत्वान्नानुपपत्तिरित्याशयेन तथा कल्पने ज्ञापकमाह **अत एवेति**। **पक्षद्वयमपीति**। विष्णौ तत्प्रयोगस्तु यौगिक एवेत्येकः पक्षः। यद्वेत्यादिनोक्तो विष्णौ तु सर्वमपि कल्पनीयमिति द्वितीय इति ज्ञेयम्। अत्र पक्षे सन्देहोपपादनावसरे मुखतो न हीत्यनेनोक्तो योऽङ्गीकारपक्षः तं परित्यज्य बहिरेवाभिप्रेततया कल्पितपक्षान्तरानुसारित्वं पूर्वपक्षस्याश्रित्य विरोधः परिहरणीय इति क्लिष्टकल्पनादोष इत्यपरितोषात्पक्षान्तरमाह **यद्वेति**। अत्राङ्गीकारेऽपीत्यनेन यथाश्रुतमेव सर्वमिति सूचितम्। परं तु द्वितीयपक्ष इव तद्वाचित्वानङ्गीकारतदङ्गीकारपक्षयोराश्रयणेन प्रवृत्तिर्नाश्रीयते। किन्त्वेक एवाङ्गीकारपक्षः। पूर्वपक्षविरोधस्तु नायाति। सन्देहावसरे सन्देहबीजत्वेन सिद्धान्त्यभिमतगुणपूर्तिवाचित्वाद्यङ्गीकारेऽपि पूर्वपक्षे तदङ्गीकाराभावोपपत्तेः। तस्य सिद्धान्तोन्मूलनेन प्रवृत्तत्वेन तत्र तदनङ्गीकारस्यैवावश्यकत्वादित्यर्थः। सुधायां तु





ब्रह्मशब्दः किं प्रसिद्धजीवपर इत्यादि चन्द्रिकास्थ तत्रत्यं न हि ब्रह्मशब्दो गुणपूर्तिवाचीत्येतावता सर्वत्र तत्परो भवतीति वाक्ये त्वित्यादिग्रन्थोक्तरीत्या प्राप्तमेतद्वाक्याभिप्रायमाह **चन्द्रिकायां त्विति**। **एतद्वाक्यमिति**। न हीति वाक्यमित्यर्थः। न तु तत्पूर्वपक्षे क्वचिद्गुणपूर्तिवाचिताङ्गीकारेण प्रवृत्तमिति शेषः। अत एवेत्यनन्तरं तत्सन्देहावसर एवेति पाठः। एतद्वाक्यमिति वाऽनुवर्तते। तेन तत्पदाभावेऽपि न दोषः। **इत्युक्त्वेति**। इत्येवं न हीति वाक्यस्य गतिमुक्त्वेत्यर्थः। **जीवे सम्भवदिति**। अथ कस्मादित्यादिना गुणपूर्तेः प्रमितत्वात् कथं तत्र अवयव-शक्त्यक्लृप्तिरित्यस्वरसात्पक्षान्तरपरचन्द्रिकायां ह्यलौकिकविशेष्यपरत्वे गौरवात्प्रसिद्धविशेष्यपरत्वे तु लाघवात् तदनुसारेण जीवेषु सम्भवद्गुणपूर्तिरेव प्रवृत्तिनिमित्तम्। न तु सिद्धान्त्यभिप्रेतगुणपूर्तौ तात्पर्यमिति सुधास्थ-पूर्वपक्षाभिप्रायो वर्णितः। तेन पूर्वत्र गुणपूर्तिवाचिता कल्प्येत्यङ्गीकृत्य पूर्वपक्षप्रवृत्तिः। इदानीं तद्वाचितामात्र-मङ्गीकृत्य सिद्धान्त्यभिमतसर्वगुणपूर्तिवाचितायाः कल्प्यत्वमङ्गीकृत्य तत्प्रवृत्तिरिति पक्षभेदप्रतीतेः। तमेतमर्थं मनसि कृत्वा प्रकारान्तरेण पूर्वपक्षप्रवृत्तिर्वेत्युक्तमिति द्रष्टव्यम्। ततश्च चन्द्रिकोक्तस्य प्रकारान्तरत्वान्न तद्विरोध इति हृदयम्। **तत्प्रामाण्यादेरिति**। शब्दराशिप्रामाण्यादेरित्यर्थः। योग्यतया तच्छब्देनैकदेशपरामर्शात्। **अत इतीति**। अतः प्रसिद्धार्थे बाधकेति वाक्यप्रतीकोपादानमिदम्।

**स०व्र०**— ननु गुणपूर्तिवाचकस्यास्य ब्रह्मशब्दस्य कथं प्रसिद्धाल्पगुणजीवपरत्वसन्देहो युज्यत इत्यत आह **न हि ब्रह्मशब्द इति**। नन्वेवं क्वचिद्ब्रह्मशब्दस्य गुणपूर्णवस्तुवाचकत्वे पूर्वपक्षिणाङ्गीकृते तस्यार्थस्य कल्प्यत्वात्कल्पनागौरवमिति वक्ष्यमाणगौरवं कथं घटत इति चेत्। उच्यते। वेदान्तरीत्या ह्यत्र पूर्वपक्षः। तथाच व्यवहारदशायां च यत्र 'तदेव ब्रह्म परमं कवीनाम्' इत्यादौ समुद्रान्तस्थितत्वादिलिङ्गबलाद्गुणपूर्णवस्तु ब्रह्मशब्दात् प्रतीयते तत्र प्रतीयतां नाम। प्रकृते बाधकाभावात्। अत एव तद्ब्रह्मेत्ययं ब्रह्मशब्द इति विशिष्य संशयधर्मिनिर्देशः। पूर्वोक्तजिज्ञासाक्षेपेण सङ्गतमिदम्। परमार्थतस्तु न प्रसिद्धजीवव्यतिरिक्तं ब्रह्मास्ति प्रमाणा-भावात्। सर्वस्य वेदान्तस्याखण्डचिन्मात्रपरत्वात् अतस्तत्कल्पने कल्पनागौरवमेवेत्याशयात्। चन्द्रिकायां तु "अयं ब्रह्मशब्द इति विशिष्य संशयधर्मिनिर्देशः, पूर्वोक्तजिज्ञासाक्षेपेण सङ्गतिं दर्शयितुमेव। न तु क्वचिद्ब्रह्मशब्दस्य विष्णुवाचित्वाङ्गीकारेण पूर्वपक्ष इति दर्शयितुम्। तथात्वे सिद्धान्तिनं प्रति अर्थादिः कल्प्यत्वोक्तेरनुपपत्तेः। तथा चात्र पूर्वपक्षे सर्वत्र ब्रह्मशब्दस्य न विष्णुपरत्वमित्येव विवक्षितम्, न तु तद्ब्रह्मेति वाक्यगतब्रह्मशब्दस्यैव। 'न हि ब्रह्मशब्द' इति वाक्यं तु क्वचिद्गुणपूर्तिवाचिताङ्गीकारेण न प्रवृत्तं; किन्तु 'ब्रह्मशब्दो गुणपूर्तिवाची न वा इत्येव सन्दिह्यतां किं तात्पर्यसन्देहेन' इति शङ्कायां वाचकत्वे सिद्धेऽपि तात्पर्यासिद्ध्या विवक्षितार्थासिद्धेः नेत्थं सन्देहः, किन्तु तात्पर्यसन्देह एव दर्शनीय इति परिहर्तुम्; अत एवैतद्वाक्यं सन्देहावसर एव कृतम्" इत्युक्तम्। ननु शक्तितात्पर्ययोरेकत्वात् शक्तिसिद्धौ तात्पर्यस्यापि सिद्ध्या कथं विवक्षितार्थासिद्धिरित्यत आह **शक्ति-तात्पर्ययोरन्यत्रापि सत्त्वादिति**।

**उपासनायाश्चेति**। तथा च न वस्तुतत्त्वव्यवस्थापिकया जिज्ञासया कृत्यमिति वाक्यशेषः। जीवस्य तु देहातिरिक्ततया विचार्यतयैव जिज्ञासा। न तूपासनं, स्वस्य स्वयं उपासनाऽयोगादिति भावः। न चैवं जिज्ञासाक्षेपो,





जीवस्यैव तद्विषयत्वसम्भवादिति वाच्यम्, विशिष्टाधिकारिकमोक्षफलकजीवान्यधर्मिकपूर्णत्वप्रकारकपूर्वसूत्रोक्त-जिज्ञासाक्षेपोपपत्तेः इति भावः । यद्वा देहाद्यन्यतया जीवस्य जिज्ञासामङ्गीकृत्य सिद्धान्त्यभिमतजिज्ञासाक्षेप इति द्रष्टव्यम् । **तद्वाचितााया इति** । न च सिद्धान्ते लक्षणादिनापि तात्पर्यसम्भवात्तद्वाचितायाः कल्प्यत्वोक्तिरयुक्तेति वाच्यम् । लक्ष्येऽर्थे योगासम्भवेन तदधीनगुणपूर्त्यलाभेन वाच्यतायाः सिद्धान्तिभिरवश्यं वाच्यत्वात् । न चावयव-शक्तेः क्लृप्तत्वेन कल्प्यत्वोक्तिरयुक्ता । गुणपूर्तेरेवाभावेन तत्र बृहतेः शक्त्यक्लृप्तेरिति भावः ।

**अलौकिकस्य हरेरेवेति** । 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम् ॥' इति श्रुतेः स्वर्गशब्दस्य चन्दनादिरूपप्रसिद्धार्थत्यागेन अप्रसिद्धार्थपरत्ववत् ब्रह्मशब्दस्यापि यतो वेत्यादिवाक्यशेषात् प्रसिद्धार्थत्यागेनालौकिकार्थपरत्वोपपत्तिरिति भावः । **तस्य तेनेति** । **तस्य** हरेः **तेन** ब्रह्मशब्देनेत्यर्थः । न च विष्णोरपि उपासनासाध्यत्वात् उपासनायाश्च अविद्यमानार्थविषयत्वात् किं विद्यमान-चर्चारूपविचारेणेति वाच्यम्, उपासनाया अविद्यमानार्थविषयत्वे विद्यमानार्थविषयकश्रवणमननजन्यत्वायोगेन तत्समानार्थकायास्तस्या विद्यमानार्थविषयत्वावश्यम्भावात् ।

**स०ना०— नियतिर्ज्ञानमावृतिरिति** अनुव्याख्यानसम्बन्धसुधायां **तद्ब्रह्मेति** । अयं ब्रह्मशब्दः प्रसिद्धार्थपरः उतार्थान्तर इति वाक्यात् परं श्रूयमाणं न हि ब्रह्मशब्दो गुणपूर्तिवाचीत्येतावता सर्वत्र तत्परो भवति । शक्ति-तात्पर्ययोरन्यत्वादिति वाक्यद्वयं न । किन्तु तद्यदीति वाक्यमध्ये इतिशब्दात्पूर्वं द्रष्टव्यम् ॥ ततश्चायं पाठक्रमः तद्यदि ब्रह्मशब्दोऽयं प्रतीतार्थो न स्यात् । तदैवास्य गुणपूर्तिपरत्वं सम्भवति । न हि ब्रह्मशब्दो गुणपूर्तिवाची-त्येतावता सर्वत्र तत्परो भवति शक्तितात्पर्ययोरन्यत्वात् इत्यर्थवानेवायं विचार इति । अयमर्थः । ननु ब्रह्मशब्दस्य प्रसिद्धार्थपरत्वापरत्वविचारो व्यर्थः । गुणपूर्तिपरत्वस्यैव विचार्यत्वादित्यत आह **तद्यदीति** । ननु तदैव तस्य गुणपूर्तिपरत्वं सम्भवतीत्युक्तम् । ब्रह्मशब्दस्य स्वाभिधेये गुणपूर्त्यभिधानसमर्थत्वेन प्रसिद्धार्थ-परत्वेऽपि गुणपूर्त्यभिधानात् सम्भवात् । न हि परशुः स्तम्भे प्रयुक्तः छिनत्ति कदलीस्तम्भे प्रयुक्तः न छिनत्तीति सम्भवतीत्यत आह **न हीति** । कुतो नेत्यत आह **शक्तितात्पर्ययोरिति** । अनन्यत्वात् अन्यविधत्वात् गुणपूर्तितात्पर्योपयोगियोगवृत्तिविरहादिति यावत् । इदमुक्तं भवति । भवेत्प्रसिद्धार्थे प्रयुक्तस्य ब्रह्मशब्दगुणपूर्तौ तात्पर्यम्, यद्यत्र योगवृत्तिः प्रसिद्धेऽर्थे स्यात् । न चैवं किं नाम प्रसिद्धेऽर्थे रूढिम् । न च रूढ्या प्रवृत्तस्य शब्दस्य योगलक्ष्येऽर्थे तात्पर्यमिति सम्भवति । शक्त्यन्तरेण प्रवृत्तत्वात् । अन्यथा दावदहनादग्धस्य वेत्रबीजस्य कदलीकाण्डजनकत्वं स्यात् । कुठारदृष्टान्तस्तु विषमः कदलीस्तम्भे स्तम्भे च प्रयुज्यमानस्यैकविधशक्तित्वात् इति । **भावेऽपीति** । यत्त्वया प्रयोजनमुच्यते तदुपासनासाध्यमेव न जिज्ञासासाध्यमित्यर्थः । अस्तु तर्ह्युपासा-नर्थमेव जिज्ञासेत्यत आह **उपासनायाश्चेति** । **देहादितो विविक्ततयेति** । देहात्मविवेकाभावे देहविनाशे जीवविनाशशङ्कया जिज्ञासादौ प्रवृत्तौ प्रवृत्तिः न स्यात् । तदर्थं तत्त्वनिर्णयः आवश्यक इति जिज्ञासा कार्य एवेति भावः ।





**विठ्ठल०**— अनुमानवाक्येऽप्येवमेवार्थो ज्ञेयः । ब्रह्मण इत्याद्यनुक्त्वा हरेरिति विशेषोक्तेरुपयोगं दर्शयितुम् अधिकरणस्य 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । प्रयोजनं च पञ्चैते प्राञ्चोऽधिकरणं विदुः' इत्युक्तेर्विषयादिनिरूपणपूर्वकमवतारयति **अथवा इत्यादिना** । नन्वथ कस्मादुच्यते ब्रह्मेत्यादिश्रुत्या ब्रह्मशब्दस्य गुणपूर्तिवाचित्वावगमादीश्वरस्य परत्वं निश्चितं, तत्कथं संशय इत्यत आह **न हि इति** । कथं सर्वत्र तत्परत्वाभाव इत्यत आह **शक्तीति** । नन्वेवं सन्दिह्यापि तन्निर्णयेन किं फलं स्यात् येनायं विचारः सार्थकः स्यादित्यत आह **तद्यदि इति** । **भावेऽपीति** । चतुर्मुखस्य फलदातृत्वप्रसिद्ध्या तद्भावाङ्गीकारेऽपि तस्य फलस्य तदुपासनामात्र-साध्यत्वात् । न चोपासनार्थं जिज्ञासाया आवश्यकता अविद्यमानोपासनोपपत्तेः तथा च तत्त्वपरे शास्त्रे न तस्य जिज्ञास्यतेति भावः । जीवस्य स्वप्रकाशतया सिद्धत्वान्न जिज्ञास्यतेत्यत आह **जीवस्य इति** । सिद्धान्तकोटौ बाधकमाह **अप्रसिद्धेति** । तद्विजिज्ञासस्वेत्यादौ न सृष्ट्यादिकर्तृत्वं श्रूयते इत्यतः तद्विजिज्ञासस्वेत्यत्र यतो वा इत्यादि पूर्ववाक्ये य आत्मेत्यत्र अपहतपाप्मेत्यादिमोक्षदातृत्वाभिधायकोत्तरवाक्ये चाभिहितत्वादित्याशयेनोक्तं **पूर्वोत्तरवाक्ययोरिति** । नन्वस्तु सृष्ट्यादिकर्तुर्जिज्ञास्यता । स जीवः किं न स्यादित्यत आह **सृष्ट्यादय इति** । ततः किमित्यत आह **तस्य तेनेति** । तेनान्यत्रानवकाशात् । जिज्ञास्ये श्रुतब्रह्मशब्दस्य हरेरेव प्रतिपादकत्व-निश्चयेन पूर्णत्वप्रतिपादनं सूत्रकाराभिप्रेतमिति भाष्यकारस्याभिप्राय इति भावः ।

**चषकः**— **अर्थान्तरपर इतीति** । श्रौतब्रह्मशब्दधर्मिकजीवतात्पर्यकत्वार्थान्तरतात्पर्यकत्वकोटिक-सन्देह इत्यर्थः ।

ननु ब्रह्मशब्दस्य गुणपूर्त्यभिधायकतायाः प्रागभिहिततया तस्यार्थान्तरतात्पर्यकत्वावधृत्या ताद्रूप्य-विनिर्मुक्तजीवतात्पर्यकत्वकोटिकसन्देहस्यैवानवतारेण कथं तन्निबन्धनो विचारः सङ्गच्छत इत्याशङ्कायामाह **न हि ब्रह्मशब्द इति** । अवयववृत्त्या अप्रसिद्धार्थपरत्वसम्भवेऽपीति पूरणीयम् । इयं च फक्किका पूर्ववादिनो ब्रह्म-शब्दस्य क्वाचित्कगुणपूर्त्यभिधायकत्वोरीकारेण नैव प्रववृते । तथा सति तस्यार्थस्य, तद्वाचितायाः, तत्र तात्पर्यस्य च कल्प्यत्वादित्युत्तरग्रन्थासाङ्गत्यप्रसङ्गात् । किन्तु यथा अश्वकर्णादिशब्दा अवयववृत्त्याऽर्थविशेषवाचकत्वेन केनचिदङ्गीकृता इत्येतावता प्रसिद्धार्थतात्पर्यकत्वसम्भवे योगेन तद्वाचकता न सेधिष्यति तेषां, तद्वत् सिद्धान्तिना ब्रह्मशब्दस्यावयववृत्त्या अलौकिकार्थवाचकतायामूरीकृतायामपि तादृशालौकिकार्थतात्पर्यकताप्रसिद्धपरत्वसम्भवे न सेत्स्यत्येव तस्य, अन्यथा दर्शितातिप्रसङ्गस्य दुर्वारत्वात्; इति सम्भवद्गुणपूर्त्यवच्छिन्नतात्पर्यकतैवोपेयेति तादृशसन्देहस्यानन्तरायतया तन्निबन्धनोऽयं विचारः सङ्गच्छत एवेत्याशयः । इत्थं च दर्शिता गुरुपादोक्तसरणिः । सर्वत्रेति तु एकत्रापि न तत्परत्वम्, किमु सर्वत्रेति कैमुत्यसूचनायेति ज्ञेयम् । प्रसिद्धार्थसम्भवेऽपि योगेनालौकि-कार्थवाचित्वं प्रभवतीत्येतावता अलौकिकार्थपरत्वं न हि क्वापि दृष्टम् । घटादिशब्दानामप्यलौकिकार्थपरत्वा-पत्तेरित्याशय इति वाक्यार्थचन्द्रिकाकृतां चन्द्रिकाकृतां च 'इदं वाक्यं क्वचिद्गुणपूर्तिवाचिताङ्गीकारेण न प्रवृत्तं किन्तु गुणपूर्तिवाची न वेत्येव सन्दिह्यतां किं तात्पर्यसन्देहेनेति शङ्कायां वाचकत्वे सिद्धेऽपि तात्पर्यासिद्ध्या विवक्षितार्थासिद्धेर्नेत्थं सन्देहः किं तु तात्पर्यसन्देह एव दर्शनीय इति परिहर्तुमत एवैतद्वाक्यं सन्देहावसरे कृतमि'ति





निरूढं पन्थानमनुरुन्धानेत्यवसेयम् । अत्र व्याचक्षाणाः ''ननु ब्रह्मशब्दस्याथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा इति श्रुत्या गुणपूर्तिवाचकतायाः पूर्वमुक्तत्वात् कथमल्पगुणजीवपरत्वकोटिकसन्देहहेतुको विचारो युज्यत इत्यत आह **न हि ब्रह्मशब्द** (इति) इत्यवतार्य; सत्यं ब्रह्मशब्दो गुणपूर्तिवाचीति तथापि सर्वत्र प्रसिद्धार्थेऽपि न समस्तगुणपूर्तिपरः किं त्वप्रसिद्धार्थ एव । प्रसिद्धार्थे तु विवक्षिते सम्भवद्गुणपूर्तिपर एव भविष्यति । अतो युक्तः संशय इत्याशयः । एतेन सर्वत्रेति वचनेन क्वचिद्ब्रह्मशब्दस्य समस्तगुणपूर्णवस्तुवाचिताङ्गीकारावगमात् तस्यार्थस्य कल्प्यत्वादिति वक्ष्यमाणं कल्पनागौरवमेतद्वाक्यार्थेन विरुद्धमिति शङ्का निरस्ता । सर्वत्रेत्यस्य सर्वेषु ब्रह्मशब्दोपेतेषु वाक्येष्वित्यर्थकत्वे हि तथा स्यात् । न चैवं किं तु प्रसिद्धाप्रसिद्धार्थयोरित्यर्थकत्वस्य प्रदर्शितत्वात् । एतदेव दर्शयति **तद्यदीति** । **प्रसिद्धार्थपर एवायमिति** । ननु वक्ष्यमाणकल्पनागौरवेण ब्रह्मशब्दस्य कुत्राप्यप्रसिद्धार्थपरत्वं नास्तीति पूर्वपक्षस्याशयावगमात् कथमेवं विशिष्य पूर्वपक्षोपक्रम इति चेन्न । उच्यते । पूर्वोक्तजिज्ञासाऽऽक्षेपेण सङ्गतिं दर्शयितुं, न तावदयं ब्रह्मशब्द इति विशिष्य संशयधर्मिनिर्देशः कार्यः; अन्यथा सङ्गतेर्दर्शयितुमशक्यत्वात् तदनुसारेणैव पूर्वपक्षोपक्रमोपसंहारौ विशिष्योक्ताविति न काऽप्यनुपपत्तिः । चन्द्रिकायां तु न हि ब्रह्मशब्द इति वाक्यं क्वचिद्गुणपूर्तिवाचिताङ्गीकारेण न प्रवृत्तं किं तु ब्रह्मशब्दो गुणपूर्तिवाची न वेत्येव सन्दिह्यतां किं तात्पर्यसन्देहेनेति शङ्कायां वाचकत्वे सिद्धेऽपि तात्पर्यासिद्ध्या विवक्षितार्थासिद्धेर्नेत्थं सन्देहः, किं तु तात्पर्यसन्देह एव दर्शनीय इति परिहर्तुम् । अत एवैतद्वाक्यं सन्देहावसर एव कृतमित्युक्तम् ।'' इति व्याचक्षते ।

**अप्रसिद्धत्वेऽपीति** । तस्य देवत्वेनातीन्द्रियत्वादिति हृदयम् । तस्येति प्रयोजनपरामर्शकं पूर्वोत्तराभ्यां तन्त्रावृत्त्याद्याश्रयणेनान्वेति । **उपासनायाश्चेति** । अर्थपारमार्थ्याविगमिका जिज्ञासा मन्दप्रयोजनेति भावः । **न प्रसिद्धेरिति** । तथाच देहाद्यन्यत्वोपगमेन जीवधर्मिकजिज्ञासाया एव तद्विजिज्ञासस्वेति वाक्यघटकविधिविहितत्वोपगत्या नोत्तरवाद्यभिमता जीवान्यत्वविशेषितब्रह्मधर्मिकजिज्ञासा सङ्गच्छत इति पूर्ववादिमतप्रवृत्तिरिति भावः । **तद्वाचितताया इति** । लक्ष्येऽर्थे यद्यपि तात्पर्यं सूपगमं तथापि तत्रावयववृत्त्यभावेन गुणपूर्त्यसिद्ध्या लक्षणाया दुरुपगमत्वादिति भावः ।

**बाधकसद्भावादिति** । 'यन्न दुःखेन' इत्यादिवाक्यशेषोदीरितधर्मान्वयानुपपत्त्या स्वर्गशब्दस्य स्रगादिरूपप्रसिद्धार्थानुपगमेनालौकिकार्थतात्पर्यकतेव प्रकृतेऽपि 'यतो वा' इति वाक्यशेषाभिहितधर्मान्वयानुपपत्तिप्रसङ्गेन प्रसिद्धार्थपरित्यागेनातादृशार्थतात्पर्यकतैवोपेयेति भावः ।

**॥ इति लक्षणदोषशङ्कापरिहारे लक्षणस्य (अव्याप्त्यसम्भवाभावद्योतिकायाः) लक्ष्यधर्मतायाः प्रदर्शनम् ॥**

* * *





**॥ अथ लक्षणदोषशङ्कापरिहारे आदौ श्रुतिबलप्राप्तानां लक्षणदोषशङ्कानां परिहारः ॥**

**॥ तत्राप्यादौ अव्याप्तिशङ्कापरिहारः ॥**

९ **सु०—** **ननु कथं जगत्सृष्ट्यादिकारणत्वं हरेरेव स्यात्, यावता 'हिरण्यगर्भः समवर्तताग्रे', 'एको रुद्रो न द्वितीयाय तस्थे', 'इमाँल्लोकानीशत ईशनीभिः', 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' इत्यादिश्रुतिषु हिरण्यगर्भादीनां तत्प्रतीयते; इत्यत आह सृष्टिरिति । आसु श्रुतिषु परेणोदाहृतासु हिरण्यगर्भ इत्याद्यास्वपि विश्वस्य सृष्ट्यादयो हरेरेवोक्ता न तु ब्रह्मरुद्रादिभ्य इति न लक्षणस्यातिव्याप्तिरिति ।**

**तत्कथमित्यत आह यं नामानीति ।**

**अनु०— यं नामानि विशन्त्यद्धा यो देवानामिति ह्यपि ।**
**श्रुतेर्नामानि सर्वाणि विष्णोरेव यतस्ततः ॥**

**अनेन 'नामानि सर्वाणि यमाविशन्ति' इत्यादिश्रुतिमुपादत्ते । अद्धेत्याङोऽर्थकथनम् । 'यो देवानां नामधा एक एव' इत्यपि, प्रसिद्धश्रुतेः, नामानि सर्वाणि हिरण्यगर्भ इत्यादीनि, विष्णोरेव यतः, ततः, हिरण्यगर्भ इत्यादिषु श्रुतिषु, विश्वस्य सृष्ट्यादयो हरेरेव उक्ता इति पूर्वेण सम्बन्धः ।**

**परि०—** लक्षणानामतिव्याप्तिनिरासकत्वेनापि योजयति **ननु कथमित्यादिना । यावतेति** यस्मादित्यर्थे । भिन्नक्रमतयाऽप्यपिपदान्वयमुपेत्याह **इत्याद्यास्वपीति** । हरेरेवेति पञ्चमी । ब्रह्मरुद्रादिभ्य इति प्रतियोगिनि पञ्चमीनिर्देशात् । 'इति ह्यपि । श्रुतेः' इत्यत्र हिशब्दार्थमाह **प्रसिद्धश्रुतेरिति** ।

**गु०दी०— 'हिरण्यगर्भस्समवर्तताग्रे', 'एको रुद्रो न द्वितीयाय तस्थे'** इत्यादिश्रुतीनामयमर्थः— हिरण्मयब्रह्माण्डाख्यवीर्यं स्वोदरे धृतवतो विष्णोरेव हिरण्यगर्भत्वसम्भवात् रोदनाद्द्रुद्रत्वस्याद्वितीयत्वानुपयोगित्वेन रुजं द्रावयतीति व्युत्पत्तेः कालकूटपानान्नीलकण्ठे शूलिनि अयोगेन च कालिङ्गमर्दने कृष्णे रुद्रत्वस्यापि सम्भवात् 'शिवः शिवोऽभूदिति वचनात् शिवशिवीकरणसमर्थस्य हरेरेव शिवत्वसम्भवाच्च आसु श्रुतिषु हिरण्यगर्भरुद्रशिवशब्दाभिधेयो विष्णुरेव । किञ्च शब्दोऽस्तीति कृत्वा नार्थस्वरूपोन्मर्दनं कर्तुं शक्यते । तथा सति प्रवाहस्य घोषाधारत्वप्रसङ्गात् । सिंहो देवदत्त इति शब्दबलाद्भार्यायाः गृहात् पलायनप्रसङ्गात् । किन्तु यथा यथा अर्थोऽस्ति तथा तथा तत्स्वरूपमनुपमृद्यैव मुख्यवृत्त्या अमुख्यवृत्त्या वा शब्दो योजनीयः । एवं च 'एको





नारायण आसीदि'ति श्रुत्या हरेः प्रलयकालेऽपि विद्यमानत्वात् हिरण्यगर्भाख्यो हरिः अग्रे प्रलयकाले समवर्तत सम्यगवर्तत । पुनः सृष्टिकाले जातः 'तत्सृष्ट्वा तदेवानुप्राविशदि'ति श्रुतेः स्वसृष्टपदार्थेषु नानारूपैराविर्भूतः । भूतस्यैकः मुख्यः पतिरासीत् । स पृथिवीमिमां द्यामुत द्यां च दाधार । परमपुरुषरूपेण सर्वाधारशक्तेरप्याधार-त्वादतिशयेन दधार । अत एव संहितायां दीर्घः । कस्मै आनन्दरूपाय स्पष्टं निर्देष्टुमशक्यतया कश्चिदित्येव वक्तव्यतया वा कस्मै हविषा बलिं विधेमेति तत्स्वरूपमनुपमृद्यैव योजना । हिरण्यगर्भविषये तु 'न ब्रह्मा न च शङ्कर' इति श्रुतेः 'ब्रह्मणोऽपि भयं मत्तो द्विपरार्धपरायुष' इति स्मृतेश्च चतुर्मुखस्य ब्रह्मप्रलये अवस्थानायोगान्नेयं श्रुतिर्युक्ता । अस्तु वा हिरण्यगर्भविषयत्वं तथाऽपि नेयं बाधिका । तथा हि । एकः हिरण्यात्मब्रह्माण्डस्य अन्तर्विद्यमानत्वेन हिरण्यगर्भाख्यश्चतुर्मुखः अग्रे प्रलयकाले समवर्तत । 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि' इत्यभिधानात् संवर्तं प्रलयं प्राप । पुनः एकः अग्रे जगतः अग्रे सृष्टिकाले जातः हिरण्यगर्भतया यस्य हरेर्नाभिकमलाज्जातः भूतस्य उत्पन्नस्य प्रपञ्चस्य पतिरासीत्, न त्वभूतस्य नारायणस्य स नारायणः पृथिवीं पृथिव्यभिमानित्वात् पृथुत्वाच्च पृथिवीनाम्नीं भूदेवीं इमां द्यामुत दिवोऽभिमानिनीं द्योतमानां श्रीदेवीं च दाधार । प्रलयेऽपि पार्श्वद्वये दधार । जगद्धारणवत् नेदं धारणं किन्तु भार्यात्वेन भुजाभ्यामालिङ्गनमिति सूचनाय संहितायां दीर्घः । चतुर्मुखवत् प्रलये लीनो नाभूदिति भावः । अतो हविषा अन्ते हूयमानजगदाख्यहविषा कस्मै विधेम पूजां विधेम । एकस्य ब्रह्मणो नष्टत्वादपरस्यानुत्पन्नत्वात् तदतिरिक्तजगतः सुतरामभावात् । वटपत्रशायिने कस्मै सुखरूपाय नारायणाय तुभ्यं विधेम । प्रतिकल्पं च ब्रह्मादीनां व्यत्यासान्नित्यश्रौतब्रह्मेन्द्रादिपदैः हविषा कस्मै बलिं विधेम । किन्तु सनातनाय तुभ्यं नानारूपामराख्यया बलिं विधेमेति च श्रौतपदानामनुपमर्देनैवार्थः प्रतीयते । अतः इयमपि श्रुतिः अस्मत्पक्षस्यैव साधिका न परपक्षस्येति । **एको रुद्र** इति श्रुतेरप्ययमर्थः, एकः रुद्राणां मध्ये प्रधानः रुद्रः 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वमि'ति श्रुतेः 'यदरोदीस्सुरश्रेष्ठ सोद्वेग इव बालकः । अतस्त्वा-मभिधास्यन्ति नाम्ना रुद्र इति प्रजाः' इति स्मृतेश्च रोदनाद्रुद्रः द्वितीयाय जगते जगदुद्दिश्येत्यर्थः । न तस्थे वैराग्याधिपतित्वात् जगन्न गणयतीत्यर्थः । 'जगति न गणयेयं त्वत्परानुग्रहेणे'ति रुद्रेणोक्तत्वात् । किन्तु रुद्रः सर्वेभ्यः प्रथमं नारायणमुद्दिश्यैव तस्थे तपसि स्थिरोऽभवत् । 'यमुद्दिश्य सदा नाथं महेशोऽपि दिगम्बरः । जटी भस्मानुलिप्ताङ्गस्तपस्वी वीक्ष्यते जनैरि'ति वासुदेवसहस्रनाम्नोऽवसाने पार्वत्यैवोक्तत्वात् ॥ १ ॥ रुद्रः हरिवद्देहे-न्द्रियादिना एकः एकीभूतो न किन्तु द्वितीयाय प्राकृतदेहाय तस्थे । तत्रापि न प्रथमाय महत्तत्त्वाख्यदेहाय किन्तु द्वितीयाहङ्काराख्यद्वितीयदेहाय इति वा ॥ २ ॥ यद्वा रुद्र एकः गरुडवत् एक एव न किन्तु कल्पान्तरे द्वितीयाय शेषाख्यरूपाय तस्थे ॥ ३ ॥ किञ्च रुद्रः ब्रह्मवदवतारशून्यत्वादेकः एकाकी न किन्तु द्वितीयाय शुक-दूर्वास-अश्वत्थामादिरूपाय तस्थे ॥ ४ ॥ किञ्च एकः सर्वोत्तमो रुद्रो नारायणः न द्वितीयाय भावप्रधानो निर्देशः प्राथमिकत्वाय तस्थे ॥ ५ ॥ एकस्तु रुद्रस्तथा न, किन्तु द्वितीयाय द्वितीयकोटिस्थप्रपञ्चाय तस्थे । द्वितीय-कोटिस्थप्रपञ्चे अहमेकोऽस्मीत्युद्दिश्य तस्थे ॥ ६ ॥ किञ्च एको रुद्रः रोदनाद्रुद्रः रुद्रः भस्मासुरकृतहृद्रोगद्रावण-समर्थो न नाभूत् । अतः एकः एकाकी सन् द्वितीयाय स्वरक्षकं सकलजगद्भिन्नत्वात् द्वितीयं नारायणमुद्दिश्य तस्थे वैकुण्ठं प्रति प्रतस्थे ॥ ७ ॥ नायं रुद्रः किन्तु अन्योऽस्तीति मन्दाशङ्कां वारयितुं वा एक इत्यादि । एक एव रुद्रः





**१७ सु०—** तथाऽपि पाशुपतादीनां श्रुतिमूलत्वे पुराणादीना(मेव)मपि तत्स्यादित्यत आह **मोहार्थमिति** ।

**अनु०— मोहार्थं च**

**दर्शनान्तराणि कृतानीति शेषः। तथा च विप्रलम्भमूलत्वमुक्तं भवति।**

**आनन्दः—** **तथापीति** । तथा च पाशुपतशास्त्रस्य श्रुतिमूलत्वात् तन्मूलकपुराणादेरपि श्रुतिमूलत्वं स्यादेवेति भावः।

**१८ सु०— निर्निमित्तं प्राणिनां मोहमुत्पादयन्तः प्रत्यवायिनः प्रसज्येरन् । न च परव्यामोहनेन किमपि महत्प्रयोजनमस्ति यदाशया प्रत्यवायमपि न गणयेयुः । अतो नेदमुचितमित्यत उक्तं हरेराज्ञयेति ।**

**अनु०— आज्ञया हरेः।**

**ह(रेराज्ञा)र्याज्ञानुष्ठानान्न प्रत्यवायोऽस्ति किन्तु महाप्रयोजनावाप्तिश्चेति सुप्रसिद्धम् । न च हरेः प्रत्यवायः प्रयोजनापेक्षा वेश्वरत्वादिति भावः। तदुक्तम् 'कुत्सितानि च मिश्राणि रुद्रो विष्णुप्रचोदितः। चकार शास्त्राणि विभुर्ऋषयस्तत्प्रचोदिताः। दधीच्याद्याः पुराणानि तच्छास्त्रसमयेन तु' इति।**

**परि०—** 'तच्छास्त्रसमयेन तु' इत्यस्योत्तरश्लोकेनान्वयः । **इति सुप्रसिद्धमिति** । 'हर्याज्ञाकरणादेव पुण्यमेभिरवाप्यते' इति भारततात्पर्यनिर्णयान्तिमाध्याये । **तदुक्तमिति** । द्वितीये गीताभाष्ये उक्तमित्यर्थः ।

**यादु०—** 'तच्छास्त्रसमयेन तु' इत्यस्य 'चक्रुः' इत्युत्तरेणान्वयः।

**आनन्दः—** हरेराज्ञयेत्यस्य वैयर्थ्यमाशङ्क्य तन्निवर्त्यां शङ्कां दर्शयति **निर्निमित्तमित्यादिना** । ननु महाप्रयोजनसत्त्वात्परव्यामोहनमित्यत्राह **न चेति** । तथा हि हरेः प्रत्यवायः स्यादित्यत्राह **न चेति** । मोहार्थं पुराणानि कृतानीत्यत्र प्रमाणमाह **तदुक्तमिति** । **कुत्सितानि** हर्यसर्वोत्तमत्वप्रतिपादकानि । **मिश्राणि** हरिसर्वो-





त्तमत्वासर्वोत्तमत्वप्रतिपादकानि । अस्तु पाशुपतशास्त्रस्य विप्रलम्भमूलत्वं तथापि पुराणानां श्रुतिमूलत्व मेवेत्यत आह **तच्छास्त्रसमयेन त्विति** । पाशुपतसिद्धान्तानुसारेणेत्यर्थः ।

**श्रीनिधि०—** **तच्छास्त्रसमयेन** शैवशास्त्रसङ्केतेन । तमनुसृत्येति यावत् ।

**वा०चं०—** 'मोहार्थं चाज्ञया' इति वाक्यस्य पुराणादिकर्तुर्व्यासस्य हर्याज्ञाकरणायोगाद्दर्शनान्तर-विषयकतया तद्वाक्यं योजयितुं तद्व्यावृत्त्यर्थमाह **तथाऽपीति** ।

**स०व्र०—** **सुप्रसिद्धमिति** । हर्याज्ञाकरणादेव पुण्यमेभिरवाप्यत इत्यादिनेति शेषः ।

**विठ्ठल०—** **सुप्रसिद्धमिति** । 'हर्याज्ञाकरणादेव पुण्यमेभिरवाप्यते' इत्यादाविति शेषः ।

**॥ इति शैवादिपुराणप्रामाण्यलक्षणदोषशङ्कापरिहारे**
**'श्रुतिविरुद्धार्थे पुराणादीनां न मानत्वम्' ॥**

* * *

**॥ अथ शैवादिपुराणप्रामाण्यलक्षणदोषशङ्कापरिहारे**
**'श्रुतौ अन्येषां सर्वनामत्वानुक्तिः' ॥**

**१९ सु०—** किञ्च रुद्रादीनां जगत्कारणत्वे विष्णवाद्यशेषनामवत्त्वं स्यात्, अन्यथा विष्णवादीनां जगत्कारणत्वाद्यभि(दधतां)धायिनां वाक्यानां विरोधपरिहारो(रायो)पाया-भावेन निर्णयानुपपत्तेः । न च तेषां सर्वनामताऽस्ति, तत्र प्रमाणाभावात् । अतो न जग-त्कारणत्वमपि तेषाम् । इत्याह **न सर्वनामतेति** ।

## अनु०— न सर्वनामताऽन्येषां श्रुतावुक्ता हि कुत्रचित् ॥

ननु पद्मपुराणादौ विष्णुनामानि शिवे प्रतीयन्त इति । मैवम् । यो देवानामिति श्रुतिविरुद्धस्य पुराणादेरनादरणादित्यभिप्रायेण 'श्रुतौ' इत्युक्तम् ।

**आनन्दः—** कारिकायां श्रुतावित्यस्यानर्थक्यमाशङ्क्य तन्निवर्त्यां शङ्कामाह **ननु पद्मेति** ।

**वा०चं०**— पुराणादिप्रामाण्यनिरासेन रुद्रादिजगत्कारणत्वरूपप्रमेयं निरस्य प्रकारान्तरेण तत्प्रमेयनिरासकतयोत्तरवाक्यसार्थक्यं दर्शयति **किञ्चेति** ।

**॥ इति शैवादिपुराणप्राप्तलक्षणदोषशङ्कापरिहारे**
**'श्रुतौ अन्येषां सर्वनामत्वानुक्तिः' ॥**

***

**॥ अथ शैवादिपुराणप्राप्तलक्षणदोषशङ्कापरिहारे**
**'श्रुतौ नियमेन हरेरेव अदोषत्ववचनम्' ॥**

**२० सु०**— अपि च जगत्कारणेनाज्ञानादिदोषरहितेन भवितव्यम्, दोषिणोऽस्मदादिवज्जगत्कारणत्वानुपपत्तेः । निर्दोषत्वं च भगवतो हरेरेव नान्येषाम् । अतः स एव जगज्जन्मादिकर्ता न रुद्रादिः इत्याह **अदोषेति** ।

**अनु०— अदोषवचनाच्चैव नियमेन हरेः श्रुतौ ।**

दोषवचनाभावात् **अदोष(त्व)वचनाच्च** इत्यर्थः । **एव**शब्दो **हरेः** एवेति सम्बद्ध्यते ।

तदुपपादयति **अज्ञानमिति** ।

**अनु०— अज्ञानं पारतन्त्र्यं च प्रलयेऽभाव एव च ॥**
**अशक्तिश्चोदिताऽन्येषां सर्वेषामपि च श्रुतौ ।**

अभाव एव, न त्वनभिव्यक्तिमात्र(मित्यर्थः)मिति भावः । अपिरभिव्याप्तौ । चशब्दो हेतौ । तस्माद्धरेरेवेति युक्तमिति ॥ श्रुतीश्च पाशुपताधिकरणादावुदाहरिष्यति ।

**परि०— दोषवचनाभावादिति** । जनितोत विष्णोरित्यस्यान्यार्थतावर्णनादिति भावः ।

**वं०प०**— **तदुपपादयतीति** । हरेरेवादोषवचनादित्युक्तेऽन्येषां दोषवचनादित्यस्य एवकारमहिम्ना लब्धत्वात् एवकारलब्धं प्रमेयमुपपादयतीत्यर्थः । अत एव हरेरेवेति युक्तमिति वदिष्यति ।





**आनन्दः**— निर्दोषत्वरूपजगत्कारणत्वव्यापकाभावाच्च तदभाव इत्याशयेनाह **अपि चेति**। चशब्द-समुच्चयमेवाह **दोषेति**। एवलब्धार्थमाह **अभाव इति**।

**श्रीनिधि०**— **अपिरभिव्याप्ताविति**। सर्वशब्दो न सङ्कुचितवृत्तिरपि तु विद्यमानाशेषपर इत्यर्थः। इति योज्यमिति भावः।

**वा०चं०**— एवशब्दस्य समुच्चयार्थकचशब्दविरोधाद्भिन्नक्रमतया प्रकृतोपयोगं दर्शयति **एवेति**। **तदिति**। हरेरेवेत्येतदर्थः।

**॥ इति शैवादिपुराणप्राप्तलक्षणदोषशङ्कापरिहारे**
**श्रुतौ नियमेन हरेरेव अदोषत्ववचनम् ॥**
**॥ इति शैवादिपुराणप्राप्तानां लक्षणदोषशङ्कानां परिहारः ॥**

* * *

**॥ अथ लक्षणदोषशङ्कापरिहारस्य उपसंहारः ॥**

**२१ सु०— एवं सौत्रस्य विष्णुलक्षणस्याव्याप्तिप्रसक्त्यभावादतिव्याप्तिमसम्भवं च परिहृत्योपसंहरति जन्मादीति।**

## अनु०— जन्माद्यस्येति तेनैतद्विष्णोरेव स्वलक्षणम् ॥

**तेनोक्तप्रकारेण जन्माद्यस्येत्युक्तं जगज्जन्मादिकारणत्वं विष्णोः सम्भवति नान्येषाम्। अतोऽसम्भवाद्यभावाद्विष्णोर्लक्षणं युक्तमिति योज्यम्।**

**परि०**— **अव्याप्तिप्रसक्त्यभावादिति**। लक्ष्यस्यैकव्यक्तित्वादिति भावः।

**यादु०**— **अव्याप्तिप्रसक्त्यभावादिति**। लक्ष्यभेदाभावादिति भावः।

**आनन्दः**— चापिशब्दयोर्वैयर्थ्यमाशङ्क्याह **अव्याप्तिप्रसक्तीति**। लक्ष्ये तदिति भावः।

**स०व्र०**— **एवं सौत्रस्य विष्णुलक्षणस्येति**। नन्वव्याप्तेः परेणानाशङ्कितत्वात्परिहारो माऽस्तु तथापि सकलजगज्जन्मादिकारणत्वस्यैव लक्षणत्वात् तस्य च प्रलयकालेऽभावात् कथं नाव्याप्तिरिति चेन्न कारणत्वस्य शक्तिरूपत्वेन शक्तेश्चेश्वररूपत्वादव्याप्त्यभावादित्युक्तमिति भावः।





**विठ्ठल०**— लक्षणदोषस्यापरस्याव्याप्तेः सत्त्वात्तदनिराकृत्य कथम् अतिव्याप्यसम्भवनिराकरणमात्रेणोपसंहार इत्याशङ्कां परिहरन्नवतारयति **एवमिति** । **प्रसक्त्यभावादिति** । लक्ष्यस्य निर्भेदत्वादिति भावः ।

**चषकः**— **अव्याप्तिप्रसक्त्यभावादिति** । लक्ष्याभिमतव्यक्तेः स्वबोधकपदसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकरूपेण स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वकत्वादिति भावः । तेन लक्ष्यानन्त्यस्थलेऽपि प्रातिस्विकैकत्वसत्त्वेऽपि न क्षतिः ।

**॥ इति लक्षणदोषशङ्कापरिहारस्य उपसंहारः ॥**

**॥ इति लक्षणदोषशङ्कापरिहारः ॥**

* * *

**॥ अथ 'सूत्रोक्तार्थे मतान्तरोक्तार्थप्राप्तविरोध'स्य परिहारः ॥**

**॥ तत्र मायिमतोक्तस्य लक्षणसूत्रारम्भस्यैव अनुपपत्तिः ॥**

**॥ तत्रादौ 'नेदं तटस्थलक्षणम्' ॥**

**२२ सु०— एवं स्वमतेन सूत्रं व्याख्याय तत्परिशुद्धये मायावादिनां मते लक्षणसूत्रारम्भ एवानुपपन्न इति वक्तुं यत्तै(परै)रभिहितं 'जगज्जन्मादिकारणत्वं न लक्ष्यब्रह्मणः स्वरूपान्तर्गतं(त) लक्षणं किन्तु तटस्थमेव । त्रैविध्यमत्र सम्भवति मायाविशिष्टं ब्रह्म कारणमिति वा, मायाशक्तिमत्कारणमिति वा, जगत्कारणं तु मायैव तदाश्रयतया ब्रह्म कारणमिति वेति । सर्वथाऽपि जगत्कारणत्वं बाह्यमेव, न साक्षात्स्वरूपान्तर्गतम् (एव) ।' इति; तदेतदनुपपन्नम् इति भावेनोक्तं 'स्वलक्षणम्' इति । स्वरूपान्तर्गतमेवेदं ब्रह्मणो जगज्जन्मादिकारणत्वं न मायावाद्युक्तरीत्या तटस्थमित्यर्थः ।**

**परि०**— स्वलक्षणमित्यत्र स्वपदस्य कृत्यं व्यनक्ति **एवं स्वमतेनेत्यादिना** । **मायाशक्तिमदिति** । मायाशक्त्युपलक्षितमित्यर्थः ।

**यादु०**— **मायाविशिष्टं ब्रह्मेति** । रज्वाः सूत्रद्वयवदित्यर्थः । **मायाशक्तिमदिति** । मायाख्यसहकारिसमवहितमित्यर्थः । अत्रापि मायाविशिष्टं ब्रह्म कारणमित्येव विवक्षितम् । किन्तु पूर्वत्र मायाब्रह्मणोः समप्राधान्यं विवक्षितम् । अत्र तु ब्रह्मणः प्राधान्यं मायाया उपसर्जनत्वमिति न पूर्वभेद इत्याहुः ।





**तदाश्रयतयेति** । अंशुर्यथा तन्तुद्वारा पटोपादानं तथा ब्रह्मापि मायाद्वारा जगदुपादानमित्यर्थ इति केचित् । सकलजगदुपादानमायाऽधिष्ठातृ ब्रह्म, अतो जगत्कारणमित्युच्यत इत्यप्यस्याभिप्रायमाहुः ।

**आनन्दः**— कुतोऽस्य तटस्थत्वमित्याशङ्क्याह **त्रैविध्यमिति** । न च केवलस्यैव कारणत्वं किं नोच्यत इत्याशङ्क्य केवलस्य कारणत्वे विकारप्रसङ्गेन शुद्धस्य च निर्विकारत्वेन तदयोगादिति भावः।

**श्रीनिधि०— मायाविशिष्टं कारणमिति** । समप्राधान्ये कारणत्वम् । **मायाशक्तिमदिति** । मायायाः शक्त्यवच्छेदकत्वेनाप्राधान्यम् । तृतीये ब्रह्मण एवाप्राधान्यमिति भेदः ।

**वा०चं०**— ननु कारणत्वस्यास्वरूपत्वाप्रसक्तेः स्वलक्षणत्वोक्तिवैयर्थ्यम् । न च परोक्ततटस्थ-लक्षणत्वनिरासाय सेति वाच्यम् । तस्यापि वैयर्थ्यात् । न च 'अतो जीवैक्यमपि' इत्यादिना परमते लक्षणसूत्रानारम्भव्युत्पादनाय सेति वाच्यम् । तस्यापि प्रयोजनाभावादित्यतः स्वव्याख्यानपरिशुद्ध्यर्थत्वात् तस्येत्याशयेन स्वलक्षणमित्येतदवतारयति **एवमिति** । नन्वानन्दादिवत्कारणत्वस्यापि स्वरूपत्वसम्भवे कुत-स्तटस्थत्वोक्तिस्तेषामित्यतो निरवद्यस्य ब्रह्मणः शुद्धस्यैवोपादानत्वासम्भवेन विवर्ताधिष्ठानत्वस्यैव वक्तव्यतया तदन्यस्य जगद्रूपेण विक्रियमाणस्यानिर्वचनीयमायान्यस्याभावादसम्भवात् । सत्तारूपेण स्फूर्तिरूपेण वाऽनुगततया ब्रह्मण उपादानत्ववत्कार्येऽनुगत्या तस्या अप्युपादानत्वे ब्रह्मलक्षणस्य मायायामतिव्याप्तिमाशङ्क्य मुख्योपादानस्य जगत्कारणत्वं स्वरूपलक्षणम् । औपचारिकोपादानस्य तु तटस्थलक्षणम् । तत्र स्वरूप-लक्षणतयाऽभिमतस्य न तावन्मायायामतिव्याप्तिस्तस्या लक्ष्यान्तःपातित्वाज्जगत्कारणत्वस्य तु तटस्थलक्षण-रूपेण मायायामवृत्तेर्न तटस्थलक्षणस्याप्यतिव्याप्तिरित्याशयेन मुख्यामुख्योपादानस्वरूपं मतभेदेन व्युत्पादयितुं विवरणोक्तं त्रैविध्यमनुवदति **त्रैविध्यमत्र सम्भवतीति** । रज्वाः संयुक्तसूत्रद्वयवत्समप्रधानत्वेन मायाब्रह्मणौ उपादानम् । तत्र सत्तास्फूर्त्यंशयोर्ब्रह्मण उपयोगो जाड्यविकारांशयोस्तु मायाया इति केषाञ्चित्पक्षानुसारेण प्रथमः कल्पः । मायाख्यशक्तेरप्राधान्यं ब्रह्मण एव प्राधान्यमिति द्वितीयपक्षाभिप्राय इति कश्चित् । 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति श्रुतिबलान्मायाख्या शक्तिरेव साक्षादुपादानं शक्तेश्च नियमेन शक्तिमत्पारतन्त्र्याच्छक्तिमति ब्रह्मण्यर्थादुपादानत्वं पर्यवस्यतीति तदभिप्राय इत्यपरः । आरोपितमायायाधिष्ठानब्रह्मस्वरूपमन्तरेण वस्तुतः स्वरूपान्तराभावान्मायाया एव साक्षादुपादानत्वेऽपि तदधिष्ठानत्वेन ब्रह्मणोऽप्युपादानत्वमवर्जनीयमिति तृतीय-कल्पाभिप्रायः । अत्राद्यपक्षे मायाविशिष्टब्रह्मणो मुख्योपादानत्वं द्वितीयतृतीययोस्तु मायाया एव । पक्षत्रयेऽपि शुद्धब्रह्मण औपचारिकमेवोपादानत्वमिति विवेक इति भावः ।

**वा०र०— निरवद्यस्येति** । अत्र निरवद्यत्वोक्त्या मायासम्बन्धाभावेऽपि विकारशून्यत्वरूपकूटस्थत्वं हेतुरिति प्रतिपादितम् । तत्र च निरवयवत्वं हेतुतया परोक्तं ग्राह्यमिति भावेनैवोपादानत्वाभावे निरवद्यत्वं





**हेतुतयोक्तम्** । **ततश्च निरवयवत्व एव तात्पर्यम्** । **अत एव ब्रह्मणः परिणामे** श्रुत्यादिप्रमाणनिराकरणानन्तरं परिणामाभावे अज आत्मा महान् ध्रुव इति ध्रुवपदेन परिणामविरुद्धकौटस्थ्याभिधानानन्तरं कूटस्थत्वं च निरवयवत्वादिति प्रतिज्ञाय हेमगतरुचिकादिपरिणामस्य परम्परया निरवयवपरमाणुपर्यवसायितया निरवयवस्यापि परिणमिता दृष्टेत्याद्याशङ्क्य कोऽयं परिणामो मृत्पिण्डस्य घटरूपापत्तावित्यादिना निरवयवपदार्थान्तरत्वेन परिणामाभावमुक्त्वा ब्रह्मणो निरवयवस्य परिणामानुपपत्तिं तदेवं निरवयवं ब्रह्म न परिणमते किन्तु विवर्तत इत्यनेनोपसंहृत्य तस्मिन्नपि पक्षे पूर्वमपरित्यजतो ब्रह्मणो निर्विकारत्वाज्जगद्रूपेण विकरिष्यमाणवस्त्वन्तरं किञ्चिदङ्गीकार्यमित्यादिना निरवयवत्वेन ब्रह्मणो विकारित्वरूपोपादानत्वाभावस्य विवरणोपन्यासे प्रतिपादनेन तदनुसारेण प्रवर्तमाने तद्ग्रन्थे निरवयवत्वस्यैव वक्तव्यत्वात् । निरवद्यस्य ब्रह्मण इति पाठस्तु विवरणोपन्यासानुसार्येवेति द्रष्टव्यम् । **तदन्यस्येत्यादि** । अयं च जगद्रूपेण विकरिष्यमाणवस्त्वन्तरं किञ्चिदित्यस्यानुवाद इति बोध्यम् । अन्यदपि मायाशब्दवाच्यं प्रज्ञादिकमयुक्तमिति नासदासीदित्यादिशास्त्रानुसारेणानिर्वचनीयशक्तिरूपा मायैवेति परिशेषमभिप्रेत्यानिर्वचनीयमायान्यस्येति । तदन्यस्यासम्भवादित्यत्र हेतुरभावादित्यन्तो योज्यः । उदाहृतग्रन्थानुसारेण सत्तारूपेणेत्यादि विवेक इति भाव इत्यन्तम् । शिष्टं विवरणं तत्त्वदीपनाद्यनुसारेण । न्यायामृतं चात्रावलोक्यम् ।

**स०व्र०— मायाविशिष्टं ब्रह्मेति** । रज्वाः सूत्रद्वयवदित्यर्थः । **मायाशक्तिमदिति** । माया लक्षणहेतूपरागवदित्यर्थः । यथा मृदश्चक्रादिहेतुसमवहितस्यैव । तत्र मायाब्रह्मणोः समप्राधान्यम् । अत्र तु ब्रह्मणः प्राधान्यं मायाया उपसर्जनत्वं विवक्षितमिति भावः । **तदाश्रयतयेति** । कार्पासांशुर्यथा तन्तुद्वारा पटोपादानं तथा ब्रह्मापि मायाद्वारेत्यर्थः ।

**विठ्ठल०— मायाविशिष्टम्** इत्यत्र मायाब्रह्मणोस्समप्रधानतया कारणत्वं मायाशक्तिमदित्यत्र ब्रह्मणः प्रधानतया कारणत्वं मायाया उपसर्जनत्वेन कारणत्वं तदा सूत्रतया ब्रह्मकारणम् इत्यत्र ब्रह्मणः कारणत्वं उपचरितमिति विवक्षितमित्येवं भेदो ज्ञातव्यः । 'एकं परंज्योतिरि'त्यस्य एकं प्रधानं परं विलक्षणम् अनन्यम् अन्तर्भेदरहितं स्वसंस्थया स्वरूपस्थित्या अस्य जगत उद्भवनादिहेतुभिः स्वलक्षणैः स्वरूपधर्मैर्लक्षितं भावनिवृत्तिरूपमात्मानं दध्यौ भावो ज्ञानं निवृत्तिरानन्द इत्यर्थ इति 'स्वरूपमस्मरत् कृष्ण एकं स्वस्मिन्नभेदतः (अन्तर्भेद) अन्तं तद्भेदराहित्यादनन्यं सदृशोज्झितेः । अद्वयं नित्यनिवृत्त्या भावनिर्वृतमीश्वर' इति श्रुतिगीतातात्पर्यानुसारेण प्राप्तनयचन्द्रिकारीत्याऽर्थो ज्ञातव्यः ।

**चषकः— मायाविशिष्टमिति** । तुल्यकक्ष्यापन्नसूत्रद्वयस्य रज्जुहेतुतेव तादृशयोर्मायाब्रह्मणोर्विश्वहेतुतेत्यर्थः । **मायाशक्तिमदिति** । स्वोपसर्जनीभूतमायाशक्त्याख्यसहकारिसमवहितमित्यर्थः । **तदाश्रयतयेति** । प्राधान्येन जगदुपादानं मायैव ब्रह्म तु तदाश्रयतया तदुपादानमित्युपचर्यत इति भावः ।





२३ **सु०— तत्कुत इत्यत आह अस्येति।**

**अनु०— अस्योद्भवादिहेतुत्वं साक्षादेव स्वलक्षणम्।**
**कृष्णध्यानच्छलेनैव स्वयं भागवतेऽब्रवीत्॥**

**अस्य सर्वस्यापि विश्वस्योद्भवादिहेतुत्वं ब्रह्मणः स्वलक्षणमेवेति सूत्रकारो भागवते साक्षादेव स्पष्टमेवाब्रवीत् 'एकं (यत्तत्) परं ज्योतिरनन्यमद्वयं स्वसंस्थया नित्यनिरस्तकल्मषम्। ब्रह्माख्यमस्योद्भवनादिहेतुभिः स्वलक्षणैर्लक्षितभावनिर्वृ(ति)तम्॥' इति। तथा च सूत्रकाराभिप्रायानवबोधनिबन्धनमेव परेषां तटस्थलक्षणव्याख्यानमिति।**

**ननु "मै(नै)वं सूत्रकारोऽब्रवीत्; किन्तु परप्रतीत्यनुवादोऽयम्, 'ब्राह्मे मुहूर्त उत्थाय वार्युपस्पृश्य माधवः। दध्यौ प्रसन्नकरण आत्मानं तमसः परम्॥' इति पूर्ववाक्ये कृष्णानुष्ठितध्यानस्य प्रकृतत्वात्।" इत्यत उक्तम् कृष्णेति। कृष्णध्यानानुवादमिषेण स्वयमेवाब्रवीदिति।**

**परि०— भागवत इति**। दशमस्कन्धे। **परं** विलक्षणम्। **अनन्यं** अन्तर्भेदरहितम्। **अद्वयं** समाधिकरहितम्। **स्वसंस्थया** स्वरूपभूतस्थित्या। **अस्य** जगतः। **उद्भवनादिहेतुभिः** जन्मादि हेतुत्वलक्षणैः। **स्वलक्षणैः** स्वरूपभूतधर्मैः। **लक्षितं** भावनिर्वृतिरूपं चेत्यर्थः। **भावः** ज्ञानम्। **निर्वृतिः** आनन्दः। तद्रूपमिति यावत्। **आत्मानमिति**। पूर्वश्लोकस्थात्मविशेषणत्वाद्भावनिर्वृतिमित्युक्तम्। ज्योतिरित्यस्यापि ज्योतिरूपमित्यर्थः। अत एवानन्यमिति साधु। अन्यथाऽनन्यदिति स्यात्।

**यादु०—** एकं परं ज्योतिरित्येव पाठो न तु यत्तत्परं ज्योतिरिति। 'स्वरूपमस्मरत्कृष्ण एकं स्वस्मिन्नभेदतः। अतत्तन्त्रस्य राहित्यादनन्यं तादृशोज्झितेः। अद्वयं नित्यनिर्वृत्या भावनिर्वृतमीश्वरमि'ति श्रुतिगीतातात्पर्योदाहृतप्रमाणादस्यार्थोऽवगन्तव्यः।

**वं०प०—** एकं परं ज्योतिरित्येव पाठो न तु यत्तत्परं ज्योतिरिति। एकं परं ज्योतिरिति श्लोकार्थस्तु 'स्वरूपमस्मरत्कृष्ण एकं स्वस्मिन्नभेदतः। अतत्तन्त्रस्य राहित्यादनन्यं समतोज्झितेः। अद्वयं नित्यनिर्वृत्त्या





भावनिर्वृतमीश्वरम् ।' इति श्रुतिगीतातात्पर्योदाहृतप्रमाणानुसारेण द्रष्टव्यः । भावः सत्ता, सा च विशेषानुक्तेः सार्वकालिकी विवक्षिता; इति भावेन नित्येति भावशब्दो व्याख्यातः । तथाच भावनिर्वृतं सर्वदा विद्यमानानन्दरूपमित्यर्थः ।

**आनन्दः**— तद्भागवतवाक्यं पठति **एकमिति** । इतरवस्तुभ्यः आत्मानं व्यावर्तयति **एकमिति** । **एकं** मुख्यं, स्वरूपभेदशून्यं वा । **आदिः** ज्योतिर्भ्यः, **परं** विलक्षणं, 'परं ज्योतिरुपसम्पद्ये'ति श्रुतेः । **अनन्यं** अन्याधीनस्वभावरहितम् । न अन्यः स्वतन्त्रो वा यस्मात्तथात्वं वा । **अद्वयं** असदृशम् । स्वसंस्थया स्वव्यवस्थया स्वमहिम्ना स्वाकारेण वा नित्यनिरस्तदोषम् । किन्नामधेयमत्राह **ब्रह्माख्यमिति** । **स्वलक्षणैः** स्वरूपलक्षणैः व्यावर्तकधर्मैः । अस्य जगत उद्भवादिहेतुभिः सृष्ट्यादिहेतुभिः । लक्षितभावनिर्वृतं स्वरूपानन्दो यस्य स तथा तम् । यदेष आकाश आनन्दो न स्यादिति श्रुतेरिति दशमस्कन्धीयश्लोकार्थः ।

**वा०चं०— एकं परमित्यादि** । एतच्च 'स्वरूपमस्मरत्कृष्ण एकं स्वस्मिन्नभेदतः । अतत्तन्त्रस्य राहित्यादनन्यं सदृशोज्झितेः । अद्वयं नित्यनिर्वृत्या भावनिर्वृतिमीश्वरम्' इति तन्त्रभागवतवाक्योपन्यासेनाचार्यैः स्पष्टमन्यत्र व्याख्यातमिति न स्वयं व्याख्यातमिति ज्ञेयम् । भागवते तथेत्युक्त्या सूत्रस्य तटस्थलक्षणपरतया व्याख्याने किं दूषणमुक्तमित्यत आह **तथा चेति** ।

**वा०र०**— एकं परं ज्योतिरिति दशमे उत्तरार्धे विंशत्यध्याये भागवतवाक्यम् । **एकं परमित्यादीतीति** प्रतीकोपादानेन एकं स्वस्मिन्नभेदत इति तात्पर्योदाहरणेन च एकं परमित्येव भागवतपाठ इति सूचितम् ।

**विठ्ठल०**— निरस्तविक्रियं कलमषम् इति च पाठद्वयम् । यत्तत्परं ज्योतिरिति क्वचित्पाठः । ज्योतिरित्यस्य प्रकाशरूपमित्यर्थः । **मिषेण** व्याजेन ।

**चषकः— एकं परमित्यादि** । 'स्वरूपमस्मरत्कृष्ण एकं स्वस्मिन्नभेदतः । अतत्तन्त्रस्य राहित्यादनन्यं सदृशोज्झितेः । अद्वयं नित्यनिर्वृत्या भावनिर्वृतिमीश्वरम् ।' इति तन्त्रभागवतवाक्योपन्यासेन भगवत्पादा एवैतत्पद्यं व्याख्यासिषुरिति टीकाकृत्पादा न व्याकार्षुरिति ध्येयम् ।

**२४ सु०— अयमाशयः ॥ परकृतानुवादो हि पुराणकर्तुर्द्वेधा सम्भवति । निराकरणार्थं वा यथा 'यावत्स्याद्गुणवैषम्यम्' इत्यादि, 'एवं शिष्टैरनुष्ठितत्वादन्यैरप्यनुष्ठेयम्' इति विधानार्थं वा यथा 'त्रित्वे हुत्वाऽथ पञ्चत्वम्' इत्यादि ॥ तत्राद्यः पक्षस्तावत्प्रकृते न सम्भवति अनिराकृतत्वात् । साक्षाद्भगवदवतारस्य कृष्णस्य चेत्प्रतिपत्तिर्निराकरणमर्हति कुतस्तर्हि व्यास-**





**प्रतिपत्तौ समाश्वासः। ध्यानमेवेदं न ज्ञानमिति चेत् तत्किं ज्ञानविपरीतं ध्यानमिति नियमः। तथा सति ध्यानार्थिनः श्रवणमननापेक्षा न स्यात् । न च तटस्थं लक्षणं स्वरूपतया ध्यातव्यमिति क्वचिद्विधिर्वा प्रयोजनं वा श्रूयते ॥ तस्माद् द्वितीयः पक्षः परिशिष्यते। तथा च सूत्रकारस्येदं कथं न मतम् । अन्यथा श्वेतकेतूद्दालकाख्यायिकया प्रतिपादितत्वादद्वैतमपि न श्रुत्यभिप्रायः स्यात् । 'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं ब्रह्मास्मि' इत्यपि परोपासनानुवादो न स्वार्थे तात्पर्यवान् स्यात्, 'अथ योऽन्यां देवतामुपास्ते' इत्युपासनाप्रकरणत्वात् । तथा च बहुविप्लवः स्यात् ॥ तस्मात्सूत्रकारस्यैवायमभिप्रायो यज्जगज्जन्मादिकारणत्वं ब्रह्मणः स्वरूपान्तर्गतमेव लक्षणमिति । तथा च विस्पष्टतदीयवाक्यान्तरबलादस्यापि सूत्रस्य स्वरूपलक्षणपरत्वमेवेति ।**

**परि०— यावत्स्यादिति** । 'यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः । नानात्वमात्मनो यावत्पारतन्त्र्यं तदैव हि॥ १ ॥ यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम्। य एतत्समुपासीरन् ते मुह्यन्ति शुचार्पिताः' इत्येकादशस्कन्धे दशमाध्याये मतान्तरम् । 'ते मुह्यन्ति' इत्यादिनिन्दया निराकरणार्थं 'यावत्' इत्यादिना अनूद्यत इत्यर्थः। **त्रित्व इति**। 'वाचं जुहाव मनसि तत्प्राण इतरे परम्। धृत्या ह्यपानं सोत्सर्गं तत्परत्वे ह्यजोहवीत् ॥ १ ॥ त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः । सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये ॥ २ ॥' इति प्रथमस्कन्धगतपञ्चदशेऽध्याये मृतिकाले धर्मराजकृतलयचिन्ता अनूद्यते। तस्यार्थः वाचं वागभिमानिनीमुमां मनसि मनोभिमानिनि रुद्रे जुहाव उमाया रुद्रे लयो भवतीति चिन्तितवानित्यर्थः। तत् मनः प्राणे जुहाव। परं मनसः परं प्राणं च इतरस्मिन्नपाने जुहाव। धृत्या मनस एकाग्रतया सोत्सर्गं सवृत्तिकमपानं तत्परत्वे तस्मादपानात्पूर्वभाविनि व्यानेऽजोहवीत् । अथापानव्यानलयचिन्तानन्तरम् अवशिष्टावुदानसमानौ त्रित्वे त्रित्वसङ्ख्याविशिष्टेषु प्राणापानव्यानेषु हुत्वा लयं विचिन्त्य पञ्चत्वं पञ्चत्वसङ्ख्याविशिष्टान् प्राणापानव्यानोदानसमानांश्च एकत्वे एकत्वसङ्ख्याविशिष्टे मूलप्राणे अजुहोत्। सर्वं पूर्वोक्तं समस्तम्, आत्मनि स्वहृदि स्थिते विष्णौ अजुहवीत्। तं चात्मानम्। अव्यये नाशहीने ब्रह्मणि सर्वगते विष्णावजुहवीदिति। अयुक्तं च निराकरणमित्याह **साक्षादिति**। ननु कृष्णस्य चेत्प्रतिपत्तिरित्याद्युक्तमयुक्तम्। 'दध्यौ प्रसन्नकरण' इति पूर्वोक्तध्यानप्रकारस्यैव 'यत्तत्परं ज्योतिः' इत्यादिनाऽनुवादात् । ध्यानस्य च ज्ञानविषयविपरीतविषयकत्वनियमादिति भावेनाऽऽशङ्क्य निराह **ध्यानमेवेदमित्यादिना** । ननु तटस्थमेव लक्षणं स्वरूप-





लक्षणत्वेन ध्यातव्यत्वात् कृष्णेन तथा ध्यातमित्यत आह **न च तटस्थमिति । अन्यथेति ।** अनुवादत्वमात्रेणानभिमतत्व इत्यर्थः । श्वेतकेतूद्दालकाख्यायिकाया अप्यनुवादत्वाविशेषादिति भावः । ननु तत्रोपासना न श्रूयत इत्यत आह **अथ योऽन्यामिति ।**

**गु०दी०— निराकरणार्थं वा** इत्यत्र 'यावत्स्याद्गुणवैषम्यमित्यादेः' य एतत्समुपासीरन् ते मुह्यन्ति शुचाऽर्पिताः इत्युत्तरश्लोकोत्तरार्धे निराकरणार्थत्ववत्प्रकृतेऽपि निराकरणार्थमित्यर्थः । **त्रित्वे हुत्वाऽथ पञ्चत्वम्** इत्यत्र देहस्थितभूतानां पञ्चत्वं त्रित्वे प्राधान्यात्तेजोबन्नात्मकत्वे हुत्वा ध्यानाग्निना हुत्वा तच्च त्रित्वमेकत्वे प्रकृत्यात्मकत्वे हुत्वा देहे ममतां त्यजेदित्यर्थः ।

**यादु०— यथा यावत्स्यादित्यादि ।** 'यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः । नानात्वमात्मनो यावत्पारतन्त्र्यं तदैव हि । यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् ।' गुणवैषम्यं सृष्टिः । संसार इति यावत् । तथा च संसारदशायामेव भेदपारतन्त्र्यभयानि भवन्ति । मुक्तौ परमात्माभेद एवेत्ययं परमतानुवादः । 'एतत्समुपासीरन् ते मुह्यन्ति शुचाऽर्पिता' इति निराकरणार्थमित्यर्थः । **यथा त्रित्वे हुत्वाऽथेति ।** अत्र यद्यपि, 'वाचं जुहाव मनसि तत्प्राण इतरे परम् । धृत्या ह्यपानं सोत्सर्गं तत्परत्वे ह्यजोहवीत् । त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः । सर्वमात्मन्यजुहवीत् ब्रह्मण्यात्मानमव्यय' इति श्लोकद्वयस्य धर्मकृतलयचिन्तानुवादरूपत्वात् । तत्सङ्ग्रहाय वाचं जुहाव मनसीत्यादीत्येव प्रतीकग्रहणमुचितम् । प्रथमातिक्रमे कारणाभावात् । तथाऽप्यत्रोक्तलयक्रमविपरीतेन ब्रह्मात्मादिक्रमेण सृष्टिरपि चिन्तनीयतयाऽभिप्रेतेति सूचयितुं चरमश्लोकप्रतीकग्रहणं कृतम् । 'एतेषां ब्रह्मपर्यन्तं विलयोत्पत्तिचिन्तनम् । ब्रह्मयज्ञ इति प्रोक्तः सर्वसंसारमोचक' इति वचनात् । ततश्च श्लोकद्वयस्यायमर्थः । वाचं वागाभिमानिनीमुमां मनसि तत्कारणे तदभिमानिनि रुद्रे जुहाव लीयत इति चिन्तितवान् । एवमग्रेऽपि । तन्मनः प्राणे । इतरे इतरस्मिन् अपाने परं प्राणम् । धृत्या धैर्येण । सोत्सर्गं सवृत्तिकमपानम् । तत्परत्वे धर्मप्रधानो निर्देशः । एवमग्रेऽपि । तदपेक्षया पूर्ववर्तिनि व्यानेऽजोहवीत् । त्रित्वे त्रिषु प्राणापानव्यानेषु । अथ अनन्तरौ । उदानसमानौ लीयत इति हुत्वा ध्यात्वा । तच्च तदपि । पञ्चत्वं पञ्चापि प्राणादीन् एकत्वे एकस्मिन् मुख्ये मूलप्राणेऽजुहोत् । मुनिर्मननशीलो धर्मः । पूर्वोक्तं सर्वमात्मनि स्वहृदिस्थे विष्णावजुहोत् । आत्मानमव्यये नाशरहिते ब्रह्मणि सर्वगते तदभिव्यक्तिकारणे विष्णावजुहोदित्यन्वय इति । **ध्यानमेवेदमिति ।** न कृष्णस्य प्रतिपत्तिरियमपि तु ध्यानमेव । तच्च मानसक्रियारूपमविद्यमानेऽप्यर्थे भवतीति भावः । किं सर्वत्र ध्यानं ज्ञानविपरीताकारमेवेति नियममाश्रित्येदमुच्यते उत ध्यानं ज्ञानसमानाकारमित्युत्सर्गः । क्वचिद्योषितमग्निं ध्यायीतेत्यादिप्रमाणे योषित्परित्यागादिरूपे प्रयोजने च सति ज्ञानविपरीताकारमपि भवतीति विकल्पं मनसि निधायाद्यं दूषयति **तत्किं ज्ञानेति ।** अत्र ज्ञानपदेन प्रमैव विवक्षिता । **तथा सतीति ।** ध्यानस्य ज्ञानविषयतत्त्वविपरीतविषयत्वनियमे ध्यानरूपतत्त्वनिश्चयार्थश्रवणमननयोरतत्त्वविषयध्यानानुपयोगित्वात् । ध्यानार्थिनः श्रवणमननापेक्षा न स्यादित्यर्थः ।





द्वितीयं दूषयति **न च तटस्थमिति** । इदं च ध्यानस्य ज्ञानभिन्नत्वमङ्गीकृत्योक्तम् । वस्तुतस्तु ज्ञानविशेष एव ध्यानमिति द्रष्टव्यम् । ननु तत्त्वमसीति वाक्यमुद्दालकोक्तानुवादरूपमपि नोद्दालकध्यानानुवादरूपमतस्तत्स्वार्थे तात्पर्यवदेव । प्रकृते तु तथाऽतो न स्वार्थे तात्पर्यवदित्यत आह 'तद्धैतत्पश्यन्' इति ।

**वं०प०— समाश्वास इति** । व्यासस्यापि भगवदवतारत्वादिति भावः ।

**आनन्दः—** ननु जन्मादिकारणत्वादीनां स्वलक्षणत्वविधायकमेवैतदिति कुतो विज्ञायत इत्यत आह **अयमाशय इति । यथा यावत्स्यादिति** । 'यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः । नानात्वमात्मनो यावत् पारतन्त्र्यं तदेव हि । यावदस्याः स्वतन्त्रत्वं तावदीश्वरतो भयम् । य एतत्समुपासीरंस्ते मुह्यन्ति शुचार्पिताः ॥' इति । तत्र यावदित्यारभ्य भयमित्यन्तेन मायिमतमनूद्य य एतदित्यनेन निराक्रियते तद्वत्तथा प्रकृतेऽपीत्यर्थः । तथा **त्रित्वे हुत्वेत्यादि** । 'वाचं जुहाव मनसि तत्प्राण इतरे परम् । धृत्याऽपानं च सोत्सर्गं तत्परत्वे ह्यजोऽहवीत् । त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः ॥' इति प्रथमस्कन्धीयवचनम् । अस्यार्थः । वाचं वागभिमानिनीं उमां मनसि मनोभिमानिनि रुद्रे जुहाव । अस्याः अस्मिंल्लयो भवतीत्यचिन्तयत् । न तु तदानीं कृतवानित्यर्थः । तन्मनःप्राणे मनःकारणे जुहाव । मनसः परमुत्तमं प्राणे इतरे इतरस्मिन् अपाने उत्सर्गकर्माभिमानिनि जुहाव । धृत्या मनस एकाग्रतया सोत्सर्गं सवृत्तिकं अपानं तत्परत्वे तस्मादपादानात् पूर्वभाविनि व्यानेऽजोहवीत् हि । अथ व्यानेऽपानचिन्तनानन्तरं अवशिष्टौ उदानसमानौ त्रित्वे त्रित्वसङ्ख्याविशिष्टेषु प्राणापानव्यानेषु हुत्वा लयं विचिन्त्य तच्च पञ्चत्वं परत्वं सङ्ख्याविशिष्टाः प्राणापानव्यानोदानसमानाश्च एकत्वे एकत्वसङ्ख्याविशिष्टा पञ्चानां कारणे प्राणे अजुहोन्मुनिर्मौनीति । ननु तस्याः स्वस्वरूपत्वेऽपि तथा ध्यानं विधीयत इत्यत्राह **न च तटस्थेति** । **अन्यथेति** । स्वरूपलक्षणत्वस्य सूत्रकारासम्मतत्व इत्यर्थः ।

**श्रीनिधि०— ध्यानमेवेदमिति** । तथा च वस्तुतः तटस्थमेवेदं लक्षणं स्वरूपतया ध्यातम् । प्रतिपत्तिस्तु तटस्थताविषयिन्येवेति । अनिराकरणमन्यथोपपन्नमिति भावः । **श्रवणमननापेक्षा न स्यादिति** । श्रवणादिना हि ज्ञानं भवति इति भावः । तथा च ध्यानं तत्समनाविषयकं ज्ञानव्याप्तमिति भावः । **प्रयोजनं वेति** । तथा ध्यान इति शेषः । न च श्रूयत इत्यन्वयः । येन ज्ञानध्यानभिन्नविषयत्वं स्यादिति भावः । **वाक्यान्तर-बलादिति** । यत्तत्परंज्योतिरिति भागवतवाक्यबलादित्यर्थः ।

**वा०चं०—** नन्वनूद्यमानस्यापि स्वमतत्वे परमतस्यापि स्वमतत्वापत्तेरित्यतिप्रसङ्ग इत्यतो निरासार्थानुवादस्य स्वमतत्वानापादकत्वेऽपि शिष्टैरनुष्ठानादन्यैरप्येवमनुष्ठेयमिति विधिनार्थानुवादस्य स्वमतत्वापादकत्वे विरोधाभावात्प्रकृते चाद्यपक्षासम्भवेन द्वितीयस्यैवाश्रयणान्नानुपपत्तिरिति छलपदेनैवकारेण च सूचितमाशयमाह **अयमाशय इति** । कल्पद्वयप्रसञ्जकप्रदर्शनम् **यथेति** । 'तावन्नानात्वमात्मनः । नानात्वमात्मनो यावत्पारतन्त्र्यं





तदैव हि । यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् । य एतत्समुपासीरंस्ते मुह्यन्ति शुचार्पिताः' इति वाक्यशेषोपादानायादिपदम् । तत्र यावत्स्यादित्यनुवादो य एतदिति निषेधाय । अत एव 'यावत्स्याद्गुणवैषम्य-मित्यादि य उपासीरंस्ते मुह्यन्ति' इति तात्पर्यनिर्णय उक्तमिति भावः । **यथा त्रित्व इति** । 'वाचं जुहाव मनसि तत्प्राण इतरे परम् । धृत्या त्वपानं सोत्सर्गं तत्परत्वे ह्यजोहवीत् । त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः' इति वाक्ये, प्राणमपाने, तं व्याने, समानोदानौ तेषु, तांश्च मूलप्राणे' इति तात्पर्यानुसारादुमाया रुद्रे, तस्य प्राणे, तस्यापाने, तस्य व्याने, उदानसमानयोः प्राणापानव्यानेषु त्रिषु, पञ्चानामपि मुख्यवायुरूपाणामेव प्राणादीनामेकस्मिन्मूलप्राणे लयस्य मरणकाले शिष्टचिन्तितस्यान्यचिन्तनविधानार्थोऽनुवादो यथेत्यर्थः । ननु त्रित्वे हुत्वेत्यादेः प्रतीत्यनुवादत्वात्तद्विषयस्य सत्त्वेऽपि प्रकृतस्य ध्यानानुवादत्वान्न तद्विषयस्य सत्त्वमित्याशङ्कते **ध्यानमेवेदमिति चेदिति** । विध्याद्यभावात्तादृशध्यानासम्भवश्चेत्याह **न चेति** । अनुवादविषयत्वमात्रेणार्थस्य तदनभिप्रेतत्वेऽतिप्रसङ्गमाह **अन्यथेति** । ध्यानानुवादविषयस्य तथात्वे तमाह **तद्धैतदिति** । अपव्याख्याने बाधकतयोक्तं भागवतवाक्यं स्वव्याख्यानोपोद्बलकत्वेन व्यापारयति **तथा चेति** ।

**वा०र०— यथेतीति** । इदं च यथापदयुक्तवाक्यद्वयस्यापि तन्त्रेणोपादानम् । तेन कल्पद्वयेति युक्तम् । उत्तरत्र यथा त्रित्व इतीत्येतत्तु व्याख्यानाय पुनरुपात्तम् । अवतारस्तु प्रागुक्त एवेति ज्ञेयम् । यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मन इत्यादिकं एकादशस्कन्धे दशमाध्याये भगवदुद्धवसंवादे । त्रित्व इत्येतत्तु प्रथमस्कन्धीयम् । वाचं मनसीत्यत्र वाङ्मनःशब्दौ वाङ्मनोभिमान्युमारुद्रपरावित्याशयेनोक्तम् **उमाया रुद्र इति** । **लयस्येति** । वक्ष्यमाणेनान्वयः । मनसः परमुत्तमं प्राणं इतरस्मिन्नपान इत्यर्थं मनसि कृत्वोक्तं **तस्यापान इति** । अत्रोत्सर्गकर्माभिमानिनीति वक्तव्यम् । सोत्सर्गमिति वक्ष्यमाणानुसारात् । तत्परत्वे तस्मादपानात्परपूर्वभाविनि व्याने धृत्या मनसि एकाग्रतया सोत्सर्गं सवृत्तिकमपानमित्यर्थे मनसि निधायोक्तं **तस्य व्यान इति** । अथापानस्य व्याने होमानन्तरमवशिष्टावुदानसमानौ त्रित्वत्रित्वसङ्ख्याविशिष्टे त्रिषु प्राणापानव्यानेष्विति यावत् । अजोहवीदिति लब्धार्थमभिप्रेत्योक्तं **उदानसमानयोः प्राणापानव्यानेष्विति** । अथ तत्र पञ्चत्वं तान् पञ्चत्वविशिष्टान् प्राणापान-व्यानोदानसमानांश्च एकत्वे एकत्वविशिष्टे मूलप्राणेऽजोहवीदित्यर्थं मनसि निधायोक्तं **पञ्चानामपि मुख्येत्यादि** । **शिष्टेति** । धर्मराजलक्षणशिष्टेत्यर्थः । चिन्तितस्येत्यनेन जुहावेत्यादेर्लयो भवतीति चिन्तितवानित्यादिरर्थः सूचितः । तदानीं धर्मेण लयस्य करणादिति द्रष्टव्यम् ।

**स०व्र०— यथा यावत्स्यादित्यादि** । 'यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः । नानात्वमात्मनो यावत्पारतन्त्र्यं तदैव हि । यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम्' इत्यनेन गुणवैषम्यं सृष्टिसंसार इति यावत् । तथा च संसारदशायामेव भेदपारतन्त्र्यभयानि भवन्ति । मुक्तौ तु परमात्माभेद एवेति पूर्वपक्षानुवादं कृत्वा 'य एतत्समुपासीरन् ते मुह्यन्ति शुचाऽर्पिताः' इति तत्पक्षस्य निन्दितत्वेन तन्निराकरणमवगम्यते । तथा च पुराणकर्तुः निराकरणायानुवादे इदमुदाहरणमुक्तमिति द्रष्टव्यम् । **यथा त्रित्वे हुत्वाऽथेति** । अत्र यद्यपि 'वाचं





जुहाव मनसि तत्प्राण इतरे परम् । धृत्या ह्यपानं सोत्सर्गं तत्परत्वे ह्यजोहवीत् । त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः । सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये' इति श्लोकद्वयमप्युदाहार्यम् । धर्मकृतलयचिन्तनानुष्ठेयताप्रतिपादकत्वात् । तथापि त्रित्वे हुत्वाथेति द्वितीयश्लोकस्योदाहरणेन न केवलं लयमात्रं चिन्तनीयतयाऽत्र विवक्षितं किन्तु सृष्टिरपि । यत्तेषां ब्रह्मपर्यन्तविलयोत्पत्तिचिन्तनम् । 'ब्रह्मयज्ञ इति प्रोक्तः सर्वसंसारमोचकः' इति वचनात् । सा च द्वितीयश्लोकान्तिमपादप्रतिपाद्यब्रह्मात्मादिक्रमेणैवेति ज्ञापयितुं कृतमित्यवधेयम् । तत्तश्च विश्वरूपाद्ब्रह्मणो हृदि स्थितस्यात्मनो जनिश्चिन्तनीया । तस्मात्प्राणस्य । तस्माच्च तत्स्वरूपभूतानि प्राणादीनि पञ्चरूपाणि जातानीति चिन्तनीयानि । समानोदानयोश्च प्राणापानव्यानैर्जनिः प्राणस्यापानादपानस्य च व्यानाज्जनिश्चिन्तनीया । प्राणात् मनोनामकस्य रुद्रस्य जनिः । तस्माद्वागात्मिकाया उमायाः जनिश्चिन्तनीया एतद्वैपरीत्येन भागवते लयाभिधानं उपलक्षणतयेति ज्ञातव्यम् । तत्तश्च वाचनिकलयक्रमोपपादकमिमं उपलक्षितं सृष्टिक्रमं सूचयितुं चरमश्लोकप्रतीकग्रहणं कृतम् । तत्तश्च श्लोकद्वयस्यायमर्थः । वाचं वागभिमानिनीं उमां मनसि तत्कारणे तदभिमानिनि रुद्रे जुहाव, लीयत इति चिन्तितवान् । एवमग्रेऽपि । तन्मनः प्राणे इतरे इतरस्मिन् अपाने परं प्राणं धृत्या धैर्येण सोत्सर्गं सवृत्तिकं अपानं तत्परत्वे । धर्मिप्रधानो निर्देशः । एवमग्रेऽपि । तदपेक्षया पूर्ववर्तिनि व्याने अजोहवीत् । त्रित्वे त्रिषु प्राणापानव्यानेषु अथ अनन्तरौ उदानसमानौ लीयेते इति हुत्वा ध्यात्वा तच्च तदपि पञ्चत्वं पञ्चापि प्राणादीन् एकत्वे एकस्मिन् मुख्ये मूलप्राणेऽजुहोत् मुनिर्मननशीलो धर्मः सर्वं पूर्वोक्तं सर्वं आत्मनि स्वहृदि स्थिते विष्णावजुहोत् आत्मानमव्यये विनाशरहिते ब्रह्मणि सर्वगते तदभिव्यक्तिकारणे विष्णावजुहोदित्यन्वय इति । वस्तुतस्तु तस्मिन्नर्थे मुनिरिति कर्तृवाचिपदसद्भावात् तदेवोदाहृतमिति ज्ञातव्यम् । ननु तत्र निराकरणादेरदर्शनेऽपि निराकरणार्थानुवादः किं न स्यादित्यत आह **साक्षादिति** । न कृष्णस्य प्रतिपत्तिरियम् । अपि तु ध्यानमेव । तस्य चाविद्यमानविषयकत्वमपि सम्भावितमिति भावः । **तथा सतीति** । ज्ञानविपरीतमेव ध्यानमिति सर्वत्र नियमाङ्गीकारे ध्यानस्यारोपिताकारेणापि सम्भवात् तदर्थं विद्यमानार्थविषयकश्रवणमननापेक्षा न स्यादिति भावः । यद्वा ध्यानस्य श्रवणमननजनितज्ञानसमानाकारत्वात् तस्य च प्रमात्वाद्विद्यमानविषयकत्वमेव ध्यानस्य वाच्यमिति भावः । इदं च ध्यानस्य ज्ञानभिन्नत्वमङ्गीकृत्योक्तम् । वस्तुतस्तु ज्ञानविशेष एव ध्यानमिति द्रष्टव्यम् । ननु प्रमाणप्रयोजनबलात् ध्यानरूपत्वमेवाङ्गीक्रियत इत्यत आह **न च तटस्थं लक्षणमिति** । ननु नानुवादमात्रस्य स्वार्थे तात्पर्याभावः । अपि तु उपासनानुवादस्यैवेत्यत आह **तद्धैतत्पश्यन्निति** । ननूपासनानुवादस्य तात्पर्यानङ्गीकारेऽपि प्रतीत्यनुवादस्य स्वार्थे तात्पर्याङ्गीकारात् प्रकृते च 'अहं ब्रह्मास्मि' इति वाक्यस्यानुवादपरत्वेऽपि प्रतीत्यनुवादत्वादद्धेति तात्पर्यमुपपन्नमित्यत आह **अथ योऽन्यामिति** । **तथा च बहुविप्लव इति** । बहूपद्रवः स्यात् । तत्तश्च वाक्यार्थः कुत्रापि न सिद्ध्येदिति भावः ।

**विठ्ठल०**— परप्रतीत्यनुवादरूपत्वान्न तत् तात्पर्यं सूत्रकारस्येत्यस्योत्तरं व्यञ्जयति **अयमाशय इति** । **यावत्स्याद्गुणवैषम्यमिति** । 'यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः' इत्याद्यनुवादः । 'य एतत्समुपासीरन् ते





मुह्यन्ति शुचार्पिताः'' इत्यादिना उत्तरत्र निराकरणार्थमित्यर्थः । **पञ्चत्वमित्यादि** इत्यादिपदेन ''तच्चैकत्वेऽजुहोन्मुनिरि''ति उत्तरांशस्य वा विज्ञानात्मनि संयोज्य 'क्षेत्रज्ञे प्रविलाप्य तम्' इत्यादि स्थानान्तरगतस्य वा ग्रहणम् । (त्रित्वे प्राणापानव्यानेषु उदानसमानौ हुत्वा लीयेते इति ज्ञात्वा तत्र पञ्चत्वं प्राणादीन् पञ्चापि एकत्वे एकस्मिन् मुख्यप्राणे अजुहोत् लीयन्त इति चिन्तितवान्) अनुपपन्नं च निराकरणमित्याह **साक्षादिति** । ननु एकं परमित्यादिकं न प्रतिपत्तिः । येन निराकरणानर्हता किं तु ध्यानमेव । तच्च ज्ञानविषयविपरीतविषयकमपि भवतीति निराकरणार्हमित्याशयेन शङ्कते **ध्यानमेवेति** । किं सर्वत्र ध्यानं ज्ञानविपरीताकारमेवेति नियममाश्रित्येदमुच्यते । उत तटस्थलक्षणध्याने एव नियम इति विकल्पं मनसि निधाय आद्यं दूषयति **तत्किमिति** । द्वितीयं दूषयति **न च इति** । अन्यथानुवादमात्रेणानभिमतत्वे । ननु प्रतिपत्त्यनुवादकमेवेदं न तूपासनानुवादपरमित्यत आह **अथ योऽन्यामिति** ।

**चषकः—** **यथा यावत्स्यादित्यादि** । 'यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः । नानात्वमात्मनो यावत्पारतन्त्र्यं तदैव हि । यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् । य एतत्समुपासीरंस्ते मुह्यन्ति शुचाऽर्पिताः ।' इति निरासायेत्यर्थः । गुणवैषम्यपदप्रतिपाद्यसंसारदशायामेव भेदभयपारतन्त्र्याणि मुक्तिदशायां तु ब्रह्मात्माभेद एवेत्यन्यदीयमतानुवादस्तत्प्रतिविधानार्थ इति भावः । **त्रित्वे हुत्वाऽथेति** । 'वाचं जुहाव मनसि तत्प्राण इतरे परम् । धृत्या ह्यपानं सोत्सर्गं तत्परत्वे ह्यजोहवीत् । त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः । सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यय इति वाक्ये प्राणमपाने, तं व्याने, उदानसमानौ तेषु, तांश्च मूलप्राण इति तात्पर्योक्त्या उमायाः रुद्रे तस्य प्राणे, तस्यापाने, तस्य व्याने उदानसमानयोः प्राणापानव्यानेषु त्रिषु, पञ्चानामपि मुख्यवायुरूपाणामेव प्राणादीनामेकस्मिन् मूलप्राणे, लयस्य मृतिकाले अभियुक्तैश्चिन्तिततयाऽन्यैरपि तथा चिन्तनीयमिति विधानफलकानुवादो यथेत्यर्थः । मुनिः मननशीलो धर्मः पूर्वोक्तं सर्वमात्मनि स्वहृदयस्थे विष्णावजुहोत् । आत्मानमव्यये नाशरहिते ब्रह्मणि व्याप्ते तदभिव्यक्तिहेतुभूते विष्णावजुहोदित्यन्वयोऽवसेयः । **ध्यानमेवेदमिति** । नेयं कृष्णस्य प्रतिपत्तिः किं तु मानसक्रियारूपं ध्यानमेव, तच्च विषयसत्त्वमन्तरेणापि सङ्गच्छत इति भावः । ध्यानत्वावच्छेदेन ज्ञानविपरीताकारत्वमभिप्रेयते किं वा तत्सामानाधिकरण्येन योषितमग्निं ध्यायीतेत्यादिप्रमाणयोषित्परित्यागात्मकप्रयोजनयोः सद्भावेन विपरीताकारत्वमिति कल्पद्वयीमभिसन्दधानः आद्यं प्रतिविधत्ते **तत्किमिति** । द्वितीयं प्रत्याह **क्वचिदिति** । ननु ध्यानानुवादस्यैव वस्तुतथात्वानुपगमेनोद्दालकोक्तानुवादस्य तादृशानुवादताविरहेण तत्र वस्तुतथाभावोपगमेऽपि न क्षतिरित्यत आह **तद्वैतदिति** ।

**॥ इति मायिमतोक्तलक्षणसूत्रारम्भस्यैवानुपपत्तौ**
**'नेदं तटस्थलक्षणम्' ॥**

* * *





**॥ अथ मायिमतोक्तलक्षणसूत्रारम्भस्यैवानुपपत्तौ 'जीवैक्यस्य निराकृतता' ॥**

२५ **सु०**— यत एवं जगज्जन्मादिकारणत्वं स्वलक्षणमत्र सूत्रे ब्रह्मणोऽभिधीयते, ततो न परमतेऽस्य सूत्रस्यारम्भ एवोपपद्यते। इत्याह **अत इति**।

**अनु०— अतो जीवैक्यमपि स निराचक्रे जगद्गुरुः।**

**लक्षणं हि सजातीयविजातीयव्यवच्छेदार्थं भवति । यथाऽऽह 'समानासमानजातीयव्यवच्छेदो वा लक्षणार्थः' इति । तथा चानेन लक्षणेन सजातीयाज्जीवाद्विजातीयाज्जडाच्च ब्रह्म व्यावर्तितं सूत्रकारेण । जीवैक्यनिराकरणसूत्रस्यारम्भः कथं जीवैक्यवादिनां स्यात् । स्याद्यदीदं कथञ्चित् (स्यात्कथञ्चिद्यदीदं) तटस्थलक्षणं स्यात् । स्वरूपलक्षणमिति चोपपादितम् ।**

**गु०दी०**— **व्यवच्छेदो वेति** वाशब्दसूचितलक्ष्यव्यवहारस्यैव लक्षणार्थत्वेऽपि जीवासम्भावितलक्षणकथनेनैव जीवव्यावृत्तिसिद्धिरिति ज्ञेयम् ।

**आनन्दः**— यदर्थं स्वलक्षणत्वोपपादनं तदिदानीमाह **यत एवमिति**। नन्वत्र सूत्रे लक्षणस्य कथितत्वात् तेन तद्विशिष्टव्यवहार एव स्यात्। जीवैक्यनिराकरणं तु नोपपद्यत इत्यत आह **लक्षणं हीति**। **व्यवच्छेदः** व्यावृत्तिः। **लक्षणार्थ इति**। लक्षणस्यार्थः। प्रयोजनमित्यर्थः। अस्तु तथापि तन्मते सूत्रारम्भः कुतो नेत्यत्राह **जीवैक्येति**।

**वा०चं०**— लक्षणोक्त्या जीवैक्यनिराकरणं विशदयति **लक्षणं हीति**। सूत्रस्य जीवैक्यनिरासकत्वप्रतिपादकभाष्याभिप्रेतमपव्याख्यानदूषणमाह **जीवैक्येति** । स्वरूपलक्षणत्वोपपादनस्य सूत्रानारम्भोपयुक्तत्वं पूर्वमुक्तमुपपादयति **स्याद्यदीति** । तटस्थलक्षणस्यापि जीवव्यावर्तकत्वमेवेति तटस्थत्वोक्तेर्वैयर्थ्यमाशङ्क्य परोक्तं यत्समाधानं तस्याभासतया व्युत्पादयिष्यमाणत्वाभिप्रायेण कथञ्चिदित्युक्तम् ।

**वा०र०**— **तटस्थलक्षणस्यापीति**। काकनिलयत्वस्य तटस्थस्यापि गृहान्तरव्यावर्तकत्वदर्शनादिति भावः। **आशङ्क्य परोक्तमिति**। भेदेनैवेत्येतदनुभाष्यावतारावसरे ननु मठस्थेनापीत्यादिना वैयर्थ्यमाशङ्क्य यो हि कार्यकारणसङ्घातादित्यादिना परोक्तमित्यर्थः । **व्युत्पादयिष्यमाणत्वेति** । तटस्थेन जगज्जन्मादि कारणत्वेनेत्यादिनोपपादयिष्यमाणत्वेत्यर्थः । वैयर्थ्यमाशङ्क्येत्युक्तिस्तु ननु तटस्थेनापीति शङ्काग्रन्थे ततश्च तटस्थत्वोक्तेर्वैयर्थ्यमिति भाव इति व्याख्येयमित्यभिप्रायेण । ततश्चानेनैवमुक्तं भवति । न तटस्थलक्षणत्वं वक्तुं शक्यम् ।

व्यावर्तकत्वाभावनिमित्ते न हि तटस्थत्वमिति परिभाषा कर्तव्या । न च त्वदुदाहृते काकनिलयत्वे गृहान्तर-व्यावर्तके तदभावोऽस्ति । तथा जगज्जन्मादिहेतुत्वेऽपि जीवादिव्यावर्तके तदभावाभावेन तटस्थत्वोक्तिवैयर्थ्यम् । न च वक्ष्यमाणरीत्या जीवव्यावर्तकत्वेऽपि यश्चैतन्यधातुः स न ब्रह्मणो भिद्यत इति तात्पर्यमिति वाच्यम् । तथापि लक्षणसूत्रे तटस्थेन जगत्कारणत्वेन लक्षणया ब्रह्म प्रतिपाद्यत इत्यङ्गीकारो हि मुख्यार्थासम्भवे युक्तः । ब्रह्मणश्च जगत्कारणत्वं प्रमाणविरुद्धं युक्तमेवेति मुख्यार्थसम्भवान्न लक्षणया प्रतिपादनं युक्तमिति । इति वेति प्रथमस्याशय इति वक्ष्यमाणेनान्वयः ।

**स०व्र०— समानासमानेति** । अन्यथा गोर्विषाणित्वं पशुत्वादिकं वा स्वलक्षणं स्यादिति भावः । **स्यात्कथञ्चिदिति** । तटस्थत्वेऽपि व्यावर्तकत्वस्योपपादयिष्यमाणत्वात्कथञ्चिदित्युक्तम् ।

**विठ्ठल०— स्यात्कथञ्चित्** इत्यत्र तटस्थत्वेऽपि लक्षणस्य सत्यत्वाद्व्यावर्तकत्वं सम्भवति । काकनिलयत्वादेः तटस्थस्यापि व्यावर्तकतादर्शनात् इत्याशयेन कथञ्चिदित्युक्तम् ।

**॥ अथ जीवैक्यनिराकृततायां 'लक्षणव्यावर्त्यो जीव एव' ॥**

**२६ सु०— स्यादयमद्वैतिनामनुपपन्नो लक्षणारम्भो यदीदं जीवव्यावृत्त्यर्थं लक्षणमुक्तं स्यात् । जडमात्रव्यावृत्त्यर्थं तु लक्षणे व्याख्यायमाने कथं जीवैक्यवादिनां लक्षणसूत्रा-रम्भोऽनुपपन्न इत्यत आह न हीति ।**

## अनु०— न हि जन्मादिहेतुत्वं जीवस्य जगतो भवेत् ॥

**यत्र हि लक्षणं नास्ति तत्सर्वं तद्व्यावर्त्यमङ्गीकरणीयम् । अन्यथा लक्षणस्या-व्याप्तिप्रसङ्गात् । न चेदं लक्षणं जीवस्यास्ति । तत्कथमसावनेन न व्यावर्त्यत इति ।**

**आनन्दः— अन्यथेति** । लक्षणाभावेऽपि तस्य लक्षणेन व्यावर्त्यत्वानङ्गीकारे लक्षकोटिनिवेशापत्तौ लक्षणस्याव्याप्तिः स्यादित्यर्थः ।

**वा०चं०—** ननु जीवे जन्मादिहेतुत्वाप्राप्तेस्तदभावप्रतिपादकोत्तरवाक्यमसङ्गतमित्यतस्तद्व्यावर्त्यं दर्शयंस्तत्सङ्गमयति **स्यादयमिति** । **यदीदमिति** । जीवस्यापि लक्ष्यत्वान्न तद्व्यावृत्तिरिष्टेति वा लक्षणस्यापि तत्र सत्त्वान्न तेन तद्व्यावृत्तिरिति वाऽऽशयः । तत्राद्यमाशयं निराचष्टे **यत्रेति** । मूलात्साक्षाल्लब्धं द्वितीयाशय-निरासमाह **न चेदमिति** । सर्वज्ञत्वसर्वशक्तित्वादिराहित्यादिति भावः ।





**वा०र०—** जीवव्यावृत्त्यर्थमिदं लक्षणं नोच्यत इत्युक्तेरुभयविधाभिप्रायप्रतीतेरुभयथाशयवर्णनं कृतमिति ज्ञेयम् । यद्यपि यत्र हि लक्षणं नास्ति इत्यनेन व्याप्तिप्रदर्शनम् । न चेदं लक्षणं जीवस्यास्तीत्यनेन पक्षधर्मताप्रदर्शनमिति जीवे लक्षणसत्त्वादित्येकपक्षनिरासप्रतिपादकतयैव यत्र हीत्यादिरुत्तरग्रन्थो योजनीयतया प्रतीयते । तथापि **यदीदमिति** शङ्कावाक्येऽभिप्रायद्वयप्रतीत्या तदुभयनिरासकतया योजनाया आवश्यकत्वात् कर्तुं शक्यत्वात् सोऽपि लक्ष्यान्तर्गत इत्युत्तरमूलानुसाराच्च तथा योजनाकार्येत्याशयेन आशयद्वयनिरासकतयोत्तरग्रन्थं योजयति **तत्राद्यमित्यादिना । निराचष्ट इति** । मूलादर्थलब्धदूषणेनेति शेषः । अत एव वक्ष्यति **मूलात्साक्षाल्लब्धमिति** । जीवस्य जगज्जन्मादिहेतुत्वं न भवेदित्यनुभाष्येण ततश्च तत्र लक्षणाभावादव्याप्तिभये । न तद्व्यावृत्तेरेवेष्टत्वाल्लक्ष्यत्वाङ्गीकारेण तद्व्यावृत्तेरिष्टत्वाभावो न वक्तुं युक्त इति दूषणस्यार्थलब्धत्वात् । अनेनाव्याप्तत्वप्रसङ्गादित्यनन्तरं ततश्च जीवे लक्षणाभावाल्लक्षणेन तद्व्यावृत्तिरेव कर्तव्या न तु लक्ष्यत्वाङ्गीकारेण तद्व्यावृत्तेरिष्टत्वाभावो वाच्य इत्याशयः पूरणीय इति सूचितम् । न चेदमित्येतन्नापीदमिति व्याख्येयमिति सूचयन्नाह मूलात्साक्षादितीति सुधीभिराकलनीयम्।

**विठ्ठल०—** ननु मूले लक्षणस्य जीवे अभावकथनम् असङ्गतं लक्षणानधिकरणत्वेऽप्यव्यावृत्तत्वसम्भवेनोक्तशङ्कायां तदवस्थत्वादित्याशङ्कां परिहरन्नभिप्रेतार्थमाह **यत्र लक्षणमिति** । **अन्यथेति** । लक्षणानधिकरणमपि न लक्ष्याद्व्यावर्तमित्यङ्गीकारे तस्यापि लक्ष्यत्वप्राप्त्या तत्र लक्षणाभावे नाव्याप्तिः स्यादिति भावः ।

**२७ सु०— किञ्चानेन लक्षणेन यदि जीवो न व्यावर्त्यते; किन्तु सोऽपि लक्ष्यान्तर्गतः । तथा सति लक्षणस्य जीवेऽतिव्याप्तिमाशङ्क्येतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरिति सूत्रकारीयं तन्निराकरणमसङ्गतं स्यात् । न हि लक्ष्य एवातिव्याप्तिर्लक्षणस्य केनापि शङ्क्यते । कथञ्चिच्छङ्कायां वा तस्यापि लक्ष्यत्वाङ्गीकारं परित्यज्य तत्र न लक्षणनिराकरणं क्रियत इत्याशयवानाह हिताक्रियेति ।**

## अनु०— हिताक्रियादिदोषं च वक्ष्यत्येव स्वयं प्रभुः ।

**यद्यपि परेणापि जीवस्य लक्षणव्यावर्त्यत्वमङ्गीकृतमेव, यथाऽऽह 'सर्वज्ञं सर्वशक्तिं विहायान्यतः परपरिकल्पितात्प्रधानादेरचेतनाच्चेतनादपि परिच्छिन्नज्ञानक्रियाशक्तेः संसारिणो हिरण्यगर्भादुत्पत्त्यादि न सम्भावयितुमपि शक्यते' इति; तथाऽपि न्यायेनोपपादयितुमिदमुक्तमिति ॥**





**परि०— इदमुक्तमितीति**। 'न हि जन्मादिहेतुत्वम्' इत्यादिकमुक्तमित्यर्थः।

**आनन्दः**— ननु भवन्मते जीवस्य ज्ञानानन्दादिरूपत्वे सत्यपि अविद्यावशात्संसारदशायां तिरोधानवन्मन्मतेऽपि जीवे जन्मादिकारणत्वसत्त्वेऽप्यविद्यया तिरोधानान्न तत्र लक्षणस्यातिव्याप्तिरित्यत आह **किञ्चेति**। कथमसङ्गतमित्यत्राह **न हीति**। **कथञ्चिच्छङ्कायामिति**। अलक्ष्यत्वाभिमतेन लक्षणस्यातिव्याप्तिशङ्कायामित्यर्थः।

**श्रीनिधि०— कथञ्चित् शङ्कायामिति**। लक्ष्यत्वानङ्गीकारभ्रमदशायामित्यर्थः। **न्यायेनोपपादयितुमिति**। लक्षणव्यावर्त्यमिति शेषः। इदं हिताक्रियादिदोषं चेत्येतत्।

**वा०चं०**— ननु हिताक्रियादीत्युत्तरवाक्ये यदि पूर्ववाक्योक्तस्य जीवे लक्षणाभावस्योपपादनं तर्हि पूर्वत्र साक्षाद्धेत्वनुक्त्याऽत्र चशब्दास्वारस्यम्, यदि च निर्गुणत्वं चेत्युत्तरवाक्यवत्प्रकारान्तरेण सूत्रानारम्भप्रतिपादकत्वं तर्हि वाक्यात् तत्प्रतिपादनादर्शनादर्थसङ्गतिरित्यतो जीवस्य लक्ष्यत्वलक्षणाव्यावर्त्यत्वाभ्युपगमे पूर्ववाक्यार्थलब्धः, तर्हि लक्षणस्य तत्राव्याप्तिरित्येव न केवलं दोषोऽपि तूत्तरसूत्रविरोधश्चेत्यर्थप्रतिपादनाय प्रवृत्तत्वान्नासङ्गतिरित्याशयेनोत्तरवाक्यमवतारयति **किञ्चेति**। जीवे जगत्कारणत्वादेः परेणानुक्तत्वेनानुक्तोपालम्भत्वाद्भाष्यकारस्य जीवे जगत्कारणत्वनिरासोऽचातुरीमावहतीत्याशङ्क्य निराकरोति **परेणापीति**।

**वा०र०— वाक्यादिति**। हिताक्रियादीत्युत्तरवाक्यादित्यर्थः। **अर्थासङ्गतिः**। सूत्रानारम्भप्रतिपादनोपयोग्येव प्रतिपादनीयम्। हिताक्रियादीत्युक्तार्थश्च तदनुपयोगादसङ्गत इत्यर्थः। **लक्ष्यत्वलक्षणेति**। लक्ष्यत्वस्य तत एव लक्षणेनाव्यावर्त्यत्वस्य चाभ्युपगम इत्यर्थः। **पूर्ववाक्यार्थलब्ध इति**। पूर्ववाक्येनार्थतो लब्धः पूर्ववाक्यार्थलब्ध इति योज्यम्। साक्षाद्धेत्वनुक्त्येति पूर्वोक्त्यनुसारात् पूर्ववाक्यादर्थलब्ध इति पाठस्तु स्वरस एव। अनेन पूर्ववाक्यादर्थलब्धाव्याप्तिसमुच्चयार्थत्वेन चशब्दस्वारस्यं सम्भवतीत्युक्तं भवति। **जीवे जगत्कारणत्वादेरिति**। अनेनैव मूलयोजना सूचिता भवति। **परेणापीत्यपिशब्दो** यद्यपीत्यर्थः। तथापीत्युत्तरानुसारात्। तथा च यद्यपि परेण जीवस्य लक्षणव्यावर्त्यत्वमङ्गीकृतमेव तथा तद्वाक्यात् ततो न भाष्यकारेण तत्र लक्षणाभावः प्रतिपादनीयः। अनुक्तोपालम्भप्रसङ्गात्। तथापि न्यायेन तदुपपादयितुमिदमुक्तमिति।

**विठ्ठल०**— जीवस्य लक्षणव्यावृत्त्यत्वानङ्गीकारे दूषणान्तरकथनपरतया हिताक्रियेति भाष्यं सङ्गमयति **किञ्चेति**। इतरव्यपदेशादिति सूत्रस्यायमर्थः। जीवकर्तृत्वस्य श्रुतौ व्यपदेशाद्यदि जीवः स्वतन्त्रः कर्तेत्युच्यते तर्हि तस्य हिताकरणमहितकरणं न स्यादिति दोषप्रसक्तिर्विद्येते ....... इमे जीवे अतोऽसौ न स्वतन्त्रः कर्तेति। लक्ष्यस्यैव लक्ष्यत्वप्रकारकज्ञानाभावेन भवति शङ्केत्यत आह **कथञ्चिच्छङ्कायामिति**। तथापि तस्य लक्ष्यत्वान्न दोष इति वक्तुं शक्यत्वात् तत्र लक्षणाननुगमान्नोक्तदोष इति कथनमसङ्गतमेवेति भावः। ननु यदि मायिना





जीवस्य लक्षणव्यावृत्त्यत्वेनाङ्गीक्रियते । तदा न हि जन्मादिहेतुत्वमित्यादिकं सङ्गतं स्यात्, अङ्गीकरोति च परः, अतोऽसङ्गतमित्याशङ्क्य परिहरति **परेणापि** इति ।

**॥ इति जीवैक्यनिराकृततायां 'लक्षणव्यावर्त्यो जीव एव' ॥**

**॥ इति मायिमतोक्तलक्षणसूत्रारम्भस्यैवानुपपत्तौ 'जीवैक्यस्य निराकृतता' ॥**

* * *

**॥ अथ मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ निर्गुणत्वस्यापि निराकृतता ॥**

**॥ तत्रादौ 'निर्गुणत्वं सूत्रकारैरेव निराकृतम्' ॥**

२८ **सु०—** इतोऽपि मायावादिनां न ब्रह्मलक्षणसूत्रारम्भः सम्भवतीत्याह **निर्गुणत्वं चेति ।**

**अनु०— निर्गुणत्वं च तेनैव निषिद्धं प्रभुणा स्वयम् ॥**

**लक्षणवाक्यं हि साक्षाल्लक्ष्यस्यासाधारणधर्मसंसर्गं प्रतिपादयदर्थादितरव्यावृत्तिं प्रतिपादयति । ततोऽनेनापि लक्षणवाक्येन ब्रह्मणो जगज्जन्मादिकारणत्वेन तदविनाभूतैः सर्वज्ञत्वादिभिश्च संसर्गः प्रतिपादनीयः । तथा च निर्विशेषत्वं ब्रह्मणोऽनेन सूत्रेण निषिद्धम् । निर्विशेषत्ववादिनां च निर्विशेषत्वं निषेधतः सूत्रस्यारम्भः कथमुपपद्यत इति ।**

**वं०प०—** निर्गुणत्वमित्यस्यार्थो **निर्विशेषत्वमिति** ।

**आनन्दः—** लक्षणनिराकरणं क्रियत इत्यत्र कथमित्यध्याहृत्य यल्लक्षणं निराक्रियते तत्कथमुपपद्यते । तथा च निर्गुणत्वनिषेधस्यानेन सूत्रेणाकृतत्वात्कथं निर्गुणत्ववादिनां मते एतत्सूत्रारम्भानुपपत्तिरित्यत आह **लक्षणेति** ।

**वा०चं०—** पूर्ववाक्यवदस्यापि जीवकारणत्वनिरासे हेत्वन्तरप्रतिपादकत्वभ्रान्तिं निराकरोति **इतोऽपीति** । ननु लक्षणवाक्यस्येतरव्यावृत्तिप्रतिपादकत्वेऽपि धर्मसंसर्गाप्रतिपादकत्वाल्लक्षणीभूतधर्मसंसर्गप्रतिपादकत्वेऽपि वा सर्वज्ञत्वादिगुणसंसर्गाप्रतिपादकत्वात्कथं लक्षणसूत्रस्य निर्गुणत्वनिषेधकत्वोक्तिः परमसाध्यस्यानुक्तेर्न्यूनता चेत्यत आह **लक्षणवाक्यं हीत्यादिना** ।





**वा०र०— अस्यापीति** । निर्गुणत्वं चेत्युत्तरभाष्यस्यापीत्यर्थः । बुद्धिसन्निहितत्वादिदंशब्देन परामर्श उपपन्नः । **परमसाध्येति** । अत्र साध्यस्य परमत्वमवश्यं वक्तव्यत्वं विवक्षितम् । साध्ये उक्त एव तत्र हेत्वाकाङ्क्षोदयात् । तथा च प्रकृते अवश्याभिधेयसाध्यानुक्तेर्न्यूनतेत्यर्थः । निर्विशेषत्ववादिनां चेत्युत्तरमूलगततत्साध्यप्रदर्शनव्यावर्त्यशङ्केयम् ।

**स०व्र०— लक्षणवाक्यं हीति** । यदि गवि सास्नादिमत्त्वं नाम धर्मो न विद्यते कथं तदा लक्षणं स्यात् । लक्ष्यस्य ह्यसाधारणधर्मो लक्षणम् । कथं च तत् स्वालक्ष्यं व्यवच्छिन्द्यात् । अन्यथैकशफत्वादिकं गां व्यवच्छिन्द्यादिति भावः ।

**विट्ठल०—** निषिद्धमिति कथमवगम्यत इत्यतः तदुपपादनपुरःसरं व्याचष्टे **लक्षणवाक्यं हीति** ।

**२९　सु०— स्यादियं जीवब्रह्मणोरेकत्वं ब्रह्मणश्च निर्गुणत्वमङ्गीकुर्वतां लक्षणसूत्रारम्भानुपपत्तिः । यद्यनेन सूत्रेण जगज्जन्मादिकारणत्वं ब्रह्मणः स्वलक्षणमुच्यते । न चैवं किन्तु तटस्थमेव । न हि तथाविधं जगज्जन्मादिकारणत्वं जीवब्रह्मणोरेकत्वं वा ब्रह्मणो निर्गुणत्वं वा विरुणद्धि ॥**

**ननु स्वलक्षणत्वे प्रमाणमुक्तम् । मैवम् । स्वस्य लक्षणानि स्वलक्षणानीति वा । सु सम्यक् स्वरूपान्तर्गत्या न लक्षणानीति वा तदर्थोपपत्तेः ॥ तर्हि यतोऽस्य जन्मादि सा माया तदाश्रयो ब्रह्मेति निर्देशः स्यात् । न तु जन्माद्यस्य यतस्तद्ब्रह्मेति । मैवम् । यत्र घोषः सा गङ्गेतिवल्लक्षणया प्रयोगोपपत्तेः ॥ ननु तटस्थेनापि जगज्जन्मादिकारणत्वेन ब्रह्मणो जीवैक्यं निर्गुणत्वं च (नि)विरुद्ध्यते । काकनिलयनत्वं हि परेण तटस्थं लक्षणमुदाहृतम् । तस्य लक्ष्यान्तर्भावे काकाधिकरणत्वमपि गृहशब्दार्थः स्यात् । ततश्च काकविगमे गृहैकदेशभङ्गबुद्धिः स्यात् इति । तत्र काकाधिकरणत्वं तदनधिकरणेभ्यो गृहं व्यावर्तयति न वा । नेति पक्षेऽनुभवविरोधस्तदभिधानवैयर्थ्यं च । आद्ये ब्रह्मलक्षणमपि कथं न जीवव्यावृत्तिं करोति । कथं च तत्सम्बन्धेन सगुणं न भवतीति । मैवम् । यो हि कार्यकारणसङ्घातादविविक्तं कर्तृत्वभोक्तृत्वदोषसंसर्गिणमात्मानं मत्वा मृषैव क्लिश्यति स जीवो व्यावर्त्यत एव ते(अने)न लक्षणेन । तत्र यश्चैतन्यधातुः स ब्रह्मणो न भिद्यत इत्यभ्युपगमे विरोधाभावात् । न च सत्यस्य प्रपञ्चस्य कारणभूतायाः सत्याया मायाया**





**आश्रयो ब्रह्मेति सूत्रार्थो येन ब्रह्मणः सविशेषत्वं स्यात् । किन्तु यदवष्टम्भो विश्वो विवर्तः प्रपञ्चस्तद् ब्रह्मेति सूत्रार्थः । सति चैवं सूत्रार्थे कथं जीवब्रह्मणोरेकत्वं ब्रह्मणो निर्गुणत्वं च विरुद्ध्यत इति ।**

**परि०—** 'भेदेनैव तु' इत्यादिकमवतारयितुं शङ्कामाह **स्यादियमि**त्यादिना **अत्रोच्यत** इतिपर्यन्तेन । **तटस्थमेवेति** । ब्रह्माश्रितमायागतमेव न ब्रह्मगतमित्यर्थः । यद्वा काकवत्त्वमिवोप-लक्षणमेवेत्यर्थः । **लक्षणयेति** । यथा सा 'गङ्गा' इति गङ्गापदं तीरं लक्षणया बोधयति तथा 'तद्ब्रह्म' इत्यत्र तत्पदमपि लक्षणया तदाश्रयं ब्रह्म बोधयतीत्युपपत्तेरित्यर्थः । यद्वा यत्रेत्यत्र यत्पदं गङ्गार्थे सदपि लक्षणया यथा यत्तीर इत्यर्थकं तथा यत इति पदं यदधिष्ठितमायात इत्यर्थकमित्यर्थः । तटस्थलक्षणपरत्वेऽप्यैक्यवाद्यननुकूलत्वमस्य सूत्रस्याशङ्कते **नन्वित्यादिना** । काल्पनिकभेदमाश्रित्य समाधत्ते **मैवमित्यादिना** । **कार्येति** । देहेन्द्रियान्तःकरणादि । **कारणम्** अविद्यादोषो रागादिः । ऐक्यप्रतिकूल्यमस्य नेत्युक्त्वा निर्गुणत्वप्रतिकूलतापि नेत्याह **न च सत्यस्येति** । **विश्वः** समस्तः । **विवर्तः** अन्यथाप्रतीयमानः । **प्रपञ्चो यदवष्टम्भो** यदधिष्ठानक इत्यर्थः ।

**गु०दी०—** 'अस्योद्भवादिहेतुत्वं साक्षादेव स्वलक्षणम्' इति वदता **स्वस्य लक्षणानि स्वलक्षणानि** इत्यादिशङ्काऽपि परिहृता । 'लक्षितभावनिर्वृतिमि'त्युत्तरविशेषणेन एतैर्लक्षणैर्लक्षिता दर्शिता भावनिर्वृतिः स्वभावभूता निर्वृतिः सुखं यस्य तमित्युक्तम् । अन्यथा 'को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यादि'ति श्रुत्युक्तरीत्या सूत्रकारः एतल्लक्षणान्यथानुपपत्त्या आनन्दरूपतां ब्रह्मणः कथं साधयेत् । न हि चूतफलस्य सरसत्वाद्विषतरुफलस्य स्वादुतां कोऽपि साधयेत् । अतो ब्रह्मणः सदाऽऽनन्दरूपतां साधयन्तीमानि लक्षणानि यावद्वस्तुभावितया स्वलक्षणान्येव वक्तव्यानि । अन्यथा परज्योतिष्ट्वाद्वयत्वादीनामपि सुष्ठ्वलक्षणत्वप्रसङ्गः । अत एवोद्भवनादिहेतुत्वैरिति वक्तव्ये उद्भवनहेतुत्वाद्यष्टलक्षणान्यपि ब्रह्मस्वरूपभूतानीति सूचयितुं हेतुभिरिति भवितृप्रधानतया निर्देशः कृतः । एवं निर्देशे हि हेतुभूतब्रह्मात्मकैरत एव स्वलक्षणैः स्वरूपभूतजन्महेतुत्वादि-लक्षणैरित्यर्थः कथं न प्रेक्षावद्भिरीक्ष्येत । एवं च षष्ठीसमासोऽप्यनवसरदुःस्थ एव । अद्वयमिति स्वगतभेद-वर्जनोक्तेश्च नासौ श्लाघ्यः । अतः सुष्ठूक्तं भगवता पूर्णप्रज्ञाचार्येण 'विष्णोरेव स्वलक्षणमि'ति अतस्तटस्थत्ववार्ता मठस्थैव न विदुषां निकटस्थेति ज्ञेयम् । **तस्य लक्ष्यान्तर्भाव** इत्यादिः परकीयग्रन्थस्थवाक्यानुवादः । **किन्तु यदवष्टम्भ** इत्यत्र **यदवष्टम्भो** यदधिष्ठानक इत्यर्थः ।

**यादु०—** **तर्हीति** । तटस्थलक्षणत्व इत्यर्थः । **यत्र घोष इति** । अत्र यथा तच्छब्दस्य लक्षणया तत्सम्बन्धाद्गङ्गेत्यर्थो लभ्यते तथा यतो जन्मादि तद्ब्रह्मेत्यत्रापि तदाश्रयो ब्रह्मेत्यर्थलाभ इति भावः । काक-





निलयनत्वस्य तटस्थत्वमुपपादयितुं तस्य स्वरूपलक्षणत्वे बाधकमाह **तस्येति** । काकनिलयनत्वस्य लक्ष्यभूतगृहस्वरूपत्व इत्यर्थः । **विवर्तत इति** । एकस्य तत्त्वादप्रच्युतस्य पूर्वविपरीतासत्यानेकरूपावभासो विवर्तशब्दार्थ इत्याहुः ।

**वं०प०— स जीव इति** । विशिष्ट इत्यर्थः । चैतन्यधातुः विशिष्टान्तर्गतं विशेष्यांशरूपचैतन्यमित्यर्थः । ननु त्वद्रीत्यैवास्तु सूत्रार्थः । तथाऽपि सत्यभूतप्रपञ्चकारणीभूता या सत्यभूता माया तदाश्रयत्वे ब्रह्मणः सविशेषत्वं स्यादेवेत्यत आह **सत्यस्येति** । **यदवष्टम्भ इति** । **अवष्टम्भः** अधिष्ठानम् । **विवर्तः** कल्पितः । तथा चास्य जन्मादि यतो मायायाः सकाशाद्भवतीत्यस्य **विश्वः** समस्तः प्रपञ्चो **विवर्तो** मायाकल्पित इत्यर्थः, तदाश्रयो ब्रह्मेत्यस्य तदारोपाधिष्ठानमित्यर्थः । एवं च मायाकल्पितप्रपञ्चारोपाधिष्ठानं ब्रह्मेति सूत्रार्थ इति भावः ।

**आनन्दः—** स्यादियं सूत्रारम्भानुपपत्तिरित्यन्वयः । **प्रमाणमुक्तमिति** । स्वलक्षणैरित्यनेनेति शेषः । **लक्षणयेति** । तत्र गङ्गाशब्देन तीरलक्षणावत्प्रकृतेऽपि परो मायायाः जगज्जन्मादि तद्ब्रह्म तन्मायाश्रयो ब्रह्मेति लक्षणयेत्यर्थः । ननु काकवद्देवदत्तगृहमित्यत्र काकादेस्तटस्थलक्षणत्वेऽपि तेन गृहनिष्ठ उत्तृणत्वादिरूपासाधारणधर्मो यथोपस्थाप्यते तथा प्रकृतेऽपि तटस्थेनापि जन्मादिकारणत्वेन ब्रह्मनिष्ठोऽसाधारणधर्म उपस्थाप्यते । तथा च तेन जीवाद्व्यावृत्तिस्तत्सम्बन्धेन सगुणत्वमपि स्वस्य स्यादिति सूत्रारम्भानुपपत्तिस्तन्मते कथमुच्यत इत्याशङ्कते **ननु तटस्थेनापीति** । **तदभिधानेति** । काकबकत्वाभिधानेत्यर्थः । सविशेषत्वस्य सूत्रार्थत्वाभावमाह **न चेति** । **यदवष्टम्भ इति** । यद्ब्रह्मावष्टम्भोऽधिष्ठानं यस्य तथेत्यर्थः ।

**श्रीनिधि०— स्वस्य लक्षणानीति वेति** । एवं व्याख्याने स्वरूपत्वं च सेत्स्यति । सम्बन्धस्य स्वरूपत्वविरोधादिति भावः । **कार्यकारणसङ्घातादिति** । **कार्यं** शारीरादिकम् । **कारणं** इन्द्रियादिकम् । तेषां ज्ञानकारणत्वात् । तेषां सङ्घातः समूहः । **दोषसंसर्गिणमिति** । **दोषः** रागादिः । **विश्वः** प्रपञ्चः समस्तः प्रपञ्चः **विवर्तः** असमानसत्ताकोऽन्यथाभावः ।

**वा०चं०—** नन्वैक्यान्यथाऽनुपपत्त्या सूत्रेऽमुख्यार्थस्य परेणानुक्ततया भेदाङ्गीकारेण मुख्यार्थसम्भव-प्रतिपादकं भेदेनैवेत्युत्तरवाक्यमसङ्गतम् । न च मुख्यार्थसम्भवे लक्षणाश्रयणानुपपत्तावस्माभिरुक्तायामैक्या-न्यथाऽनुपपत्त्या मुख्यार्थासम्भवः प्रतिपादनीय एव परेणेति वाच्यम् । निराश्रयतया तथाऽस्मदुक्तेरेवानुपपत्तेः । न च तटस्थेन जगत्कारणत्वेनात्र सूत्रे लक्षणया ब्रह्म प्रतिपाद्यत इति परोक्तिरेवाश्रय इति वाच्यम् । स्वलक्षणत्वस्य प्रमाणोदाहरणेन प्रतिपादिततया तेन तटस्थत्वस्यानाशङ्कनीयत्वात् । तटस्थस्यापीतरव्यावर्तकतया स्वसम्बन्धेन सगुणत्वापादकतया चैकत्वनिर्गुणत्ववादिनां सूत्रारम्भानुपपत्त्यशामकतया वैयर्थ्येन तदीयतटस्थत्वोक्त्यनुपपत्तेश्च । न च स्वरूपलक्षणस्य जीवस्वरूपव्यावर्तकत्वेऽपि तटस्थस्य विशिष्टव्यावर्तकत्वेन स्वरूपव्यावर्तकत्वाभावा-त्स्वरूपाभेदवादिनां न तटस्थलक्षणसूत्रारम्भानुपपत्तिः । प्रपञ्चतत्कारणमायादेः सर्वस्य ब्रह्मविवर्तत्वार्थकत्वाच्च





सूत्रस्य, न निर्गुणत्ववादिनां तदारम्भानुपपत्तिश्चेति व्युत्पादनाय तदीयतटस्थत्वोक्तिः श्लिष्टेति वाच्यम् । तथा सति सिद्धान्ते विवर्तत्वादेरपि निरस्यत्वापातात् । तटस्थत्वं वदतो लक्षणाया अवश्यवक्तव्यत्वे बीजाभावाच्चेत्यत उक्तानुपपत्तिपरिहारेण पराभिप्रायं सम्यगनूद्योत्तरक्रमं दर्शयन्नाकाङ्क्षाक्रमेणोत्तरवाक्यं सङ्गमयति **स्यादियमित्यादिना** ।

उक्तं शङ्काभिप्रायं मूलारूढं कर्तुं यदीत्यापादकमध्याहृत्य मूलं योजयति **यदीति** । एवकाराभिप्रायं वक्तुं तद्व्यावर्त्यां शङ्कामुत्थापयति **नन्विति** । एवकाराभिप्रेताभेदाप्रामाणिकत्वोपपादकतयाऽपीदमेव मूलं व्याख्यातुं तदाक्षेपं दर्शयति **नन्विति** ।

**स०व्र०**— **न हीति** । अन्यधर्मस्यान्यनिष्ठतया कथनं न युक्तमित्याशयः । **यत्र घोष इति** । अत्र घोषाद्यधिकरणसामीप्यं गङ्गाया लभ्यते । अन्यथा गङ्गाघोषाधिकरणयोः सामानाधिकरण्यासम्भवात् । एवमत्रापि जन्मादिकारणमायात्वं न ब्रह्मणः सम्भवतीति मायाश्रयत्वं लक्ष्यत इत्यर्थः । काकनिलयनत्वस्य तटस्थत्वमुपपादयति **तस्य लक्ष्यान्तर्भाव इति** । काकनिलयनत्वस्य लक्ष्यभूतगृहस्वरूपत्व इत्यर्थः । **यो हि कार्यकारणसङ्घातादिति** । **कार्यो** देहः **कारणानि** इन्द्रियाणि । **तत्सङ्घातादिति** । तत्समूहात् । अविविक्तं कृष्णोऽहं काणोऽहं इत्यविभक्तम् । **तत्र यश्चैतन्यधातुरिति** । चैतन्यांश इत्यर्थः । ननु प्रपञ्चस्य सत्यत्वेन तत्करणीभूतमायाया अपि सत्यत्वेन प्रपञ्चकारणीभूतमायाया आश्रयो ब्रह्मेति सूत्रार्थः । कथं न ब्रह्मणः सविशेषत्वमित्यत आह **न च सत्यस्येति** । **यदवष्टम्भ इति** । यद्ब्रह्म अवष्टम्भोऽधिष्ठानं यस्य स तथोक्तः ।

**विठ्ठल०**— भेदेनैव त्वित्यादिकमवतारयितुं शङ्कामाह **स्यादियमित्यादिना** । अत्रोच्यत इत्यन्तेन तटस्थमेवेति ब्रह्माश्रितमायागतमेव न ब्रह्मगतमित्यर्थः । **सु सम्यगिति** । सम्यङ्लक्षणात्वोपपादनं **स्वरूपान्तर्गत्येति** । तथा च स्वरूपान्तर्गतं सुलक्षणम् । एतानि तु तटस्थानीति सु अलक्षणानीति स्वलक्षणपदस्यार्थोपपत्तेः न तद्विरोधेन तटस्थत्वभाव इति भावः । **तर्हि यत इति** । मायैव जन्मादिकारणं तदाश्रयत्वाद्ब्रह्मणो जन्मादिकारणत्वं न स्वरूपान्तर्गतमिति यद्युच्येत तर्हीत्यर्थः । **यत्र घोषः सा गङ्गेति** । यत्र घोष इति यदा घोषाधारपरत्वेन यच्छब्दस्य तीराभिधायकत्वेऽपि सा गङ्गेति सामानाधिकरण्यानुपपत्त्या यच्छब्दार्थपरामर्शकतया तीरवाचकतच्छब्दस्य लक्षणया गङ्गापरत्वं तथाऽत्रापि यतो जन्मादीति यच्छब्दस्य जन्मादिकारणमायाभिधायकत्वेऽपि तद्ब्रह्मेति तच्छब्दस्य लक्षणया ब्रह्मपरत्वं सम्भवतीति जन्माद्यस्य यतस्तद्ब्रह्मेति प्रयोग उपपद्यत इति भावः । यद्वा यत्रेत्यत्र यत्पदं गङ्गातीरपरमपि लक्षणया यत्तीर इत्यर्थकं तथा यत इति पदं यदधिष्ठिता माया तदर्थकमित्याहुः । ननु तटस्थत्वेऽपि लक्षणस्य जीवव्यावर्तकत्वसम्भवेनैकत्ववादिनां लक्षणसूत्रारम्भानुपपत्तिरेवेति शङ्कते **नन्वित्यादिना** । काकनिलयत्वस्य तटस्थत्वमुपपादयति **तस्य लक्ष्यान्तर्भाव इति** । काकनिलयत्वस्य लक्ष्यभूतगृहस्वरूपत्व इत्यर्थः । काल्पनिकभेदेनास्य सत्त्वात् । जीवव्यावर्तकत्वं लक्षणस्य ततश्च स्वाभाविकैक्यसम्भवेऽपि न सूत्रारम्भानुपपत्तिः न निर्गुणत्वभङ्गः । मायिकलक्षणस्य सत्त्वात् सूत्रारम्भोऽप्युपपद्यत





इत्याशयेन समाधत्ते **मैवमिति**। **कार्यं** देहेन्द्रियान्तःकरणादि कारणम्। अविद्यादोषो रागादिः। ऐक्यप्रातिकूल्यमस्य नेत्युक्त्वा निर्गुणत्वप्रतिकूलतापि नेत्याह **न चेति**। **विश्वः** सर्वः। **विवर्तः** = अन्यथाप्रतीयमानः। **प्रपञ्चो यदवष्टम्भो** यदधिष्ठानकः।

**चषकः**— **तर्हि यतोऽस्येति**। तटस्थलक्षणत्वोपगतावीदृग्विन्यासः स्यादित्यर्थः। **यत्र घोष इति**। तत्र यथा तत्पदस्य तीरसम्बन्धिप्रवाहलक्षकता तद्वत्प्रकृतयत्तदोर्नित्यसम्बन्धाद्यत्पदसमभिव्याहारलब्धतत्पदस्यापि तदाश्रयलक्षकतया सामञ्जस्यमिति भावः। काकाश्रयत्वस्य तटस्थताप्रतिपिपादयिषया तस्य स्वरूपलक्षणत्वोपगतौ बाधकमभिधत्ते **तस्येति**। काकनिलयनत्वस्य लक्ष्याभिमतगृहरूपत्व इत्यर्थः। **यदवष्टभः** यदधिष्ठानकः। **विवर्तः** विपर्यासविषयीभूतः। यादृशाधिष्ठानवृत्तिविपर्यासीयविशेष्यतानिरूपितप्रकारतापन्नो विश्वस्तद्ब्रह्मेति फलितार्थः।

**॥ इति 'निर्गुणत्वं सूत्रकारैरेव निराकृतम्' ॥**

* * *

**॥ अथ मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ निर्गुणत्वनिराकृततायां 'भेदेनैव मुख्यार्थसम्भवे लक्षणा कुतः' ॥**

**३० सु०— अत्रोच्यते। आस्तां तावत् (एषा) प्रपञ्चस्य विवर्तताऽऽदिवार्ता प्रमाणाभावात्, प्रकृत्यधिकरणे निराकरिष्यमाणत्वाच्च। तटस्थेन जगज्जन्मादिकारणत्वेनात्र सूत्रे लक्षणया ब्रह्म प्रतिपाद्यत इति कुतोऽङ्गीकरणीयम्। मुख्यार्थासम्भवे हि लक्षणाश्रयणं दृष्टम्। न तावद् ब्रह्मणो जगज्जन्मादिकारणत्वस्य बाधकं प्रत्यक्षं, तदगोचरत्वात्। नाप्यनुमानम्, श्रुतिबाधितत्वात्। नाप्यागमः, तस्याक्लिष्टकारित्वाद्यर्थतया सावकाशत्वात्।**

**नन्वर्थापत्त्येदमवसीयते। जीवब्रह्मणोरेकत्वं तावदावश्यकम्। न च जगज्जन्मादिकारणत्वस्य स्वलक्षणत्वे तत्सम्भवति। अतोऽन्यथाऽनुपपत्त्या मायागतमेवेदं लक्षणम्। जन्माद्यस्य यतः, तद् ब्रह्मेति लक्षणयोच्यत इति कल्प्यत इति। तत्राह भेदेनैवेति।**

## अनु०— भेदेनैव तु मुख्यार्थसम्भवे लक्षणा कुतः।





**यदि जीवब्रह्मणोरेकत्वपरिरक्षणाय यथाश्रुतं सूत्रार्थं परित्यज लक्षणाऽऽश्रीयते तर्हि जीवब्रह्मणोर्भेदेनैवाङ्गीकृतेन सूत्रस्य मुख्यार्थसम्भवे लक्षणा कस्मादाश्रयणीया ।**

**परि०—** 'ब्रह्म न कर्तृ निष्क्रियत्वात्' इत्याद्यनुमानं बाधकमित्यत आह **नाप्यनुमानमिति** । 'निष्कलं निष्क्रियम्' इत्यादिरागमोऽस्तु बाधक इत्यत आह **नाप्यागम इति** । दशमतात्पर्याद्युक्ताम् 'अकर्माक्लिष्टकारित्वात्' इत्यादिस्मृतिं हृदि कृत्वाऽऽह **तस्येति** । **इदमिति** । लक्षणस्य तटस्थत्वमित्यर्थः । तामेव दर्शयति **जीवब्रह्मणोरित्यादिना** ।

**वं०प०—** **लक्षणयेति** । तदाश्रयो ब्रह्मेत्यस्य लक्षणया लाभादित्यर्थः । **अनुमानमिति** । ब्रह्म न जगत्कारणं चेतनत्वाद्देवदत्तवदित्यनुमानमित्यर्थः । **श्रुतीति** । 'यतो वा इमानि', 'स हि सर्वस्य कर्ते'त्यादिश्रुतीत्यर्थः । **आगम इति** । 'निष्कलं निष्क्रियम्' इत्यागम इत्यर्थः । निष्क्रियशब्देन क्रियावेशात्मकत्वरूपकर्तृत्वाभावोक्तेरिति भावः । **अर्थापत्त्येति** । जीवब्रह्मणोरेकत्वस्यावश्यकत्वान्यथाऽनुपपत्त्येत्यर्थः ।

**आनन्दः—** **लक्षणयेति** । जगत्कारणीभूतमायाश्रयं ब्रह्मेति लक्षणयेत्यर्थः । **नाप्यनुमानमिति** । ब्रह्म न जगत्कारणं निर्धर्मकत्वादित्यनुमानमित्यर्थः । **श्रुतीति** । यतो वेत्यादिश्रुतीत्यर्थः ।

**स०व्र०—** **मुख्यार्थासम्भवे हीति** । कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीति कुण्डपाय्ययनाख्यसत्रे अग्निहोत्रधर्मा लक्ष्यन्ते । मासाग्निहोत्रस्य मुख्याग्निहोत्रत्वासम्भवात् बाधकात् । न चेह बाधकमस्तीत्यर्थः । अस्तु तर्हि निष्कलमित्यागमो बाधकमित्यत आह **नापीति** ।

**विट्ठल०—** ब्रह्म न कर्तृनिष्क्रियत्वात् इत्याद्यनुमानं बाधकमित्यत आह **नाप्यनुमानमिति** । निष्कलं निष्क्रियम् इत्याद्यागमोऽस्त्वित्यत आह **नाप्यागम इति** । **इदम् इति** । लक्षणस्य तटस्थत्वमित्यर्थः ।

**चषकः—** **तस्याक्लिष्टेति** । अकर्माऽक्लिष्टकारित्वादिति दशमतात्पर्योदाहृतस्मृतेरिति भावः ।

**३१ सु०— नन्वभेदमुपादाय सूत्रे लक्षणा वाऽऽश्रयणीया भेदमुपादाय मुख्यवृत्तिर्वेति सन्दिह्यते । वयं तु ब्रूमः द्वितीयः पक्ष एव श्रेयानिति, अप्रामाणिकत्वाज्जीवब्रह्मणोरेकत्वस्य । न (हि) अप्रामाणिकपरिरक्षणाय वाक्यानां जघन्यवृत्तिराश्रीयमाणा क्वचि(दुपलब्धेति)दपि दृष्टेति । तददमुक्तं भेदेनैवेति ।**





**ननु 'कथं जीवब्रह्मैक्यमप्रामाणिकं, तत्त्वमसीत्यादिश्रुतिसिद्धमि(त्वादि)'ति चेन्न । उपपत्तिपराहतत्वात् । तथा हि । तच्छब्देन(ब्दस्य) मुख्यार्थो यः, 'सदेव सोम्य' इत्यादिना प्रकृतः, प्रेक्षापूर्वं तेजोऽबन्नादीनां स्रष्टा, सर्वासां प्रजानां मूलमायतनं प्रतिष्ठा च, सकलावद्यगन्धविधुरोऽपरिच्छिन्नगुणाकरः परमात्मा, यश्च त्वंपदमुख्यार्थः प्रत्यक्ष(ादि)सिद्धोऽल्पशक्तिः पराधीनो दोषकलुषितोऽवच्छिन्नज्ञानादिगुणः, तावुपादायानेन वाक्येनैक्यमुच्यते, उत विरुद्धभागत्यागेन लक्षणया वा । नाद्यः । परस्परविरोधेन योग्यताविरहे जरद्गवादिवाक्यवदाभासत्वप्रसङ्गात् । द्वितीये दोषमाह भेदेनैवेति । सिंहो देवदत्त इत्यादिवत् सामानाधिकरण्यमात्रं गौणमुपादाय जीवब्रह्मणोर्भेदे(ना)नैवाङ्गीकृतेन पदद्वयस्य मुख्यार्थ(त्व)सम्भवे(न) जहदजहल्लक्षणा कुत आश्रयणीयेति ।**

**परि०**— सूत्रस्य मुख्यार्थोक्तिपरतया 'भेदेनैव तु' इति वाक्यं व्याख्याय श्रुतेर्मुख्यार्थत्वोक्तिपरतयापि व्याख्यातुमवतारयति **ननु कथमिति** । तदित्यस्य को मुख्यार्थ इत्यतश्छान्दोग्ये षष्ठे तत्त्वमसीत्यतः पूर्ववाक्ये प्रकृतमाह **सदेवेत्यादिना** । 'तदैक्षत बहु स्यां प्रजायेय' इति 'तत्तेजोऽसृजत' इत्यादिवाक्योक्तमाह **प्रेक्षेति** । 'सन्मूलाः सोम्येमाः सदायतनाः सत्प्रतिष्ठा' इत्यादिनोक्तमाह **सर्वासामिति** । सृष्टिस्थितिमुक्तिकर्ता चेत्यर्थः । तत्सत्यम्, स आत्मा अनयोरर्थः **सकलेत्यादि** । **गौणमिति** । सादृश्यपरमित्यर्थः । 'सामानाधिकरण्यमात्रं गौणम्' इत्यादेस्तात्पर्यमुक्तं चन्द्रिकायां पृथगुपदेशादित्यधिकरणे । सामानाधिकरण्यमात्रं गौणमित्यस्य, तत्पदं कर्तृत्वादिविशिष्टब्रह्मपरमेव तत्त्वंपदयोः सामानाधिकरण्यं तु नाभेदपरमिति नाभिप्रायः, अपि तु तत्त्वमसीत्यत्र तत् तत्सदृश इति तत्पदेनैव गौण्या वृत्त्या सादृश्ये लब्धेऽन्योन्यान्वितानेकप्रकृतिनिष्ठैकविभक्तिरूपसामानाधिकरण्यार्थस्य मुख्यस्य तत्पदशक्यतावच्छेदकेन ब्रह्मत्वेन रूपेण ब्रह्माभेदस्य जीवेऽसत्त्वेऽप्यमुख्यस्य चेतनत्वादिरूपेणाभेदस्य सत्त्वात् सामानाधिकरण्येनाऽमुख्याभेदलाभ इत्येवाभिप्राय इति । **जहदजहल्लक्षणेति** । ओहाक्त्यागे त्यजदत्यजल्लक्षणेत्यर्थः । कर्तृत्वादिधर्मांशत्यागाच्चैतन्यांशस्यात्यागादिति भावः ।

**यादु०**— **सकलावद्यगन्धविधुर इति** । इदं च 'तत्सत्यम् । स आत्मा' इत्यत्रत्यसाधुभावार्थकसत्यशब्दतात्पर्यकथनम् । तत्रत्यस्यैवात्मशब्दस्य व्याख्यानम् **अपरिच्छिन्नगुणाकर इति** । तेजोऽबन्नानां स्रष्टृत्वेन लब्धस्य पूर्णशक्तित्वस्य प्रतियोगितयाऽऽह **अल्पशक्तिरिति** । सर्वासां प्रजानां मूलमायतनं प्रतिष्ठा चेत्यनेन लब्धस्यापराधीनत्वस्य प्रतियोगितयोक्तं **पराधीन इति** । **सिंहो देवदत्त इत्यादिवदिति** ।





न चात्र सिंहपद एव गौणी वृत्तिर्न सामानाधिकरण्य इति वाच्यम् । अप्रधानप्रत्ययार्थस्वारस्याय प्रधाने प्रातिपदिके गौणीकल्पनस्यान्याय्यत्वादित्यभिप्रायात् । वक्ष्यते चैतत् पृथगधिकरणे ।

**आनन्दः**— अस्त्वेकत्वस्याप्रामाणिकत्वं ततः किमित्यत्राह **नाप्रामाणिकेति** । तच्छब्देनेत्यादिना तत्त्वंपदार्थकथनं विरोधस्फोरणार्थम् । ननु भेदस्यैवासिद्धत्वात्तेन मुख्यार्थसम्भवः कथमित्यत आह **भेदेनैवाङ्गीकृतेनेति**।

**वा०चं०**— अत्र मूलान्निष्कृष्टदूषणाप्रतीतेस्तद्दर्शयन्नेव लक्षणापक्षस्यैव मूले दूषणात्परानभिमतमपि मुख्यार्थभेदपरत्वपक्षं प्रसक्ततयोपर्येव विकल्प्य प्रदूष्य च पक्षान्तरे मूलं योजयितुमाह **उपपत्तीति** । यद्यप्येतत्सत्यत्वात्तेनेत्यादिनोक्तमेव तथाऽपि कथं नित्यगुणस्येत्याद्यधिकोक्तेः प्रकृतोपयुक्ततयोक्तार्थस्मरणाच्चापौनरुक्त्यमिति द्रष्टव्यम् ।

**सामानाधिकरण्यमात्रमिति** । विशेष्यविभक्तिसजातीयविशेषणविभक्तिमात्रमित्यर्थः । नीलं घटमानयेत्यादौ विशेष्यविभक्त्या घटगतकर्मत्वादेरुक्त्या विशेषणविभक्तेरेवाभेदार्थत्वेन तत्परित्यागेन सादृश्यार्थोपादाने तस्या एव मुख्यार्थपरित्यागेन गौणत्वप्राप्तेः । एवं च सामानाधिकरण्यस्य गौणत्वेऽपि विभक्तिद्वयबाधेनानेकबाधादत्र मात्रमित्युत्तरत्र द्वयस्येति त्यजेदेकमिति न्यायोक्तिश्चायुक्तेति निरस्तं भवति । अत्र मात्रमिति द्वयस्येति चैकत्वानेकत्वरूपवैलक्षण्योक्तिः । पदद्वयस्येत्यत्र पदशब्दस्य प्रकृत्यर्थकत्वात्सामानाधिकरण्यशब्देन च विशेषणविभक्तेर्व्याख्यातत्वात्तदुभयोक्त्या प्रकृतिविशेषणविभक्तिरूपप्राधान्यरूपतदुक्तिः । अमुख्यवृत्तिरित्येवोभयत्र वक्तव्ये गौणं लक्षणयेत्युक्तिर्गौण्यां सादृश्यस्यान्तर्गणिकभेदे सत्यपि सादृश्यत्वेन रूपेणानुगते तात्पर्यमित्येकार्थघटादिशब्दवत्तात्पर्यविषये द्राग्धीः, लक्षणायां तु क्वचित्सम्बन्धे तात्पर्यं, क्वचित्तद्द्वारा पूतत्वे, क्वचित्तच्छीतलत्वादाविति वैरूप्यान्नानार्थाक्षादिशब्दवद्विलम्बेन तद्धीरिति गौण्यपेक्षया लक्षणाया जघन्यत्वसूचनाय । एकदेशपरित्यागेनैकदेशान्तरस्वीकारार्थजहदजहदित्युक्त्या च प्राक् त्यक्तस्य स्वीकारस्त्वदुक्तलक्षणायां, गौणीपक्षे त्वत्त्यक्तस्य स इति तत्सूचयति । यद्यपि सिंहस्याध्ययनमित्यादौ सिंहप्रातिपदिकस्यैव तत्सादृश्यरूपामुख्यार्थत्वं तथापि समानाधिकरणविशेष्यान्तराभावेनानन्यगत्या तत्र तथात्वेऽपि प्रकृतेऽप्रधानविशेषणविभक्तेरेव अमुख्यार्थत्वोपपत्तौ प्रधानामुख्यतास्वीकारस्यानुचितत्वादिति प्रकृताभिप्रायेणैतद्ग्रन्थप्रवर्तनात् । तत्राप्यस्येति विशेष्याध्याहारे चेयमेव गतिः । अत एव सिंहो देवदत्त इत्यादिवदित्युक्तम् । न चाभेदस्यान्वयतया भानान्न विशेषणविभक्त्यर्थत्वमिति वाच्यम् । विशेषणविभक्तेः साधुत्वार्थमङ्गीकृत्यान्वयतयाऽभेदभानाभ्युपगमानौचित्यात् । अन्यथा राज्ञः पुरुष इत्यत्रापि षष्ठ्याः साधुत्वार्थकताऽऽपत्त्याऽन्वयतयैव सम्बन्धो भासत इत्यपि स्यात् । चन्द्रिकायां तु शक्यतावच्छेदकेन रूपेणाभेदस्य सामानाधिकरण्यमुख्यार्थत्वाद्गौणार्थतावच्छेदकेन सादृश्येनाभेदस्य तदमुख्यार्थत्वात् तदभिप्रायेण टीकायां सामानाधिकरण्यगौणतोक्तिर्न तु तत्पदादिरूपप्रकृतेर्न सादृश्ये गौणीत्यभिप्रायेणेत्युक्तम् । तत्तु सिंहस्याध्ययनं सिंहो देवदत्त इत्यादावेकरूपतालाभाय टीकोक्त-





मात्रादिपदास्वारस्यं सोढ्वेति द्रष्टव्यम् । उक्तरीत्या टीकोक्तपक्षस्यातिस्वरसत्वात् । अत एव तर्कताण्डवे एवमेव सुधाभिप्रायवर्णनमिति द्रष्टव्यम् ।

**वा०र०— अधिकोक्तेरिति** । अपौनरुक्त्यमित्युत्तरेणान्वयः । उक्ताशङ्काभिप्रायं मूलारूढं कर्तुं यदीत्यापादकमित्येवमादिपदोपेत एव पाठो मूलकोशे । तदभावो लेखकप्रयुक्तः । तथा पाठेऽपि इति शब्दस्य प्रकारार्थकत्वादित्यादीत्येव लभ्यत इति ज्ञेयम् । शक्यतावच्छेदकरूपेणाभेदरूपस्य सामानाधिकरण्यशब्दार्थस्य वक्ष्यमाणत्वात् तं व्यावर्तयितुं लक्षणातो गौण्याः प्राबल्यनिर्णयस्थलीयतर्कताण्डवानुसारेण सामानाधिकरण्यशब्दार्थमाह **विशेष्यविभक्तीति** । सजातीयत्वं च प्रथमात्वादिना ज्ञेयम् । शब्दसामानाधिकरण्यस्थले विशेषणविशेष्यविभक्त्योरेकरूपत्वस्य आवश्यकत्वादिति भावः । अनेन तदुभयगतविभक्तिद्वयं सामानाधिकरण्यमिति प्रतीतिर्निराकृता भवति । एतद्व्याख्यानप्रयोजनं च एवं चेत्यादिना स्वयमेवाग्रे वक्ष्यतीति ज्ञातव्यम् । विभक्तिद्वयस्यापि तुल्यरूपत्वे कुतो विशेषणविभक्तेरेवाभेदार्थकत्वं येन तस्या एकस्या एव गौणत्वमिति लाभः स्यात् इत्यतस्तल्लाभमुपपादयति **नीलं घटमित्यादि** । **तस्या एवेति** । न तु विशेष्यविभक्तेरपि किमु प्रातिपदिकार्थयोर्गौणत्वं न प्राप्यत इत्याशयः । विशेष्यविभक्तीत्यादिरूपेण सामानाधिकरण्यनिर्वचनेन निरस्य शङ्कां दर्शयति **एवं चेति** । अभेदार्थकविशेषणविभक्तेरेव सामानाधिकरण्यपदार्थत्वस्य विवक्षणादेवेत्यर्थः । **विभक्तिद्वयेति** । विशेषणविशेष्ययोरेकविभक्तिकत्वस्य सामानाधिकरण्यपदार्थतया सामानाधिकरण्यस्य गौणत्वे विभक्तिद्वयस्य गौणत्वप्राप्त्या विभक्तिद्वयबाधप्राप्तेरिति भावः । **मात्रमिती**त्यादीति शब्दद्वयस्य अयुक्तमित्येवं लिङ्गविपरिणामेन अयुक्तेत्युत्तरेण सम्बन्धः । गौणीपक्षे एकबाधो लक्षणापक्षे त्वनेकबाध इत्यपि तत्त्वमसीत्यादिप्रकृतवाक्याभिप्रायम् । न तु सिंहो देवदत्त इति दृष्टान्तीकृतवाक्येऽपि लक्षणापक्षे अनेक बाध आयातीत्याशयेन । तत्र सिंहसम्बन्धिनि सिंहसदृशे च चैत्रे लक्षणापक्षे सिंहप्रातिपदिकस्यैव बाधेनानेकबाधाभावात् । कथं तर्हि तत्र लक्षणा जघन्येति चेन्न । सिंहप्रातिपदिकस्यैकस्यापि प्रधानतया तद्बाधादेः लक्षणाया गौणीतो जघन्यत्वोपपत्तेः । अत एव प्राधान्याप्राधान्येत्युत्तरटीकानुसारेण प्रधानानेकेत्यपि प्रकृत एवेति ज्ञेयम् । न केवलमात्रमिति द्वयस्येति चोक्त्या गौणीलक्षणापक्षयोर्बाध्यस्यैकत्वानेकत्वरूपवैलक्षण्यमात्रमुच्यते । अपि तु वैलक्षण्यान्तरमप्युक्तपक्षयोरुक्तं भवतीत्याह **अत्र मात्रमितीत्यादिना** । पदद्वयरूपत्वेन प्रकृतिद्वयमेव पराभिमतमुपन्यस्तमिति भावेन प्रकृत्यर्थकत्वादित्युक्तं **प्रकृतीति** । प्रकृतिप्रत्यययोः प्रधानत्वाप्रधानत्वे हि क्रमेण निर्णीते । प्रयाजशेषेणेत्यादौ प्रत्ययस्यैव लक्षणाश्रयणं कृत्वा प्रयाजशेषं हविः क्षिपतीत्यर्थस्वीकारेण प्रातिपदिकस्वारस्यानुसरणेषु प्राप्त्या प्रकृतेः प्राधान्यादेः सत्त्वात् । उक्तं च न्यायामृते । न्यायं च निरवकाशप्रधानभूतानेकप्रातिपदिकस्वारस्याय सङ्ख्यार्थत्वेन सावकाशाप्रधानैकविभक्त्यस्वारस्यमिति । ततश्च बाध्यस्य प्रकृतित्वेन त्वत्पक्षे प्रधानबाधः । विभक्तिमात्रत्वे तु मत्पक्षे अप्रधानबाध इति प्राधान्याप्राधान्यरूपवैलक्षण्योक्तिरित्यर्थः । इत्युक्तिरित्यस्य सूचनायेत्युत्तरेणान्वयः । गौण्यां तात्पर्यविषयस्य सादृश्यस्यापि सर्वत्र एकरूपत्वाभावः । सिंहसादृश्यमग्निसादृश्यमित्यादिरूपेण सादृश्यानामपि भिन्नत्वादित्यत उक्तं **सादृश्यस्यान्तर्गणिकेति** । सादृश्येऽप्यवान्तरभेदे सत्यपीत्यर्थः । अनुगत इत्यनन्तरं सादृश्य





इति वचनविपरिणामेन वर्तते । अनुगतधर्मेणानुगतीकृते सादृश्य इति यावत् । तथा सादृश्यस्यावगतत्वात् तत्र शब्दस्य तात्पर्यमिति शीघ्रं ज्ञानं भवतीत्यर्थः । **क्वचित्सम्बन्ध इत्यादि** । प्रयोक्तृपुरुषाभिप्रायविशेषानुसारेण पृथक्पृथगेव तात्पर्यान्न तत्रानुगते तात्पर्यम् । कथञ्चित्तावदन्यतमत्वेनानुगमकरणे च नानार्थाक्षादिशब्देष्वपि तावदर्थानुगमापत्त्या सर्वसिद्धप्रकरणादिबलेनार्थविशेषोपस्थितिअक्षादिशब्देषु विलम्बेन भवतीत्येतद्विरुध्येतेत्याशयेन नानार्थेति दृष्टान्तीकरणम् । **तद्धीरित्यस्य** तात्पर्यविषयविशेषेऽर्थे प्रकरणादिबलेन विलम्बेन धीशब्दस्य तात्पर्यधी-रित्यर्थः । **इत्युक्त्येति** इति लक्षणाविशेषणेनेत्यर्थः । जहाति स्वार्थं पदं यस्यां लक्षणायां सा जहत्स्वार्थेति व्याख्यानस्य तत्र तत्र करणात् प्रकृते स्वार्थमध्येऽप्येकदेशो विवक्षाभेदमङ्गीकृत्य पदं जहाति स्वार्थैकदेशं न जहाति च तदेकदेशं यस्यां लक्षणायां सा जहदजहल्लक्षणेति तल्लक्षणं मनसि निधाय एकदेशपरित्यागेनेत्यादिरनुवादः । **पृथगधिकरणमूले विरुद्धस्वार्थैकदेशत्यागेन** एकदेशलक्षणया सामानाधिकरण्यमात्रं मुख्यमङ्गीकृतम् । ततो वरं **पदद्वयस्येत्याद्युक्तिः** । **विरुद्धभागत्यागेनेति** पूर्वमूले उक्तेश्च । विरुद्धैकदेशपरित्यागेनेति योजनीयम् । तत्त्वमसि-वाक्यार्थस्थलीयन्यायामृतानुसारेणाह **प्राक् त्यक्तस्येति** । वाच्यान्तर्गतत्वेन प्राग्धीस्थस्यापि अनन्तरमनुपपत्ति-दर्शनेन त्यक्तस्य पुनः स्वीकार इत्यर्थः । तथैव न्यायामृतवाक्यसत्त्वात् । **सः** स्वीकारः । तदित्यस्य गौण्यपेक्षया लक्षणायाः जघन्यत्वमित्यर्थः । सिंहो देवदत्त इत्यादेर्दृष्टान्तस्य मूले उक्त्या सूचितमभिप्रायं वक्तुं तद्व्यावर्त्य-शङ्कादिकं पृथगधिकरणीयचन्द्रिकानुसारेणाह **यद्यपि सिंहस्येत्यादि** । **अमुख्यार्थत्वमिति** । ततश्च तत्रेवात्रापि प्रधानपदभूततत्पदप्रातिपदिकस्य बाधमङ्गीकृत्यैव गौणी अङ्गीकर्तुं शक्येति कुतः प्रातिपदिकमुख्यार्थत्वं स्वीकृत्य विशेषणविभक्तिमात्रस्यामुख्यार्थत्वं स्वीक्रियत इति भावः । **तत्र तथात्वेऽपीति** । सिंहस्येत्यत्र प्रातिपदिकस्यैव गौणार्थत्वेऽपीत्यर्थः । **प्रकृत इति** । समानाधिकरणविशेष्यान्तरोपेते तत्त्वमसीत्यत्रेत्यर्थः । ननु सिंहस्येति वाक्येऽप्यस्येति विशेष्याध्याहारेण समानाधिकरणविशेष्यान्तरसद्भावोऽपि प्राप्तः । तथा च तत्सद्भावेऽपि सिंहप्रातिपदिकामुख्यार्थत्वं दृष्टमेवेति साम्यमित्यत आह **तत्रापीति** । **इयमेव गतिः** । प्रधानप्रातिपदिकामुख्यार्थत्वं परित्यज्य विशेषणविभक्तेरेवामुख्यार्थत्वाश्रयणमुचितमित्ययमेव प्रकार इत्यर्थः । मण्युक्तरीत्या आशङ्कते **न च अभेदस्यान्वयतयेति** । नीलमुत्पलमिति व्यासे विभक्तिद्वयश्रवणेन सामानाधिकरण्यसद्भावेऽपि नीलोत्पलमिति कर्मधारयसमासे विशेषणविभक्तेरभावेन सामानाधिकरण्याभावेऽपि नामार्थयोरभेदान्वयव्युत्पत्तेरभेदस्यान्वयतयैव भानं न तु तस्य विशेषणविभक्त्यर्थत्वमित्याशयः । **अनौचित्यादिति** । श्रुतविभक्तेरेवाभेदार्थकत्वेन सार्थकत्वोपपत्तौ साधुत्वार्थत्वस्य वैयर्थ्यापरपर्यायतया स्वीकरणायोग्यत्वादित्यर्थः । तर्हि राज्ञः पुरुष इत्यत्रापीत्यादि तर्कताण्डव-सूचितमतिप्रसङ्गबाधकदण्डत्वेनाह **अन्यथा राज्ञ इति** । अपिपदेन राजपुरुष इति समस्तपद इवेति समुच्चिनोति । तथा च समासव्यासयोर्विभक्तिश्रवणतदभावाभ्यां वैषम्यमङ्गीकृत्य समासे सम्बन्धस्यान्वयतया भानेऽपि राज्ञः पुरुष इति वाक्ये षष्ठ्यर्थः एव सम्बन्ध इत्यादेर्वक्तव्यतया प्रकृतेऽपि नीलोत्पलमिति समासे अभेदस्यान्वयतया भानेऽपि नीलमुत्पलमिति वाक्ये विशेषणविभक्त्यर्थ एवाभेद इत्यास्थेयमिति भावः । तर्कताण्डवानुसारेण विशेष्यविभक्ति-सजातीयविशेषणविभक्तिमात्ररूपसामानाधिकरण्यं गौणं तत्पदप्रातिपादिकं तु मुख्यार्थमेव । अत एवाप्रधानस्य एकस्य बाधः स्वपक्षे । परपक्षे तु प्रधानानेकबाध इत्यादिकं यदुपपादितं तस्य तत्पदप्रातिपदिके गौणीमङ्गीकृत्य

सामानाधिकरण्यमिति टीकाया अभिप्रायान्तरकथनरूपपृथगधिकरणीयचन्द्रिकाविरोधं परिहर्तुं तत्रोक्तपक्षानुवादपूर्वकं तद्गतिमाह **चन्द्रिकायां त्विति** । **सामानाधिकरण्येति** । परस्परान्वितानेकप्रकृतिनिष्ठैकविभक्तिरूपसामानाधिकरण्येत्यर्थः । मुख्यार्थत्वादित्यनन्तरं प्रकृते च तत्पदशक्यतावच्छेदकेन ब्रह्मत्वेन रूपेणाभेदस्य जीवे अभावात् जीवे विद्यमानस्य चेति पूरणीयम् । **अमुख्यार्थत्वादिति** । सिंहश्चैत्र इत्यत्र चैत्रे सिंहत्वेन रूपेण सिंहाभेदाभावेऽपि शूरत्वेन तदभेदो अमुख्यो यथेति भावः । **न सादृश्ये गौणीति** । एतच्च यद्यपि सिंहस्येति पूर्वग्रन्थे स्पष्टम् । **इत्यादाविति** । समानाधिकरणपदान्तरशून्ये तद्युक्ते च स्थलद्वय इति योज्यम् । पूर्वोक्तरीत्या सिंहस्येत्यस्य अन्यथासिद्धत्वात्सिंहो देवदत्त इत्यस्य च स्वपक्षानुगुण्याट्टीकोक्तमात्रादिपदास्वारस्यस्य च वृथाऽङ्गीकारप्राप्तेरित्याशयः । अत एवाह **उक्तरीत्येति** । चन्द्रिकाग्रन्थोऽपि तर्कताण्डवानुसारेण नेयः । तत्र विस्तरेण एतद्विचारकरणादित्याशयः । पृथगधिकरणीयटीकायां तु तर्कताण्डवानुसारेण सामानाधिकरण्यादि व्याख्याय उपपाद्य च चन्द्रिकोक्तपक्षोऽपि यद्वेति पक्षान्तरतया कथितः । कथञ्चिदपि परोक्तपदद्वयलक्षणा निराकार्या । स्वपक्षे लघुभूतं प्रकारान्तरं च वाच्यम् । तच्च विशेषणपदे लक्षणयेव गौण्येव च प्रत्ययार्थभेदत्यागेनापि तत्त्वमिति प्रयोगे मत्पक्षे उपपन्नः इति लाघवमित्येवं रूपम् । तथा च चन्द्रिकोक्तपक्षेऽपि लाघवम् । तर्कताण्डवपक्षेऽपि लाघवं समानमेव । परन्तु न्यायामृतोक्ते तर्कताण्डवोक्ते च विशेषणविभक्तिमात्रास्वारस्येऽतिलाघवम् । तथापि परोक्तपदद्वयलक्षणाविरोधिभूताः सर्वेऽपि पक्षाः सम्मता एव । अत एव न्यायामृते त्वन्मते पदद्वयलक्षणा ततो वरं मद्रीत्या एकस्मिंस्तत्पदे त्वंपदे वा अमुख्यवृत्तिरिति प्रतिज्ञायापि तादेश्यतदधीनत्वादिधर्मेण तदिति व्यपदेशमुपपाद्य प्रत्ययास्वारस्यमात्राश्रयणेनापि तदिति व्यपदेश उपपादितः । तत्र टीकोक्तसामानाधिकरण्यमात्रं गौणमित्येतत्स्वारस्ये भाराभावात् । अत्र तु सामानाधिकरण्यमात्रं गौणमिति मूलव्याख्यानकरणाय प्रवृत्तेन टीकाकृता मूलोक्तमात्रादिपदस्वारस्यं वर्णनीयमेव । स्थलान्तरोक्तिगतिश्च कार्यैवेति मनसि कृत्वा चन्द्रिकोक्तपक्षगतिः कृता । उपलक्षणया न्यायामृतगतिश्च टीकाभिप्रेता व्याख्येयपृथगधिकरणीयचन्द्रिकातर्कताण्डवन्यायामृतादिग्रन्थानामेकवाक्यता तु उपायानेकत्वेनानेकोपायानामविरोधविरोधलाघवातिलाघवविचारो न कार्य इति सर्वसम्मतत्वाद्युक्तेत्यलम्। इदं पुनरवशिष्यते । एतदधिकरणे पृथगधिकरणे च सामानाधिकरण्यमात्रं गौणमिति व्यवहारः । पृथगधिकरणतत्त्वप्रकाशिकायां तु लक्षणावृत्तौ हि तत्त्वंपदवाच्यार्थपरित्यागेनासिपदमात्रमुख्यार्थता अशेषप्रमाणविरुद्धाङ्गीकर्तव्या । वरं हि ततस्तत्त्वंपदमुख्यार्थमङ्गीकृत्यासिपदमात्रस्य गौणार्थत्ववर्णनमित्युक्तम् । तद्भावबोधे असिपदमात्रस्येति प्रतीकमुपादाय तत्त्वंपदसमभिव्याहृतासिपदबलाद्धि तत्त्वंपदार्थतावच्छेदकयोर्ब्रह्मत्वजीवत्वयोः सामानाधिकरण्यरूपस्य तदाश्रयब्रह्मजीवाभेदस्य लाभः । स च ब्रह्मत्वजीवत्वयोरेकवस्तुनिष्ठत्वलक्षणमुख्यसामानाधिकरण्यरूप इत्याद्युक्तम् । अभिनवचन्द्रिकायां तु तत्त्वंपदयोर्मुख्यार्थमङ्गीकृत्यासिपदमात्रस्येवार्थे लक्षणेति असिपदार्थभवनस्येति चासिपदपुरस्कारेण व्युत्पादनम् । चन्द्रिकायां तु असिपदप्रयोगस्यैवाभावः । तत्कथमेतदिति तत्र ब्रूमः । यथा हि नीलो घटो भवतीत्येवं भवतिपदसमभिव्याहारे सति समभिव्याहृतपदार्थयोरैक्यं भवतीति पदबोध्यं सामानाधिकरण्यफलं स्वीक्रियते । यत्र तु नीलो घट इत्येव प्रयोगः तत्र सामानाधिकरण्यमेवाभेदबोधकम् । एवं चासिपदस्य सत्त्वे सामानाधिकरण्यार्थोऽभेदो असिपदबोध्योऽङ्गीक्रियते । असिपदाभावेऽपि तु सामानाधि-





करण्यमेवाभेदबोधकमिति असिपदे भाराभावेन सुधादावसिपदमपुरस्कृत्य सामानाधिकरण्यमेवाभेदार्थकतया उक्तमित्यादिरुपपादनप्रकारो ज्ञेय इति।

**विठ्ठल०**— 'तदैक्षत, तत्तेजोऽसृजत, सन्मूलाः सोम्येमाः सर्वाः प्रजाः, तत्सत्यं स आत्मा' इत्यादि पूर्ववाक्याभिप्रायकथनं **प्रेक्षापूर्वमित्यादि । अवच्छिन्नेति** । परिच्छिन्नेत्यर्थः ।

**चषकः**— **सिंहो देवदत्त इत्यादिवदिति** । अत्र सामानाधिकरण्यमात्रमिति विशेष्यविभक्ति-सजातीयविशेषणविभक्तिमात्रमित्यर्थः । नीलं घटमानयेत्यादौ विशेष्यविभक्त्या कर्मत्वादेरुक्त्या विशेषण-विभक्तेरेवाभेदार्थत्वेन तत्परित्यागेन सादृश्यार्थोपादाने तस्या एव मुख्यार्थपरित्यागेन गौणत्वप्राप्तेः । एवं च सामानाधिकरण्यस्य गौणत्वेऽपि विभक्तिद्वयबाधेनानेकबाधादत्र मात्रमिति उत्तरत्र द्वयस्येति त्यजेदेकमिति न्यायोक्तिश्चायुक्तेति निरस्तं भवति । अत्र मात्रमिति द्वयस्येति चैकत्वानेकत्वरूपवैलक्षण्योक्तिः पदद्वयस्येत्यत्र पदशब्दस्य प्रकृत्यर्थकत्वात् सामानाधिकरण्यशब्देन च विशेषणविभक्तेर्व्याख्यातत्वात् तदुभयोक्त्या प्रकृतिविशेषणविभक्तिरूपप्राधान्याप्राधान्यरूपतदुक्तिः अमुख्यवृत्तिरित्येवोभयत्र वक्तव्ये गौणं लक्षणेत्युक्तिः गौण्याः सादृश्यस्यान्तर्गणिकभेदे सत्यपि सादृश्यत्वेन रूपेणानुगते तात्पर्यमित्येकार्थघटादिशब्दतात्पर्यविषये द्राक्धीः । लक्षणायां तु क्वचित् सम्बन्धे तात्पर्यं क्वचित् तद्वारा पूतत्वे क्वचिच्छीतलत्वादाविति वैरूप्या-न्नानार्थाक्षादिशब्दवद्विलम्बेन तद्धीरिति गौण्यपेक्षया लक्षणाया जघन्यत्वसूचनया एकदेशपरित्यागेनैकदेशान्तर-स्वीकारार्थकजहदजहदित्युक्त्या च प्राप्तत्यक्तस्य स्वीकारस्त्वदुक्तलक्षणायां गौणीपक्षे त्वत्यक्तस्य स इति तत्सूचयति । यद्यपि सिंहस्याध्ययनमित्यादौ सिंहप्रातिपदिकस्यैव तत्सादृश्यरूपामुख्यार्थत्वं तथापि समानाधिकरणविशेष्यान्तराभावेनान्यगत्या तत्र तथात्वेऽपि प्रकृतेऽप्रधानविशेषणविभक्तेरेवामुख्यार्थत्वोपपत्तौ प्रधानामुख्यतास्वीकारस्यानुचितत्वादिति प्रकृताभिप्रायेणैतद्ग्रन्थप्रवर्तनात् । तत्राप्यस्येति विशेष्याध्याहारे चेयमेव गतिः । अत एव सिंहो देवदत्त इत्यादिवदित्युक्तम् । न चाभेदस्यान्वयतया भानात्, न विशेषणविभ-क्त्यर्थत्वमिति वाच्यम् । विशेषणविभक्तेः साधुत्वार्थत्वमङ्गीकृत्यान्वयतयाऽभेदभानाभ्युपगमानौचित्यात् । अन्यथा राज्ञः पुरुष इत्यत्रापि षष्ठ्याः साधुत्वार्थकताऽपत्त्याऽन्वयतयैव सम्बन्धो भासत इत्यपि स्यात् । चन्द्रिकायां तु शक्यतावच्छेदकेन रूपेणाभेदस्य सामानाधिकरण्यमुख्यार्थत्वात् गौणार्थतावच्छेदकेन सादृश्येन अभेदस्य तदमुख्यार्थत्वात् तदभिप्रायेण टीकायां सामानाधिकरण्यगौणतोक्तिर्न तु तत्पदादिरूपप्रकृतेः न सादृश्ये गौणीत्यभिप्रायेणेत्युक्तम् । तत्तु सिंहस्याध्ययनं सिंहो देवदत्त इत्यादावेकरूपतालाभाय टीकोक्तमात्रादिपदा-स्वारस्यं सोढ्वेति द्रष्टव्यम् । उक्तरीत्या टीकोक्तपक्षस्यातिस्वरसत्वात् । अत एव तर्कताण्डवे एवमेव सुधाभिप्रायवर्णनमिति द्रष्टव्यमिति वाक्यार्थचन्द्रिकाकृतां निरूढपन्थाः । **सिंहो देवदत्त इत्यादिवदिति** । न चात्र सिंहपद एव गौणीवृत्तिर्न सामानाधिकरण्य इति वाच्यम्, अप्रधानप्रत्ययार्थस्वारस्येन प्रधाने प्रातिपदिके गौणीकल्पनस्यान्याय्यत्वादित्यभिप्रायात् । वक्ष्यते चैतत् पृथगधिकरणे ।





**३२ सु०— ननु किं सामानाधिकरण्यं मुख्यमुपादाय तत्त्वंपदयोर्लाक्षणिकत्वं व्याख्येयं किं वा सामानाधिकरण्यं गौणं गृहीत्वा तत्त्वंपदयोर्मुख्यार्थता व्याख्यातव्येति सन्देहे न विनिगमनायां हेतुरस्ति । न नास्ति । त्यजेदेकं कुलस्यार्थ इति न्यायस्य विद्यमानत्वात् । तात्पर्यलिङ्गानां तत्र तत्र भेद एवानुगुण्यस्य व्युत्पादितत्वात् । तदिदमुक्तं भेदेनैवेति ।**

**परि०— तत्र तत्रेति** । तत्त्वनिर्णयादौ ।

**यादु०— त्यजेदेकमिति** । इदमुपलक्षणम् । प्रत्ययापेक्षया प्रातिपदिकस्य प्राधान्यमपि विनिगमकं द्रष्टव्यम् । न च सामानाधिकरण्यस्याप्यनेकविभक्तिरूपत्वेन कथमेकत्वमिति वाच्यम् । प्रातिपदिकद्वयनिष्ठत्वेन ज्ञातैकविभक्तेरेवाभेदबोधकत्वेन सामानाधिकरण्यशब्दार्थत्वात् । अत एवोक्तं ब्रह्मतर्के 'नामादिप्राणपर्यन्तमुभयोः प्रथमात्वतः । ऐक्यदृष्टिरिति भ्रान्तिरबुधानां भविष्यति' इति । केचित्तु नीलं घटमानयेत्यादौ विशेष्यविभक्त्या घटगतकर्मत्वादेरुक्त्या विशेषणविभक्तेरेवाभेदार्थकत्वेन सामानाधिकरण्यरूपत्वात् सर्वत्राप्येवमित्यभिप्रेत्यैतदुक्त-मित्याहुः ।

**आनन्दः— त्यजेदेकमिति** । तथा चैकस्य सामानाधिकरण्यस्य गौणत्वमाश्रित्य पदद्वयस्य मुख्यार्थत्वेन व्याख्यानमेव युक्तमिति भावः । नन्वभेदे तात्पर्यलिङ्गानां सद्भावादेकमपि सामानाधिकरण्यं मुख्यत्वेनैव व्याख्याय पदद्वयममुख्यार्थत्वेन व्याख्यायत इत्यत्राह **तात्पर्येति** । **व्युत्पादितत्वादिति** । सत्यत्वात्तेन दुःखादेरित्यादौ भेदस्य सोपपत्तिकत्वकथनेनाभेदस्य च तद्विरुद्धत्वकथनेन च व्युत्पादितत्वादित्यर्थः ।

**श्रीनिधि०— त्यजेदेकं कुलस्यार्थमिति** । ''ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्'' इति श्लोकः । एकेन चेत् कुलनाशः प्राप्स्यते तर्हि तमेव त्यजेदिति अर्थः । प्रकृते तु सामानाधि-करण्ये मुख्यतया व्याख्यायमाने सकलवेदस्य मुख्यार्थतानाशः प्रसज्यते । अतः सकलवेदनाशकं सामानाधि-करण्यस्य मुख्यत्वमेव त्याज्यम् । गौणत्वमेव तस्योपादेयमिति भावः । नान्यस्य नियमस्येत्यर्थः । सोऽयं देवदत्त इति वदति । एतत् देशादिसम्बन्धविरोधी आकारः । तत् देशादिसम्बन्धः । एवमेतत् देशाभिसम्बन्धोऽपि । तस्या अनित्यत्वमिवेत्यर्थः ।

**वा०चं०—** अत्राप्येवकारसूचितन्यायप्रदर्शनाय तन्निवर्त्यां शङ्कामुत्थापयति **नन्विति** । (**तात्पर्य-लिङ्गैरिति** । 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' इत्युक्तैरित्यर्थः ।) ननु तात्पर्यलिङ्गैस्तत्त्वमसीत्यस्याभेदपरत्वे निर्णीते कथं न्यायमात्रेण भेदपरत्वमित्यतः एकविज्ञानेन सर्वविज्ञान-रूपस्यैकमेवाद्वितीयमित्यादेश्चोपक्रमस्य स्वपरपक्षानुगुण्यानानुगुण्ययोः प्रकृत्यधिकरणे निपुणतरं प्रतिपादयिष्य-माणत्वात् । ऐतदात्म्यमित्याद्युपसंहारस्य तत्त्वमसीत्येतत्तुल्ययोगक्षेमत्वात्तत्त्वमसीत्यभ्यासस्य च सत्यत्वात्तेनेति





पूर्वत्रात्र पृथगधिकरणे च तयोः (**तयोरिति** । स्वपरपक्षानुगुण्यानानुगुण्ययोरित्यर्थः । एवमुत्तरत्र ।) प्रतिपादना-दपूर्वतायाश्च पूर्वत्र 'न च मानान्तरोपेयमि'त्याद्युत्तरत्र तयोः प्रतिपादनात् 'सम्पत्स्यत' इति 'तस्य तावदेव चिरमि'ति फलार्थवादयोर्भेद एव स्वारस्यस्य स्पष्टत्वात् तत्त्वमसीत्यस्य परोक्तार्थे उपपत्तिविरोधस्य स्वोक्तार्थे तदानुगुण्यस्य चानेकस्थलेषु व्युत्पादनान्न तद्बलादभेदपरत्वं युक्तमित्याशयेनाह **तात्पर्येति** ।

**स०व्र०— त्यजेदेकं कुलस्यार्थ इति** । यथा प्रामाणिकानेकपरिरक्षणायाप्रयोजकस्यैकस्य परित्याग-स्तथा प्रामाणिकभेदपरिरक्षणाय सामानाधिकरण्यं गौणमङ्गीकृत्य तत्त्वंपदयोर्मुख्यार्थता व्याख्यातव्येति विनि-गमनमस्तीति भावः । न चैक्य एव तात्पर्यलिङ्गानामानुगुण्यस्य सत्त्वेन तस्यैव प्रामाणिकत्वात् तत्परिरक्षणाय वैपरीत्यं कुतो न व्याख्येयमित्यत आह **तात्पर्यलिङ्गानामिति** ।

**विठ्ठल०— 'तत्र तत्रे'ति 'न चे'ति** = तत्त्वनिर्णयादौ । सत्यत्वात्तेन दुःखादेरित्यादि व्याख्यानावसरे ।

**चषकः— त्यजेदेकमिति** । इदमुपलक्षणं प्रत्ययापेक्षया प्रातिपदिकस्य प्राधान्यमपि विनिगमकं द्रष्टव्यम् । न च सामानाधिकरण्यस्याप्यनेकविभक्तिरूपत्वेन कथमेकत्वमिति वाच्यम् । प्रातिपदिकद्वयनिष्ठत्वेन ज्ञातैकविभक्तेरेवाभेदबोधकत्वेन सामानाधिकरण्यशब्दार्थत्वात् । अत एवोक्तं ब्रह्मतर्के । 'नामादि प्राणपर्यन्त-मुभयोः प्रथमात्वतः । ऐक्यदृष्टिरिति भ्रान्तिरबुधानां भविष्यति' इतीत्यपि व्याकुर्वते । नामादि प्राणपर्यन्तमिति ब्रह्मतर्कवचन उभयोरेकप्रथमाप्रकृतित्वानभिधानेन तदपि प्रातिपदिकद्वयप्रकृतिकैकविभक्तिरित्यर्थे नोपोद्बलकम् । चन्द्रिकायां ''लक्षणावृत्तौ हीत्यादिना । परमते पदद्वयलक्षणा । मम तु तत्पदमात्रे गौणी । तत्राल्पबाधेनैवोपपत्तौ बहुबाधोऽन्याय्य इति भावः । टीकायां सामानाधिकरण्यस्य गौणत्वोक्तेस्तत्पदं सर्वकर्तृत्वादिविशिष्टब्रह्मपरमेव । तत्त्वंपदयोः सामानाधिकरण्यं तु नाभेदपरं किं तु सादृश्यपरमिति नाभिप्रायः । सिंहस्याध्ययनमित्यादौ सामाना-धिकरण्याभावेऽपि सिंहप्रातिपदिकस्यैव सदृशे गौणत्वात् । सन्न्यायरत्नावल्यां तत्त्वमसीत्यत्र जगत्स्रष्टृपरामर्शिनि-स्तच्छब्दस्यैव त्वंशब्दवाच्ये गौणवृत्त्याश्रयणेन तत्त्वंपदयोरुभयोरपि लक्षणाश्रयणस्य पराहतत्वादित्युक्तत्वाच्च । अपि तु तत्पदेनैव गौणवृत्त्या सादृश्ये लब्धे परस्परान्वितानेकप्रातिपदिकनिष्ठैकविभक्तिरूपसामानाधिकरण्यार्थस्य मुख्यस्य तत्पदशक्यतावच्छेदकेन ब्रह्मत्वेन रूपेण ब्रह्माभेदस्य जीवेऽसत्त्वेऽपि अमुख्यस्य चेतनत्वादिरूपेण अभेदस्य सत्त्वात् सामानाधिकरण्येनाभेदलाभ इत्येवाभिप्रायः । अस्ति सिंहश्चैत्र इत्यत्रापि चैत्रे सिंहत्वेन रूपेण सिंहाभेदाभावेऽपि शूरत्वेन तदभेदः । एतदेवाभिप्रेत्यानुव्याख्याने 'अतोऽभेदवदेवैताः श्रुतयः प्रवदन्ति हि । पौराणानि च वाक्यानि सादृश्याभेदसंश्रयादि'ति । 'चेतनत्वादिसादृश्यं यद्यभेद इतीष्यते । अङ्गीकृतं तदस्माभिर्न स्वरूपैकता क्वचिदि'ति चोक्तम् । यद्यपि तच्छब्दस्य तत्सदृशेऽर्थे सति तस्य गौणार्थतावच्छेदकेन सादृश्येनैव रूपेण त्वंपदार्थजीवाभेदो मुख्य एव । तथापि शक्यतावच्छेदकेन ब्रह्मत्वेनाभेदो न मुख्य एवेति द्रष्टव्यमि''ति व्याख्यातम् । तत्तु टीकोक्तमात्रादिपदास्वारस्यापादकमित्यभिसन्दधाना एव तर्कताण्डवे— अत्रोक्तं सुधायाम् । 'अतोऽभेद-वदेवैताः श्रुतयः प्रवदन्ति हि । पौराणानि च वाक्यानि सादृश्याभेदसंश्रयादि'त्यनुव्याख्यानव्याख्यावसरे





''तत्त्वमसीत्यत्र गौणी चेत्प्रधानं पदद्वयं मुख्यार्थं सामानाधिकरण्यमात्रे सादृश्ये जघन्या । लक्षणा चेत्पदद्वयं अमुख्यार्थम् । सामानाधिकरण्यमात्रं मुख्यमिति प्रधानबाधादनेकबाधाच्च लक्षणा जघन्येति । अयं च न्यायो यद्यपि तत्त्वमसीत्यादिवाक्य एव सिंहश्चैत्र इत्यत्र सिंहसम्बन्धिनि सिंहसदृशे चैत्रे लक्षणा चेत्सिंहप्रातिपदिकस्यैव बाधेनानेकबाधाभावात् । तथाप्येकस्यापि प्रधानस्य बाधात्तत्रापि लक्षणा जघन्येति ज्ञेयम् । न च सामानाधिकरण्यबाधेऽप्यनेकविभक्तिबाध इति वाच्यम् । नीलं घटमानयेत्यादौ विशेष्यविभक्त्या घटगतकर्मत्वादेरुक्त्या विशेषणविभक्तेरेवाभेदार्थकत्वेन तन्मात्रबाधात् । बहुत्वप्रयुक्तबलादपि स्वभावप्रयुक्तबलस्य बलवत्वाच्च प्रातिपदिकप्राधान्यं च प्रयाजशेषेणेत्यादौ सिद्धम् । न च लक्षणायामपि गङ्गापदं मुख्यार्थमेव सप्तम्येव प्रवाहस्यैव परम्परया घोषाधारतायाममुख्येति वाच्यम् । प्रवाहस्य परम्परयापि अनाधारत्वात् । तीराधारताया एवाभिप्रेतत्वाच्च । अनुव्याख्यानोक्तं सादृश्यस्य गौणाभेदत्वं तु चैत्रे शूरत्वेन सिंहाभेदे सत्यपि औत्सर्गिकस्य पदार्थतावच्छेदकसिंहत्वेनाभेदस्याभावात् । उक्तं ह्यनुव्याख्याने— 'चेतनत्वादिसादृश्यं यद्यभेद इतीष्यते । अङ्गीकृतं तदस्माभिर्न स्वरूपैकता क्वचित्' इति । सन्न्यायरत्नावल्यां तु तत्त्वमसीत्यत्रापि जगत्स्रष्टृपरामर्शिनस्तच्छब्दस्यैव त्वंशब्दवाच्ये जीवे गौणवृत्त्याश्रयणेन तत्त्वंपदयोरुभयोरपि लक्षणाश्रयणस्य पराहतत्वादिति तत्पदस्यैव गौणत्वमुक्तं तदपि तत्त्वमसीत्यादि प्रस्तुतपरमेव फलतः सुधोक्तसादृश्याभेदपर्यवसितं च । सुधायामपि सिंहस्याध्ययनमित्यादौ सामानाधिकरण्याभावात् सिंहप्रातिपदिकमेव सदृशे गौणमि''त्यन्तेन सौधसामानाधिकरण्यमात्रमिति विन्याससामञ्जस्यं सम्पादयन्तः, सति सामानाधिकरण्ये तस्यैव गौणीवृत्तिस्तदभावस्थले च प्रातिपदिकस्येति सिद्धान्तं प्रातिष्ठिपन् । तत्र च 'नीलं घटमानयेत्यादौ विशेष्यविभक्त्या घटकर्मत्वादेरुक्त्या विशेषणविभक्तेरेवाभेदार्थकत्वेन तन्मात्रबाधात्' इत्यादिग्रन्थेन सामानाधिकरण्यस्थले विशेषणविशेष्यवाचकप्रकृतिकविभक्तिभेद एव तर्कताण्डवादिसौवाकरसिद्धः भाष्यकैय्यटदीधित्यादितन्त्रान्तरसिद्धश्चेत्यवसेयम् ।

**॥ इति मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ निर्गुणत्वनिराकृततायां**
**'भेदेनैव मुख्यार्थसम्भवे लक्षणा कुतः' ॥**

* * *

**॥ अथ मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ निर्गुणत्वनिराकृततायां**
**'नित्यगुणस्य गुणहानत ऐक्यायोगः' ॥**

**३३ सु०— किञ्च विरोध्याकारपरित्यागेन स्वरूपमात्रलक्षणया 'तत्त्वमसि' इति वाक्यं जीवब्रह्मणोरेकत्वं प्रतिपादयतीत्यत्र विरोध्याकारपरित्यागो नाम न तावदविवक्षामात्रमित्युक्तं प्राक् ॥ अथ सोऽयं देवदत्त इति(त्यादि)वद्विरोध्याकारस्यानित्यत्वम् । तत्राह कथमिति ।**





**अनु०— कथं नित्यगुणस्यास्य स्यादैक्यं गुणहानतः ॥**

**नित्यगुणत्वं चेश्वरस्य लिङ्गपादे साधयिष्यते । अस्येश्वरस्येत्युपलक्षणम् । जीवेऽपि पारतन्त्र्यादिदोषाणां नित्यत्वात् । यथोक्तं पुराणे 'अल्पशक्तिरसार्वज्ञम्' इति ।**

**परि०— प्रागिति** । प्रथमाधिकरणे 'सत्यत्वात्तेन दुःखादेः' इत्यादिव्याख्यानावसरे । **लिङ्गपाद इति** । 'ज्ञानं नित्यं क्रिया नित्या' इत्यादिनोत्तरपादे साधयिष्यत इत्यर्थः । **पुराण इति** । 'अल्पशक्तिरसार्वज्ञ्यं पारतन्त्र्यमपूर्णता । उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः ॥ १ ॥ स्वाभाविकं तयोरेतन्नान्यथा तु कथञ्चन' इति द्वितीयगीतातात्पर्योक्तमहाविष्णुपुराण इत्यर्थः ।

**यादु०— प्रागिति** । प्रथमाधिकरण इत्यर्थः । **अल्पशक्तिरिति** । 'अल्पशक्तिरसार्वज्ञ्यं पारतन्त्र्यमपूर्णता । उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः । स्वाभाविकं तयोरेतन्नान्यथा स्यात्कदाचन । वदन्ति शाश्वतावेतावत एव महाजनाः ।' इति विष्णुपुराण इत्यर्थः ।

**वं०प०— सोऽयं देवदत्त इतिवदिति** । तद्देशकालविशिष्टैतद्देशकालविशिष्टयोरैक्यायोगाद्विरोध्याकार-परित्यागेनैक्यं बोध्यते । तत्र विरोध्याकारपरित्यागो नामानित्यत्वमेवेत्याशयः । **लिङ्गपादे** 'ज्ञानं नित्यं क्रिया नित्ये'त्युत्तरपादे ।

**आनन्दः— इत्युक्तं प्रागिति** । सत्यत्वात्तेन दुःखादेरित्यस्य व्याख्यानावसर इति शेषः । अनित्यत्व-मिथ्यात्वरूपपक्षद्वये प्राक् दूषितमपि पुनर्दूषयितुमाह **अथेति** । ननु मास्तु ईश्वरीयगुणहानं तेषामनित्यत्वात्तथापि जीवगुणहानेन जीवस्येश्वरैक्यं किं न स्यादित्यत आह **अस्येश्वरस्येति** ।

**वा०चं०— प्रागिति** । सत्यत्वात्तेनेत्येतद्व्याख्यावसर इत्यर्थः । एवं च तत्प्रकारस्यात्राप्युपलक्षणेन बोद्धव्यत्वान्न भाष्ये न्यूनतेति भावः । **नित्यगुणत्वं चेति** । 'ज्ञानं नित्यमि'त्यादिप्रमाणोदाहरणेन 'नित्यत्वादि'त्यादिना बाधकपरिहारेण चेत्यर्थः । जीवस्यापि प्रकृतत्वेऽप्यस्येत्येकवचनादीश्वरस्य गुणित्वेन जीवस्य च दोषित्वेन नित्यगुणस्येत्यनुसाराद् गुणशब्दस्य धर्ममात्रपरत्वेऽपीश्वरधर्मनित्यताया उपपादयिष्यमाणत्वेन नित्यगुणस्येति सिद्धवदुक्तिसम्भवाच्चास्येत्येतदीश्वरमात्रपरतया व्याख्याय तर्हि जीवगुणहानेन नित्यगुणस्यापीश्वरस्य न जीवैक्यानुपपत्तिरित्यतोऽस्येत्यस्य जीवोपलक्षणतां दर्शयंस्तद्दोषनित्यतोपपादकं च दर्शयति **अस्येश्वरस्येति** । **पुराणे** महाविष्णुपुराणे । तद्वाक्यं पठति **अल्पशक्तिरसार्वज्ञमिति** । 'पारतन्त्र्यमपूर्णता । उपजीवकत्वं जीवत्व-मीशत्वं तद्विपर्ययः । स्वाभाविकं तयोरेतन्नान्यथा स्यात्कदाचन । वदन्ति शाश्वतावेतावत एव महाजनाः । ' इति तद्वाक्यशेषः ।





**वा०र०— अस्येत्येकवचनादिति** । अस्येत्येतत् ईश्वरमात्रपरतया व्याख्यायेत्युत्तरेणान्वयः । तर्हि जीवमात्रपरत्वेन कुतो न व्याख्यातमित्यतो हेत्वन्तरतयोक्तस्य नित्यगुणस्येत्यनुसारादित्यस्याप्युत्तरेणान्वयः । कथं नित्यगुणस्येत्यनेनेश्वरमात्रलाभ इत्यत उक्तम् **ईश्वरस्य गुणित्वेन जीवस्य च दोषित्वेनेति** । नित्यगुणस्ये-त्युक्त्या गुणपदस्य धर्ममात्रपरत्वाङ्गीकारे जीवस्यापि प्राप्तिसम्भव इत्यत उक्तम् । **गुणशब्दस्येत्यादि** । अनेन ईश्वरमात्रपरत्वे सिद्धवदुपन्यासो हेत्वन्तरेणोच्यते । स च न जीवे सम्भवतीति प्रतिपादयतेश्वरधर्मांशे उपपादयिष्यत इति जीवधर्मांशे यथोक्तं पुराण इति च वैषम्येणोक्तिः कुत इति शङ्का च परिहृतेति ज्ञेयम् । शिष्टं स्पष्टम् ।

**स०व्र०— अल्पशक्तिरसार्वज्ञ्यमितीति** । 'अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता । उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः । स्वाभाविकं तयोरेतन्नान्यथा स्यात्कदाचन । वदन्ति शाश्वतावेतावत एव महाजनाः ।' इति महाविष्णुपुराणे यथोक्तमित्यर्थः ।

**विठ्ठल०— यथोक्तमिति** । 'अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता । उपजीवकत्वं जीवत्वम् ईशत्वं तद्विपर्ययः ॥ स्वाभाविकं तयोरेतत् नान्यथा तु कथञ्चन' इति गीतातात्पर्योक्तमहाविष्णुपुराणे इत्यर्थः ।

**चषकः— प्रागिति** । 'जिज्ञासानये सत्यत्वात्तेन' इति प्रतीकव्याख्यावसर इत्यर्थः । **अल्पशक्तिरिति** । 'अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता । उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः । स्वाभाविकं तयोरेतन्नान्यथा स्यात् कदाचन । वदन्ति शाश्वतावेतावत एव महाजनाः ।' इति महाविष्णुपुराणे अभिहितमित्यर्थः ।

**॥ इति मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ निर्गुणत्वनिराकृततायां**
**'नित्यगुणस्य गुणहानत ऐक्यायोगः' ॥**

* * *

**॥ अथ मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ निर्गुणत्वनिराकृततायां**
**'नित्यनिर्गुणं नित्यगुणान्नित्यभिन्नं स्यात्' ॥**

**३४ सु०— ननु च विरोध्याकारपरित्यागेन जीवस्य ब्रह्मैक्यमित्यस्यार्थो न विरोध्याकाराविवक्षामात्रेणेति नाप्यनित्यत्वेनेति किन्तु निर्गुणेन ब्रह्मणा जीवस्यैक्यमित्येवेति चेन्न । निर्गुण(त्व)स्यैव निरूपयितुमशक्यत्वात् । तथा हि । तन्निर्गुणं किं सगुणादीश्वराद्भिन्नमुताभिन्नम् (वा) । द्वितीये तस्यापि सगुणत्वप्रसङ्गेन निर्गुणत्वव्याघातः । आद्ये दोषमाह सदैवेति ।**





# अनु०— सदैव गुणवत्त्वेऽस्य भिन्नं स्यान्निर्गुणं सदा।

**यदि निर्गुणं सगुणादत्यन्तभिन्नं तर्ह्यस्य सगुणस्य नित्यं सगुणत्वात्तस्मान्नित्यमेव निर्गुणं भिन्नं प्रसज्येत। तथा च न कदाचिदपि कैवल्यं स्यादिति।**

**यादु०**— गूढाभिसन्धिराह **किन्तु निर्गुणेनेति**। तथा च मिथ्यात्वेनैव गुणानां परित्याग इति भावः। **कैवल्यमिति**। अद्वितीयब्रह्मावस्थानरूपमित्यर्थः।

**वं०प०**— **इत्येवेति**। तथाच विरोध्याकारपरित्यागो नाम तस्य मिथ्यात्वमेवेत्याशयः। कैवल्यं निर्गुणब्रह्मभावरूपम्।

**आनन्दः**— तत्त्वमसीत्यत्र तत्पदस्य पूर्वप्रकृतस्रष्टृत्वादिगुणविशिष्टपरामर्शकतया निर्गुणब्रह्मप्रतिपादकपदाभावेन जीवस्य निर्गुणब्रह्मैक्यपरत्वमस्य वाक्यस्य न सम्भवतीति दूषणे सत्येव दूषणान्तरमाह **तथा हीति**। **अस्य सगुणस्येति**। जीवस्येश्वरस्य चेत्यर्थः। अस्येतीदंशब्देन जीवाग्रहणे सगुणेश्वरादेव निर्गुणस्य सदा भिन्नत्वं स्यात्। न तु जीवस्य। तथा च जीवस्य निर्गुणभावयुक्तेरक्षतत्वात् तथा च न कदाचिदपि कैवल्यं स्यादित्यनेन ग्रन्थस्यासम्मतिः स्यात्। ग्रहणे तु तस्य निर्गुणब्रह्मणो नित्यं भिन्नत्वेन जीवस्य कैवल्यं कदापि न स्यादित्यापादनमुपपद्यत इति भावः। **तस्मात्** सगुणत्वात्।

**श्रीनिधि०**— **तस्यापि सगुणत्वप्रसङ्गेनेति**। ननु सगुणनिर्गुणयोः अभेदे सगुणस्यैव निर्गुणत्वं किं न स्यात्। तथा च कथं व्याघात इति चेत् न। तर्हि सगुणत्वव्याघातापातात्। सगुणत्वं न सार्वकालिकमिति चेत् न। तत् किं अनित्यत्वं ..... उत मिथ्यात्वम्। नाद्यः। उक्तत्वात्। न द्वितीयः। निर्मूलत्वात्। तत्सत्यतायाः साधयिष्यमाणत्वात् च। **तर्ह्यस्य सगुणस्येति**। अत्यन्तभेदो हि सार्वकालिकभेदः। तथा च निर्गुणस्य सगुणादत्यन्तभेदस्य नित्यं सगुणत्वमिति भावः। **न कदाचिदपि कैवल्यं स्यादिति**। निर्गुणत्वमात्रविशेष एव हि तदीयं कैवल्यमिति भावः।

**वा०चं०**— नन्वविवक्षाऽनित्यत्वपक्षयोर्दूषितत्वान्मिथ्यात्वपक्षस्य च न चेत्यादिना दूषयिष्यमाणत्वात् सदैवेत्युत्तरमूलं व्यर्थमित्यतोऽत्र मूलोक्तस्य सगुणस्य सदा सगुणत्वात्सगुणान्नित्यमेव निर्गुणं भिन्नं स्यादिति दूषणस्य निर्गुणं सगुणादत्यन्तभिन्नमिति पक्ष एव सम्भवात्तत्कल्पप्रसक्तेश्च निर्गुणेन जीवैक्यमिति पराभिप्रायं विनाऽसम्भवात्। तत्र च निर्गुणं सगुणाभिन्नमिति प्रसक्तपक्षान्तरस्य च स्पष्टदूषणतया न चेत्यादिवक्ष्यमाणरीत्या तद्दूषणलाभाच्च भाष्यकारेणोपेक्षणाद् गूढाभिसन्धेः परस्य निर्गुणेन जीवैक्यमिति पक्षनिरासाभिप्रायोऽन्वयनासङ्गतिरित्याशयेनोत्तरमूलमवतारयति **नेति**। अत एव तदनुकूलमापादकमध्याहरति **यदीति**। गुणवत्त्व इत्यस्या-





पादकसमर्पकताभ्रान्तिं वारयितुं गुणवत्त्व इत्यस्य सतिसप्तमीत्वमभिप्रेत्य तदभिप्रायमाह **सगुणत्वादिति** । आपाद्यस्यानिष्टतां दर्शयितुं योग्यं तत्फलमापाद्यमध्याहरति **तथा चेति** ।

**विठ्ठल०**— गूढाशयः शङ्कते **ननु विरोध्याकारेति**। **किन्तु निर्गुणेनेति**। तथा च मिथ्यात्वेनैव गुणानां परित्याग इत्याशयः। कैवल्यं = केवलत्वं निर्गुण इति यावत्। ततश्चैक्योपदेशानुपपत्तिरिति भावः।

**चषकः**— **कैवल्यमिति**। अद्वितीयब्रह्मतादात्म्यापत्तिरूपमित्यर्थः।

**॥ इति मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ निर्गुणत्वनिराकृततायां 'नित्यनिर्गुणं नित्यगुणान्नित्यभिन्नं स्यात्' ॥**

* * *

**॥ अथ मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ निर्गुणत्वनिराकृततायां 'अनिर्वाच्यस्य दूषितत्वात् मिथ्यागुणत्वश्च न स्यात्' ॥**

**३५ सु०— "ननु स्वभावतो निर्गुणमेवारोपितैर्मिथ्यागुणैः सगुणमिति बालैरभिलप्यते । आरोपितनीलिम्ना गगनमिव नीलत्वेन। आरोपप्रवाहस्य चानादिनित्यतया सदा सगुणत्वं च नानिष्टम् । तथा च मिथ्याभूतविरोध्याकारपरित्यागेनैक्योपदेशोऽपि नानुपपन्नः । नीरूपं गगनमिति यथा । यथा वा यदिदं रजतं सा शुक्तिरि"त्येवं परेण स्वाभिसन्धावुद्घाटिते सत्याह न चेति ।**

## अनु०— न च मिथ्यागुणत्वं स्यादनिर्वाच्यस्य दूषणात्॥

**मिथ्येत्यसदुच्यतेऽनिर्वचनीयं वा। नाद्यः अनङ्गीकारात्। न द्वितीयः अनिर्वाच्यस्य प्रथमसूत्र एव निराकृतत्वात्। अतो गुणराहित्यलक्षणं निर्गुणत्वं न सर्वथा शक्यनिरूपणम्।**

**ननु गुणादिपञ्चकस्य निर्गुणत्वं पदार्थविदो मन्यन्ते । मन्यन्ताम् । न हीदानीं निर्गुणवस्तुनिराकरणं प्रस्तुतं किं नामाद्वैतिना निर्गुणं ब्रह्म निरूपयितुमशक्यमिति । गुणशब्देना(चा)त्र धर्ममात्रं प्रकृतम्। तद्गुणादिष्वपि सर्वसम्मतम्॥ गुणादीनां च सगुणत्वं परमाण्वारम्भनिरासे वक्ष्यते।**





**ननु (च) 'साक्षी चेता केवलो निर्गुणश्च' इति निर्गुणं ब्रह्म श्रूयते । मैवम् । उक्तानुपपत्तिपराहतत्वेनार्थान्तरपरत्वात् । अन्यथा साक्षित्वादीनामपि धर्मत्वाद्व्याघातश्च । साक्षाद्द्रष्टा हि साक्षी । यथाऽऽह पाणिनिः । 'साक्षाद्द्रष्टरि संज्ञायामि'ति ।**

**परि०— कैवल्यमिति** । केवलत्वं निर्गुणभाव इति यावत् । सगुणस्येत्यनुकर्षः । **बालैरिति** । विशेषानभिज्ञैरित्यर्थः । गुणराहित्यलक्षणं निर्गुणत्वमित्यस्य वैशेषिकपरिभाषितगुणशून्यत्वमर्थ इति मन्वानो मन्दः शङ्कते **गुणादिपञ्चकस्येति** । गुणकर्मसामान्यविशेषसमवायरूपपञ्चकस्य । **पदार्थविदो** नैयायिकाः । **अशक्यमितीति** । प्रस्तुतमित्यनुकर्षः । अत्रेदानीम् अभिमतं निर्गुणत्वं गुणादिपञ्चकेऽपि नेत्याह **गुणशब्देनेति** । पारिभाषिकरूपादिचतुर्विंशतिगुणराहित्यमपि नेत्याह **गुणादीनां चेति** । वैशेषिकाधिकरणे समयपादे वक्ष्यत इत्यर्थः । **उक्तानुपपत्तीति** । निर्गुणस्यैव निरूपयितुमशक्यत्वादिनोक्तानुपपत्तीत्यर्थः । यद्वा 'न च मिथ्यागुणत्वं स्यादनिर्वाच्यस्य दूषणात्' इत्युक्तानुपपत्तीत्यर्थः । **अर्थान्तरेति** । प्राकृतगुणराहित्यरूपार्थान्तरत्वादित्यर्थः । व्याख्यातैषा श्रुतिः कर्मनिर्णयटीकायाम् । **अन्यथेति** । धर्मसामान्यनिषेधे । **यथाऽऽहेति** । पञ्चमस्य द्वितीयपादे 'साक्षाद्द्रष्टरि' इति साक्षाच्छब्दरूपादव्ययाद्द्रष्ट्रर्थे संज्ञायां विषये इनिप्रत्यये 'अव्ययानां भमात्रे टिलोपः' इति टिलोपश्च भवतीत्यर्थः ।

**यादु०—** द्वितीयं पक्षमङ्गीकृत्य तत्रोक्तं विरोधं परिहर्तुं **शङ्कते नन्विति** । विरोध्याकारबाधदशायामैक्योपदेशमुदाहरति **नीरूपमिति** । तदबाधदशायां तमुदाहरति **यथा वेति** । रजतं रजततया तव प्रतीयमानं सा शुक्तिरेवेति भ्रान्तं प्रति कश्चिदाप्त उपदिशतीत्यर्थः । निर्गुणब्रह्मनिराकरणमुपसंहरति **अत इति** । अत्र गुणराहित्यलक्षणमित्युक्तिर्गुणशब्दोदितसकलशुभराहित्यलक्षणमासुरत्वमेव निर्गुणत्वं परिशेषेण साधयितुं प्रसक्तप्रतिषेधायेति ज्ञातव्यम् । यद्वा । तत्त्वमसीति श्रौतैक्यनिर्देशस्य नीरूपं गगनमिति दृष्टान्तः । जन्माद्यस्येति सौत्रैक्योपदेशस्य वक्ष्यमाणरीत्या यथा वेति द्वितीयो दृष्टान्तः । एवमग्रे धर्मराहित्यलक्षणमित्युक्तेरपि प्रयोजनं ज्ञेयम् । **सर्वथेति** । तदाश्रयस्य सगुणस्य निर्गुणस्य वा ब्रह्मणो वक्तुमशक्यत्वादित्यर्थः ।

ननु माऽस्तु सगुणस्य तद्भिन्ननिर्गुणस्य वा ब्रह्मणस्तदाश्रयत्वम्, तथाऽपि गुणादिपञ्चकमेव तदाश्रयो भविष्यतीत्याशयेन प्रकृतमनालोचयन्मन्दः शङ्कते **ननु गुणादिपञ्चकस्येति । न हीति** । गुणशब्देन वैशेषिकाभिमतगुणविवक्षायां तद्राहित्यरूपं निर्गुणत्वं ब्रह्मणि न सम्भवतीत्येव ब्रूमो न क्वापि तन्न सम्भवतीति । येन गुणादिपञ्चकोदाहरणं सङ्गतं स्यादिति भावः । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु गुणशब्देन धर्ममात्रमेव विवक्षणीयम् । सदेव सोम्येत्यादिना प्रकृततेजोऽबन्नादिस्रष्टृत्वादिरूपधर्मजातस्यैव तच्छब्दपरामर्शविषयतया





प्रकृतत्वाद्धर्मराहित्यरूपं च निर्गुणत्वं न क्वापि सम्भवति गुणादेरपि सधर्मकत्वात्; इत्याह **गुणशब्देन चात्रेति** । गुणशब्देन वैशेषिकाभिमतगुणविवक्षायामपि तद्राहित्यरूपं निर्गुणत्वं न क्वापि सम्भवति । गुणादिपञ्चकस्यापि सङ्ख्यापृथक्त्वादिरूपगुणवत्त्वस्य वैशेषिकपरीक्षायां वक्ष्यमाणत्वादित्याह **गुणादीनां चेति** ।

**साक्षाद्द्रष्टरीति** । साक्षाच्छब्दोऽव्ययम् । तस्मादिनिप्रत्ययो भवति । द्रष्टरि वाच्ये संज्ञाग्रहणमभिधेय-नियमार्थम् । तथा च साक्षीत्युपद्रष्टैवोच्यते न दाता न गृहीता चेति सूत्रार्थः । अत्र च प्रकृतिवदनुकरणं भवतीति सूत्रे पञ्चम्यलुक् । उदाहरणे च 'अव्ययानां भमात्रे टिलोपः' इति ज्ञेयम् ।

**वं०प०— नीलत्वेनेति** । तेन वास्तवं नीरूपत्वं न विहन्यत इति भावः । **नीरूपमिति** । आरोपित-नैल्याकारपरित्यागानन्तरं विचार्यमाणे नीरूपमित्यर्थः । **सा शुक्तिरिति** । आरोपितनैल्याकारपरित्यागानन्तरं विचार्यमाणे नीरूपमित्यर्थः । **सा शुक्तिरिति** । आरोपितरजताकारपरित्यागानन्तरं विचार्यमाणे शुक्तिरेवेत्यर्थः । **साक्षाद्द्रष्टरीति** । साक्षाच्छब्दाद्द्रष्टर्यभिधेये इनिप्रत्यये 'अव्ययानां भमात्रे टिलोपः' इति भसंज्ञकस्य टिभूतस्य आत् इत्यस्य लोपे साक्ष् इन् साक्षिन् इति नकारान्तं प्रातिपदिकं द्रष्टव्यम् ।

**आनन्दः— सदेत्यस्य** नित्यमिति व्याख्यानम् । तर्हि सदा सगुणत्वं कथमत्राह **आरोपेति** । सगुणत्वे ऐक्योपदेशः कथमत्राह **तथा चेति** । नन्वत्र निर्गुणत्वमेव निराक्रियते उत निर्गुणं ब्रह्म । नाद्यः । पदार्थविद्भिः निर्गुणस्यापि गुणादिपञ्चकस्य स्वीकारेण तन्निराकरणासम्भवात् । न द्वितीयः । निर्गुणस्यापि गुणादेः सम्भवेन निर्गुणस्यापि ब्रह्मणः सम्भवादिति शङ्कते **नन्विति** । द्वितीयपक्षाङ्गीकारेण परिहरति **मन्यन्तामिति** । ननु निर्गुणस्यापि गुणादेः सम्भवान्निर्गुणब्रह्मणोऽपि सम्भवः किं न स्यादित्यत्राह **गुणशब्देनेति** । एको गुणः द्वौ गुणौ इत्यादिप्रतीतेः गुणादेर्निर्गुणत्वमपि न सम्भवतीत्याह **गुणादीनां चेति** । **उक्तानुपपत्तीति** । निर्गुणं ईश्वराद्भिन्न-मभिन्नं वेत्युक्तानुपपत्तीत्यर्थः । **अन्यथेति** । धर्ममात्रनिषेध इत्यर्थः । कथमनेन सधर्मकत्वमापद्यत इत्यत्राह **साक्षादिति** । न च साक्षित्वादिधर्माननूद्य निर्गुणश्चेत्यनेन तन्निषेधः क्रियत इति वाच्यम् । तथा सति चशब्दा-योगादिति भावः ।

**श्रीनिधि०— सदा सगुणत्वं च नानिष्टमिति** । निर्गुणस्य तदपेक्षाया भेदाभावात् । न हि निर्गुण एव गुणा आरोप्यन्त इति तस्य तदपेक्षया भेदो भवति । न हि नीरूपे गगने रूपमारोप्यत इत्येतावता तस्य तेन भेदः । तथा च कैवल्यमपि समर्थितम् । यस्य भ्रमो निवर्तते तस्य तत्सम्भवात् । न हि गगने सर्वैः रूपमारोप्यत इत्येतावता यस्य भ्रमो निवर्तते तं प्रति निरूपमात्रत्वं विरुद्धमिति भावः । **उक्तानुपपत्तिपरिहारत्वेनेति** । अनित्यत्वमिथ्यात्वपक्षोक्तानुपपत्तिपरिहारत्वेनेत्यर्थः ।

**वा०चं०**— न चेत्यादि न पक्षान्तरनिराकरणं किन्तु सामान्योक्त्यभिसन्ध्युद्घाटनेन निर्गुणं सगुणाभिन्न-मिति द्वितीयपक्षाङ्गीकारेण तत्रोक्तदूषणे परेण निरस्ते तन्निराकरणमित्याशयेनावतारयति **नन्विति** । अत्र





स्वभावतो मिथ्यागुणैरिति व्याघातपरिहारः । असद्गुणैः सगुणत्वानुपपत्तिरित्यत उक्तम् **आरोपितैरिति** । आरोपमात्रेणापि तद्वत्त्वमसम्भावितमित्यतः सम्भावककथनम् **आरोपितेति** । आरोपस्य कादाचित्कत्वाद् गुणनित्यताप्रतिपादकश्रुतिविरोध इत्यत उक्तम् **आरोपितेति** । तर्हि निर्गुणस्य गुणानां मिथ्यात्वे भेदप्रसक्तेरभावादैक्योपदेशवैयर्थ्यमित्यत उक्तं **तथा चेति** । अत्रापि सम्भावककथनं **नीरूपमिति** । ननु नायमैक्योपदेशोऽपि तु गगने रूपाभावप्रतीतिमात्रमित्यतः प्रकृतोपयोगितया सम्प्रतिपन्नं दृष्टान्तमाह **यथा वेति** । यद्वा । विरोध्याकारनिवृत्तेरपि तत्र भानादैक्योपदेशमात्रे पूर्वदृष्टान्तः । विरोध्यैक्योपदेशवत्प्रतीयमान-विरोध्याकारपरित्यागेन विशेष्यैक्योपदेशे द्वितीयो दृष्टान्त इति द्रष्टव्यम् । निर्गुणेन ब्रह्मणा जीवैक्यमिति परकीयसामान्योक्तेः प्रसक्तिमात्रेण पक्षान्तरमस्माभिर्निरस्तम् । वस्तुतस्तु तथोक्तेरयमेवाभिप्राय इति सूचयति **स्वाभिसन्धाविति** । पराभिमतद्वितीयपक्षप्राप्तदूषणनिरासकस्यापि न चेति मूलनिवर्त्यमिथ्यात्वपक्षस्य सदेवे-त्याद्यपक्षदूषणनिरासकत्वस्यापि सम्भवात्तदानन्तर्यं न चेति मूलस्य नानुपपन्नम् । अनेनाविवक्षादिपक्षनिरा-करणमपि प्रसक्तिमात्रेणेति सूचितं भवति । ननु निर्गुणस्वरूपनिराकरणं पदार्थविन्मतविरुद्धमिति गूढाभिसन्धिः शङ्कते **नन्विति** । निर्गुणमात्रनिरासे तन्मतविरोधेऽपि निर्गुणब्रह्मनिरासे न तन्मतविरोध इति तथैवोत्तरमाह **न हीति** । ननु निरासकन्यायतौल्ये तन्निरासोऽपि प्राप्त एव, तत्परिहारोपाय एव च ममापीति पराशयं ज्ञात्वा तथापि वैलक्षण्यान्नानुपपत्तिपरिहारसाम्यमित्याशयेनाह **गुणशब्देनेति** । वस्तुगतिमनुरुद्ध्येदं मतवैलक्षण्यमुपपादितं तदभिप्रेतं निर्गुणत्वं चाप्रामाणिकमेवेत्याह **गुणादीनां चेति** ।

**वा०र०— न चेत्यादि न पक्षान्तरेति** । न चेत्यादि मूलं न पक्षान्तरेति योज्यम् । **साक्षाद्द्रष्टा हीति** मूलम् । उक्तं च तत्सूत्रं सिद्धान्तकौमुद्यां **साक्षाद्द्रष्टेति** । **साक्षादिति** । साक्षाच्छब्दोऽव्ययम् । तस्मात् द्रष्टेत्यर्थे इनिप्रत्ययो भवति । संज्ञायां गम्यमानायामिति सूत्रार्थः । इनिप्रत्ययानन्तरं चाव्ययानां भमात्रे टिलोप इति साक्षाच्छब्दीयटिलोपे साक्षिनि(न्नि?)ति प्रातिपदिकनिष्पत्तिरिति ज्ञेयम् ।

**विठ्ठल०— नीरूपमिति** । नीलरूपं गगनम् इत्युक्तत्वेऽपि 'नीरूपं गगनमि'त्यस्य यथा न विरोधः तथेत्यर्थः । विरोध्याकारत्यागेनैक्योपदेशोऽनुपपत्त्यभावमुदाहरति **यथा वेति** । मिथ्यागुणत्वं न स्यादिति प्रतिज्ञायाम् अनिर्वाच्यस्य दूषणादित्युक्तिरसङ्गतेत्यतो व्याचष्टे **मिथ्येत्यसदिति** । **पदार्थविदो** नैय्यायिकाः । किञ्च नन्वित्यादिशङ्कैवानुपपन्ना । अत्र गुणशब्देन धर्ममात्रस्यैव विवक्षितत्वेन तस्य गुणकर्मादिषु तार्किकैरङ्गी-कृतत्वेन निर्गुणत्वं सर्वथा शक्यनिरूपणमित्यस्यानुपपत्त्यभावादित्याशयेनाह **गुणशब्देनेति** । अस्तु वा गुणशब्दो रूपादिपरः । तथापि नानुपपत्तिरित्याह **गुणादीनां चेति** । **साक्षाद्द्रष्टरीति** । साक्षाच्छब्दरूपाव्ययाद् द्रष्ट्रर्थे संज्ञायां विषये इति प्रत्ययः स्यादिति सूत्रार्थः । तथा च अव्ययानामित्यनेन टिलोपे साक्षीति भवति ।

**चषकः—** अभिन्नत्वकल्पमुपेत्य तत्रोक्तक्षत्यपनिनीषया शङ्कते **नन्विति** । विरोध्याकारपरित्याग-दशायामैक्योपदेशं निदर्शयति **नीरूपमिति** । तस्य बाधप्रतिसन्धानदशायां तं निदर्शयति **यथा वेति** । रजतं





रजतत्वप्रकारकप्रतीतिगोचरम्; सा शुक्तिरिति भ्रान्तोद्देश्यकं भ्रान्तिज्ञस्य वच इत्यर्थः । **यथाह पाणिनिरिति** । साक्षादित्यव्ययात् द्रष्टर्यभिधेये 'इनि'प्रत्यये । अव्ययानां भमात्रे टिलोप इति टिलोपे साक्षीतिरूपं निष्पद्यत इति भावः ।

**॥ इति मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ निर्गुणत्वनिराकृततायां**
**'अनिर्वाच्यस्य दूषितत्वात् मिथ्यागुणत्वञ्च न स्यात्' ॥**

* * *

**॥ अथ मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ निर्गुणत्वनिराकृततायां**
**'इतोऽपि निर्गुणत्वोक्तौ तद्वादिनामासुरत्वं स्यात्' ॥**

३६ **सु०—** एवं धर्मराहित्यलक्षणं निर्गुणत्वं निराकृतमप्याग्रहमात्रेण योऽङ्गीकरोति तं प्रति सोल्लुण्ठमाह **निर्गुणत्वमिति** ।

## अनु०— निर्गुणत्वं तदा च स्यादासुरत्वं न चान्यथा ।

तदा च (निर्गुणे युक्त्या) निर्गु(णे)णत्वे निराकृतेऽपि यदि निर्गुणत्वं परस्मै रुचितं स्यात् तर्हि गुणशब्दोदितसकलशुभराहित्यलक्षणमासुरत्वमेव स्यात् । अन्यथानिरूपयितुमशक्यत्वस्योक्तत्वात् । तेनैक्यं च मायावादिनामनुमन्यामह इति ॥ एतेन ब्रह्मणो निर्गुणत्वादस्य लक्षणस्य यत्तटस्थत्वमुक्तम्, न हि नानाविधकार्यक्रियावेशात्मकत्वं तत्प्रसवशक्त्यात्मकत्वं वा जिज्ञास्यविशुद्धब्रह्मान्तर्गतं भवितुमर्हतीति, तदपि निरस्तं वेदितव्यम् । निर्गुण(त्व)स्यैव निराकृत(निरस्त)त्वात् ॥ यच्चोक्तम् 'नेदं ब्रह्मणो विशेषणं प्रपञ्चजन्मादिकारणत्वस्य प्रपञ्चोपाधित्वेन निरुपाधिकब्रह्मस्वरूपान्तर्गतत्वायोगात्' इति; तदुत्तरत्र निराकरिष्यत इति ।

**परि०— सोल्लुण्ठम्** सोपहासम् । **परस्मै रुचितमिति** । 'रुच्यर्थानां प्रीयमाणः' इति चतुर्थी । यत्तटस्थत्वमुक्तं तन्निरस्तमित्यन्वयः । तटस्थत्वोक्तिपरं वाक्यं पठति **न हि नानेति** । **तत्प्रसवेति** । नानाविधकार्यजनकेत्यर्थः । **विशेषणमिति** । स्वरूपलक्षणमित्यर्थः । **उत्तरत्रेति** । 'अतोऽनन्तगुणं ब्रह्म' इत्यत्र ब्रह्मस्वरूपविशेषण(षय)त्वोपगमेन तन्मात्रत्वानङ्गीकारेण निराकरिष्यत इति भावः ।





**गु०दी०— सोल्लुण्ठम्** इत्यत्र 'स्मृतास्सोल्लुण्ठ-सोत्प्रास-सोपहासास्समास्त्रयः' इत्यभिधानात् सोल्लुण्ठं सपरिहासमित्यर्थः।

**यादु०— परस्मै रुचितमिति** । 'रुच्यर्थानां प्रीयमाणः' इत्यनेन चतुर्थीति ज्ञातव्यम् । **क्रियावेशात्मकत्वमिति** । क्रियाश्रयत्वमित्यर्थः । अनेन कर्तृत्वरूपं तत्प्रसवं शक्त्यात्मकत्वं वेत्यनेनोपादानत्वरूपं कारणत्वमुक्तमिति ज्ञातव्यम् । **विशेषणमिति** । स्वरूपमित्यर्थः । **प्रपञ्चोपाधित्वेनेति** । प्रपञ्चसापेक्षत्वेनेत्यर्थः । **उत्तरत्रेति** । भक्तिपादे 'अन्यापेक्षा यदि स्युष्टे सत्तैवं देशकालगा । देशकालानपेक्षा हि न सत्ता क्वापि दृश्यते' इत्यत्र सत्ताया अपि देशकालरूपपरापेक्षत्वाद्ब्रह्मस्वरूपान्तर्गतत्वं न स्यादिति निराकरिष्यत इत्यर्थः।

**वं०प०— सोल्लुण्ठं** सोपहासम् । **असुरत्वमेव स्यादिति** । निर्गुणत्वमसुरत्वमेकमेव स्यादित्यर्थः । न चान्यथेति मूलाभिप्रायमाह **अन्यथा निरूपयितुमिति** । निर्गुणत्वस्येति शेषः । तथाच सकलशुभराहित्यं विहायान्यथा प्रकारान्तरेण निर्गुणत्वं न च नैव निरूपयितुं शक्यमिति मूलार्थो द्रष्टव्यः। **तेनैक्यं चेति** । निर्गुणैक्यं नामासुरैक्यमित्यर्थलाभादित्यर्थः।

**आनन्दः— तेन** असुरेण । निर्गुणत्वस्य तटस्थत्वे हेतुत्वं कथमत्राह **न हि नानेति** ।

**श्रीनिधि०— परस्मै रुचितमिति** । रुच्यर्थानां प्रीयमाण इति रुच्यर्थयोगे चतुर्थीति भावः । **कार्यक्रियावेशात्मकत्वमिति** । कार्यानुकालक्रियावेशात्मकत्वमित्यर्थः । **विशेषणमिति** । विशेषण इत्यर्थः । तत्स्वरूपमिति यावत् । **प्रपञ्चोपाधित्वेनेति** । प्रपञ्चलक्षणउपाधिलक्षणज्ञानाधीनज्ञानत्वेन । **निरुपाधिकेति** । अन्यप्रतीत्यनपेक्षप्रतीतिकेत्यर्थः।

**वा०चं०—** ननु निर्गुणत्वस्य निरासादुत्तरग्रन्थवैयर्थ्यम् । दूषणान्तरपरत्वे च तस्यैव वक्तव्यतयाऽसुरत्वोक्तिश्चायुक्तेत्यत आह **एवमिति** । नैयायिकाभिमतनिर्गुणत्वस्यापि प्रस्तुतत्वात्तावन्मात्रस्यासुरत्वानापादकत्वाद्धर्मेत्याद्युक्तम् । आग्रहं मूलारूढं कर्तुं तदा चेत्येतत्तदर्थतया व्याख्याति **तदा चेति** । निर्गुणत्वमुपजीव्य परकीयं लक्षणं, तटस्थत्वोपपादने प्रकारान्तरमपि, निर्गुणत्वनिरासेनैव निरस्तमिति न तदनिरासप्रयुक्तन्यूनतेत्याशयेनाह **एतेनेति** । नानाविधकार्यक्रियावेशात्मत्वं नानाविधकार्यगोचरक्रियाऽऽश्रयत्वमित्यर्थः । प्रकारान्तरेण परकीयं तटस्थत्वोपपादनं च सर्वज्ञत्वादीनां सोपाधिकत्वमाशङ्क्य ज्ञानादिप्रतिबन्द्या निरसिष्यमाणत्वात् प्रतियोगिसापेक्षस्याप्यैक्यस्य ब्रह्मस्वरूपतायास्तन्मते वक्ष्यमाणत्वाच्च तन्न्यायेन निरस्तप्रायमित्याह **यच्चोक्तमिति** । 'सर्वापेक्षतया सर्वज्ञत्वमित्येव तन्न हि । इति चेच्चेतनत्वं च ज्ञत्वं न ज्ञेयवर्जितम्' इत्याद्युत्तरत्रेत्यर्थः।





**स०व्र०— परस्मै रुचितमिति**। 'रुच्यर्थानां प्रीयमाणः' इति चतुर्थी। **तदुत्तरत्र निराकरिष्यत इति**। 'अन्यापेक्षा यदि स्युष्टे सत्तैवं देशकालगा' इति भक्तिपादे निराकरिष्यते इत्यर्थः।

**विठ्ठल०— सोल्लुण्ठं** = सापहासम्। **परस्मै रुचितमिति**। रुच्यर्थानां प्रियमाण इत्यनेन चतुर्थी। **तटस्थत्वमुक्तमिति**। तदप्यनेन निरस्तमिति वेदितव्यमिति सम्बन्धः। एतत्कुत्रोक्तमित्यतस्तद्वाक्यं पठति **न हीति**। नानाविधकार्यविषय(यि)का या क्रिया तत्प्रवेशात्मत्वं या च तत्कार्यजननशक्तिः तदात्मकत्वरूपं लक्षणमित्यर्थः। **उत्तरत्रेति**। अतोऽनन्तगुणं ब्रह्मेत्यत्र ब्रह्मणस्सविशेषताप्रतिपादनेन निराकरिष्यत इत्यर्थः।

**चषकः— परस्मै रुचितमिति**। 'रुच्यर्थानां प्रीयमाणः' रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः सम्प्रदानं स्यात्। हरये रोचते भक्तिरित्युदाहरणम्। तद्वदिदमपि बोध्यम्। **क्रियावेशात्मकत्वं** क्रियाश्रयत्वम्। **प्रसवशक्त्यात्मकत्वं** तदुत्पादशक्त्याश्रयत्वम्। एतेन कारणत्वमुपादानतारूपमिति ध्वन्यते। **विशेषणं** स्वरूपम्। **प्रपञ्चोपाधित्वेन** मिथ्याभूतप्रपञ्चघटितत्वेन। **निरुपाधिकेति**। मिथ्याभूतपदार्थाघटितेत्यर्थः। उत्तरत्र भक्तिपादे 'अन्यापेक्षा यदि स्युष्टे' इत्यादिना सत्ताया अपि देशकालरूपपरापेक्षतया ब्रह्मस्वरूपान्तर्गतत्वं न स्यादिति निराकरिष्यत इत्यर्थः।

**॥ इति 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'निर्गुणत्वनिराकृततायां'**
**'इतोऽपि निर्गुणत्वोक्तौ तद्वादिनामासुरत्वं स्यात्' ॥**
**॥ इति मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ 'निर्गुणत्वस्यापि निराकृतता' ॥**

* * *

**॥ अथ 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषानङ्गीकारे लक्ष्यलक्षणव्यवहारानुपपत्तिः' ॥**
**॥ सा चादौ महावाक्यार्थानुपपत्तेः ॥**

**३७ सु०— यदपि गुणगुणिनोरन्यत्वानन्यत्वाभ्यामनिरूपणादिति लक्षणस्य तटस्थत्वादिसिद्धये परेणोक्तं तद्दूषयितुमनुवदति लक्ष्यलक्षणयोरिति।**

## अनु०— लक्ष्यलक्षणयोर्भेदोऽभेदो वा यदि वोभयम्।

**यदत्र जगज्जन्मादिकारणत्वं मु(ख्य)खतो लक्षणमभिहितं, सर्वज्ञत्वादिसमस्तगुणवत्त्वं चाभिप्रायव्या(प्रा)प्तमित्युक्तम्, तदुभयमपि लक्षणं लक्ष्याद्ब्रह्मणो भिन्नमभिन्नं भिन्नाभिन्नं वा।**





**नाद्यः । मेरुमन्दरवल्लक्ष्यलक्षणभावस्य गुणगुणिभावस्य चानुपपत्तेः । सम्बन्धसद्भावान्नेति चेत् (न) तस्यापि सम्बन्धिभ्यामन्यत्वानन्यत्वाभ्यामनिरूपणात् ।**

**न द्वितीयः । अनेकैरभिन्नस्य ब्रह्मणोऽप्यनेकत्वापत्तेः । तथा चैकमेवेति श्रुतिविरोधात् ॥ लक्षणानां वैकत्वमापद्येत । तथा च 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतेः पुनरुक्तिदोषप्रसङ्गः ॥ लक्ष्यलक्षणभावो गुणगुणिभावश्चाभेदे नोपपद्यते । प्रसिद्धेन ह्यप्रसिद्धं लक्षणीयम् । न च तदेव तदैव प्रसिद्धमप्रसिद्धं चेति युक्तम् ॥ गुणी च गुणवान् भवति । न च स्वेनैव तद्वान् भवति ।**

**न तृतीयः । परस्परविरोधात् ।**

**अतोऽशक्यनिरूपणत्वान्नेदं ब्रह्मस्वरूपान्तर्गतं लक्षणम्, किन्तु तटस्थमेव । न च तटस्थेन तेन ब्रह्मणोऽद्वितीयत्वभङ्गः, यद्रजतमित्यभात्सा शुक्तिरितिवन्मिथ्याभूतेनापि प्रपञ्चकारणत्वेनोपलक्षणयोगादिति ।**

**परि०— इत्युक्तमिति** । स्वरूपलक्षणवादिना सिद्धान्तिनोक्तमित्यर्थः । **अन्यत्वानन्यत्वाभ्यामनिरूपणादिति** । अन्यत्वे सम्बन्धसम्बन्धिनोः सम्बन्धान्तरेण भाव्यम् । तत्राप्येवमित्यनवस्थानात् । अनन्यत्वे सम्बन्धसम्बन्धित्वव्याघातादिति भावः । **पुनरुक्तीति** । 'यतो वा' इति श्रुतौ उक्तजन्मस्थितिभङ्गरूपलक्षणत्रयस्याप्येकत्वेन 'इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' इत्येषामेकार्थत्वादिति भावः । **इतिवदिति** । यज्जगज्जन्मादिकारणत्वेन प्रतीतं तद्ब्रह्म इत्येवंरूपेण मिथ्याभूतकारणत्वेनोपलक्षणसम्भवात्; इत्यर्थः ।

**यादु०— तटस्थत्वादीति** । आदिपदेन मिथ्यात्वसङ्ग्रहः । **तद्दूषयितुमिति** । अनेन मूले गुणगुणिनोरित्युपलक्षणया ग्राह्यमिति सूचयति । यद्यपि विवरणकारेण गुणगुणिभावानुपपत्तिरेव दर्शिता न लक्ष्यलक्षणभावानुपपत्तिः; तथाऽपि सा तदभिप्रेतेति वा, तदीयैः कैश्चिदुक्तेति वाऽत्रानूदितेति द्रष्टव्यम् ।

**वं०प०— मेरुमन्दरवदिति** । अत्यन्तं भिन्नयोः सम्बन्धाभावादिति भावः । **पुनरुक्तीति** । सर्वेषां लक्षणानामेकत्वात् यतो वेत्यनेनोक्तं सृष्टिकर्तृत्वं, येन जातानि जीवन्तीत्यादिनोक्तं स्थितिकर्तृत्वादिकं चैकमेवेति पुनरुक्तिरित्यर्थः । **तटस्थेनानेनेति** । तटस्थस्यापि प्रपञ्चकारणत्वरूपलक्षणस्य सत्यत्वादिति भावः । **मिथ्याभूतेनापीति** । यन्मिथ्याभूतजगज्जन्मादिकारणत्वेनोपलक्षितं तद्विचार्यमाणे ब्रह्मैवेत्यर्थकरणेन तटस्थलक्षणस्यापि मिथ्यात्वेन सत्यत्वानङ्गीकारान्नाद्वितीयत्वभङ्ग इत्यर्थः ।





**आनन्दः— तस्यापीति** । सम्बन्धस्यापीत्यर्थः । सम्बन्ध्यन्यत्वे मेरुमन्दरयोरिव तत्सम्बन्धिसम्बन्धभाव एवानुपपन्नः । अनन्यत्वे एकस्यैव सम्बन्धित्वं सम्बन्धत्वं च विरुद्धमेव स्यादित्यर्थः ।

**श्रीनिधि०— अभिप्रायव्याप्तमिति** । अभिप्रायं प्रति व्याप्तम् । एतदुपपाद्यत्वेनाभिप्रेतमिति यावत् । **तस्यापि सम्बन्धिभ्यामन्यत्वानन्यत्वाभ्यामिंति** । यदि सम्बन्धस्य सम्बन्धिभ्यामन्यत्वेऽपि सम्बन्धत्वम् । तर्हि मेर्वादिकमपि घटपटादि सम्बन्धस्स्यात् । **सम्बन्धसद्भावान्नेति चेदिति** । अनन्यत्वे स्वरूपमात्रे मुक्तं स्यात् । सम्बन्धसद्भावातिरिक्तमापद्येत । भिन्नभिन्नत्वविरोध इति द्रष्टव्यम् । अद्वितीयत्वभङ्गो न च कुतः तटस्थस्य जगत्कारणत्वादेर्मिथ्यात्वादिति योज्यम् । तर्हि कथमुपलक्षणत्वम् । न हि मिथ्याभूतस्य तथात्वमुपपद्यत इत्यत आह **यद्रजतमित्यभादिति** । प्रकृते यज्जगत्कारणमित्यभात्तद्ब्रह्म द्वितीयशून्यमित्यर्थः ।

**वा०चं०—** तटस्थत्वादीत्यादिपदेनानिर्वाच्यत्वग्रहणम् । **तदुभयमपीति** । 'लक्ष्यलक्षणयोः' इत्यत्र लक्षणपदेन न केवलं जन्मादिकारणत्वस्यैवोपादानं किन्तु 'अतोऽनन्तगुणम्' इत्युत्तरग्रन्थानुसारेण समस्तगुणत्वस्यापीति भावः । एतदभिप्रायेणैव पूर्वमपि तथाऽभिप्रायकथनमिति द्रष्टव्यम् । ननु तटस्थलक्षणस्यापि सत्यत्वेऽद्वैतहानिः, मिथ्यात्वेऽनेन व्यावृत्त्यसिद्ध्या तदुक्तिवैयर्थ्यापत्तिः; इत्यतः पूर्वमनभ्युपगमेनापाकृत्य मिथ्याभूतस्यापि व्यावर्तकत्वं दृष्टान्तोक्त्या सम्भावयति **न चेत्यादिना** ।

**वा०र०— पूर्वमपि तथेति** । अन्तःसमुद्रगमित्येतद्भाष्यव्याख्यावसरे अनेन तु लक्षणेन लक्षिते ब्रह्मणि समस्तगुणपूर्णत्वमपि प्रधानलक्षणं सिद्ध्यतीति पूर्वमुक्तत्वादिति भावः । **अनेकैरिति** मूलम् । तदुभयमिति लक्षणद्वयस्यैव प्रकृतत्वेऽपि तदन्तर्गतलक्षणानेकत्वाभिप्रायेणानेकैरित्युक्तम् । एवं लक्षणानामित्यपि । **पूर्वमनभ्युपगमेनेति** । पूर्वे सत्यत्वपक्षमित्यर्थः । द्वितीयेऽपि मिथ्याभूतस्येति योज्यम् ।

**स०व्र०— तस्यापीति** । यदि तस्य सम्बन्धिभ्यामन्यत्वं तर्हि लक्ष्यलक्षणभावाद्युपपत्तिः । अभिन्नत्वे तस्य स्वरूपत्वेन पुनस्तदनुपपत्तिरेवेति भावः ।

**विठ्ठल०— यत्परेणोक्तमिति** । स्वग्रन्थ इति शेषः । लक्षणानां वा इति सर्वेषामपि एकाभिन्नत्वस्याङ्गीकृतत्वात् यद्येनाभिन्नं तदभिन्नस्य तदभिन्नतेति न्यायादिति भावः । **पुनरुक्तीति** । यतो वा इमानि भूतानि जायन्ते इत्यपेक्षया येन जातानि जीवन्ति इत्याद्युत्तरवाक्योक्तलक्षणानां भेदाभावादिति भावः । द्वितीये दूषणान्तरमाह **लक्ष्येति** । गुणगुणिभावानुपपत्तिं विशदयति **गुणी चेति** । **इतिवदिति** । यज्जगज्जन्मादिकारणत्वेन प्रतीतं तद्ब्रह्मेत्येवंरूपेण मिथ्याभूतकारणत्वेनोपलक्षणसम्भवादित्यर्थः ।





**३८　सु०— एवमनूद्य निराकर्तुमारभते इति पृष्ट इति ।**

## अनु०— इति पृष्टे

**वक्तव्यमिति शेषः ॥ पृष्ट इत्युपलक्षणम् । दूषिते चेत्यपि ग्राह्यम् । दूषणानामत्यन्तासम्बद्धत्वात्पृष्ट इत्येवोक्तम् ॥ किं वक्तव्यमिति ।**

**वं०प०—** इति पृष्टे, 'वक्तव्यमि'त्युक्तम् । तत्र किं वक्तव्यमित्याशङ्क्योत्तरमाह **किं वक्तव्यमितीत्यादिना** ।

**आनन्दः—** साकाङ्क्षत्वात् शेषपूरणेन व्याख्याति **वक्तव्यमिति शेष इति** । ननु दूषित इत्येव वक्तव्ये पृष्ट इत्युक्तम् । तस्योपलक्षणत्वेन सूचनमयुक्तमित्यत आह **दूषणानामिति** । ननु लक्षणं लक्ष्याद्भिन्नमभिन्नं वेत्यादिविकल्पेन लक्ष्यलक्षणभावे दूषिते तत्परिहारः कर्तव्यः स च न क्रियते किन्त्वैक्यनिराकरणं क्रियते तच्च प्रकृतानुपयुक्तम् । उक्तशङ्कापरिहाराभावादित्यत आह **किं वक्तव्यमिति** ।

**वा०चं०—** दूषणस्यापि परेणोक्तत्वात्प्रश्नमात्रे प्रतिबन्दीग्रहणानुपयोगाच्च भाष्येऽनुवादे न्यूनतापरिहाराय पृष्ट इत्युपलक्षणतया व्याख्याति **पृष्ट इति** । लक्षणाप्रयोजनमाह **दूषणायां चेति** ।

**विठ्ठल०—** **किं वक्तव्यमि**तीत्यतःपरम् इत्याकाङ्क्षायामिति शेषः । तस्य च जगज्जन्मेत्यादि वक्तुमित्यनेन सम्बन्धः ।

**३९　सु०— तत्र जगज्जन्मादिकारणत्वादीनां धर्माणां भेदाभावेऽपि विशेषस्य सद्भावात्तद्बलेन सर्वमुपपद्यत इति वक्तुं निर्भेदवस्तुनि परेण विशेषस्यानङ्गीकृतत्वात् घटादीनां च मिथ्यात्वेनाङ्गीकृतानामनुदाहरणत्वात्सत्य एव वस्तुन्यसावुपपादनीय इति मन्वान आह तदेति ।**

## अनु०— तदैक्यस्य गतिरेव न विद्यते ।

**यद्येवं पृष्ट्वा लक्षणं दूषयसि तदैक्यस्य गतिर्निरूपणप्रकारो न विद्यते ।**

**अयमभिप्रायः । द्विविधं हि वाक्यं मायावादिना तत्त्वावेदकमङ्गीकृतम् । एकं जीवब्रह्मणोरैक्यपरं महावाक्यम्, यथा तत्त्वमसीत्यादि । अपरं तत्स्वरूपपरमवान्तर-**





**वाक्यम्, यथा सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि । तदुभयमपि सविशेषाभिन्नवस्तुनिष्ठं परेणाङ्गीकरणीयम् (अङ्गीकार्यम्), गत्यन्तराभावात् ।**

**परि०— इति वक्तुमिति**। 'अतोऽनन्तगुणं ब्रह्म निर्भेदमपि भण्यते' इत्यनेन वक्तुमित्यर्थः। अस्फुटत्वादाह **अयमभिप्राय इति**। नास्तीतीतिशब्दस्येत्ययमभिप्राय इत्यन्वयः।

**वं०प०— निर्भेदे वस्तुनि** ब्रह्मणि। **वस्तुनिष्ठं** वस्तुप्रतिपादकम्।

**आनन्दः—** इदं तावद्वक्तव्यमित्याह **तत्र जगदिति**। तथा चैवंरूपपरिहारं वक्तुमयमुपोद्घात इति भावः। ऐक्यस्य गतिर्न विद्यत इत्ययुक्तम्। ऐक्यस्य प्रसिद्धगमनानङ्गीकारादित्यतो व्याख्याति **यद्येवमिति**। नन्वेवमपि ऐक्यनिरासप्रकारः विशेषसमर्थनं च कथं कृतमित्यत आह **अयमभिप्राय इति**। **वस्तुनिष्ठं** वस्तुप्रतिपादकम्।

**श्रीनिधि०— अनुदाहरणत्वादिति**। न हि यो धर्मिण्येव विप्रतिपद्यते तं प्रति तत्र धर्मव्युत्पादनं युज्यत इत्याशयः।

**वा०चं०—** ननु परेण विकल्प्य दूषणे कृतेऽन्यतमपक्षाभ्युपगमेन पक्षान्तरप्रतिपादनेन वा समाधानं वक्तव्यम्। प्रतिबन्दीग्रहणं त्वसङ्गतम्। न च तत्रत्यप्रकारेण स्वप्रमेयसमर्थनाय प्रतिबन्दीग्रहणमिति वाच्यम् । तन्मतस्य दुष्टत्वे वा प्रकारान्तरेण तत्समाधाने वा स्वमतस्य दुष्टत्वापरिहारात् । न च भेदाभावेऽपि विशेषबलात्सर्वमप्युपपद्यत इति स्वमतेन समाधानमिति वाच्यम् । तर्हि तस्यैव वक्तव्यत्वेन प्रतिबन्दीग्रहणानुपपत्तेः। प्रतिबन्दीग्रहणे वा प्रसिद्धघटादिपरित्यागेनैक्यपर्यन्तधावनानुपपत्तेरित्यतः 'अतोऽनन्तगुणम्' इत्यादिना भेदाभावेऽपि विशेषबलात्सर्वमुपपद्यत इति स्वमते समाधानस्य वक्ष्यमाणत्वात् । तस्य च विशेषस्य परेण क्वाप्यनङ्गीकारेण प्रतिबन्दीमुखेनैवाङ्गीकारयितव्यत्वात् । परस्याप्येतदनुपपत्तिपरिहारकप्रकारान्तराभावात्स्वमतदुष्टतायाश्च परेणाङ्गीकर्तुमशक्यत्वात्परमुखेनैव विशेषमानेतुं प्रतिबन्दीग्रहणस्यावश्यकत्वाद्घटादीनां चानिर्वाच्यतया परेणाभ्युपगतानां भिन्नत्वादिनाऽनिरूपणीयत्वस्य परं प्रत्यनिर्वाच्यतासाधकत्वेन तदनुपपत्तिपरिहारकविशेषाकल्पकत्वेन घटादेरुदाहरणतानुपपत्तेर्युक्तमैक्यपर्यन्तधावनम्; इत्याशयेन वक्ष्यमाणं साक्षात्स्वपक्षसमाधानं सूचयन्नेव प्रतिबन्दीप्रतिपादकोत्तरवाक्यतात्पर्यमाह **तत्रेति** । **निर्भेदेति** । भेदाभावे तत्कार्यनिर्वाहकविशेषस्य परेणानङ्गीकृतत्वादित्यर्थः । यदिवोभयं तदेत्यस्यार्थं वदन्नेव प्रकृतोपयोगाय गतिशब्दं निरूपणप्रकारपरतया व्याख्याति **यदीति**। अत्रैक्यस्येति सामान्योक्तावप्युत्राभेदे, शास्त्रप्रतिपाद्यत्वाभावस्य त्वमसीत्यंशवैयर्थ्यस्य भेदे, शास्त्रातत्त्वावेदकत्वस्य सत्यादिपदानां पर्यायत्वस्य पदान्तरवैयर्थ्यस्येत्येवमादीनां वाक्यनिष्ठानामेव दोषाणां वक्ष्यमाणत्वान्महावाक्यावान्तरवाक्यार्थतया पराभ्युपेतैक्यसत्यत्वादेरेव चोपादानात् । महावाक्यावान्तरवाक्यै-





रैक्यसत्यत्वादिधर्मिणं सिद्धवत्कृत्य 'एकधैव' इत्यादिश्रुत्या चैक्यादेर्ब्रह्माभेदं च सिद्धवत्कृत्य तत्र चानुपपत्तीरभिधाय तदुभयान्यथाऽनुपपत्त्यैव च विशेषस्य परमुखेनानेयत्वादन्यथाऽनुपपत्त्या भेदादिपक्षवदैक्यादौ तदभेदपक्षे च परेण त्यक्ते तन्मुखेनैव विशेषस्यानेतुमशक्यत्वाच्चोत्तरग्रन्थाद्यनुसारेण वाक्यपरतामैक्यादिशब्दस्याभिप्रेत्य भाष्याभिप्रायमाह **अयमभिप्राय इति** ।

**वा०र०— समाधानं सूचयन्नेवेति** । वक्ष्यमाणसमाधानस्येति वक्तुमिति सूचनेऽपि प्रतिपादनाभावादिति भावः । **भेदाभाव इति** । भेदाभावेऽपि तत्कार्येति पाठः । भेदाभाव इत्येतन्निर्भेदवस्तुनीत्यतो अर्थलब्धस्यानुवादः । यद्यपि विशेषस्येत्येव प्रकृतानुसारेण वाच्यम् । तथापि सर्वे तद्बलादुपपद्यत इति प्रकृतभेदकार्यनिर्वाहकत्वमधिकमप्युक्तम् । यद्वा भेदस्याभावो यस्मिन्निति बहुव्रीह्याश्रयणे वा भेदाभावो विद्यते अस्मिन्निति मत्वर्थाच्प्रत्ययान्तत्वाश्रयणे वा भेदाभावशब्देन निर्भेदवत्वे वोक्तं भवति । तत्र च विशेषो भेदकार्यनिर्वाहकतयैवाङ्गीकर्तव्यत्वेन प्रकृत इत्यधिकोक्तिरिति ज्ञेयम् । **ऐक्यस्येति सामान्येति** । तत्त्वमसीत्यादिमहावाक्यार्थभूतजीवब्रह्मैक्यसमर्थकपदाभावादिति भावः । अत्र च सामान्यशब्देन विशेषव्यावर्तनात्सत्यत्वादेरधिकस्याप्युक्तिर्व्यावर्तिता । उपलक्षणा वा तदर्थमाश्रयणीया । उत्तरत्राभेद इत्यादि हेतूनां मध्ये आद्यं त्रिकं पराभिप्रेतैक्योपादानसदेकम् । उत्तरद्वयं सत्यत्वादेरप्युपलक्षणयोपादानस्येति विवेकः । सामान्योक्तावपीत्यस्य ऐक्यसत्यत्वादेरेव चोपादानादित्युत्तरेण सम्बन्धः । वाक्यनिष्ठानामेव दोषाणां कथनादिति स्वरसः पाठः । वक्ष्यमाणत्वादिति पाठेऽपि कथनादित्यत्रैव तात्पर्यम् । **उपादानादिति** । ऐक्यस्येति वचनेन जीवब्रह्मैक्यस्योपादानादुपलक्षणया च सत्यत्वादेरुपादानान्न यत्किञ्चिदैक्यादिकमुच्यत इत्यर्थः । **धर्मिणं सिद्धवत्कृत्येत्यादि** । उभयसिद्धवत्काराभावे अन्यथेत्युत्तरत्रानुपपत्तेः वक्ष्यमाणत्वात् तदावश्यकत्वम् । अभिन्नेऽपि विशेषोऽयमित्युत्तरभाष्यमूले स्पष्टमिदम् । **अन्यथाऽनुपपत्त्येति** । अन्यथेत्यस्यानेतुमशक्यत्वादित्युत्तरेणान्वयः । प्रकारान्तरेणेत्यर्थकान्यथेत्यस्यैव विवरणमनुपपत्त्या भेदादीत्यादि तन्मुखेनैवेत्यन्तम् । यथैक्यसत्यत्वादौ ब्रह्मभेदाभेदपक्षयोरनुपपत्त्युक्तौ मायिना तत्पक्षद्वयत्यागः क्रियते । एवमैक्यादौ ब्रह्माभेदपक्षस्यापि तत्र प्राप्तानुपपत्त्या त्यागश्चेत् तेन कृतस्तर्हि तन्मुखेन विशेषस्यानेतुमशक्यत्वादित्यर्थः । उत्तरग्रन्थादीत्यादिशब्देन विशेषानयनपरिग्रहः । **वाक्यपरतामिति** । तद्वाक्यार्थभूतैक्यादिवाचकपदेन ऐक्यादिप्रतिपादकवाक्यस्यैव लक्षणीयत्वादिति भावः ।

**विठ्ठल०—** 'ननु सत्यज्ञानादिकमपि सत्यमेव, तथा च तद्विहायैक्यमेव किमर्थमुपपाद्यत', इत्याशङ्कां परिहरन्नेतेन विशेषसिद्धिप्रकारं दर्शयितुमाह **अयमभिप्राय इति** । तथा च सत्यज्ञानादिकेऽप्यसावुपपादयिष्यत एव । ऐक्यस्य महावाक्यप्राप्तत्वेन प्राधान्यात् प्रथमतस्तत्र निरूपणं, सत्यज्ञानादिकस्यावान्तरवाक्यप्राप्तत्वेन अप्राधान्यात् पश्चात्तन्निरूपणमिति भावः । अत एव वक्ष्यति विशेषानभ्युपगमे महावाक्यानुपपत्तिमभिधाय अवान्तरवाक्येऽपि तामतिदिशतीति ।

४० सु०— तत्र तावदाद्यस्य गत्यन्तरं नास्ति कथमिति चेत् उच्यते । तत्त्वमसीत्यादिवाक्यप्रतिपाद्यमैक्यं किं तत्पदलक्षिताच्चैतन्यादभिन्नमुत भिन्नमथ भिन्नाभिन्नमिति वाच्यम्।

परेणाङ्गीकृतत्वेन प्राधान्यादभेदपक्षं तावदादौ निराकरोति **ऐक्याभेद इति** ।

## अनु०— ऐक्याभेदे न शास्त्रेण ज्ञेयं तत्स्वप्रकाशतः ।

ऐक्यस्य चैतन्यस्वरूपाभेदेऽङ्गीक्रियमाणे तदैक्यं तत्त्वमसीत्यादिना शास्त्रेण प्रतिपाद्यं न स्यात् । कुतः स्वरूपस्य स्वप्रकाशत्वेन नित्यसिद्धत्वात् । तन्मात्र(स्वरूप)-त्वाच्चैक्यस्य । न हि प्रकाशमानमेव शास्त्रप्रतिपाद्यम् । वैयर्थ्यप्रसङ्गात् ॥ किञ्चावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वं परेणाङ्गीकृतं तथा च स्वप्रकाशचैतन्यात्मकं (च) शास्त्रप्रतिपाद्यं चेति व्याहतम् ॥ अथ शास्त्रं नैक्यं प्रतिपादयति किन्तु भेदभ्रमं निराकरोति; यथोक्तं सिद्धं तु निवर्तकत्वादिति । न । ऐक्ये प्रकाशमाने भेदभ्रमस्यैवानवकाशात्, तत्त्वाप्रतिपत्तेर्भ्रान्तिहेतुत्वात् । ऐक्यं न प्रकाशत इति चेन्न, स्वप्रकाशचैतन्यमात्रत्व-विरोधात् । अविद्यावशात्स्वरूप(प्रकाश)स्याप्यनवभास इति चेन्न सर्वथाऽप्यनवभास-प्रसङ्गात् । तथा चाधिष्ठानानवभासेऽविद्यारोपस्याप्यनुपपत्तेः, न ह्यखण्डे वस्तुन्यंशतो-ऽविद्यावरणं सम्भवति । असम्भवनीयावभासचतुराऽविद्येति चेत्, तर्हि सा जडेष्वेव कुतो नाङ्गीकार्या, अनुपपत्तेस्तुल्यत्वात्, तथा च 'सा न जडेषु वस्तुषु' इत्ययुक्तम्।

'न शास्त्रेण ज्ञेयं तदि'त्युपलक्षणम्, 'शास्त्रप्रतिपाद्यत्वेऽपि तत्पदेनैव सिद्धत्वात् त्वमसीति व्यर्थमि'त्यपि द्रष्टव्यम् ॥ तदित्येतावता न भेदभ्रमनिवृत्तिः, अतस्त्वमसीति सार्थकमिति चेन्न । तत्पदेनै(वै)क्यस्य प्रतिपादितत्वादैक्यप्रतीतौ च भेदभ्रमस्य निरस्त-त्वात् । अन्यथा कदाऽप्यनिवृत्तिप्रसङ्गात् ॥ तत्पदेनैक्यस्याप्रतिपादितत्वे तदुपलक्षित-चैतन्यमात्रत्वानुपपत्तिः।

ननु कथं तर्हि सोऽयं देवदत्त इति वाक्यम्। अत्रापि विशेषानङ्गीकारेऽनुपपत्तिरेवेति।

**परि०— तावदिति** । अवान्तरवाक्यस्य गतिर्नेति सत्यज्ञानादिकेऽप्येवमित्यत्र वक्ष्यमाण-त्वात्तावच्छब्दः । ननु स्वकर्मकप्रकाशात्मकत्वरूपस्वप्रकाशत्वं न परेणाङ्गीकृतम् । येनायं दोषः





स्यादित्यतः तद्रीत्यापि दोषोक्तिपरतया व्याचष्टे **किञ्चावेद्यत्व इति** । **सिद्धं त्विति** । ऐक्यस्य स्वप्रकाशात्मस्वरूपत्वेन सदा प्रकाशमानत्वेऽपि शास्त्रस्योपादेयत्वं सिद्धमेव । शास्त्रस्य भेदभ्रमनिवर्तकत्वादित्यर्थः । शास्त्रस्य भेदभ्रमनिवर्तकत्वेनोपादेयताशङ्कां निराह **नेति** । **स्वरूपस्यापीति** । ऐक्यस्येति योज्यम् । **सर्वथाऽप्यनवभासेति** । आत्मनोऽप्यनवभासप्रसङ्गादित्यर्थः । **अविद्याऽऽरोपस्यापीति** । तथा चाविद्यावशादैक्यानवभासोक्तिरयुक्ता स्यात् । अविद्याया एवानुपपत्तेरिति भावः । नन्वात्मस्वरूपांशेऽविद्यावरणं नास्ति किन्त्वैक्यांश एवेत्यत आह **न हीति** । **अनुपपत्तेस्तुल्यत्वादिति** । अधिष्ठानानवभास इत्यादिनोक्ताया इत्यर्थः । असम्भावनीयेत्याद्युक्तपरिहारस्यापि तुल्यत्वादित्यपि ज्ञेयम् । **इत्ययुक्तमिति** । इति यत्त्वयोक्तं तदयुक्तमित्यर्थः । **तत्पदेनैक्यस्य प्रतिपादितत्वादिति** । तत्पदबोध्यचैतन्यस्वरूपत्वादैक्यस्येति भावः । **तदुपलक्षितेति** । तल्लक्षणया तत्पदबोधितेत्यर्थः । **ननु कथमिति** । तस्मिन् वाक्ये स इति तत्पदेनैव देवदत्तस्वरूपस्य तदभिन्नस्यैकस्य च बोधितत्वेन शिष्टपदवैयर्थ्यापत्तिरिति भावः । **अत्रापीति** । सोऽयमितिवाक्यबोध्याभेदस्थलेऽप्यैक्यस्य पिण्डस्य च सविशेषाभेदानङ्गीकार इत्यर्थः ।

**गु०दी०— सिद्धं तु निवर्तकत्वात्** इत्यत्र ऐक्यस्य शास्त्राविषयत्वेऽपि शास्त्रस्य सविषयत्वं सिद्धम् । **निवर्तकत्वात्** भेदभ्रमनिवर्तकत्वादित्यर्थः ।

**यादु०— अवेद्यत्वे सतीति** । अत्र घटादावतिव्याप्तिपरिहारायावेद्यत्वे सतीति विशेषणम् । अतीन्द्रियव्यावृत्तयेऽपरोक्षव्यवहारेति विशेष्यम् । **सिद्धं तु निवर्तकत्वादिति** । शास्त्रस्य सार्थक्यं सिद्धमेव । भेदभ्रमनिवर्तकत्वादिति तद्वाक्यार्थः । **स्वप्रकाशचैतन्यस्यापीति** । स्वप्रकाशचैतन्याभिन्नस्यापीत्यर्थः । **सर्वथेति** । चैतन्यस्यापीत्यर्थः । ननु जडेषु प्रकाशप्राप्तेरेवाभावेन प्राप्तप्रकाशप्रतिबन्धरूपावरणकृत्याभावान्नाविद्या तत्राङ्गीकार्येत्यत आह **अनुपपत्तेरिति** । यदि प्रकाशप्राप्तिस्तर्ह्यैक्यस्यापि प्रकाशेन तत्प्रतिबन्धानुपपत्तिः । यदि च प्रतिबन्धः सर्वस्यापि प्रतिबन्धेन प्रकाशप्राप्त्यभाव इति प्राप्तप्रकाशप्रतिबन्धरूपावरणकृत्याभावरूपानुपपत्तेश्चेतनेऽपि तुल्यत्वादित्यर्थः । यद्वा । अनुपपत्तिपदेन तत्परिहारो लक्ष्यते । तथा चासम्भावनीयावभासचतुराऽविद्येति परिहारस्य जडेष्वपि तुल्यत्वादित्यर्थः । नन्वेवं सोऽयं देवदत्त इति वाक्येऽपि तत्पदेनैव देवदत्ताभिन्नस्यैक्यस्य सिद्धत्वादयमित्यादिपदवैयर्थ्यप्रसङ्ग इत्याशयेन शङ्कते **ननु कथमिति** ।

**वं०प०— तत्त्वाप्रतिपत्तेरिति** । वस्तुनो यत्तत्त्वं तदप्रतीतेरित्यर्थः । तथा चैक्याप्रतिपत्तौ किल भेदभ्रमो वक्तव्यः । सा नास्तीत्याशयः । **स्वरूपस्यापीति** । चैतन्यस्वरूपस्याप्यैक्यस्येत्यर्थः । **सर्वथाऽपीति** । चैतन्यस्यापीत्यर्थः । इष्टापत्तिरिति चेत्तत्राह **तथा चेति** । नन्वैक्यस्य चैतन्याभेदेऽपि चैतन्यांशेऽविद्या नाऽऽवरणं





किन्नामैक्यांश एवेत्युच्यत इत्यत आह **न हीति** । **अखण्डे** निरंशे । **अन्यथेति** । ऐक्यप्रतीतावपि भेदभ्रमानिरास इत्यर्थः । **तदुपलक्षितेति** । तत्पदप्रतिपाद्यसार्वज्ञाद्युपलक्षितेत्यर्थः ।

**आनन्दः— आद्यस्येति** । तत्त्वमसीत्यादिमहावाक्यस्य सविशेषभिन्नवस्तुविषयत्वं विना गत्यन्तरं नास्तीत्यर्थः । नन्वभिन्नपक्षस्य भिन्नाभावरूपत्वेन तत्सापेक्षत्वात् भिन्नत्वपक्ष एवादौ विकल्पनीय इत्यत आह **परेणेति** । परेणाङ्गीकृतत्वेन तत्सापेक्षमादौ निर्दिष्टं अभेदपक्षं तावन्निराकरोतीत्यन्वयः । नन्वैक्याभेद इत्ययुक्तम्, ऐक्यस्य स्वेन साकमभेदसत्त्वमात्रेण शास्त्राज्ञेयत्वस्य वक्तुमशक्यत्वात् । किं चैवमैक्याभेदस्य सिद्धत्वं प्रतीयते तदपि चायुक्त इत्यतो व्याचष्टे **ऐक्यस्येति** । कुतो नेत्यत्राह **वैयर्थ्येति** । ऐक्यस्य शास्त्राज्ञेयत्वेन स्वप्रकाशत्वस्य प्रकारान्तरेण हेतुत्वं घटयति **किञ्चेति** । **तथा चेति** । स्वप्रकाशत्वे अवेद्यत्वस्य शास्त्रप्रतिपाद्यत्वे वेद्यत्वस्य चापहत्या व्याहतिरित्यर्थः । **सिद्धं त्विति** । शास्त्रस्यारम्भणीयत्वं सिद्धं भेदभ्रमनिवर्तकत्वादित्यर्थः । स्वप्रकाशात्माभिन्नत्वे शास्त्रस्य सिद्धत्वाद्विषयाभावेन शास्त्रवैयर्थ्ये शङ्किते सप्रयोजनत्वेनावैयर्थ्यकथनमयुक्तम् । तावतापि विषयाभावप्रयुक्तानारम्भणीयत्वशङ्काया अपरिहारादिति दूषणे सत्येव दूषणान्तरमाह **ऐक्य इति** । **तत्त्वाप्रतिपत्तेरिति** । विशेषादर्शनस्येत्यर्थः । **सर्वथापीति** । एवं च चैतन्यस्यापि अवभासो न स्यादिति भावः । अस्त्वेवमित्यत आह **तथा चेति** । अधिष्ठानावभासस्याविद्यारोपकारणत्वादिति भावः । ननु चैतन्यांशेऽविद्या नावरणम् । किन्तु ऐक्यांशे । तथा च चैतन्यावभाससत्त्वाद्युज्यते अविद्यारोपः । ऐक्यप्रकाशाच्च सविषयत्वमपि युज्यत इत्यत आह **न ह्यखण्डे वस्तुनीति** । ननु जडे प्रकाशप्रसक्तेरेवाभावात्कथमावरणाङ्गीकार इत्यत आह **अनुपपत्तेरिति** । **अन्यथेति** । ऐक्यप्रतीतेर्भेदभ्रमनिरासकत्व इत्यर्थः । **ननु कथमिति** । तथा चात्रापि स इत्यनेनैव ऐक्यप्रतिपादनसम्भवादयं देवदत्त इत्यस्य वैयर्थ्यं स्यादित्यर्थः ।

**श्रीनिधि०— तत्त्वाप्रतिपत्तेरिति** । अधिष्ठानयाथात्म्याज्ञानस्येत्यर्थः । **चतुरा** । समर्था । **न भेदभ्रमनिवृत्तिरिति** । त्वंपदार्थधर्मिक-तत्पदार्थप्रतियोगिक-ऐक्यज्ञानं भेदभ्रमनिवर्तकमिति भावः । **तत्पदेनैक्येति** । ऐक्यं नामैकरसचैतन्यमात्रम् । न च तत्र धर्मित्वादिकमस्ति । येन तज्ज्ञानार्थं पदान्तरं सार्थकमिति भावः । **तदुपलक्षितेति** । तत्पदार्थसार्वज्ञ्याद्युपलक्षितेत्यर्थः ।

**वा०चं०—** ऐक्यस्य तत्पदवाच्यचैतन्याभेदे तच्छास्त्रप्रतिपाद्यत्वाभावस्य परं प्रतीष्टत्वादुत्तरदूषणासङ्गतेश्चाह **तत्पदेति** । व्यावृत्त्यादिरूपप्रयोजनवद्यथाकथञ्चिच्छास्त्रज्ञेयत्वभ्रान्तिनिरासाय शास्त्रपदसमभिव्याहारेण ज्ञेयपदार्थमाह **प्रतिपाद्यमिति** । पराभ्युपेतस्वप्रकाशशब्दार्थमादाय व्याहतिरूपदूषणान्तरप्रतिपादकत्वेन मूलस्य प्रकारान्तरेण व्याख्यास्यमानत्वात् । स्वविषयप्रकाशत्वरूपं स्वप्रकाशशब्दप्रसिद्धार्थं मनसि निधाय तस्य शास्त्रप्रतिपाद्यत्वाभावेन हेतुहेतुमद्भावं व्युत्पादयितुं साक्षात्तत्साध्यं दर्शयति **स्वरूपस्येति** । न चावेद्यत्वं नाम फलाव्याप्यत्वं, वृत्तिव्याप्यत्वं त्वङ्गीकियत इति शास्त्रप्रतिपाद्यत्वसम्भवान्न व्याहतिरिति वाच्यम् । त्वदभ्युपेतफलाप्रामाणिकत्वस्य वक्ष्यमाणत्वेन वृत्त्यव्याप्यत्वस्यैवावेद्यत्वपदार्थतया वक्तव्यत्वात् । वृत्तिव्याप्यत्वाङ्गीकारे





च दृश्यत्वादेर्व्यभिचारापत्तेश्चेत्याशयात् । ननु न सामग्री बुद्धिमती येन स्वकार्यस्यान्येन कृतत्वात्स्वयं न प्रवर्तेत । न हि छिन्ने छिदाऽन्तरवत्प्रकाशमाने प्रकाशान्तरासम्भवः । अतः प्रकाशमानस्याप्यस्तु शास्त्रप्रतिपाद्यत्वमित्यत आह **न हीति** । तथाऽप्यनुपादेयत्वं स्यादेवेत्याह **वैयर्थ्येति** । स्वप्रकाशत्वरूपभाष्योक्तहेतुबलादेव परकीय-व्याहत्यादिपरिहारप्रकारान्निराकरोति **अथेत्यादिना** । मूले न्यूनतां परिहरति **न शास्त्रेणेति** । ननु तदेतद्देश-कालविशिष्टदेवदत्तयोरैक्यस्य देवदत्तमात्रत्वाद्देवदत्तदर्शनेनैव तत्सिद्ध्या वाक्यवैयर्थ्यम् । एकपदेनैव वा तत्सिद्धेः पदान्तरवैयर्थ्यं चेति सोऽयं देवदत्त इति वाक्येऽप्यनुपपत्तेस्तत्परिहारन्यायेन ममापि परिहारसौलभ्यान्न त्वदुक्त-विशेषाङ्गीकार इत्याशङ्कते **नन्विति** ।

**वा०र०— व्यावृत्त्यादीति** । सत्यं ज्ञानमित्यादिवाक्यगतसत्यादिपदैः सत्यत्वादौ प्रतिपादिते सति अर्थात् असत्यादिव्यावृत्तिर्ज्ञाप्यते । असत्त्वादिभ्रमनिवृत्तिरादिपदार्थः । तद्रूपं यत्प्रयोजनं तस्य शास्त्रप्रतिपाद्यत्वा-भावेऽपि अर्थतस्तद्धेयत्वमस्त्येव । **भ्रान्तीति** । तथाविधशास्त्रज्ञेयत्वभ्रान्तीत्यर्थः । शास्त्रेण ज्ञेयमित्युक्तेऽपि कथं तत्प्रतिपाद्यत्वरूपविशेषलाभ इत्यत उक्तं **शास्त्रपदेति** । पराभ्युपगतावेद्यत्वरूपस्वप्रकाशत्वपक्षे वक्ष्यमाण-मूलोक्तरीत्या व्याघातप्राप्तावपि नित्यसिद्धत्वादित्यादि दूषणानवकाशः । न च सम्भावितस्वविषयप्रकाशत्वरूप-स्वप्रकाशत्वपक्षे एतद्दूषणदानमिति वाच्यम् । तर्हि पराभ्युपेतस्वप्रकाशत्वपक्षे दूषणालाभप्रसङ्गादित्यतः पराभ्युपेतस्वप्रकाशत्वपक्षे दूषणं किञ्चेत्यादिमूले करिष्यत इति न तदलाभप्रसङ्गः । स्वरूपस्येत्यादिनोक्तं दूषणं तु सम्भावितस्वप्रकाशत्वपक्ष इति न तदसङ्गतिप्रसक्तिश्चेत्याशयेन स्वरूपस्येत्युक्तदूषणस्य पक्षविशेष-विषयत्वाश्रयणेनासङ्गतिं परिहरति **पराभ्युपेतेति** । **प्रकारान्तरेणेति** । अनेन किञ्चावेद्यत्वे सतीत्यादि मूलेनैव पराभ्युपेतस्य दूषणसिद्धेरत्र तददूषणेऽपि न बाधकमित्युक्तं भवति । **तस्य** स्वविषयप्रकाशत्वरूपस्वप्रकाशत्वस्य । **हेतुहेतुमदिति** । अनेन नित्यसिद्धत्वमेव मुख्यं दूषणं न भवति । किन्तु शास्त्रप्रतिपाद्यत्वाभाव एवेत्युक्तं भवति । अत्र टीकायां स्वरूपस्येतीत्यनन्तरं ननु न सामग्री बुद्धिमतीत्यारभ्य वैयर्थ्येतीत्यन्तग्रन्थानन्तरं व्याहतमिति । न चावेद्यत्वं नामेत्यारभ्याशयादित्यन्तो ग्रन्थ इति ग्रन्थपाठक्रमो ज्ञेयः । व्यत्यासस्तु शोधद्वयस्य व्यत्यासेन लिखनप्रयुक्तव्याहतमितीति प्रतीकोपादानाभावेऽपि लेखकप्रयुक्त इति ज्ञेयम् । **सिद्धं तु निवर्तकत्वादितीति** मूलम् । अनेनैक्यस्य स्वप्रकाशचैतन्यात्मकत्वं सिद्धम् । शास्त्रस्य भेदभ्रमनिवर्तकत्वादिति तद्वाक्यार्थ उक्तो भवति । स्वप्नाधिकरणे सर्वथापि त्वित्यधिकरणे च वर्णकान्तरं टीकायां वक्ष्यत इति ज्ञेयम् । सोऽयं देवदत्त इति वाक्येऽप्यनुपपत्तेरित्यनन्तरं सत्त्वेन तस्याश्च परिहर्तव्यतयेति शेषपूरणस्याभिप्रेतताया स्पष्टत्वात् । तत्पूरणेनेदं व्याख्येयम् । पारमार्थिकतया मदभ्युपगमात् तस्य चेति मूलकोशानुसारी पाठः । तस्य चेत्यस्यार्थक्रियेत्युक्तस्ये-त्यर्थः । मात्रेति लेखक० ।

**स०व्र०— किञ्चावेद्यत्व इति** । न च फलाव्याप्यत्वस्यैवावेद्यत्वशब्दार्थत्वेन वृत्त्यविषयत्वस्या-वेद्यत्वशब्दार्थत्वेनानङ्गीकारात् ऐक्यस्य वृत्तिविषयत्वेनाङ्गीकृतत्वात् कथं व्याहतिरिति वाच्यम् । फलस्यैव





निरूपयितुमशक्यत्वेन वृत्तिविषत्वस्यैव तत्त्वेनाङ्गीकर्तव्यत्वात् तदात्मकमैक्यं शास्त्रप्रतिपाद्यमिति कथं न व्याहतिरिति भावः । **सिद्धं त्विति** । चैतन्यस्य स्वप्रकाशत्वेऽप्यारोपिताकारनिवर्तकत्वाच्छास्त्रस्यार्थवत्त्वं सिद्धमिति । **अनुपपत्तेस्तुल्यत्वादिति** । यत्प्रकाशप्राप्तिस्तस्यैक्यस्यापि प्रकाशेनावरणीयाभावादावरणानुपपत्तिः यदि च प्रतिबन्धस्तर्हि सर्वस्यापि प्रतिबन्धेन प्रकाशप्राप्तेरेवाभावप्रसङ्गः । एवं च प्राप्तप्रकाशप्रतिबन्धरूपावरणकृत्याभावलक्षणानुपपत्तेरचेतनेऽपि तुल्यत्वादित्यर्थः ।

**विठ्ठल०**— ननु न स्वकर्मकप्रकाशत्वं येनोक्तदोषः स्यादित्यतस्तदुक्तं स्वप्रकाशत्वदूषणपरतयापि व्याचष्टे **किञ्चेति** । घटादावतिव्याप्तिवारणाय अवेद्यत्वे सतीति विशेषणम् । अतीन्द्रियव्यावृत्तये **अपरोक्षेति** । **विशेष्यासिद्धं त्विति** । ऐक्यस्य स्वप्रकाशचैतन्यात्मकत्वेऽपि भेदभ्रममात्रनिवर्तकत्वाच्छास्त्रस्य सार्थक्यं सिद्धमित्यर्थः । **सर्वथापीति** । स्वप्रकाशचैतन्यमात्रस्यैक्यस्याविद्यावशादनवभासे तन्मात्रस्य चैतन्यस्याप्यनवभासप्रसङ्गादित्यर्थः । **तथा चेति** । अविद्यावृतत्वेनात्मनोऽनवभासे अविद्यारोपस्यात्माधिष्ठानकत्वादधिष्ठानज्ञानाभावेनाविद्यारोपोऽपि न स्यात् तथा चाविद्यावशादैक्यानवभास इत्येतदनुपपन्नं स्यादिति भावः । ऐक्यभास एव अविद्यावरणमित्यत आह **न हीति** । ननु जडेषु अविद्या नाङ्गीकर्तुमुचिता । ज्ञानप्रसक्त्यभावेन आवरणकृत्याभावात् आवरणानुपपत्तिरित्यत आह **अनुपपत्तेः इति** । स्वप्रकाशत्वेन सर्वदा प्रकाशमाने आत्मन्यविद्याया आवरकत्वासम्भवेनानुपपत्तेस्तुल्यत्वादिति भावः । **न सा जडेष्विति** । न सा जडेषु वस्तुषु प्रतिभातीति यत्त्वयोक्तं तदयुक्तमित्यर्थः । **तदुपलक्षितेति** । तत्पदेन भागत्यागलक्षणया प्रतिपादितं यच्चैतन्यं तन्मात्रमैक्यस्य न स्यादित्यर्थः । नन्वेवं सति सोऽयं देवदत्त इति वाक्ये तत्पदेनैव देवदत्ताभिन्नस्यैक्यस्य सिद्धत्वादयमित्यादिपदवैय्यर्थ्यप्रसङ्ग इति भावेन शङ्कते **ननु कथमिति** । भवन्मते ऐक्यस्य ब्रह्मतन्मात्रवदस्माभिरैक्यस्य देवदत्ततन्मात्रत्वानङ्गीकारान्नोक्तदोष इति परिहरति **अत्रापीति** ।

**चषकः**— **अवेद्यत्वे सतीति** । घटादावनतिप्रसङ्गायाद्यदलोपादानम् । अतीन्द्रिये तद्विधूननायोत्तरदलोपादानम् । **सिद्धं तु निवर्तकत्वादिति** । भेदगोचरविपर्यासनिवर्तकत्वाच्छास्त्रस्यार्थवत्त्वं सिद्धमिति तत्फक्किकार्थोऽवसेयः । ननु सोऽयं देवदत्त इति वाक्येऽपि तत्पदेनैव देवदत्ताभिन्नस्यैक्यस्य प्रतीत्या अयमित्यादिपदवैयर्थ्यं प्रसज्येतेत्यभिसन्धिना शङ्कते **ननु कथमिति** ।

**४१ सु०— द्वितीयं निराकरोति भेद इति ।**

## अनु०— भेदे मिथ्यात्वतो भेदसत्यत्वं स्याद्बलादपि ।

**ऐक्यस्य स्वरूपाद्भेदेऽङ्गीक्रियमाणेऽपसिद्धान्तस्तावत्, तत्त्वमस्यादिवाक्यस्य अखण्डार्थनिष्ठताया मायावादिनाऽङ्गीकृतत्वात् । मिथ्यात्वप्रसङ्गोऽपरो दोषः, चैतन्याति-**





**रिक्तस्य सर्वस्य मिथ्यात्वाङ्गीकारात्, अन्यथाऽद्वैतेनैव सत्येनाद्वैतव्याघातात् । ऐक्य-मिथ्यात्वे किन्नश्छिन्नमिति चेन्न, मिथ्यात्वतो न शास्त्रेण ज्ञेयं तदित्यनुवर्तनात्, अन्यथा तत्त्वमस्यादिशास्त्रस्यातत्त्वावेदकत्वं स्यात् । किञ्च जीवब्रह्मणोरैक्यस्य मिथ्यात्वत-स्तद्भेदसत्यत्वमपि स्यात् । कुतः, बलात् व्याप्तिबलादित्यर्थः ।**

**ननु न कुत्रापि सत्यो भेदोऽस्माभिरभ्युपेयते तत्कथं व्याप्तिः । मैवम् । आस्तां तावत्परमार्थचिन्ता । ययोर्दूरस्थयोर्वनस्पत्योरैक्यं मिथ्या तयोर्भेदः सत्य इति दृष्टम् । अथवा यस्य स्वरूपेण सतो योऽभावो मिथ्या तस्य तद्विपरीतः सत्यो, यथा ब्रह्मणो-ऽनृतत्वादेर्मिथ्यात्वे सत्यत्वादिकं सत्यमिति, सामान्यव्याप्त्याश्रयणेन प्रसङ्गोपपत्तिः । यथाहुः 'परस्परविरोधे तु न प्रकारान्तरस्थितिः' इति ।**

**परि०— द्वितीयमिति** । तत्पदलक्षिताच्चैतन्याद्भिन्नमैक्यमिति पक्षमित्यर्थः । मूलोक्तमुपलक्षणं मत्वाऽऽह **अपसिद्धान्तस्तावदिति** । मिथ्यात्वत इत्यनुवादलब्धमाह **मिथ्यात्वप्रसङ्ग इति** । **अन्यथेति** । चैतन्याद्भिन्नस्याद्वैतस्य सत्यत्वेऽद्वैतेनैव ऐक्येनैव सत्येनाद्वैतस्य सदेकमेव तत्त्व-मित्यस्य व्याघातादित्यर्थः । मूलं योजयति **मिथ्यात्वत इति** । दोषान्तरविवक्षयोत्तरान्विततयाऽपि योजयति **किञ्चेति** । अपीत्यस्यान्वयोक्तिः **सत्यत्वमपीति** । **न प्रकारान्तरेति** । परस्परविरुद्धयो-रन्यतरस्थितिं विना प्रकारान्तरेण स्थितिर्नेत्यर्थः । तथा च विरुद्धयोरन्यतरस्य मिथ्यात्वेऽन्यतरस्य सत्यत्वं स्यादेवेति भावः ।

**यादु०— अनुवर्तनादिति** । अन्यथा अपिशब्दवैयर्थ्यमिति भावः ।

**वं०प०— अखण्डार्थनिष्ठताया इति** । निर्भेदार्थनिष्ठत्वरूपाखण्डार्थनिष्ठताया इत्यर्थः । तथा च ब्रह्मस्वरूपभिन्नैक्यरूपार्थप्रतिपादकत्वाङ्गीकारे उक्तरूपाखण्डार्थत्वहानिरिति भावः । **सर्वस्येति** । तन्मध्ये ऐक्यस्यापि पतितत्वादिति भावः । चैतन्यातिरिक्तस्य सर्वमध्यपतितैक्यस्य मिथ्यात्वानङ्गीकारे बाधकमाह **अन्यथाऽद्वैतेनैवेति** । मिथ्यात्वतस्तदैक्यं शास्त्रेण न ज्ञेयमित्यस्याभिप्रायमाह **अन्यथेति** । ऐक्यस्य मिथ्यात्वाङ्गीकार इत्यर्थः । **तत्कथं व्याप्तिरिति** । ययोरैक्यं मिथ्या तयोर्भेदः सत्य इति व्याप्तिरित्यर्थः ।

**आनन्दः— अन्यथेति** । सत्यत्व इत्यर्थः । **अन्यथेति** । ऐक्यस्य मिथ्यात्व इत्यर्थः । यस्य यो भाव इत्येवोक्तौ वन्ध्यासुतस्य गौरत्वं मिथ्येति तद्विपरीतं श्यामत्वं सत्यं स्यादिति स्वरूपेण सत इत्युक्तम् ।

**परस्परेति** । धर्मयोः परस्परं विघाते तत्रैकस्य मिथ्यात्वेऽपरस्य सत्त्वमास्थेयम् । एतदपेक्षया प्रकारान्तरस्य स्थितिर्नास्तीत्यर्थः ।

**श्रीनिधि०— अखण्डार्थनिष्ठतायाः** निर्भेदार्थनिष्ठतायाः । **तावत्परमार्थचिन्तेति** । पारमार्थिकत्व-व्यावहारिकत्वौदासीन्येन तावत् व्याप्तिरस्तीति भावः । अतिनिबन्धे तु न दौर्लभ्यमित्याह **अथवेति** ।

**वा०चं०—** भेद इत्यनुवादमात्रसूचितमपिशब्दस्य 'मिथ्यात्वं च' इत्यत्रापि सम्बन्धे बुद्ध्या विवेकेन वा सूचितमपसिद्धान्तमाह **ऐक्यस्येति** । मूले कण्ठोक्तमिथ्यात्वप्रसङ्गं दूषणान्तरपरतया योजयति **मिथ्यात्वेति** । मिथ्यात्वप्रसङ्गसाध्यं दूषणं सूचयता मिथ्यात्वप्रसङ्गस्येष्टापत्तिः परेण शङ्कितुं शक्येति सूचितम् । तां शङ्कते **ऐक्येति** । 'मिथ्यात्वतः' इत्यस्यानुवृत्तेन सम्बन्धेऽतत्त्वावेदकत्वस्यापि मूलारूढतालाभादाह **न मिथ्यात्वत इति** । मूले कण्ठतः प्रतीतं 'मिथ्यात्वतः' इत्यस्य 'भेदसत्यत्वम्' इत्यनेन सम्बन्धमुपपादयति **किञ्चेति** । व्यावहारिक-पारमार्थिकत्वविभागस्याद्याप्यसिद्धत्वादर्थक्रियाकारित्वरूपव्यावहारिकत्वेन त्वदभ्युपेतस्येव पारमार्थिकतया म(त)दभ्युपगतमात्रस्य च व्याप्तिः सुखदर्शनीयेत्याह **आस्तामिति** । यद्वैतदस्वरसादेवाह **अथवेति** ।

**वा०र०— अथवेतीति** । एकस्यासत्यतायां हि द्वयोरेव विरुद्धयोरिति चतुर्थाध्यायप्रथमभाष्यमूल-टीकोक्तरीत्या यौ द्वावेव विरुद्धावित्यादिरूपा व्याप्तिरवसेया । तां च तत्स्थल एवोपपादयिष्यामः । विकल्पाभेदेत्यत्र विकल्पं कृत्वेति ल्यबन्तार्थः । विकल्पभेदपक्ष इत्यत्रापि ल्यप् भिन्नाभिन्नौ वेत्युक्तेति पाठः ।

**स०व्र०— अथवा यस्य स्वरूपेणेति** । ननु गजस्य प्रामाणिकत्वं प्रति यत्र कुत्र गजसत्त्वस्यैव प्रयोजकत्वेन तस्यैव तद्विरोधित्वे यत्रकुत्रचिदसत्त्वं स्यादित्यापादने इष्टापत्तेरिति भावः ।

**विठ्ठल०—** मूलोक्तमुपलक्षणम् इति भावेनाह **ऐक्यस्येति** । **अद्वैतेनैवेति** । अद्वैतेन सत्येन निमित्तेन आत्मातिरक्तस्यैक्यस्य सत्यत्वादद्वैतभङ्गः इति भावः । **अन्यथेति** । मिथ्याभूतैक्यापि शास्त्रावेद्यत्वे इत्यर्थः । दोषान्तरविवक्षयोत्तरमूलं योजयति **किञ्चेति** । **व्याप्तिबलादिति** । यदैक्यस्य मिथ्यात्वं तद्भेदस्य सत्यत्वमिति व्याप्तिबलादित्यर्थः । सामान्यव्याप्तिमाह **अथवा इति** । **प्रकारान्तरेति** । परस्परविरुद्धयोरन्यतरस्थितिं विना प्रकारान्तरस्थितिर्नेत्यर्थः ।

**चषकः— विशेषणप्रतीतिमन्तरेणेति** । विशेषणज्ञानासमवधानदशायां विशिष्टप्रतीत्यापत्तिवारणाय विशिष्टबुद्धित्वावच्छिन्नं प्रति विशेषणज्ञानत्वावच्छिन्नस्य हेतुतायाः स्थितत्वादिति भावः । अत्रायमभिसन्धिः । भेदो हि न व्यसनतया मन्दप्रयोजन एवोरीक्रियते । अपि तु धर्माभिमतैक्यस्य धर्मितयाऽभिमतब्रह्मणश्च विशेषणविशेष्यभावाधाराधेयभावादिनिर्वाहायैव । स चाप्रतीयमानस्तत्र नेष्ट इति तत्प्रतीतिरवश्योपेयैव । सा च विशेषणतया विशेष्यतया वा भेदमवगाहमानैवेति पूर्वपूर्वभेदप्रतीतेरवश्यमपेक्षितत्वादिति । **अनवस्थाऽपीति** । स्फुटत्वादिति भावः ।





४२ **सु०— तृतीयं निराचष्टे भेदाभेदाविति।**

**अनु०— भेदाभेदौ यदि**

**जीवब्रह्मणोरैक्यस्य स्वरूपाद्भेदाभेदौ यद्यङ्गीक्रियेते। तदा वक्तव्यं तौ किं चैतन्यादभिन्नावुत भिन्नौ अथ भिन्नाभिन्नाविति ॥ आद्ये चैतन्यस्यापि द्वित्वं तयोर्वैकत्वमित्याद्यापद्येत। द्वितीययोर्दोषमाह तदेति।**

**तदा स्यादेव ह्यनवस्थितिः ॥**

**हिशब्देनानवस्थाव्युत्पादनस्य स्पष्टतामाचष्टे। तथा हि। स भेदः किं भेदिभ्यां भिन्नोऽभिन्नो भिन्नाभिन्नो वा। प्रथमे सोऽपि भेदस्तथेत्यनवस्था। द्वितीये शब्दपर्यायत्वादयो दोषाः। तृतीयस्तु तृतीयेऽन्तर्भवति। तत्राप्युक्तविधयाऽनवस्थैवेति।**

**ननु भेदस्य भेदान्तरं भेदाभेदयोश्च भेदाभेदान्तरमित्येतावता नानवस्था, उत्पत्तिज्ञप्तिप्रतिबन्धकत्वाभावादिति चेन्न, विशेषणप्रतीतिमन्तरेण विशिष्टप्रत्ययानुपपत्त्या ज्ञप्तिप्रतिबन्धकत्वात्। तदिदमुक्तं स्यादेवेति।**

**यद्यपि भेदाभेदाङ्गीकारे विरोधो वक्तुं शक्यते तथाऽपि स्फुटत्वान्नोक्तः।**

**एवमैक्यस्य स्वरूपाद्भेदपक्षेऽनवस्थाऽपीति।**

**परि०— तृतीयं** तत्पदलक्षितचैतन्यादैक्यं भिन्नाभिन्नमिति पक्षम्। **स्वरूपादिति**। चैतन्यस्वरूपादित्यर्थः। **इत्याद्यापाद्येत इति**। तच्छब्दपर्यायत्वं अन्यतरमात्रपरिशेषापत्तिश्चेत्यादिपदार्थः। **भेदिभ्यामिति**। चैतन्यरूपवस्तुना भेदाभेदाख्यवस्तुना चेत्यर्थः। **शब्देति**। चैतन्यशब्दभेदशब्दाभेदशब्दानां पर्यायत्वं चैतन्याद्यन्यतरपरिशेषत्वभेदाभेदयोरेकत्वभेदानेकत्वरूपदोषा इत्यर्थः। **तृतीय इति**। भेदिभ्यां भेदो भिन्नाभिन्न इति पक्षः। ऐक्यं चैतन्याद्भिन्नाभिन्नमिति पक्षेऽन्तर्भवति। तथा च तद्दोषेणैव दुष्टो भवतीति भावः। तत्र वा को दोष इत्यत आह **तत्रापीति**। **विशेषणेति**। चैतन्यादैक्यं भिन्नाभिन्नमिति विशिष्टप्रतीतिर्हि विशेषणत्वेन भेदाभेदभानमपेक्षते।





विशेषणत्वेन भेदाभेदभानं च भेदाभेदरूपविशेषणस्य विशेष्यभूतैक्यस्य च भेदस्य वा भेदाभेदस्य वा भानाभावेऽनुपपन्नम् । तद्भानमपि विशेषणत्वेन तज्ज्ञानं विना नेत्येवमुत्तरोत्तरभेदादिभानं विना पूर्वपूर्वभेदादिभानं न युक्तमिति ज्ञप्तिप्रतिबन्धकत्वाद्दोष एवेत्यर्थः । **अनवस्थापीतीति** । स्फुटत्वान्नोक्तेति योज्यम् ।

**यादु०— विशेषणप्रतीतिमन्तरेणेति** । ननु विशेषणीभूतभेदप्रतीतेरावश्यकत्वेऽपि न तद्गतं भेदान्तरमपि ज्ञेयम् । न हि विशेषणीभूतो भेदोऽपि भिन्नोऽयं भेद इत्येव प्रतीयते । येन तद्गतभेदान्तरस्यापि विशेषणतया तत्प्रतीतेरप्यावश्यकत्वेनानवस्था । किन्त्वनयोर्भेद इत्येव । एवं विशेषणीभूतयोर्भेदाभेदयोर्ज्ञानस्यावश्यकत्वेऽपि न तद्गतभेदाभेदान्तरमप्यवश्यं ज्ञेयम् । विशेष्यतयाऽपि तयोर्ज्ञानसम्भवात् । तथा च कथमनवस्थेति चेन्न । विशेषणतया वा विशेष्यतया वा वस्तुप्रतीतेस्तद्गतभेदप्रतीत्यभावेऽसम्भवात् । अन्यथा दण्डपुरुषयोः कदाचिदभेदभ्रमो न स्यात् । (तस्मा)स्याच्च कदाचिदभिन्नयोरपि विशेषणविशेष्यभावभ्रमः । तथा च भेदस्य विशेषणतया वा विशेष्यतया वा प्रतीतिस्तद्गतभेदप्रतीतिसापेक्षैवेति सुस्था ज्ञप्तिप्रतिबन्धकानवस्थेति । एवं भेदाभेदयोरपि नाप्रतीतभेदाभेदयोर्विशेषणतया विशेष्यतया वा भानमिति तत्राप्यनवस्था ज्ञप्तिप्रतिबन्धिका । विशेषणविशेष्ययोर्भेदस्य तावज्ज्ञानमुक्तरीत्या आवश्यकमपरभेदस्य च परेण तदुभयसंसर्गस्थानाभिषिक्तत्वेनाभ्युपगमात् । तस्य च ज्ञातस्यैव विशिष्टधीनियामकत्वं नाज्ञातस्येति वैशेषिकपरीक्षायां वक्ष्यमाणत्वादिति । **अनवस्थाऽपीति** । स्फुटत्वान्नोक्तेत्यर्थः ।

**वं०प०— शब्देति** । चैतन्यशब्द-भेदशब्द-भेदाभेदशब्दानां पर्यायत्व-चैतन्याद्यन्यतरपरिशेषत्व-भेदभेदाभेदयोरेकत्वरूपदोषा इत्यर्थः । **तृतीये इति** । भेदिभ्यां भेदो भिन्नाभिन्न इति पक्षः । ऐक्यं चैतन्याद्भिन्नाभिन्नमिति पक्षेऽन्तर्भवति । तथा च तद्दोषेणैव दोषो भविष्यतीति भावः । तत्रैवैक्ये को दोष उक्त इत्यत आह **तत्रापीति** ।

**आनन्दः— शब्दपर्यायत्वादय इति** । भेदभेदिपर्यायत्वं सहप्रयोगाभावश्च स्यादित्यर्थः । **उक्तविधयेति** । भेदाभेदावपि भेदिभ्यां भिन्नौ अभिन्नौ भिन्नाभिन्नावित्याद्युक्तविधयेत्यर्थः । **विशेषणेति** । **विशेषणं** भेदः ।

**श्रीनिधि०— शब्दपर्यायत्वादय इति** । चैतन्यभेदाभेदशब्दपर्यायत्वं आदिपदेन भेदभेदिभावानुपपत्तिः । **तत्राप्युक्तविधयेति** । तौ च भेदाभेदौ भिन्नौ वा भिन्नाभिन्नौ वा इत्युक्तविधयेत्यर्थः । **नानवस्थेति** । दोष इति शेषः । अत एव आह **उत्पत्तीति** । **विशेषप्रतीतिमन्तरेणेति** ज्ञायमानं हि वस्तु सत्त्वासत्त्वौदासीन्येन प्रतीत्यभाववत्, भेदाभेद-भेदाभेदौदासीन्येन प्रतीत्यभावात् भिन्नत्वादिविशिष्टतयैव ज्ञायेत । अन्यथा अज्ञेयमेवेत्युक्तमेव स्यात् । तथा च भेदादिपरंपरया अपर्यवसितौ ज्ञप्तिप्रतिबन्ध एवेति आत्मनो निर्वहिष्यतीति । न तु तदर्थं कश्चिदतिशयो अङ्गीकार्य इति भावः ।





**वा०चं०**— भेदभेदयोश्चैतन्याभेदपक्षेऽनवस्थितेरसम्भवाद्विकल्प्याभेदपक्षे लक्षणानां लक्ष्याभेदे परोक्तन्यायेनोपर्येव दूषणमभिधाय भेदाभेदपक्षदूषणतया मूलं योजयति **जीवेति** । भेदस्य भेदाभेदयोश्चाभेदपक्षेऽनवस्थाऽनुपपत्तेराह **तथा हीति** । 'पर्यायत्वादयः' इत्यत्रादिपदेन भेदभेदिभावानुपपत्त्यादेर्ग्रहणम् । **तत्रापीति** । तावपि भेदाभेदौ भेदभेदिभ्यामभिन्नौ उत भिन्नौ अथ भिन्नाभिन्नाविति विकल्प्याभेदपक्षे तयोरेकत्वादिकमापाद्य भेदपक्षेऽपि स भेदो भेदिभ्यां भिन्नोऽभिन्नो भिन्नाभिन्नो वेति विकल्प्य भेदपक्षेऽनवस्थामापाद्याभेदपक्षे पर्यायत्वादिकमापाद्य भेदाभेदपक्षं परिशेष्य पुनस्तद्दूषणं तावपि भेदाभेदावभिन्नौ भिन्नौ भिन्नाभिन्नौ वेत्युक्तरीत्या ज्ञातव्यमित्यर्थः । **विशेषणप्रतीतिमन्तरेणेति** । विशेषणविशेष्यभावादिप्रतीतये खलु भेदोऽभ्युपगम्यते । स च प्रतीयमान एव । तद्धेतुस्तत्प्रतीतिश्च विशेषणादिभावेनैवेत्युत्तरोत्तरभेदप्रतीतेरवश्यमपेक्षितत्वादिति भावः । भेदाभेदाङ्गीकारे विरोधस्यैक्यस्य स्वरूपाद्भेदपक्षेऽनवस्थायाश्चासम्भवाद्भाष्यकारीयानुक्तिरिति भ्रान्तिं निवर्तयति **यद्यपीत्यादिना** ।

**वा०र०**— **अनवस्थायाश्चेति** । एतदुभयोर्या भाष्यकारीया अनुक्तिः सा तयोरसम्भवादिति भ्रान्तिमिति योजना।

**स०व्र०**— **विशेषणप्रतीतिमन्तरेण विशिष्टप्रत्ययानुपपत्त्येति** । ननु विशेषणीभूतभेदप्रतीतेरावश्यकत्वेऽपि न तस्य तद्भेदान्तरमपि ज्ञेयम् । न हि विशेषणीभूतो भेदोऽपि भिन्नोऽयं भेद इति प्रतीयते । येन तस्य तद्भेदान्तरस्यापि विशेषणतया तत्प्रतीतेरप्यावश्यकत्वेनानवस्था किन्तु अनयोर्भेद इति । तथा च कथमनवस्थेति चेत् न । विशेषणीभूतभेदस्येतरसङ्कीर्णतया ज्ञाने विशेषणत्वस्यानयोर्भेद इति सङ्कीर्णव्यवहारस्य वाऽयोगेन असङ्कीर्णतया ज्ञातव्यत्वे भिन्नत्वेनैव ज्ञानस्य प्राप्तत्वात् भिन्नत्वातिरिक्तासङ्कीर्णताया अभावादित्यभिप्रेतत्वात् । एवं विशेषणीभूतभेदाभेदगतं भेदाभेदान्तरमप्यवश्यं ज्ञातव्यम् । न हि सङ्कीर्णतया ज्ञातस्य विशेषणत्वं नाप्यत्यन्तविविक्ततया । अभिन्नयोरपि, भेदविशेषणत्वप्रसङ्गात्; दण्डसम्बन्धस्य च देवदत्तविशेषणत्वात्; अतो विशेषणत्वान्यथानुपपत्त्यैव भेदाभेदवत्वज्ञानमावश्यकमिति तत्राप्यनवस्था दुष्परिहरेति द्रष्टव्यम् ।

**विट्ठल०**— **इत्याद्यापद्येत इति** । चैतन्यभेदाभेदशब्दयोः पर्यायत्वम्, अन्यतरमात्राददोषादिरादिशब्दार्थः । **भेदिभ्यामिति** । चैतन्यरूपेण वस्तुना भेदाभेदाख्येन वस्तुना चेत्यर्थः । **तृतीयस्त्विति** । भेदो भेदाभेदाभ्यां भिन्न इति पक्षः । ऐक्यं चैतन्याद्भिन्नाभिन्नमिति पक्षेऽन्तर्भवति तथा च तद्दोषेणैव दुष्टो भविष्यतीति भावः । तद्दोषमाह **तथापीति** । **विशेषेणेति** । चैतन्यादैक्यं भिन्नाभिन्नमिति विशिष्टप्रतीतिर्हि विशेषणत्वेन भेदाभेदज्ञानं च भेदाभेदरूपविशेष्यस्य च भेदाभेदज्ञानं विना नोपपन्नम् । न हि सङ्कीर्णतया ज्ञातस्य विशेषणत्वम् । नाप्यत्यन्तविविक्तया ज्ञातस्य मेरोरपि मन्दरं प्रति विशेषणत्वप्रसङ्गात् । अतस्तद्भेदाभेदाज्ञानम् आवश्यकं, तदज्ञानमपि विशेषणत्वेन तज्ज्ञानं विना न सम्भवति । एवं चैतन्यादैक्यं भिन्नमित्यत्रापि विशेषणत्वेन भेदज्ञानमपेक्षितं, तस्यापि इतरसङ्कीर्णतया ज्ञाने विशेषणत्वस्य अनयोर्भेद इत्यसङ्कीर्णव्यवहारस्य

चानुपपत्तेर्भिन्नत्वेनैव ज्ञानमावश्यकमित्येवमुत्तरोत्तरभेदादिभानं विना पूर्वभेदादिज्ञानं न युक्तमिति ज्ञप्तिप्रतिबन्धकत्वात् दोष एवेति भावः ।

**४३ सु०—** 'नन्वैक्यं चैतन्याभिन्नमपि स्वनिर्वाहकत्वात्स्वाभाविकप्रकाशेनाप्रकाशितत्वमात्मनो निर्वक्ष्यति(हिष्यति) । यद्वा स्वरूपेणैक्यस्य भेदाभेदौ स्ताम्, तयोश्च भेदाभेदान्तराभावेऽपि स्वनिर्वाहकत्वाद्व्यवहारोपपत्तिरि'ति चेन्न, विशेषानभ्युपगमे स्वनिर्वाहकत्वस्यापि वक्तुमशक्यत्वादित्यभिप्रायेणाह **स्वनिर्वाहकतेति** ।

**अनु०— स्वनिर्वाहकता चेत्स्यात्**

**ऐक्यस्य भेदाभेदयोर्वा स्वनिर्वाहकता यद्यङ्गीकृता स्यात् । तदा पृच्छामः ''स्वस्य निर्वाहकं हि स्वनिर्वाहकम् । तस्य भावः स्वनिर्वाहकता । स्वस्येति च कर्मणि षष्ठी 'कर्तृकर्मणोः कृती'ति वचनात् । तथा चैकस्यैवैकस्यामेव निर्वाहक्रियायां कर्मकर्तृत्वलक्षणं निर्वाह्यत्वं निर्वाहकत्वमित्युक्तं भवति । तन्निर्वाह्यत्वं निर्वाहकत्वं च परस्परं धर्मिणा क्रियया चात्यन्ताभिन्नमु(तात्यं)त भि(न्नाभि)न्नमि''ति ।**

**आद्ये दोषमाह वाह्यमिति।**

**अनु०— वाह्यं वाहकमित्यपि ।**
**पर्यायो भेदवान्वा स्यादनवस्थोभयत्र च ॥**

**निर्वाह्यमिति निर्वाहकमिति अपिशब्दान्निर्वाहणमित्यपि शब्दसमूहः पर्यायः प्रसज्येत एकार्थत्वात्। न च तेषां शब्दानां कश्चित्पर्यायत्वं मन्यते।**

**द्वितीयमनूद्य दूषयति भेदवानिति।**

**वाशब्दो यद्यर्थे । यदि निर्वाह्यत्वादिरर्थः परस्परं धर्मिणा च भेदवान् स्यात्तदा तद्भेदद्वयस्य भेदिस्वरूपमात्रत्वे पर्यायत्वादिदोषप्रसङ्गाद्भेदान्तरवदित्यङ्गीकरणीयम् । तथा च परस्परं भेदं धर्मिभेदं वाऽऽश्रित्योभयत्रानवस्था स्यादिति ।**





**परि०— निर्वहिष्यतीति ।** निर्वक्ष्यतीति वाच्ये इडागमो लेखकदोषमूलो वा निर्वचनार्थ-भ्रमनिरासाय कृतो वेति ध्येयम् । **व्यवहारोपपत्तिरिति ।** भिन्नाभिन्नमैक्यं चैतन्यादित्यादिविशिष्ट-व्यवहारोपपत्तिरित्यर्थः । **कर्तृकर्मणोः कृतीतिवचनादिति ।** निर्वाहकशब्दस्य ण्वुल्प्रत्ययान्तत्वात् तस्य च 'कृदतिङि'त्यनेन कृत्संज्ञत्वात् तद्योगे कर्तरि कर्मणि च षष्ठी भवतीति पाणिनिवचना-दित्यर्थः ।

**यादु०— कर्तृकर्मणोः कृतीति ।** कृद्योगे कर्तरि कर्मणि षष्ठी स्यादिति सूत्रार्थः । व्यासस्य कृतिः भारतस्य श्रवणमित्युदाहरणम् । अत्र च निर्वाहशब्दस्य ण्वुलन्तत्वात् ण्वुलश्च तृतीयधात्वधिकारे विहितस्य कृत्त्वादिति भावः ।

**आनन्दः— अत्यन्ताभिन्नमिति ।** अभेदस्य परेणाङ्गीकारेण प्राधान्यात्तस्य प्रथमनिर्देश इति । एवमुत्तरत्रापि द्रष्टव्यम् । इत्यपीत्यपिशब्दवैयर्थ्यमाशङ्क्याह **निर्वाहकमित्यपिशब्दान्निर्वाहणमिति** । ग्राह्यमिति सम्बन्धः । एतावता सिद्धं दूषणमाह **इत्यपीति । निर्वाहकत्वं** निर्वाहत्वम् । **निर्वाहणम्** ऐक्यमित्येवंशब्दसमूह इत्यर्थः । इष्टापत्तिमाशङ्क्याह **न च तेषामिति । तद्भेदद्वयस्येति** । निर्वाह्यत्वादेः परस्परभेदधर्मिणा च सह भेद इत्येवं भेदद्वयमित्यर्थः । तद्भेदद्वयं भेदान्तरवदङ्गीकरणीयमित्यन्वयः । तत्तत्र युक्तिमाह **भेदिस्वरूपमात्रत्व इति । अनवस्था स्यादिति** । स भेदो भेदान्तरवानित्येवं परम्पराश्रयणेनानवस्था स्यादित्यर्थः ।

**श्रीनिधि०— स्वनिर्वाहकत्वादिति ।** ताभ्यामेव भेदाभेदाभ्यां तद्बन्धव्यवहारः । न तु तदर्थम् । भेदाभेदान्तरमपेक्षितमिति भावः । **निर्वहणक्रियायामिति** । अप्रकाशितत्वनिर्वहणक्रियायां भिन्नाभिन्नाविति व्यवहारनिर्वहणक्रियायां चेत्यर्थः । **अपिशब्दात् निर्वहणमित्यपीति** । गृह्यत इति शेषः । शब्दसमूह इत्यतः पूर्वमेवमिति शेषो द्रष्टव्यः ।

**वा०चं०—** ननु स्वनिर्वाहकत्वपक्षदूषणमयुक्तम् उक्तदूषणापरिहारेण परेण तस्यावक्तव्यत्वात्सिद्धान्ते विशेषस्य स्वनिर्वाहकताऽङ्गीकारात् । स्वव्याहतं च तद्दूषणमित्यत 'ऐक्याभेदे न शास्त्रेण' इत्युक्तदूषणस्य भेदाभेदपक्षेऽनवस्थायाश्च परिहारेण परेणापि तस्य वक्तव्यत्वमेव विशेषानभ्युपगम एव तदनुपपत्तिप्रतिपादनान्न स्वव्याहतिरपीत्याशयेनोत्तरवाक्यमवतारयति **नन्विति** । उक्तपक्षयोर्मूलारूढतायै योग्यधर्म्यध्याहारः **ऐक्यस्य भेदाभेदयोर्वेति** । ननु निर्वाहकत्वस्य शब्दाल्लाभेऽपि निर्वाह्यस्य कथं लाभ इत्यतः समासावयवकर्मषष्ठ्ये-त्याशयेनाह **स्वस्येति** । अपिपदबललब्धोक्तिः । **धर्मिणेत्यादि** । भेदवान्वेति पूर्वकल्पे दूषणान्तरपरत्वप्रतीतेः कल्पान्तरदूषणपरत्वं मूलारूढं करोति **वाशब्द इति** । निर्वाह्यत्वादीत्यादिपदेन निर्वाहकत्वनिर्वाहक्रिययोर्ग्रहणम् । तद्भेदद्वयमित्युभयत्रेत्यनुसारात्त्रयाणां धर्माणां भेदस्य परस्परभेदत्वेन क्रोडीकारेण धर्मिभेदस्य पृथक्कारेणेति द्रष्टव्यम् । भेदद्वयस्य भेदिस्वरूपत्वे मूलोक्तानवस्थाऽसम्भवेन पूर्ववाक्यात्पर्याय इत्यनुवर्त्य तत्पक्षे दूषणं





योजयित्वा भेदवानित्यावर्त्य भेदान्तरवत्त्वपरतया तद्व्याख्याय तत्रानवस्था द्रष्टव्येत्याशयेनोभयत्रेत्येतद्विषयं दर्शयन्नेव वाक्यं योजयति **भेदीत्यादिना** ।

**वा०र०—** मूले **आत्मनो निर्वहिष्यतीति** । ननु वह धातोरनिट्कारिकापाठादनिट्कतया निर्वक्ष्यतीति वक्तव्यमिति चेन्न । पञ्चदशगीताभाष्यटीकास्थ चिच्छिदिषुरित्येतदुपपादनानुसारेणास्योपपाद्यत्वात् । शोकं तरत्यात्मवेत्तेत्यत्रत्य वेत्ता वेदितेत्युत्तरमूलटीकोक्तप्रकारोऽप्यत्रानुसर्तव्यः । एवं विशेष एव निर्वहिष्यतीति जिज्ञासानयमूले द्रव्यमेव ततोऽनन्तेत्येतन्मूलस्थविशेषेणैव व्यवहारा निर्वहिष्यन्त इत्यत्र ज्ञेयम् । **शब्दाल्लाभेपीति** । (एतदुभयोर्या भाष्यकारीया अनुक्तिः सा तयोरसम्भवादिति भ्रान्ति)निर्वाहकशब्दाल्लाभेऽपीत्यर्थः । निर्वाह्यस्येति भावप्रधानो निर्देशः । निर्वाह्यत्वस्येति पाठस्तु स्वरस एव । निर्वाह्यत्वादिरित्यत्रादिपदेन निर्वाहकत्वमात्रग्रहणनिर्वाहाय उभयसङ्ग्राहकतया आदिपदं योजयति **निर्वाह्यत्वादिरित्यादिपदेनेति** । ननु मूले तद्भेदद्वयमित्ययुक्तम् । परस्परं धर्मिणा क्रियया वेति पूर्वमूलानुसारेण निर्वाह्यत्वनिर्वाहकत्वयोः परस्परभेदस्य परस्परभेदत्वेन सङ्ग्रहसिद्धावपि धर्मिभेदस्येव क्रियया भेदस्य सङ्ग्रहाभावेन भेदत्रयमित्येव वाच्यत्वादित्यतस्तथोक्तिं घटयति **तद्भेदद्वयमितीति** । इतीत्यस्येत्येतदित्यर्थः । अयमर्थः । यद्यपि भेदत्रयं प्राप्नोति । तथापि निर्वाह्यत्वनिर्वाहकत्वनिर्वाहणक्रियारूपाणां धर्माणां भेदत्रयं धर्मभेदत्वनिमित्तेन परस्परभेदत्वेन क्रोढीकृतम् । धर्मिभेदश्च पृथगुक्तः । एवं च भेदद्वयमेवायाति । ततश्च भेदद्वित्ववचनं परस्परभेदत्वेन भेदत्रयक्रोढीकारेण धर्मिभेदस्य पृथक्कारेण च युक्तमिति द्रष्टव्यमिति । अत एवादिपदेन निर्वाहकत्वनिर्वाहणक्रिययोर्ग्रहणं व्याख्यातमिति ज्ञेयम् । पर्याय इत्यनुवर्त्येति मूले पर्यायत्वादित्यादिपदोपादानं तु पर्याय इति पूर्वभाष्येऽपि उपलक्षणया सह प्रयोगानुपपत्तिसङ्ग्रहोऽभिप्रेत इति सूचयितुं प्रकृते तत् सहप्रयोगानुप-पत्तिसङ्ग्रहाय च । यद्वा पर्याय इति पूर्वत्र यथाश्रुतमेव । अत्र तु उपलक्षणव्यावर्तितेऽङ्गीकृत्य सहप्रयोगानुपपत्तिरभिहितेत्यभिप्रायेणेति न दोष इति भावः । परापरसामान्यवाचिनामित्यादिवाक्यविचारस्तत्त्वोद्योतटीकाप्रपञ्चे गुरुकृतोऽस्ति । तथा वाक्यार्थविनोदेऽपि अन्यथाख्यातिनिराकरणाय तत्कृतोऽस्ति सोऽत्राधिको विचारोऽवसेयः ।

**विठ्ठल०—** नन्वेवं सति दण्डस्यापि विशेषणत्वं न स्यादिति चेन्न दण्डसम्बन्धस्यैव विशेषणत्वात् तत्रापि विशेषानङ्गीकारे अनवस्था अपरिहार्यैवेति । **कर्तृकर्मणोरिति** । कृद्योगे कर्तरि कर्मणि च षष्ठी स्यादिति सूत्रार्थः । निर्वाहकशब्दस्य ण्वुल्प्रत्ययान्तत्वात्तस्य च कृत्संज्ञकत्वात् प्रकृते कर्मणि षष्ठीति भावः । **धर्मिणा इति** । निर्वाह्यत्वं निर्वाहकत्वं च यस्यैक्यादेस्तेन धर्मिणेत्यर्थः । **क्रियया** निर्वाहणरूपक्रियया । **तद्भेदद्वयमिति** । निर्वाह्यत्वनिर्वाहकत्वयोरन्योन्यभेदः धर्मिणा तयोर्भेदः इति भेदद्वयमित्यर्थः ।

**चषकः—** **कर्तृकर्मणोः कृतीतिवचनादिति** । कृद्योगे कर्तरि कर्मणि षष्ठी स्यादिति सूत्रार्थः । उदाजहुश्च 'शोभना खलु पाणिनेः सूत्रस्य कृतिः' इति । तृतीयलक्षणे धात्वधिकारे विहितस्य ण्वुलः कृदतिङितिकृत्वात्तादृशकृत्समभिव्याहाराधीना सुपो धात्विति लुप्ता समासरूपप्रातिपदिकावयवभूता स्वपदोत्तरा





षष्ठी निरूपकताप्रत्यासत्त्या निर्वहणक्रियाऽन्वितकर्मत्वार्थिकेत्याधेयतया प्रकृत्यर्थविशेषितं यत्कर्मत्वं तन्निरूपकनिर्वहणक्रियाकर्तेत्यर्थः पर्यवस्यतीति भावः ।

**॥ इति 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषानङ्गीकारे लक्ष्यलक्षणव्यवहारानुपपत्तौ' महावाक्यार्थानुपपत्तिः ॥**

* * *

**॥ अथ 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषानङ्गीकारे लक्ष्यलक्षणव्यवहारानुपपत्तौ' अवान्तरवाक्यार्थानुपपत्तिश्च ॥**

**४४ सु०—** एवं विशेषानभ्युपगमे महावाक्यार्थानुपपत्तिमभिधायावान्तरवाक्येऽपि तामतिदिशति **सत्येति** ।

## अनु०— सत्यज्ञानादिकेऽप्येवं

सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिकेऽवान्तरवाक्येऽप्येवं विकल्प्य दूषणमभिधानीयमित्यर्थः ।

तथा हि । सत्यज्ञानादिकं परस्परं ब्रह्मणा चात्यन्ताभिन्नं वा भिन्नं वा भिन्नाभिन्नं वा ॥ नाद्यः । तथा सति स्वप्रकाशब्रह्मात्मकस्य तस्य सत्यज्ञानादिशास्त्राप्रतिपाद्यत्वप्रसङ्गात् । सत्यज्ञानादिपदानां पर्यायित्वापत्त्या सहप्रयोगानुपपत्तिप्रसङ्गाच्च ॥ न द्वितीयः । अपसिद्धान्तात् । मिथ्यात्वापत्त्या शास्त्रस्यातत्त्वावेदकत्वप्रसङ्गाच्च । अज्ञानत्वादेः सत्यत्वापत्तेश्च ॥ न तृतीयः । अनवस्थाप्रसङ्गात् । स्वनिर्वाहकत्वस्य चोक्तविधया निर्वक्तुमशक्यत्वादिति ॥

**परि०— महावाक्येति** । तत्त्वमसीतिवाक्येत्यर्थः । प्रागुक्तविकल्पान् तद्दोषांश्च व्यनक्ति **तथाहि सत्यज्ञानादिकमित्यादिना**।

**वं०प०— अज्ञानत्वादेरिति** । ज्ञानत्वादेर्ब्रह्मभिन्नत्वेन मिथ्यात्वाङ्गीकारात्परस्परविरुद्धयोरन्यतरनिषेधस्यान्तरविधिनान्तरीयकत्वेनाज्ञानत्वादेर्ब्रह्मणि सत्यत्वं स्यादित्यर्थः ।





**आनन्दः**— अतिदेशप्रकारमाह **तथा हीति** । **पर्यायत्वापत्त्येति** । पर्यायेण प्रयोज्यत्वापत्तेत्यर्थः । द्वितीये सत्यं मिथ्या वा । नाद्य इत्याह **अपसिद्धान्तादिति** । न द्वितीय इत्याह **मिथ्यात्वापत्त्येति** । **अज्ञानत्वादेरिति** । परस्परविरुद्धयोर्धर्मयोर्मध्ये एकस्य मिथ्यात्वेऽपरस्य सत्यत्वमिति नियमाज्ज्ञानत्वादेर्मिथ्यात्वेऽज्ञानत्वादेः सत्यत्वं स्यादित्यर्थः । **अनवस्थेति** । पूर्वोक्तरीत्येत्यर्थः । **उक्तविधयेति** । निर्वाह्यत्वं निर्वाहकत्वं निर्वाहणं च धर्मिणा भिन्नमभिन्नं वेत्याद्युक्तविधयेत्यर्थः ।

**वा०चं०**— तत्तन्मूलसूचितान्यतिदिष्टविकल्पदूषणानि प्रतिपादयति **तथा हीति** ।

**विठ्ठल०**— **शास्त्राप्रतिपाद्यत्वप्रसङ्गात् इति** । **तस्य** = सत्यज्ञानादेः स्वप्रकाशतया सिद्धत्वेन न शास्त्रप्रतिपाद्यत्वम् । न हि निश्चिते शास्त्रप्रवृत्तिर्युज्यते इति भावः । **अपसिद्धान्तादिति** । सत्यज्ञानादि-वाक्यस्याखण्डब्रह्मनिष्ठताया एव मायासिद्धान्तत्वादिति भावः । मिथ्यात्वापत्त्या इति तन्मते ब्रह्मभिन्नस्य मिथ्यात्वनियमादिति भावः । **अज्ञानत्वादेरिति** । यस्य यो भावो मिथ्या तद्विपरीतः सत्यः इति व्याप्तेरिति भावः । **अनवस्थादीति** । सत्यज्ञानादीनां परस्परं ब्रह्मणा च भेदाभेदाङ्गीकारे भेदाभेदयोर्भेदिभ्याम् अभेदे पर्यायत्वापत्त्या भेदे भेदाभेदे वा अङ्गीकृते भेदपरम्परया वा अनवस्था, भेदाभेदयोः परस्परं विरोधश्च अभेदे पर्यायत्वादिदोषाः स्युरित्यर्थः । भेदाभेदयोः स्वनिर्वाहकत्वान्नानवस्थेत्यत आह **स्वनिर्वाहकत्वस्य चेति** ।

**४५ सु०— ''ननु सत्यज्ञानादीनां परस्परं ब्रह्मणा चात्यन्तमभेद एव ॥ न च तावता सत्यज्ञानादिपदानां पर्यायत्वम्, वाच्यार्थभेदसद्भावात् । परापरसामान्यवाचिनां सगुणब्रह्म-वाचिनां वा तेषां परब्रह्मणि लक्षणया प्रवृत्त्यङ्गीकारात् ॥ न च वाच्यं 'सत्यपदेन लक्षितस्यैव ज्ञानपदेन लक्षणायां वैयर्थ्यम्, अधिकलक्षणायां च नाखण्डार्थतासिद्धिरि'ति लक्ष्यार्थ-भेदाभावेऽप्यारोपितासत्यत्वादिव्यावृत्त्यर्थत्वेन पदान्तराणां सप्रयोजनत्वात् ॥ अत एव न शास्त्रवैयर्थ्यम्, स्वप्रकाशेऽप्यारोपिताकारव्यावृत्त्यर्थत्वेन शास्त्रस्य सप्रयोजनत्वादि''ति चेन्न । किं ब्रह्मविशेषणत्वेनासत्यत्वादिव्यावृत्तिबोधः प्रयोजनमुच्यते । किंवा स्वतन्त्र एव व्यावृत्तिबोधः ।**

**परि०**— **परापरसामान्येति** । सत्ताशब्दितसत्यत्वरूपव्यापकजातिज्ञानत्वादिरूपव्याप्य-जातिवाचिनां सत्यज्ञानादिशब्दानामित्यर्थः । न च वाच्यमित्यस्य सिद्धिरित्यनेनान्वयः । अत एवेत्युक्तं व्यनक्ति **स्वप्रकाशेऽपीति** । 'सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दं ब्रह्म' इत्यादिशास्त्रस्य हि ब्रह्म असत्यं न अज्ञानं न, परिच्छिन्नं नेत्याद्यर्थकत्वेनारोपितासत्यत्वाद्याकारव्यावृत्त्यर्थत्वेन प्रयोजन-वत्त्वादित्यर्थः ।





**गु०दी०— परापरसामान्यवाचिनाम्** इत्यत्र सत्यपदस्य सत्तारूपसामान्यवाचित्वे ब्रह्मणि तेन पदेन पारमार्थिकसत्त्वासिद्धिप्रसङ्गः । लक्षणस्यासम्भवश्च । तद्बोधितव्यावृत्तेश्च जगतीव प्रातिभासिकमात्रव्यावृत्तित्व-प्रसङ्गेन त्वदभिलषितव्यावर्त्यासिद्धिप्रसङ्गः । ज्ञानपदस्यापि ज्ञानत्वापरसामान्यवाचित्वे ब्रह्मणि चिद्रूपत्वासिद्धिः । लक्षणस्यासम्भवश्चेति दूषणदूषितत्वादिति ज्ञेयम् । पारमार्थिकसत्यत्ववाचित्वे च तस्य ब्रह्मण्येव वर्तमानत्वान्न लक्षणा । अन्यत्र वृत्तौ च ब्रह्मणोऽन्यस्य पारमार्थिकत्वादिसिद्धिरिति 'उभयतः पाशारज्जुः' इत्यादि दूषणमप्यूह्यम् ।

**यादु०— परापरसामान्यवाचिनामिति** । सत्यपदं व्यापकीभूतसत्तासामान्यवाचि ज्ञानानन्दपदे तद्व्याप्यज्ञानत्वादिवाचिनी । इदं च जातावेव शक्तिरिति भाट्टमतमाश्रित्योक्तमिति द्रष्टव्यम् । तार्किकादिमतेनाह **सगुणं ब्रह्मेति** ।

**वं०प०— अधिकेति** । सत्यपदेन लक्षितादधिकस्य विशेषस्य ज्ञानपदेन लक्षणायामित्यर्थः । **अखण्डार्थतेति** । निर्विशेषार्थनिष्ठत्वरूपातिखण्डार्थतेत्यर्थः ।

**आनन्दः—** वाच्यार्थभेदसद्भावमेवाह **परापरेति** । अत एवेत्यस्यार्थमाह **स्वप्रकाशोऽपीति** । इत्थम्भूत-त्वमेव दर्शयति **ब्रह्मविशेषणत्वेनेति** ।

**वा०चं०— परापेति** । कुम्भाद्यनुगतसत्ता परा जातिः । अन्तःकरणवृत्त्युपधानलब्धभेदचिदानन्द-विशेषानुगते ज्ञानानन्दत्वे चापरजाती । एवं च सत्यज्ञानानन्दादिशब्दानां लक्ष्यार्थभेदेऽपि क्रमेणोक्तजाति-वाचित्वान्न पर्यायत्वमिति कल्पतरावुक्तत्वादिति भावः ।

**वा०र०—** कुम्भादीनामिव चिदानन्दव्यक्त्योः अनेकत्वाभावात् उक्तम् **अन्तःकरणवृत्त्युपधानेति** । **कल्पतराविति** । एवं ब्रह्मापि माया कार्यकुम्भादिकल्पितव्यक्त्यनुगतसत्तयेत्यादिना जन्माधिकरणे उक्तत्वादित्यर्थः ।

**स०व्र०— परस्परसामान्यवाचिनामिति** । सत्यपदं व्यापकीभूतसत्तासामान्यवाचि ज्ञानानन्दपदे तद्व्याप्यज्ञानत्वादिवाचिनी । इदं च जातावेव शक्तिरिति भाट्टमतमाश्रित्योक्तमिति द्रष्टव्यम् ।

**विठ्ठल०—** ननु सत्यज्ञानादीनां ब्रह्मणा परस्परं चाभेदेऽपि न पदानां पर्यायत्वं वाच्यार्थे भेदसद्भावात् । लक्ष्यार्थस्यैकत्वान्नाखण्डार्थनिष्ठताहान्यापसिद्धान्तः । न चानेकपदैरेकस्यैव लक्षणायां वैय्यर्थ्यम् आरोपित-विपरीताकारव्यावृत्तिबाहुल्यलाभरूपप्रयोजनसद्भावात् इत्याशङ्क्य तत्परिहारकत्वेन उत्तरमूलमवतारयति **ननु सत्यज्ञानादीनामित्यादिना** । वाच्यार्थभेदव्युत्पादनाय स्वेन च मायिना व्यवहारे भट्टनयानुसरणात् भट्टेन च जातावेव शक्तिरित्यङ्गीकारादुक्तं **परापरसामान्यवाचिनामिति** । परसामान्यं सत्ता तद्वाचित्वं सत्यपदस्य अपरसामान्यं ज्ञानत्वादिः तद्वाचित्वं ज्ञानादिपदानाम् इति तदभिप्रायः । व्यक्तौ शक्तिमङ्गीकृत्याह **सगुण-**





**ब्रह्मवाचिनां वेति** । स्वप्रकाशब्रह्मात्मकत्वेन सत्यज्ञानादेश्शास्त्राप्रतिपाद्यत्वाच्छास्त्रवैय्यर्थ्यं यदभिप्रेतं तदपि नेत्याह **अत एवेति** । ब्रह्मविशेषणत्वेनेत्यस्य ब्रह्मगतधर्मविशेषणत्वेनेत्यर्थः ।

**चषकः— परापरसामान्यवाचिनामिति** । जातावेव पदानां शक्तिमुपगच्छतां भाट्टानां मते सत्यपदस्य व्यापकघटादिसाधारणसत्ताजातिवाचित्वात् ज्ञानानन्दादिपदानां व्याप्यभूतज्ञानत्वानन्दत्वादिजातिवाचित्वान्न तत्पदानां पर्यायत्वमिति व्यवहारे भट्टनय इति परिभाषामुपेयुषा कल्पतरुकृताऽभिहितत्वादिति भावः ।

**४६ सु०— आद्ये दोषमाह न व्यावृत्त्येति ।**

**अनु०— न व्यावृत्त्या प्रयोजनम् ।**
**व्यावृत्तस्याविशेषत्वे**

**इत्थंभूतलक्षणे तृतीया ॥ ब्रह्मविशेषणत्वेनासत्यत्वादिव्यावृत्तिलक्षणं प्रयोजनं सत्यादिपदानां त्वया वक्तुं न शक्यते ॥ कुत इत्यत आह व्यावृत्तस्येति । व्यावृत्ततया प्रतीतस्य ब्रह्मणोऽविशेषत्वे सतीत्यर्थः । अभावविशेषाङ्गीकारे च भावविशेषैः किमपराद्धम् ।**

**द्वितीयं दूषयति न व्यावृत्त्येति । व्यावृत्तेर्व्यावृत्तस्य ब्रह्मणोऽविशेषत्वे सा स्वतन्त्रा व्यावृत्तिर्न प्रयोजनम्, अजिज्ञासितत्वात् । मुमुक्षुणा ब्रह्म वा तद्धर्मो वा जिज्ञासितव्यः । तत्र व्यावृत्तिर्न ब्रह्म, तस्य भावरूपत्वादेकत्वान्निरुपाधिकत्वाच्च । ब्रह्मधर्मोऽपि न चेत्कथं मुमुक्षुणा जिज्ञास्येत । अजिज्ञासितबोधनं च कथं प्रयोजनं स्यादिति ।**

**परि०— इत्थम्भूतलक्षण इति** । कञ्चित्प्रकारं प्राप्त इत्थम्भूतस्तस्य लक्षणे ज्ञापके तृतीया भवति । छात्रेणोपाध्यायमद्राक्षीदित्यत्रोपाध्यायत्वप्रकारं प्राप्तस्य छात्रशब्दितः शिष्यो ज्ञापक इति तत्र तृतीयोक्ता पाणिनिना । तथेहापि व्यावृत्त्या व्यावृत्तिरूपचिह्नेनेत्यर्थत्वादेवमुक्तम् । यद्वा इत्थम्भूतस्य यल्लक्षणं तत्र तृतीयेत्यर्थवत् इत्थम्भूतं यल्लक्षणं तत्र तृतीयेत्यप्यर्थमुपेत्यैवमुक्तम् । विशेषणत्वरूपप्रकारान्तरं प्राप्ते व्यावृत्तिरूपे लक्षणे तृतीयेत्यर्थोऽत्र ध्येयः । विशेषणीभूता व्यावृत्तिः प्रयोजनं नेत्यत्र फलितोऽर्थः । उक्तं च तृतीयेऽध्याये ऋग्भाष्यटीकायां सप्तदशे वर्गे 'अच्छा वदा तना गिरा जरायै ब्रह्मणस्पतिम्' इत्येतद्भाष्यस्य 'व्याप्तया गिरा जरायै संस्तुतित्वेन तृतीया भावरूपिणौ' इत्यस्य





व्याख्यावसरे 'जरायै' इत्यत्र जरयेति व्यत्ययमुपेत्य तृतीयाया इत्थम्भूतलक्षणत्वमभ्युपेत्य जरया संस्तुत्या संस्तुतित्वेन स्तुतित्वरूपेणोपेतया' इति । तदेव व्यनक्ति **ब्रह्मेति** । नन्वसत्यादिव्यावृत्तीनां अभावरूपत्वात् तासां ब्रह्मविशेषणत्वेऽपि न निर्विशेषत्वाङ्गीकारभङ्गः । भावविशेषाङ्गीकाराभावा-दित्यत आह **अभावेति** । व्यावृत्तेरिति पदद्वयमध्याहृत्य मूलं योजयति **व्यावृत्तेरविशेषत्वे सतीति** । विशेषणाभावत्वे सतीत्यर्थः । किं प्रति इत्यतो व्यावृत्तस्येत्यनूद्य ब्रह्मण इति विशेष्यमुक्तम् । 'न व्यावृत्त्या प्रयोजनम्' इत्यस्यार्थः **सा स्वतन्त्रेत्यादि** । **निरुपाधिकत्वाच्चेति** । अन्यानिरूपितत्वादित्यर्थः । व्यावृत्तयस्त्वभावरूपत्वादनेकरूपत्वात्सोपाधिकत्वाच्चेत्युक्तत्रितयविपरीता इति भावः ।

**गु०दी०— प्रयोजनं सत्यादिपदानां त्वया वक्तुं न शक्यत** इत्यत्र निर्हेतुकव्यावृत्तेरेवायोगेन न प्रयो-जनतेति भावः।

**यादु०—** ननु कर्तृकर्मणोस्तृतीयेति कर्तृकर्मणोस्तृतीया विहिता । न चात्र व्यावृत्तेः कर्तृत्वं करणत्वं वा सम्भवति । अतः कथं तृतीयेत्यत आह **इत्थम्भूतलक्षण इति** । ननु कञ्चन प्रकारं प्राप्त इत्थम्भूतस्तल्लक्षणे तज्ज्ञापके तृतीया स्यादिति ह्यस्यार्थः । यथा छात्रेणोपाध्यायमद्राक्षीदिति । अत्र सत्यादिपदप्रयोजनत्वरूपं प्रकारं प्राप्तं प्रयोजनं व्यावृत्तिरेव सा कथं तज्ज्ञापिकाऽभेदादित्यत उक्तं **व्यावृत्तिलक्षणं प्रयोजनमिति** । तथा च अभेदेऽपि सामान्यविशेषरूपतयाऽवच्छेदकभेदेन शिंशुपारूपो वृक्ष इत्यत्रेव ज्ञाप्यज्ञापकभावो युक्तो विशेषस्य सामान्यज्ञापकत्वादिति ध्येयम् । यद्वा । प्रयोजनत्वरूपं प्रकारं प्राप्तानां सत्यादिपदानां व्यावृत्तिज्ञापिकेति । तत्र तृतीयेत्यर्थः । अभेदेऽपि सामान्यविशेषभावेन ज्ञाप्यज्ञापकभावोऽत्रापि विवक्षित इति । **किमपराद्धमिति** । अत्र कश्चित्तु 'अभाववैशिष्ट्यस्याऽऽर्थिकत्वेन न शाब्दार्थस्य सखण्डत्वम् । 'यश्चार्थादर्थो न स चोदनार्थः' इति न्यायात् । 'मानान्तरादपोहस्तु न शाब्दस्तेन संस्मृतः इति सुरेश्वरोक्तेश्च' इत्याह तत्तुच्छम् । आर्थिकेनापि विशेषेण ब्रह्मणोऽखण्डत्वहानेः । अनन्तशब्देनान्तवद्व्यावृत्तेः साक्षादुक्तेश्च । सत्यादिपदानां सत्यत्वादिरूपव्यावर्तक-धर्मवैशिष्ट्यातात्पर्ये आर्थिकव्यावृत्तेरप्यसिद्धेर्वक्ष्यमाणत्वाच्चेति । **व्यावृत्तेर्व्यावृत्तस्येति** । अत्र व्यावृत्तेरविशेषत्व इत्यन्वयः । अविशेषणत्व इत्यर्थः । **निरुपाधिकत्वाच्चेत्यनन्तरं** व्यावृत्तेस्त्वभावरूपत्वादनेकत्वात्सोपाधिक-त्वाच्चेति पूरणीयम् ।

**आनन्दः—** ननु ब्रह्मणि अभावरूपव्यावृत्तिवैषिष्ट्यमङ्गीक्रियत इति न व्यावृत्तेः निष्प्रयोजनत्वमित्यत आह **अभावविशेषाङ्गीकार इति** । मूलस्थव्यावृत्त्या इत्यस्य व्यावृत्तेरिति व्याख्यानम् । तया च व्यावृत्ते-र्व्यावृत्तस्य ब्रह्मणश्च विशेषणविशेष्यभावाभाव इत्यर्थः । तस्य तात्पर्यार्थकथने स्वतन्त्रा व्यावृत्तिरिति । **तस्येति** । ब्रह्मण इत्यर्थः ।





**श्रीनिधि०— इत्थंभूतलक्षण इति** । व्यावृत्तिलक्षणप्रयोजनत्वं कश्चित् प्रकारः तं प्राप्तं तल्लक्षणं प्रयोजनं तत् श्रावकव्यावृत्तिपदे तृतीया भवति । विशेषणस्य विशिष्टज्ञापकत्वादिति भावः । व्यावृत्तस्य विशेषत्व इति विरोध इत्यत आह **व्यावृत्ततया प्रतीतस्येति** । ननु 'निर्विशेषं ब्रह्मे'त्यस्य भावरूपविशेषरहित- मित्यर्थः । तथा च व्यावृत्त्यङ्गीकारे न निर्विशेषत्वं विरुध्यत इति आह **अभावविशेषाङ्गीकारे चेति** । **एकत्वादिति** । व्यावृत्तीनां अनेकत्वादिति भावः ।

**वा०चं०—** अत्र क्रियाऽनुपादानाद्व्यावृत्ते स्वयं प्रयोजनत्वेन प्रयोजनान्तराहेतुतया कर्तृकरणहेतुषु तृतीयानुपपत्तेराह **इत्थम्भूतेति** । कञ्चित्प्रकारं प्राप्त इत्थम्भूतस्तस्य लक्षणं चिह्नं तत्र तृतीयेत्यर्थः । तथा च प्रयोजनवत्त्वरूपप्रकारं प्राप्त्यसत्यादिपदानां व्यावृत्तिरूपप्रयोजनमेव चिह्नम् । अनेनैव तेषां प्रयोजनवत्त्वादिति भावः । व्यावृत्तेर्निरासावसरे व्यावृत्तस्येति सिद्धवदनुवादानुपपत्तेराह **व्यावृत्ततयेति** । तथा च ब्रह्मणः सखण्ड- त्वापत्त्याऽपसिद्धान्त इति भावः । न चात्र व्यावृत्तिवैशिष्ट्यस्यार्थिकतया शब्दार्थस्य न सखण्डत्वं यश्चार्थादर्थो न स चोदनार्थ इति न्यायात् 'मानान्तरादपोहस्तु न शब्दस्तेन स स्मृतः' इति सुरेश्वरोक्तेश्चेति वाच्यम् । आर्थिकेनापि विशेषेण ब्रह्मणोऽखण्डत्वहानेरपरिहारात् तस्या एव चापादनात् । अनन्तपदेनान्तवद्व्यावृत्तेः साक्षादुक्तेश्च । शब्दस्य व्यावृत्तिवैशिष्ट्येऽतात्पर्ये आर्थिकव्यावृत्तेरप्यसिद्धेश्च । स्वरूपमात्रस्य सिद्धतया तत्र अतात्पर्यात् । व्यावृत्तिविशिष्टेऽप्यतात्पर्ये तात्पर्यविषयशून्यतयाऽप्रामाण्यापातेनागतिकतया सत्यादिपदानामपि व्यावृत्तिवैशिष्ट्ये तात्पर्याभ्युपगमे शब्दस्यापि सखण्डार्थतापत्तेश्च । उपलक्षिते तात्पर्याभ्युपगमेऽपि काकवद्गृह- मित्यादिवत्सखण्डार्थताऽपरिहाराच्चेति । **अभावेति** । परमसिद्धान्तपरित्यागेऽपि नेह नानेति श्रुतिविरोधस्य दुर्वारत्वात् तत्परिहारोपायस्य च भावविशेषेष्वपि साम्यादिति भावः । ननु व्यावृत्तेर्ब्रह्मविशेषत्वेऽपि ब्रह्मरूपत्वात् प्रयोजनत्वजिज्ञासितत्वाभावोक्तिरनुपपन्नेत्यतो व्यावृत्त्येत्यावर्तितस्य पञ्चम्यर्थत्वेन षष्ठ्यर्थत्वेन च विपरिणतस्य व्यावृत्तस्येत्यनेनाविशेषत्व इत्यनेन चान्वये भावक्तान्तस्य व्यावृत्तस्यैवावृत्त्या कर्मक्तान्तेन तेनैवान्वये वा व्यावृत्तेर्व्यावृत्तस्येति व्यावृत्तेर्ब्रह्मविशेषत्वाभाव इति वाऽर्थस्य लाभे ब्रह्मरूपव्यावृत्तिपक्षस्य व्यावृत्तेर्ब्रह्म- विशेषत्वपक्षस्य च दूषणमपि सिद्ध्यतीत्याशयेनाह **व्यावृत्तेरिति** । व्यावृत्त्यतिरिक्तस्येत्यर्थः । ब्रह्मणोऽविशेषत्व इत्येतल्लब्धार्थकथनं **स्वतन्त्रेति** । योग्यं हेतुमध्याहरति **अजिज्ञासितत्वादिति** । अत एव तथैव विकल्पयति **मुमुक्षुणेति** । व्यावृत्तेर्व्यावृत्तस्येत्यनेन सूचितहेतूनाह **तस्येति** । व्यावृत्तेरन्यादृशत्वादिति भावः ।

**वा०र०— क्रियानुपादानादिति** । हेतुतया चेत्यनन्तरं क्रियां प्रति प्रयोजनान्तरं प्रति वा कर्त्रिति योज्यम् । **कञ्चित्प्रकारं प्राप्त इति** । एतच्च मञ्जर्याद्यनुसारेण गीताभाष्यटीकाव्याख्याने गुरुचरणैः प्रपञ्चितम् । तद्विवरणावसरे चास्माभिर्निपुणतरमुपपादितं तत एव प्रतिपत्तव्यम् । तत्रोपाध्यायत्वरूपप्रकारस्यैवात्र प्रयोजना- नन्तर्भावेन प्रकारालाभात् सामान्यविशेषभावमाश्रित्य प्रकारं निरूपयति **तथा च प्रयोजनवत्त्वेति** । वृत्त्या निषेधधीरिति दृश्यत्वभङ्गन्यायामृतकण्टकोद्धारे वृत्त्येति इत्थंभूतेत्याद्युक्त्वा वृत्तिरूपा निषेधधीरिति व्याख्यानं





चात्रत्यप्रकारेण धीविषयत्वरूपप्रकारे प्राप्तस्य वृत्तिर्लक्षणमित्येवंप्रकारेण व्याख्येयम् । अहिकुण्डलाधिकरणीय-सच्चिदादेरपर्यायत्वेत्येतदणुभाष्यमूलानुसारिन्यायामृतानुसारेणाशङ्क्य निराकरोति **न चात्र व्यावृत्तीत्यदिना** । ननु स्वातन्त्र्याव्यावृत्तिप्रयोजनमित्येतत्पक्षनिरासाय न व्यावृत्त्येति भाष्ययोजनायां हि ब्रह्मणो विशेषत्व इत्यनेन स्वतन्त्रेत्यर्थलाभात् व्यावृत्त्येति तृतीयाया इत्थंभूतलक्षणतृतीयात्वेन स्वतन्त्राव्यावृत्तिर्न प्रयोजनमजिज्ञासितत्वा-दित्येतावानर्थो जातेः । तथा चानेन स्वतन्त्रत्वपर्यवसन्नब्रह्माविशेषत्वपक्षनिरासः सिद्धो भवति । सा व्यावृत्ति-र्ब्रह्मरूपैवेति पक्षान्तरनिरासस्तु नायात्यनेन भाष्येणेति न्यूनतेत्याशयेन पक्षान्तरमुत्थाप्य उक्तपक्षद्वयनिरासोऽपि भाष्यादेवेति न दोष इत्याशयेन भाष्ययोजनार्थं प्रवृत्तं व्यावृत्तेर्व्यावृत्तस्येत्यादि मूलमिति दर्शयन् उक्तमूलं योजयति **ननु व्यावृत्तेरित्यादिना** । अत्र ब्रह्माविशेषणत्वेऽपीति पाठः । ब्रह्मविशेषणत्वाभावमभ्युपगम्यैव तद्रूपत्वाशङ्कायाः प्रवर्तनात् । मूलकोशे तथैव पाठश्चेति ज्ञेयम् । प्रयोजनत्वं च जिज्ञासितत्वं च तयोर्भाव इति योज्यम् । अनुप-पन्नत्वं च ब्रह्मरूपत्वे तयोरुपपत्तेरिति भावेन । न तु पक्षान्तरेऽपि तदनुपपन्नत्वाभिप्रायेण मूले व्यावृत्ते-र्ब्रह्मरूपत्वपक्षनिरासस्यापि भाष्याल्लाभं दर्शयितुं व्यावृत्तेर्व्यावृत्तस्येति सम्बन्धः । व्यावृत्तेर्ब्रह्माविशेषत्व इत्यनेन सम्बन्ध आश्रित इत्यभिप्रायं स्पष्टयितुं पञ्चम्यन्तषष्ठ्यन्तव्यावृत्तेरित्यस्य भाष्ये अभावात् कथं सम्बन्धप्रदर्शन-मित्याशङ्कां वारयितुमुक्तं **व्यावृत्त्येत्यावर्तितस्येत्यादि** । तृतीयान्तव्यावृत्त्येतिपदस्य पञ्चम्यन्ततायाः षष्ठ्यर्थ-तायाश्च विपरिणामसाध्यत्वादुक्तं **विपरिणतस्येति** । **व्यावृत्तस्येत्यनेनेति** । पञ्चम्यर्थस्याव्यावृत्तस्येत्यनेन षष्ठ्यर्थस्याविशेषत्व इत्यनेनेति प्रत्येकं सम्बन्धः । यद्यपि मूले व्यावृत्तेरिति सकृदेव श्रूयते तथापि ब्रह्मणो विशेषणान्यत्वानुवादवैयर्थ्यात् स्वातन्त्र्यप्रतिपत्तये ब्रह्मधर्मोऽपीत्युत्तरानुसाराच्च मूलेऽपि व्यावृत्तेरित्यस्यावृत्ति-रभिप्रेतेति सिद्धं कृत्वा निर्विशेषत्व इत्यनेनापि सम्बन्धोक्तिरिति न दोषः । अत्र पक्षे पूर्ववाक्यगतव्यावृत्त-स्येत्यस्यानुवृत्तिराश्रयणीया । द्वेधा विपरिणामश्च कार्य इत्यपरितोषादाह **भावक्तान्तस्येति** । अनेन भाष्ये व्यावृत्तस्येत्येतद्व्यावृत्तिर्व्यावृत्तमिति भावक्रान्तं व्यावर्त्यत इति कर्मक्तान्तं च तन्त्रेणोपात्तम् । भावक्तान्त-स्यावृत्तिश्चाभिप्रेतेति भाष्याभिप्रायो व्यावृत्तेरित्यादि मूलेन सूचित इति दर्शयति **तेनैवेति** । व्यावृत्तस्येत्यत्र अनेनैवेत्यर्थः । उपलक्षणं चेदं विशेषत्व इत्यनेन चान्वय इत्यपि द्रष्टव्यम् । अविशेषत्व इत्यनेन चान्वय इत्येतदनुवर्तत इति वा । तथा च भावक्तान्तस्याद्यस्य व्यावृत्तस्येत्यनेन कर्मक्तान्तेन अन्वयः । तत्र च व्यावृत्तस्य सकाशादिति योजनात् षष्ठ्युपपत्तिः । अत एव व्यावृत्तेर्व्यावृत्तस्येत्यर्थलाभवचनमुपपन्नम् । द्वितीयस्याविशेषत्व इत्यनेन सम्बन्धस्तु यथाश्रुत एव साधुरिति ज्ञेयम् । **ब्रह्मरूपव्यावृत्तीत्यादि** । व्यावृत्ति-र्ब्रह्मैवेति पक्षस्येत्यर्थः । ब्रह्माविशेषत्वपक्षस्येति पाठः । ब्रह्माविशेषत्व इत्यस्य स्वतन्त्रेत्यर्थपरतया स्वतन्त्र-व्यावृत्तिपक्षदूषणस्यैव ब्रह्माविशेषत्वपक्षदूषणत्वादिति ज्ञेयम् । अत्रायं विवेकः । ब्रह्माविशेषत्व इत्युक्त स्वतन्त्रा व्यावृत्तिः प्रयोजनमिति पक्षनिरासायेत्थंभूतलक्षणतृतीयाश्रयणेन न व्यावृत्त्या प्रयोजनमिति दूषणं प्रवृत्तम् । तत्र ब्रह्मरूपत्वपक्षनिरासाभावं व्यावर्तयितुं मूलकृता व्यावृत्तिव्यतिरिक्तत्वं ब्रह्मविशेषणत्वेनात्र भाष्यकृदभिमतमस्तीति सूचयता बुद्ध्या विवेकेन व्यावृत्तिव्यावृत्तत्वान्न तावद्व्यावृत्तिर्ब्रह्मरूपा प्रयोजनमिति व्याख्यानं व्यावृत्तेर्व्यावृत्तस्येत्यस्य कर्तव्यमिति ज्ञापितम् । तथा च पक्षद्वयस्य दूषणं सिद्ध्यतीत्यस्य





प्रथमपक्षस्य व्यावृत्तेर्व्यावृत्तस्येति हेतुगर्भानुवादेनैव दूषणं सिद्ध्यति । द्वितीयपक्षस्य तु व्यावृत्तेरविशेषत्वे स्वतन्त्रत्व इति यावत् । न व्यावृत्त्या प्रयोजनमिति भाष्योक्तं दूषणं सिद्ध्यतीत्यर्थो बोध्य इति । भाष्ये व्यावृत्तेर्ब्रह्मरूपत्वपक्षनिरासोऽभिप्रेत इत्याशयेन व्यावृत्तेरिति मूलं प्रवृत्तमित्यत्रावष्टम्भकतयोत्तरविशिष्ट-व्याख्यानप्रवृत्तिमाह **अत एवेति** । व्यावृत्तेरित्यादिग्रन्थे पक्षद्वयनिरासकतया भाष्ययोजनादेवेत्यर्थः । **तत्रैव** ब्रह्मस्वरूपत्वादिनैवेत्यर्थः । विकल्पयतीत्युपलक्षणम् । दूषयतीत्यपि ज्ञेयम् । व्यावृत्तस्येति तच्छून्यत्वमुच्यत इति शङ्कानिरासायार्थं स्पष्टयति **व्यावृत्त्यतिरिक्तस्येत्यर्थ इति** ।

**स०व्र०—— इत्थम्भूतलक्षणे तृतीयेति** । ननु कञ्चनप्रकारं प्राप्त इत्थम्भूतस्तल्लक्षणे तज्ज्ञापके तृतीया स्यादिति ह्यस्यार्थः । यथा छात्रेणोपाध्यायमद्राक्षीदिति । अत्र सत्यादिपदप्रयोजनरूपं प्रकारं प्राप्तं प्रयोजनं व्यावृत्तिरेव सा कथं तज्ज्ञापिका अभेदादित्याशङ्कापरिहारायोक्तं व्यावृत्तिलक्षणं प्रयोजनमिति । तथा च अभेदेऽपि सामान्यविशेष्यरूपयोस्तयोरवच्छेदकभेदेन शिंशुपा वृक्ष इत्यत्रेव ज्ञाप्यज्ञापकाभावो युक्तः विशेषस्य सामान्यज्ञापकत्वादिति ध्येयम् । केचित्तु असत्यादिव्यावृत्तिबोधकत्वरूपप्रकारान्तरं प्राप्तानां सत्यादिपदानां व्यावृत्तिश्चिह्नमिति तत्र तृतीयेत्याहुः । **व्यावृत्तेर्व्यावृत्तस्येति** । व्यावृत्तेरविशेषत्व इत्यन्वयः अविशेषत्व इत्यर्थः ।

**विठ्ठल०——** ननु कञ्चित् प्रकारं प्राप इत्थंभूतः तल्लक्षणे तज्ज्ञापने तृतीया स्यादिति हि **इत्थंभूत-लक्षणे तृतीये**त्यस्यार्थः । यथा छात्रेणोपाध्यायमद्राक्षीदित्यत्रोपाध्यायत्वप्रकारं प्राप्तस्य ज्ञापने छात्रेणेति **तृतीयेति** । प्रकृते तु असत्यत्वादि व्यावृत्तिरेव सत्यादिपदप्रयोजनम् । तथा च व्यावृत्तिरूपप्रकारं प्राप्तस्य कथं व्यावृत्तिरेव ज्ञापिका स्यादिति चेत्सत्यम् । सामान्याकारेण प्रयोजनत्वप्रकारं प्राप्तस्य प्रयोजनस्य तद्विशेषभूता सत्यत्वादिव्यावृत्तिरिह ज्ञापिका भवति । ब्रह्मचारित्वादि विशेषस्य ब्राह्मण्यज्ञापकताङ्गीकारात् । तथा च व्यावृत्तेरिह प्रयोजनत्वेऽपि तद्विशेषत्वाज्ज्ञापकत्वोपपत्तेरित्थंभूतलक्षणे तृतीयेति युज्यते इति तदेतत्सूचयितु-मसत्यत्वादि व्यावृत्तिलक्षणं प्रयोजनम् इत्युक्तम् । **अविशेषत्वे सतीत्यर्थ इति** । ब्रह्मणि निर्विशेषत्वेऽङ्गीकृते सति निर्विशेषब्रह्मणि विशेषणतया व्यावृत्तिबोधाजननात् सत्यज्ञानादिपदानां न (व्यावृत्त्या बोधितया) तद्बोधरूपं प्रयोजनमिति मूलार्थ इत्यर्थः । ननु ब्रह्मणो निर्विशेषत्वेऽप्यसत्यत्वादिव्यावृत्तिरूपविशेषोऽङ्गीकर्तुं शक्यत एव, व्यावृत्तेरभावरूपत्वेन निर्विशेषताबाधकत्वाभावादित्यत आह **अभावेति** । निर्विशेषशब्दस्य विशेषमात्राभाव-परत्वादिति भावः । **व्यावृत्तेर्व्यावृत्तस्येति** । व्यावृत्तेरविशेषत्व इत्यन्वयः अविशेषणत्व इत्यर्थः । तस्यैव विवरणं **सा स्वतन्त्रेत्यादि** । कस्याविशेषत्व इत्यत उक्तं **व्यावृत्तस्य ब्रह्मण इति** । असत्यत्वादिव्यावृत्तेः व्यावृत्त-ब्रह्मणो विशेषणत्वाभावे सा स्वतन्त्रा, ब्रह्मधर्मतया अप्रतीता । केवलं प्रतीता व्यावृत्तिर्न पदप्रयोजनमित्यर्थः । अजिज्ञासितत्वमेवोपपादयति **मुमुक्षुणा इति** । निरुपाधिकत्वादित्यस्यान्यानिरूपितत्वादित्यर्थः । असत्त्वादि-व्यावृत्तेरभावरूपत्वादनेकत्वादन्यनिरूपितत्वाच्चेति शेषः । ब्रह्मधर्मोऽपि न चेदित्यतः पूर्वं ब्रह्मणो निर्विशेषत्वान्न ब्रह्मधर्मत्वं त्वयाऽभ्युपगतं तथा चेत्येतावान् शेषो ज्ञातव्यः ।





**चषकः**— चैत्रेण चक्षुषा दृश्यते घट इत्यादाविव क्रियावाचकपदसमभिव्याहाराभावेन कर्तृत्वकरणत्वार्थकत्वायोगेन कथं व्यावृत्तिपदोत्तरा तृतीयेत्यतस्तां घटयति **इत्थम्भूतलक्षण इति**। अथ जटाभिस्तापस इत्यादौ जटापदोत्तरतृतीयोपस्थापितज्ञाप्यत्वस्य निरूपितत्वप्रत्यासत्त्या प्रकृत्यर्थविशेषितस्याश्रयतासंसर्गेण तापसपदार्थतावच्छेदके तापसत्वे अन्वयितावच्छेदकरूपेणानुपस्थिते समभिव्याहृतपदार्थान्तरान्वयायोगेन एकदेशान्वयानुपगमेन वा सम्पन्नो व्रीहिरित्यादौ स्वाश्रयप्रकृत्यर्थतावच्छेदकरूपपारम्पर्येण व्रीहावेव व्रीहपदोत्तरैकवचनार्थैकत्वान्वयवत्तापस एव वा तादृशपारम्पर्येणान्वयोपगमेन कञ्चन प्रकारं प्राप्तस्य ज्ञापके द्योत्ये तृतीयेति सूत्रोदाहरणत्वस्य सुसङ्गमत्वेऽपि प्रकृते प्रयोजनत्वरूपप्रकारे प्रमाया व्यावृत्तेर्ज्ञापकत्वाभावेन एतत्सूत्रोदाहरणत्वं दुःसङ्गममिति चेन्न। अत्र व्याचक्षाणाः 'कञ्चन प्रकारं प्राप्त इत्थम्भूतस्तस्य लक्षणं चिह्नं तत्र तृतीयेऽर्थः। तथाच प्रयोजनवत्त्वरूपं प्रकारं प्राप्तानां सत्यादिपदानां व्यावृत्तिरूपप्रयोजनमेव चिह्नमनेनैव तेषां प्रयोजनवत्त्वादिति भावः।' इति व्याचक्षते। 'अत्र सत्यादिपदप्रयोजनत्वरूपं प्राप्ता व्यावृत्तिरेव तज्ज्ञापिकापि सैव। अभेदेऽपि सामान्यविशेषरूपतयाऽवच्छेदकभेदेनायं वृक्षः शिंशुपा इत्यत्रेव ज्ञाप्यज्ञापकभावो युक्तः' इत्यपि व्याकुर्वते। **किमपराद्धमिति**। अत्रार्थिकं व्यावृत्तिवैशिष्ट्यं न शब्दार्थस्याखण्डार्थताभङ्गाय प्रभवतीति शङ्का आर्थिकविशेषेणाप्यखण्डत्वभङ्गेनानन्तपदेनान्तवद्व्यावृत्तेः साक्षादेवाभिधानेन सत्यत्वादिव्यावर्तकधर्मवैशिष्ट्यमन्तरेण तन्नियन्त्रितव्यावृत्त्यसिद्धेश्चाभिधास्यमानतया च निर्दलैव।

**४७ सु०— किञ्च सत्यादिपदानि ब्रह्मणि किं सत्यत्वादिधर्मानभिदधत्यसत्त्वादिव्यावृत्तिप्रयोजनानि, उतान्यथा वा।**

**नाद्यः अनङ्गीकारादित्याह न व्यावृत्त्येति। व्यावृत्तस्य ब्रह्मणोऽविशेषत्वेऽङ्गीकृते सति, विशेषणाभिधानमुखेन व्यावृत्तिः पदानां प्रयोजनमिति वक्तुं न शक्यत इत्यर्थः।**

**द्वितीयं दूषयति न व्यावृत्त्येति। व्यावृत्तस्य ब्रह्मणोऽविशेषत्वे सत्यत्वादिधर्माप्रतिपादन इति यावत्। असत्यत्वादिव्यावृत्तिः पदानां प्रयोजनमिति वक्तुं न शक्यते। न हि तीरे नदीत्वमनभिदधतो नदीपदस्यानदीत्वव्यावृत्तिः प्रयोजनं सम्भवति। विरोध्याकारसमर्पणेन हि विरोध्याकारान्तरं व्यावर्तनीयम्॥**

**यदुक्तं शास्त्रं चारोपिताकारव्यावृत्त्या स्वप्रकाशोऽपि प्रयोजनवदिति। तदप्यनेनैव निरस्तम्॥ निर्विशेषे स्वयंप्रकाशमाने विरोध्याकारारोप एवानुपपन्न इति चोक्तम्।**

**परि०— अभिदधतीति** । शत्रन्तम् अभिदधानानीत्यर्थः । **तदप्यनेनेति** । व्यावृत्तिर्विशेषणं वा स्वतन्त्रा वेत्यादिविकल्पपूर्वकदूषणेनेत्यर्थः । 'ऐक्याभेदे न शास्त्रेण ज्ञेयं तत्स्वप्रकाशतः' इत्यत्र महावाक्यार्थखण्डनप्रस्तावोक्तदोषान्तरं च स्मारयति **निर्विशेष इति** ।

**वं०प०— अभिदधति** सन्तीति शेषः । **न हि तीरे नदीत्वमिति** । नदीपदलक्ष्यार्थे तीरे नदीत्वार्पणाभावेनैव नदीपदस्य तीरेऽनदीव्यावृत्तिबोधकत्वं नास्ति एवं सत्यादिपदलक्ष्यार्थे ब्रह्मण्यपि सत्यत्वाद्यर्पणाभावेनासत्यादिव्यावृत्तिबोधकत्वं नेत्यर्थः । अत एव न शास्त्रवैयर्थ्यमित्यादिनोक्तं दूषयति **यदुक्तमिति** । **अनेनेति** । 'न व्यावृत्त्या प्रयोजनम्' इत्यनेनेत्यर्थः । दूषणान्तरमाह **निर्विशेष इति** ।

**आनन्दः—** कुतो नेत्यत आह **विरोध्याकारेति** । **अनेनेति** । व्यावृत्त्यसम्भवकथनेनेत्यर्थः ।

**श्रीनिधि०—** सत्यत्वादिधर्मस्य ब्रह्मण्यप्रतिपादने असत्यत्वादिव्यावृत्तिः प्रयोजनं न भवति इत्येतद्व्यतिरेकेण दर्शयति **न हि तीर इति** । अन्यथा तीरे प्रवर्तमानं नदीपदं अनदीत्वव्यावृत्तिप्रयोजनकं स्यदिति भावः । **अनेन निरस्तमिति** । व्यावृत्तेः प्रतिपादयितुं अशाक्यत्वेनेत्यर्थः ।

**वा०चं०—** न च सत्यत्वादेरतात्पर्यविषयस्यापि प्रागभिधाकाले प्रतीतिमात्रेण लक्ष्यस्य तद्व्यावृत्तिसिद्धिरिति वाच्यम् । नद्यां घोष इत्यत्र तीरस्यानदीतोऽपि व्यावृत्तिसिद्ध्यापत्तेरित्याशयेनाह **न हि तीर इति** । व्यावृत्तेर्ब्रह्मविशेषणत्वस्वातन्त्र्याभ्यां सत्यादिपदैः सत्यत्वादिसमर्पणमुखान्यथात्वाभ्यां च व्यावृत्तिबोधप्रकारस्य निरासेनैक्याभेद इत्युक्तदूषणपरिहारः परकृतोऽप्ययुक्त इति सिद्धमित्याह **यदुक्तमिति** । उक्तदूषणं चात्र स्मारयति **निर्विशेष इति** ।

**वा०र०— समर्पणमुखान्यथात्वाभ्यामिति** । सत्यत्वादि धर्मसमर्पणमुखेन व्यावृत्तिबुद्धिजनकत्वं तन्मुखाभावेऽपि केवलव्यावर्तकत्वाभ्यामित्यर्थः ।

**विठ्ठल०— अभिदधतीति** । शत्रन्तम् अभिदधानानीत्यर्थः । ब्रह्मणि सत्यत्वादिधर्मानभिधाने असत्यत्वादि व्यावृत्तिरूपं सत्यादिपदप्रयोजनं वक्तुं न शक्यत इत्येतत्कुत इत्यतो दृष्टान्तेनोपपादयति **न हि तीर इति** । नद्यां घोष इत्यत्र तीरपदपरित्यागेन नदीपदप्रयोगस्यानदीत्वव्यावृत्तिः प्रयोजनम् । तत्र घोषाधारे तीरे न सति सामीप्यलक्षणं नदीत्वविशेषमनभिदधतो नदीपदस्य नदीदूरत्वरूपा नदीत्वव्यावृत्तिलक्षणं प्रयोजनं न सम्भवति । कुत एतदिति चेत् हि = यस्मात् विरोध्याकारसमर्पणेनैव तद्विरोध्याकारान्तरं व्यावर्तनीयमित्यनुभवसिद्धम् । तथा च तत्र यथा तद्विरोधिधर्माभिधानमुखेनैवानदीत्वव्यावृत्तकत्वं तथा प्रकृतेऽपि विरोधिसत्यत्वादिधर्माभिधानमुखेनैव सत्त्वादिधर्मान्तरव्यावर्तकत्वं तत्र ब्रह्मणो निर्विशेषत्वेन सत्यत्वादिधर्मानभिधानेन





असत्यत्वादिव्यावृत्तिर्न सत्यादिपदप्रयोजनं भवतीति भावः । **स्वप्रकाशेऽपीति** । स्वप्रकाशतन्मात्रे सत्यज्ञानादि-विशेषे प्रयोजनवदित्यर्थः । **तदप्यनेनेति** । व्यावृत्तिरात्मविशेषणं वा स्वतन्त्रं वेति विकल्पदूषणेनेत्यर्थः । आकारान्तरारोपस्यैवासम्भवस्योक्तत्वाच्च न तद्व्यावृत्तिप्रयोजकत्वं शास्त्रस्येत्याह **निर्विशेष इति** । उक्तं शास्त्रेण ज्ञेयं तत्स्वप्रकाशत इत्येतद्व्याख्यानावसरे तत्त्वाप्रतीतेरेव भ्रान्तिहेतुत्वादित्युक्तमित्यर्थः ।

**४८ सु०— एवं विशेषानङ्गीकारे वाक्यद्वयस्यानुपपत्तिमभिधायोपसंहरति तदिति ।**

**अनु०— तदखण्डं च खण्डितम् ॥**

**तत्तस्मादखण्डं निर्विशेषं वाक्यद्वयप्रतिपाद्यमित्येतन्मतं खण्डितं दूषितं वेदितव्य-मित्यर्थः ।**

**परि०— वाक्यद्वयस्येति** । महावाक्यावान्तरवाक्यरूपवाक्यद्वयस्येत्यर्थः ।

**वं०प०— वाक्यद्वयस्य** महावाक्यावान्तररूपवाक्यद्वयस्य ।

**आनन्दः—** नन्वखण्डं खण्डितमित्युपसंहरणमयुक्तम् । यदखण्डं तत् खण्डनस्यैवासम्भवादित्यतो व्याख्याति **तत्तस्मादिति** ।

**॥ इति 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषानङ्गीकारे लक्ष्यलक्षणव्यवहारानुपपत्तौ' अवान्तरवाक्यार्थानुपपत्तिश्च ॥**

* * *

**॥ अथ 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषानङ्गीकारे लक्ष्यलक्षणव्यवहारानुपपत्तौ' स्वक्रियाविरोधः ॥**

**४९ सु०— स्वक्रियाविरुद्धं च निर्विशेषत्ववचनमित्याह निर्विशेषत्वमिति ।**

**अनु०— निर्विशेषत्वमेतेन मूकोऽहमितिवद्भवेत् ।**

**यथा मूकोऽहमित्येतत्स्वक्रियाविरुद्धम् । वक्तृत्वाभावो ह्यनेनोच्यते, वचनक्रियया च वक्तृत्वमिति ॥ तथा निर्विशेषं ब्रह्मेति स्वक्रियाविरुद्धं भवेत् । कथम् । एतेन निर्विशेषत्वेन**



**विशेषेणापतितेन हेतुना । विशेषाभावो हि निर्विशेषं ब्रह्मेति वाक्येन प्रतिपादयितुमिष्टः । प्रतिपादनक्रियया च विशेषाभावलक्षणो विशेषः प्राप्नोतीति ॥ अयमपि विशेषो निर्विशेषमित्यनेन निराक्रियत इति कुतस्तत्रापि स्वक्रियाविरोधः । प्रतीतिविरोध इति चेत् । तर्ह्येतद्वचनकर्तृत्वमपि मूकोऽहमित्यनेन निराक्रियत इति कुतस्तत्रापि स्वक्रिया-विरोधः । प्रतीतिविरोध इति चेत् । समस्समाधिः ॥ परबोधनोपायाभावाद्विशेषाभाव उपादीयते न तु ब्रह्मविशेषतयेति चेत् । अत्रापि परबोधनोपायाभावादेवेदं वचनम् । वस्तुतस्त्वसौ मूक एवेत्यस्तु ॥ निर्विशेषम् इत्यस्य विशेषनिरास एव तात्पर्यम्, न निर्विशेषत्वविशेषविधौ, अतः कथं विरोध इति चेत्'। तर्हि मूकोऽहमित्यस्यापि वक्तृत्वनिरासे तात्पर्यम्, नैतद्वचनवक्तृत्व इति कुतस्तत्रापि विरोधः ॥ न तत्र स्ववचन-विरोधः, किन्तु स्वक्रियाविरोध इति चेत् । प्रकृतेऽपि किमन्योऽभिहित इत्यास्तां प्रपञ्चः । तदिदमुक्तं मूकोहमितिवदिति ।**

**परि०**— यथा मूकोऽहमित्येतत्स्वक्रियाविरुद्धं तथा निर्विशेषं ब्रह्मेति स्वक्रियाविरुद्ध-मित्यन्वयः । दृष्टान्तस्य स्वक्रियाविरोधमुपपादयति **वक्तृत्वाभाव इत्यादिना** । **अनेन** मूकोह-ऽमिति वाक्येन । एतद्वाक्योच्चारणक्रियया त्वित्यर्थः । शङ्कोत्तराभ्यां स्वक्रियाविरोधमेव व्यनक्ति **अयमपीति** ।

**यादु०**— निर्विशेषमित्यत्र स्ववचनविरोध एवोक्त इति मत्वा शङ्कते **निर्विशेषमित्यस्येति** । गूढाभि-सन्धिरुत्तरमाह **तर्हि मूकोऽहमित्यस्यापीति** । अभिसन्धिमुद्घाटयति **प्रकृतेऽपीति** ।

**आनन्दः**— निर्विशेषत्वेन जगज्जन्मादिकारणत्वादेः स्वलक्षणं दूषणं स्वन्यायविरुद्धं इत्युक्तं न केवल-मेतावत्किन्तु अन्यदप्यस्तीत्याह **स्वक्रियाविरुद्धं चेति** । एतेनेत्यस्यार्थस्य दृष्टान्तदार्ष्टान्तिकसाम्यस्य चाप्रतीते-र्व्याख्याति **यथा मूक इति** । निर्विशेषत्वस्यासिद्धत्वेन हेतुत्वासम्भवादाह **विशेषेणापतितेनेति** । अयमपि विशेषाभावलक्षणो विशेष इत्यर्थः । **प्रतीतीति** । एतद्वचनकर्तृत्वस्य प्रतीतत्वेन तदभावोक्तौ तद्विरोध इत्यर्थः । **सम इति** । अत्रापि विशेषाभावलक्षणविशेषस्याप्रतीतत्वात् तद्विरोध इत्यर्थः ।

**श्रीनिधि०**— **वचनक्रिययेति** । मूकोऽहमिति शब्दव्यञ्जकवाग्व्यापाररूपक्रियेत्यर्थः । वस्तुतस्तु असौ मूक एवेति स्वस्य तद्वचनवत्तया इदं वचनं नोपादीयत इति भावः । विशेषविशेषिणोः विशेषतद्वद्भावघटक-विशेषान्तरं तत्राप्येवं तत्राप्येवमिति अनवस्थेत्यर्थः ।





**वा०चं०**— ननु सर्वविशेषान्निराकुर्वता निर्विशेषमित्यनेन विशेषाभावरूपविशेषस्यापि निरासान्न प्रतिपादनक्रियाप्राप्तः कश्चिद्विशेषोऽस्त्यतः कथं स्वक्रियाविरोध इति शङ्कते **अयमपीति** । निर्विशेषमिति सर्वविशेषनिरासान्न प्रतिपादनक्रियाप्राप्तः कश्चिद्विशेषोऽस्तीति वदन् प्रष्टव्यः सर्वविशेषाणामनेन निरासान्न विशेषाभावप्रतिपादनक्रिया नापि तत्प्राप्तो विशेष इति मन्यसे आहोस्वित्सत्यामपि तत्प्रतिपादनक्रियायां तस्या विशेषाप्रापकत्वमिति । द्वितीयेऽपि तस्या अन्यथासिद्धत्वात्तदप्रापकत्वमुत निर्विशेषमिति वाक्यस्य निर्विशेषत्व-रूपविशेषविधौ तात्पर्याभावाद्वा । अत्राद्ये पक्षे स्वयमेव प्रतीतिविरोधे वक्तुं शक्येऽपि मूले मूकोऽहमित्युक्ति-सामर्थ्येन प्रतिबन्दीग्रहणस्य प्रस्तुतत्वात्तन्मुखेनैव प्रतीतिविरोधं वक्तुं मूकोऽहमित्यत्राप्येतत्साम्यमुपपादयति **तर्हीति** । सर्ववचनवक्तृत्वाभावं वदता मूकोऽहमित्यनेनैतद्वचनवक्तृत्वस्यापि निरासेनैतद्वचनक्रियायास्तत्प्राप्त-वक्तृत्वस्याप्यभावेन तत्रापि स्वक्रियाविरोधो न स्यादित्याशयः । मूकोऽहमित्यनेन तन्निराकरणमात्रेण न प्रतीतिसिद्धवचनक्रियातत्प्रयुक्तवक्तृत्वयोरपलापो युक्तः । अतोऽत्र स्वक्रियाविरोधः स्यादेवेति चेत्तर्हि निर्वि-शेषमिति निराकरणमात्रेण न प्रतीतिसिद्धप्रतिपादनक्रियातत्प्राप्तविशेषापलापो युक्तोऽतोऽत्रापि स्वक्रियाविरोध इत्याह **प्रतीतीति** । विशेषाभावप्रतिपादनोपायान्तराभावात् तदुपायत्वेन प्रकृततयाऽन्यथासिद्धायाः प्रतिपादन-क्रियाया न विशेषप्रापकत्वमिति द्वितीये आद्यं शङ्कते **परेति** । तर्हि वक्तृत्वाभावबोधनोपायान्तराभावेन तदुपायत्वेन प्रवृत्ततयाऽन्यथासिद्धेर्वचनक्रियाया अपि न वक्तृत्वप्रापकत्वमिति तत्रापि स्वक्रियाविरोधो न स्यात् इत्याह **अत्रापीति** । निर्विशेषमित्यस्य विशेषविधावतात्पर्यात्तन्निरास एव च तात्पर्यान्न तत्प्रतिपादनक्रियाया विशेषप्रापकत्वमिति द्वितीये द्वितीयं शङ्कते **निर्विशेषमित्यस्येति** । साम्येन समाधत्ते **तर्हीति** । ननु निर्विशेष-मिति वाक्यबलादेव विशेषाभावस्य तद्रूपविशेषस्य च प्राप्तेरेकप्रकरणप्राप्तयोरुभयोरेकत्र तात्पर्यं नान्यत्रेति स्ववचनविरोधपरिहारे कर्तुं शक्येऽपि मूकोऽहमित्यनेन वक्तृत्वाभावमात्रप्राप्तेर्वचनक्रियया च वक्तृत्वप्राप्तेर्न वाक्यतात्पर्यभावाभावाभ्यां स्वक्रियाविरोधपरिहारो युक्त इति न साम्यमित्याशयेन शङ्कते **न तत्रेति** । अत्रापि वाक्याद्विशेषाभावस्यैव प्राप्तिः प्रतिपादनक्रिययैव च विशेषस्येत्युक्ततया साम्यमेवेत्याह **प्रकृतेऽपीति** । वैलक्षण्यप्रकाराप्रतिपादनेऽप्यत्र स्ववचनविरोध एव, मूकोऽहमित्यत्र तु स्वक्रियाविरोध एवेत्याग्रहमात्रस्योपेक्ष-णीयतैव युक्तेत्याशयेनाह **आस्तामिति** । अथ चैवं वैलक्षण्याभासव्युत्पादने प्रकारान्तरेण परेण कृते तन्निरासक-साम्यप्रकारः शिष्यैरेवोह्यतामित्याशयेनाह **आस्तामिति** ।

**विठ्ठल०**— निर्विशेषत्वस्य विशेषाभावरूपविशेषेण विरोधप्राप्तावपि कथं स्वक्रियाविरोधः, मूकोऽह-मित्यत्रेव वचनक्रियया विरोधाभावादित्यतः येन वचनेन विशेषाभावः प्रतिपाद्यते तेनैव वचनेन विशेषप्राप्ता-वस्त्येव वचनक्रियाविरोध इति भावेनाह **विशेषाभावो हीति** । स्वाध्यायोऽध्येतव्य इतिवत् निर्विशेषत्ववचनेनैव विशेषाभावलक्षणविशेषोऽपि न सिद्ध्यतीत्याशङ्क्य प्रतिबन्द्योत्तरमाह **अयमपि इति** । वचनस्य प्रतीतिसिद्धत्वेन मूकत्वं विरुद्धमेवेति न प्रतिबन्दीति चेन्न विशेषाभावलक्षणविशेषस्यापि निर्विशेषमिति वचनजन्यप्रतीति-सिद्धत्वेन समत्वादित्याह **प्रतीतिविरोध इतीति** । विशेषाभावलक्षणो विशेषो न ब्रह्मनिष्ठतयोच्यते येन ब्रह्मणि

निर्विशेषत्वस्य प्रतीतिविरोधः किं तु बुद्ध्यारोहाय तटस्थतयोच्यत इत्याशङ्क्य मूकोऽहमित्यत्राप्येतत्सममित्याह **परबोधनेति** । ननु मूकोऽहमित्यत्र मूकत्वं वचनक्रियाराहित्यम् । तच्च मूकोऽहमिति वचनक्रियया विरुद्धमिति भवति स्वक्रियाविरोधः । प्रकृते तु न तथा ब्रह्मणो निर्विशेषत्वस्य निर्विशेषं ब्रह्मेति वचनक्रियया साक्षाद्विरोधादर्शनात् स्ववचनविरोधस्तु स्यात्, तत्कथं स्वक्रियाविरोध इत्याशयेन शङ्कते **न तत्र इति** । ब्रह्मणि सर्वविशेषाभावसाधनं च विशेषाभावलक्षणविशेषाभिधानक्रियया साक्षाद्विरुद्धमेवेति स्वक्रियाविरोध एवेत्याशयेन परिहरति **प्रकृतेऽपीति** ।

**॥ इति 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषानङ्गीकारे लक्ष्यलक्षणव्यवहारानुपपत्तौ' स्वक्रियाविरोधः ॥**

* * *

**॥ अथ लक्ष्यलक्षणव्यवहारानुपपत्तेरुपसंहारः ॥**

५० **सु०— यदर्थमयं प्रयत्नस्तदाह अभिन्नेऽपीति ।**

## अनु०— अभिन्नेऽपि विशेषोऽयं बलादापतति ह्यतः ॥

**अत उक्तप्रकारेण महावाक्यावान्तरवाक्ययोरन्यथाऽनुपपत्तिबलात् भेदरहितेऽपि ब्रह्मणि अयमनुपपत्तिशान्तिहेतुर्विशेषो नाम शक्तिविशेषोऽङ्गीकरणीयः प्राप्नोति । इदमुक्तं भवति । महावाक्यप्रतिपाद्यमैक्यमवान्तरवाक्यप्रतिपाद्यं च सत्यत्वादिकं ब्रह्मणा परस्परं चाभिन्नमेव । एकधैवानुद्रष्टव्यमित्याद्येकरस(त्व)प्रतिपादकश्रुतेः । न चोक्तदोषः । यतो भेदहीनेऽपि वस्तुन्यस्ति कश्चिच्छक्तिविशेषो येन प्रकाशमानमपि न प्रकाशत इत्यादि युज्यते । स च विशेषोऽनयैवार्थापत्त्याऽवगम्यत इत्येव त्वया वक्तव्यमिति ।**

**परि०— अयं प्रयत्न इति** । लक्ष्यलक्षणयोर्भेद इत्यादिना महावाक्यार्थावान्तरवाक्यार्थखण्डनप्रयत्न इत्यर्थः । **शक्तिविशेषः** वस्तुसामर्थ्यविशेषः । **उक्तदोषः** अभेदपक्षोक्तदोषः ।

**गु०दी०— प्रकाशमानमपि न प्रकाशत** इत्यत्र ब्रह्मांशेन प्रकाशमानमपि ऐक्यांशेन न प्रकाशत इत्यर्थः ।

**वं०प०— अनयैवार्थापत्त्येति** । प्रकाशमानस्याप्यप्रकाशनान्यथाऽनुपपत्त्येत्यर्थः ।





**आनन्दः**— अत इत्यस्यार्थमाह **उक्तप्रकारेणेति**। ननु जीवब्रह्मैक्यस्य सत्यत्वादेश्च धर्मिभूतब्रह्मणा सहैक्यस्याप्रामाणिकत्वान्न तत्रानुपपत्तिशान्त्यर्थे विशेषाङ्गीकारो युक्तः, विशेषस्याप्रामाणिकत्वाच्चेत्यत आह **इदमुक्तं भवतीति**। **उक्तदोष इति**। ऐक्यस्य ब्रह्मस्वरूपत्वेऽपि ब्रह्मणः प्रकाशमानत्वेऽपि ऐक्यस्याप्रकाशमानमित्युक्तो दोषो नेत्यर्थः।

**वा०चं०**— अत इत्यस्य व्याख्या **उक्तप्रकारेणेत्यादि**। ननु वस्तुसिद्धेः प्रमाणायत्तत्वात् कथं बलाद्विशेषसिद्ध्युक्तिरित्यतो महावाक्यावान्तरवाक्यान्यथाऽनुपपत्तिरूपप्रमाणस्यैव बलशब्देन विवक्षितत्वान्नानुपपत्तिः इत्याह **महावाक्येति**। ननु विशेषेऽप्रस्तुतत्वादयमिति निर्देशानुपपत्तिरित्यतस्तस्यानुपपत्तिशान्तिहेतुत्वं मूलारूढं कर्तुं विवक्षितार्थमाह **अयमिति**। ऐक्यादेर्ब्रह्माभेदपक्षे उक्तानुपपत्त्या भेदादिपक्षवदभेदपक्षस्यापि त्याज्यत्वस्यैवापातेन विशेषासिद्ध्या यथास्थितानुपपत्तेरभिन्नेऽपीत्यनुवादेनाभेदपक्षपरिग्रहस्य सिद्धवदनुवादेनैकधैवेत्यादितत्प्रमाणस्य सूचनात्तत्र प्राप्तानुपपत्तिपरिहारकतया विशेषस्योपन्यासाद्विशेषप्रमाणत्वेन चैक्याद्यभेदप्रमाणतदनुपपत्तिप्रमाणरूपोभयान्यथाऽनुपपत्तेरेवाभिमतत्वान्नानुपपत्तिरिति भाष्याशयमाह **इदमुक्तं भवतीति**। त्वया वक्तव्यमित्यनेन नेदं ब्रह्माभिन्ने जीवैक्यादौ विशेषबलादनुपपत्तिपरिहारप्रतिपादनं वस्तुवृत्ताभिप्रायेण येन भाष्यकारस्यापसिद्धान्तः स्यात्, किन्तु प्रतिबन्दीं घटयितुं परं प्रति वक्तव्यशिक्षणमिति सूचयति।

**वा०र०**— **अप्रस्तुतत्वादयमिति निर्देशेति**। विशेषेऽयमिति निर्देशानुपपत्तिः। तस्याप्रस्तुतत्वादिति योजना। **विशेषो नाम शक्तिविशेष** इति मूलम्। अत्र विशेषप्रकरणे शक्तिविशेष इति प्रथमत उक्त्वापि उत्तरत्र भेदप्रतिनिधिस्तत्कार्यकारी कश्चिदतिशय इति द्विवारं सर्वातिशयोऽभिन्नेष्वर्थेषु विशेषत्वाद्विशेष इति गीयत इति वस्तुस्वभावातिशयस्येति च व्यवहारः। अदृश्यत्वनयमूलस्थातिशया एवेत्येतट्टीकायां ब्रह्मणा सविशेषाभिन्ना एवेत्यर्थः। न तु त एव तद्विशेष इति भ्रमितव्यम्। अन्यत्र सविशेषाभिन्नत्वस्योक्तत्वेन विशेषत्वाभावसिद्धेश्चेत्युक्तम्। अभिमान्यधिकरणस्थविशेषेण शक्तिश्चान्येभ्य इति भाष्यमूले विशेषेणातिशयेनेति व्याख्यायापि शक्तिविशेष इति पुनरनुवादश्च। आकस्मिको विशेषश्चेददृष्ट इति ज्ञानपादभाष्यमूले विशेषोऽतिशय इत्युक्तम्। एतदुभयस्थले भेदकार्यकरत्वप्रसक्त्यभावः। पराधीनविशेषिता इति वियदधिकरणमूलेऽतिशयोऽर्थ उक्तः। अशेषविशेषतोऽपि बन्धमित्येतद्व्याख्यावसरेऽपि विशेषोऽतिशय इत्युक्तं न भेदप्रतिनिधिविशेषपरम्। स्वरूपेऽपि विशेषोऽस्तीति तत्त्वनिर्णयतृतीयपरिच्छेदटीकायां विशेषो नाम काचिद्वस्तुनः शक्तिरित्युक्तम्। स्वभावभेदापरनाम्ना विशेषेणेति कल्पयित्वेत्यनुभाष्यमूले उक्तम्। द्रव्यमेव ततोऽनन्तेत्येतन्मूलटीकायां विशेषात्मकमित्यस्य भेदप्रतिनिधिरूपविशेषाश्रयीभूतधर्मरूपमेवेत्यादितृतीयपदार्थस्येत्यादि चोक्तम्। एकादशगीतातात्पर्ये तु 'एकं रूपं हरेर्नित्यमचिन्त्यैश्वर्ययोगतः। न तु सङ्ख्यागोचरं च विशेषादेव केवलम्। अभावो यत्र भेदस्य प्रमाणावसितो भवेत्। विशेषनामा तत्रैव विशेषव्यवहारवान्' इत्यारभ्य 'यत्कल्याणगुणात्मकम्' इत्यन्तं ब्रह्मतर्कवाक्यान्युदाहृतानि। तद्व्याख्यावसरे यत्र वस्तुनि भेदाभावः प्रमाणावसितो भवति तत्र व्यवहारविशेषनिर्वाहक एव हि विशेषो नाम।





अतो विशेषादेव प्रमाणावसितभेदाभावेषु भगवद्रूपेषु व्यवहारविशेषो युक्त इति भाव इति प्रतिपाद्य विशेषोऽपि विशेषिस्वरूपमेवेत्यादि चोक्ताविशेषस्य स्वस्यैव स्वस्मिन्व्यवहारविशेषनिर्वाहकत्वेन विशेषान्तरानङ्गीकारान्न विशेषानवस्थापीत्युक्ता । तमेव विशेषं विभज्य निरूपयतीति द्रव्यात्मना स नित्योऽपि विशेषात्मैव जायते इत्यादिकमवतार्य चेतने कश्चिद्विशेषो जायते । चेतनद्रव्यात्मकत्वेन नित्यस्यापि विशेषस्य व्यक्तिविवक्षया जननव्यवहारः । यथा करोति भुङ्क्ते गच्छतीत्यत्र करणभोजनगमनविशेषा व्यक्त्यव्यक्तियुताः । चेतनवस्तुस्वरूपमस्तीत्यत्र चेतनत्ववस्तुत्वस्वरूपत्वास्तित्वविशेषास्तु नित्याभिव्यक्ताः । ते द्विविधा अपि विशेषिणात्यन्ताभेदिनः । अचेतने तु चूतफलस्वरूपमस्त्येवेत्यत्र चूतत्वफलत्वादिविशेषा यावद्द्रव्यभाविनो विशेषिणात्यन्ताभिन्नाः । पीतं चूतफलमित्यत्र पीतत्वादिविशेषाः कादाचित्काविशेषिद्रव्यस्यैव विशेषोपादानत्वादुपादानविशेषिद्रव्यात्मना अयावद्द्रव्यभावित्वेऽपि कार्यरूपेण जातत्वादेव विशेषिणा भिन्नाभिन्ना इत्यादिग्रन्थेन खण्डिते भेद ऐक्यं च यावद्वस्तु न भेदवदित्युक्तकार्यकारणगुणगुण्यादिरूपसम्बन्धिस्थले कार्यवत् विशेषत्वेन व्यवहारं कृत्वा विशेषस्य विशेषिणा ज्ञातत्वाज्ञातत्वादिविशेषोपपत्त्यर्थस्वनिर्वाहको गुणादेरेव भेदकार्यकारी विशेषश्चोपपादितः । तदेतद्ग्रन्थमर्यादया गुणादयोऽपि विशेषाः । तेषां भेदकार्यकारी विशेषोऽन्यः । स च स्वनिर्वाहक इति प्रमेयमागतम् । अष्टादशाध्यायगीतातात्पर्यनिर्णये तु 'सम्प्रेरयितुरीशस्य कर्मस्वखिलचेतनान् । ज्ञातृज्ञानज्ञेयरूपा प्रेरणा सा स एव यत् । स्वरूपेणैव नित्या सा विशेषात्मतया भवेत् । विशेषोऽपि स्वरूपेण नित्यश्च स्याद्विशेषतः' इत्यादि तत्त्वविवेकप्रमाणोदाहरणं कृतम् । तद्व्याख्यावसरे कर्मसु प्रेरको भगवान् । तस्य या प्रेरणा तस्य ज्ञानादिरूपभगवत्स्वरूपत्वेन ज्ञातृज्ञानादिरूपत्वमुक्तम् । तथा सा भगवत्स्वरूपतया सर्वदा विद्यमानैव व्यक्तिरूपेण जायते । तस्याः व्यक्तिरूपो विशेषोऽपि नित्यप्रेरणारूपतया सदा विद्यमान एव विशेषतो जायते । प्रेरणायां विशेषश्च न प्रेरणाभिन्नः विशेष्यस्य विशेषश्च न ततो भिन्नः । किन्तु सा प्रेरणा स्वयमेव स्वात्मानं विशेषितया विशेषतया निर्वहति सविशेषोऽप्येवमित्यादिकमुक्त्वा विशिष्टविशेष्ययोर्निर्विशेषाभेदो नास्ति । ज्ञाता देवदत्त इति शब्दयोः पर्यायत्वाभावात् । विशेषविशेषिशब्दपर्यायत्वपरिहाराय विशेषेऽपि विशेषान्तरस्य स्वीकार्यत्वाच्चेति प्रतिपाद्यविशेषपरम्परया अनवस्थाशङ्कापरिहारायोक्तं विशेष्यवस्तुनस्तद्विशेषाणां च स्वनिर्वाहकत्वात् । एवमीश्वरप्रेरणाया विशेषस्तस्यापि विशेष इत्यङ्गीकारेऽपि न कश्चिद्दोष इत्यादिकं प्रतिपादितम् । विशेषोऽपि विशेषस्य स्वस्यैव गमको भवेदित्यन्तिमवाक्यस्य 'ननु दण्डादिविशेषणं वस्तुनि दण्डित्वादिविशेषं गमयतु, विशेषः किं गमयेदित्यत' इत्यवतारश्च । तेन विशेष्यविशिष्टस्थले विशेष्यवस्तुनस्तद्विशेषाणां च स्वनिर्वाहकत्वमित्याद्युक्तं भवति । एवमन्यत्र तत्र तत्र तथा तथा प्रतिपादितं ज्ञेयम् । परं तु विशेषोऽभेदकार्यकारी यः सोऽतिशयमात्ररूपो न भवति । अशेषविशेषतोऽपीत्यादौ व्याख्यातेऽतिशये भेदकार्यकरत्वादेरभावात् । विशेषकत्वाद्विशेष इत्यपि विशेषणसाधारणम् । **शक्तिविशेष इति** स्वभावभेदापरनाम्नेत्यादि मूलोक्तिश्चैकवाक्यतया योज्यास्ति । . . . . . . ।

**विठ्ठल०**— विशेषणमिति कथं परामर्श इत्यतः प्रागुक्तानुपपत्तीनां सन्निहितत्वात्तच्छान्तिहेतुरपि बुद्धौ सन्निहित इत्ययमिति परामर्शो युज्यत इत्याशयेनोक्तम् **अयमनुपपत्तिशान्तिहेतुरिति** । ननु प्रमाणसिद्धे ह्यर्थापत्तिः





तत्रैक्यादावपर्यायशब्दा वाच्यत्वादिभेदकार्यमात्रमुक्तरीत्या प्रमाणसिद्धम् । न हि तस्य ब्रह्मणा भेदराहित्ये प्रमाणमस्ति । अतोऽन्यथानुपपत्तेरेवाभावान्न विशेषः प्रामाणिक इत्यत आह **इदमुक्तं भवतीति** । **उक्तदोषः** = अपर्यायशब्दवाच्यत्वादिः । **अनयैवेति** । एकरसत्वश्रुतिः भेदकार्यदर्शनरूपप्रमाणद्वयविरोधरूपया अनयैवेत्यर्थः । भेदानवस्थादीत्यादिपदेन मेरुमन्दरयोरिव विशेषविशेषिभावानुपपत्तिर्गृह्यते ।

**॥ इति लक्ष्यलक्षणव्यवहारानुपपत्तेरुपसंहारः ॥**

**॥ इति 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषानङ्गीकारे लक्ष्यलक्षणव्यवहारानुपपत्तिः' ॥**

* * *

**॥ अथ 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषाङ्गीकारे लक्ष्यलक्षणव्यवहारोपपत्तिः' ॥**

**॥ तत्रादौ विशेषतद्वतोरभेदस्य स्वनिर्वाहकता ॥**

**५१ सु०— नन्वङ्गीकृतेऽपि विशेषे नानुपपत्तिशान्तिः । सोऽपि हि विशेषो यदि वस्तुनो भिन्नस्तर्हि भेदानवस्थादिदोषः स्यादभिन्नत्वे च विशेषतद्वद्भावानुपपत्तेस्तादवस्थ्यादित्यत आह विशेषेति ।**

**अनु०— विशेषतद्वतोश्चैव स्वनिर्वाहकता भवेत् ।**

**विशेषविशेषिणोश्चाभेद एवाङ्गीकरणीयः । विशेषबलाच्च विशेषतद्वद्भावोऽप्युपपादनीय इति शेषः । तथाऽपि विशेषपरम्परयाऽनवस्था स्यादित्यत आह स्वनिर्वाहकतेति । स एव विशेषो विशेषान्तरमन्तरेण विशेषतद्वद्भावं च घटयति । एकस्यैव निर्वाह्यत्वं निर्वाहकत्वं च तद्बलादेव सिद्ध्यतीत्यङ्गीकरणीयमिति ।**

**गु०दी०— स एव विशेष** इत्यत्र यथा घटप्रकाशनार्थमानीतो दीपः स्वप्रकाशमपि स्वशक्त्यैव साधयेत् न तु प्रकाशान्तरमपेक्षते । तथाऽन्यत्र भेदकार्यकारित्वेनानीतो विशेषः स्वस्मिन्नपि भेदकार्यं स्वशक्त्यैव साधयेत् न तु विशेषान्तरमपेक्षते । अत एव दीपस्य स्वप्रकाशत्ववत् स्वनिर्वाहकता चास्यैव युक्तियुक्ता न घटादेरिति भावः । न च सर्वभेदकार्यकारित्वे भेदस्यैव विशेष इति नामान्तरमिति शङ्क्यम् । एकसत्त्वेऽप्यपरनाशाख्यभेदासाधारण-कार्यस्य विशेषेऽनङ्गीकारेण सिंहासनारोहाख्यराजासाधारणकार्यातिरिक्तसकलकार्यकारिणि मन्त्रिणि राजप्रतिनिधि-त्ववद्भेदप्रतिनिधित्वस्यैव न्यायप्राप्तत्वात् । तदुक्तमाचार्यैः । 'खण्डिते भेद ऐक्यं च यावद्वस्तु न भेदवदि'ति खण्डनं नाम घटादौ एकसत्त्वेऽप्यपरनाशः । सत्येव कपालतन्त्वाद्युपादानकारणे तत्संयोगनाशमात्रेण घटाद्युपादेयनाशस्य दर्शनात् । स च भेदासाधारणकार्य इति भेदः ऐक्यं च वक्तव्यमित्यर्थः ।

**श्रीनिधि॰— एकस्यैव निर्वाह्यत्वं निर्वाहकत्वं चेति** । ननु वाह्यं वाहकमित्यपि पर्यायो भेदवानित्यत्रापि प्राप्यत इति चेत् न । निर्वाह्यत्वनिर्वाहकत्वयोः परस्परं धर्मिणा निर्वहणक्रिया चात्यन्तमभेद एवेति ब्रूमः । न च शब्दपर्यायत्वापातः । विशेषबलादेव तदभावोपपत्तेः । न चैक्यबलादपि पर्यायत्वपरिहार इति साम्प्रतम् । विशेषधर्मिग्राहकार्थापत्त्यैव सर्वसामर्थ्यस्य प्रमितत्वात् । न हि स्वस्मिन् प्राप्तानुपपत्तिशान्त्यर्थमन्यदुपेक्षमाणस्य अन्यानुपपत्तिशामकत्वं युज्यते । तदयमाभाणको लोके । न हि स्वकुक्षिभरणे असमर्थस्य जनपदपोषकत्वमिति । न चैवमैक्ये । तद्ग्राहकप्रमाणेनास्य सामर्थ्यस्याप्रमितत्वात् । तत्त्वमस्यादिवाक्येन तन्मात्रस्य प्रमितत्वादि सर्वमवदातम् ।

**वा॰चं॰**— ननु विशेषस्याङ्गीकारितत्वादुत्तरवाक्यं व्यर्थमित्यतस्तद्व्यावर्त्यां शङ्कां दर्शयति **नन्विति** । ननु तर्हि विकल्पितपक्षान्यतराङ्गीकारेण तद्दूषणपरिहारेण समाधानं कर्तव्यं स्वनिर्वाहकोक्तिरयुक्ता । स्वनिर्वाहकत्वोक्तेरनवस्थापरिहारकत्वेनानवस्थायाश्च भेदपक्षे प्रसक्तया तदङ्गीकारोन्नयने चापसिद्धान्तापातादित्यतो विशेषतद्वतोरिति वाक्यं पृथक्कृत्य तत्र पक्षविशेषाङ्गीकारं तदुपपादनप्रकारं चाध्याहृत्य तत्र विशेषपरम्पराप्राप्तानवस्थापरिहारकतयोत्तरवाक्यं योजनीयमित्याशयेनाह **विशेषेत्यादिना** । तावताऽपि 'वाह्यं वाहकमित्यपि पर्यायः' इति दूषणं न प्रसज्यत इत्याह **एकस्यैवेति** ।

**स॰व्र॰— स एव विशेष इति** । यथा घटप्रकाशनायानीतः दीपः स्वप्रकाशमपि स्वशक्त्यैव साधयेत् तथा भेदव्यवहारायाङ्गीकृतः विशेषोऽपि स्वीयव्यवहारनिर्वाहाय न विशेषान्तरमपेक्षते । अत एव दीपस्य प्रकाशत्वमिव स्वनिर्वाहकत्वं चास्यैव युक्तियुक्तम्, न घटादेरित्यर्थः । न च सर्वभेदकार्यकारित्वे भेदस्यैव विशेष इति नामान्तरमिति शङ्क्यम्, एकसत्त्वेप्यपरनाशाख्यभेदासाधारणकार्यस्याविशेषेऽनङ्गीकारेण सिंहासनारोहाख्यराजासाधारणकार्यातिरिक्तसकलकार्यकर्तरि मन्त्रिणि राजप्रतिनिधित्ववत् भेदप्रतिनिधित्वस्यैव न्यायप्राप्तत्वात् ।

**५२ सु॰— नन्वभिन्ने वस्तुनि भेदकार्यनिर्वाहकत्वं विशेषस्य कुतः प्रमाणात्(तः) सिद्धमित्यत आह भेदहीने त्विति ।**

**अनु॰— भेदहीने त्वपर्यायशब्दान्तरनियामकः ॥**
**विशेषो नाम कथितः**

**तुशब्दोऽवधारणे । अपर्यायशब्दान्तरनियामक इत्यशेषभेदकार्यनिर्वाहकत्वोपलक्षणम् । एतदुक्तं भवति । जीवब्रह्मैक्यादीनामेकधैवेत्यादिश्रुत्या चैतन्यस्वरूपमात्रत्वं**





**प्रतीयते । चैतन्ये स्वप्रकाशतया सिद्धेऽप्यसिद्धिः(?)अपर्यायशब्दवेद्यत्वम्, चैतन्य-प्रकाशस्य नाविद्यानिवर्तकत्वमद्वैतज्ञानस्य तन्निवर्तकत्वमित्यर्थक्रियाविशेषः । चैतन्यमेकं सत्यत्वादीन्यनेकानीति सङ्ख्यावैलक्षण्यमित्यादिभेदकार्याणि चावगम्यन्ते । एतदुभया-न्यथाऽनुपपत्त्या भेदरहितेऽपि चैतन्ये भेदप्रतिनिधिस्तत्कार्यकारी कश्चिदतिशयोऽस्तीति कल्प्यते । गत्यन्तराभावात् । तथा चार्थापत्त्या स्वरूपग्राहिण्या भेदकार्यनिर्वाहक एवा(चा)सौ सिद्ध इति किं तत्र प्रमाणान्तरान्वेषणेनेति । अनेनैव विशेषस्य लक्षणं चोक्तं भवति, 'भेदहीनेऽप्यनुपचरितभेदव्यवहारनिमित्तं विशेष' इति ।**

**परि०— अनेनैवेति** । ऐक्यस्य एकधेत्यादिश्रुतिभेदकार्यरूपोभयान्यथानुपपत्तिरूपार्थापत्त्ये-त्यर्थः । व्यक्ता चैषाग्रेऽपि भेदहीनेऽप्यनुपचरितभेदव्यवहारनिमित्तमिति । घटपटनिष्ठभेदेऽतिव्याप्ति-निरासाय भेदहीनेऽपीत्युक्तिः । राहोः शिर इत्याद्युपचरितव्यवहारहेतौ अतिव्याप्तिनिरासायानुपचरितेति । घटादिव्यवहारहेतुघटत्वादावनतिव्याप्तये भेदव्यवहारेत्युक्तिः ।

**यादु०— अनुपचरितेति** । अशक्तपुरुषे पुरुषकार्यकारित्वाभावेनोपचरिते नायं पुरुष इत्यादिभेदव्यवहारे यन्निमित्तं पुरुषकार्यकारित्वाभावरूपं तत्रातिव्याप्तिवारणायानुपचरितेत्युक्तमिति द्रष्टव्यम् ।

**आनन्दः—** ननु विशेषस्यापर्यायशब्दान्तरनियामकत्वमात्रं चेत्तर्ह्यैक्ये भासमानेऽपि ब्रह्मणो भाव-मित्यादिरूपभेदकार्यं कथं स्यादित्यत आह **अपर्ययेति** । ननु विशेषस्य भेदकार्यकारित्वे किं प्रमाणमिति प्रमाणे पृष्टे भेदकार्यकारी विशेष इत्युक्तिमात्रमयुक्तम् । एवमपि प्रमाणस्यानुपन्यस्तत्वादित्यत आह **एतदुक्तं भवतीति** । **भेदहीनेऽपीति** । भेदहीनेऽपि भेदसादृश्यादिना भेदव्यवहारस्याजायमानत्वात्तस्यापि विशेषत्वं स्यादित्यतोऽनुप-चरितेत्युक्तम् । स भेदव्यवहारश्चोपचरित एवेति भावः ।

**श्रीनिधि०— असिद्धिः** अप्रतिपत्तिः । घटस्य स्वरूपमिति भेदव्यवहारनिमित्तत्वं घटस्याप्यस्तीति अतिव्याप्तिरित्यत आह **अनुपचरितेति** । अयं च भेदव्यवहार औपचारिक इति भावः ।

**वा०चं०—** अपर्यायशब्दान्तरमात्रनियामकत्वे कार्यान्तरानुपपत्तिसाम्याद्विशेषाभ्युपगमवैयर्थ्यमित्यत आह । **अपर्ययेति** । नन्वेतावता विशेषस्य भेदकार्यनिर्वाहकत्वे किं प्रमाणमुक्तं भवतीत्यतो विशेषस्वरूप-ग्राहकार्थापत्त्या भेदकार्यनिर्वाहकतैव तत्सिद्धेर्न तत्र पृथक् प्रमाणं गवेषणीयमिति मूलाभिप्रायं वक्तुमभिन्ने-ऽपीत्युक्तार्थापत्तिस्वरूपं विवेचयति **इदमुक्तं भवतीति** । स्वस्वकार्याकारिणि भृत्यपुत्रादौ नायं भृत्यो नायं पुत्र इत्यादिव्यवहारस्य विशेषानिमित्तकत्वादनुपचरितेति व्यवहारविशेषणम् ।





**वा०र०— एतदुभयान्यथाऽनुपपत्त्येति** मूलम् । यद्यपि 'स्वरूपेऽपि विशेषोऽस्ति स्वरूपत्ववदेव तु । भेदाभावेऽपि तेनैव व्यवहारश्च वर्तत' इति परमोपनिषद्वाक्यभेदशब्दाविशेषं तु 'हरावन्यत्र भिन्नताम् । ब्रूयुर्हरेर्जीवजडैरपि भेदं हि मुख्यत' इत्यानन्दमयनयोक्तं ब्रह्मतर्कवचनं 'विशेषोऽपि स्वरूपं स स्वनिर्वाहकताऽस्य चे'ति ब्रह्मतर्कवाक्यं च तृतीयपरिच्छेदतत्त्वनिर्णये उदाहृतं विशेषे प्रमाणतया वक्तुं युक्तम् । तथापि तद्वाक्येष्वियमर्थापत्तिरभिप्रेतेति तस्या एव कथनमिति न दोषः ।

**स०व्र०— अनुपचरितेति** । पदार्थस्य स्वरूपमित्यादिव्यवहारहेतुव्यावृत्त्यर्थमनुपचरितेति व्यवहारविशेषणम् । न चापर्यायशब्दान्तरनियामकत्वेन तत्रापि विशेषोऽनुसर्तव्य इति वाच्यम्, अनन्यथासिद्धापर्यायशब्दान्तरनियामकत्वस्य विशेषकार्यतयाऽभिप्रेतत्वेन न घटत्वव्यावृत्तिलक्षणप्रवृत्तिनिमित्तभेदेन प्रकृते अन्यथासिद्धेः । न चास्योपचरितत्वे मानाभावः घट एव स्वरूपमिति मुख्यव्यवहारसत्त्वात् । न चानन्दं ब्रह्मण इत्यस्यापि विज्ञानमानन्दं ब्रह्मेति व्यवहारनिरुद्धत्वादुपचरितमिति वाच्यम्, अभेदस्य मानान्तराप्राप्तत्वेन भेदबोधन एव विज्ञानमितिश्रुतेश्चरितार्थत्वेन सम्बन्धव्यवहारबाधन एव तात्पर्यादिति द्रष्टव्यम् । पुरुष एव पुरुषोचितकार्यकारित्वाभावेनौपचारिके नायं पुरुष इति व्यवहारे अतिव्याप्तिपरिहारायानुपचरितपदम् ।

**विठ्ठल०— अशेषभेदकार्येति** = धर्मधर्मिभावः स्वनिर्वाहकत्वं तत्राप्येकस्यैव निर्वाह्यत्वं निर्वाहकत्वं निर्वहणक्रियात्वम् इत्याद्यनेकभेदकार्यनिर्वाहकत्वोपलक्षणमित्यर्थः । परीत्या भेदकार्याणि वक्ष्यति । नन्वनेन विशेषस्य भेदकार्यनिर्वाहकत्वे किं प्रमाणमुक्तमित्यतो विशेषग्राहकप्रमाणमेव तस्य भेदकार्यनिर्वाहकत्वे मानमित्युक्तं भवतीति आह **एतदुक्तं भवतीति** । भेदहीनेऽपीति घटपटनिष्ठभेदेऽतिव्याप्तिवारणायोक्तं **भेदहीनेऽपीति** । अशक्तपुरुषे पुरुषकार्यकर्मत्वाभावेनोपचरितेऽयं पुरुषो नेत्यादि भेदव्यवहारे निमित्तभूतं यत्पुरुषकार्यकारित्वाभावरूपं तत्रातिव्याप्तिवारणाय **अनुपचरितेति** । घटादिव्यवहारहेतुभूतघटत्वादावतिव्याप्तिवारणाय **भेदव्यवहारे**त्युक्तम्।

**॥ इति 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषाङ्गीकारे लक्ष्यलक्षणव्यवहारोपपत्तौ' विशेषतद्वतोरभेदस्य स्वनिर्वाहकता ॥**

* * *

**॥ अथ 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषाङ्गीकारे लक्ष्यलक्षणव्यवहारोपपत्तौ' अद्वैतीतरान् विशेषाङ्गीकारणम् ॥**

**५३ सु०— एवमद्वैतवादिना विशेषमङ्गीकारयित्वाऽन्यानप्यङ्गीकारयति सोऽस्तीति ।**

## अनु०— सोऽस्ति वस्तुष्वशेषतः ।





न केवलं ब्रह्मणि मायावादिना विशेषोऽङ्गीकरणीयः, किं नाम प्रपञ्चसत्यतावादिभिरप्यशेषद्रव्येषु स विशेषोऽङ्गीक(र्तव्यः)ार्यः । तथा हि, पटस्तच्छौक्ल्यं च तावन्न भिद्येते अङ्गुलीद्वयवद्भेदेनानुपलम्भात् । अयुतसिद्धत्वादिति चेत् । किमयुतसिद्धत्वं नाम । अवश्यमाश्रयाश्रयिभावेनावस्थानमिति चेत् । किमेतावता भेदेन न प्रत्येतव्यम् । नापि कुण्डमिव पटोऽधिकरणत्वेन, बदराणीव शौक्ल्यमाधेयत्वेन परिस्फुरति । किं नाम तदेव तदिति । न चैषा प्रतीतिर्भ्रान्तिः । बाधकाभावात् । शौक्ल्यपटयोर्भेदावगाहिनी प्रत्यक्षप्रतीतिर्हि बाधिका भवेत् । अनुमानादीनामभेदप्रत्यय(क्ष)रोधेनोत्थानस्यैवासम्भवात् । न च भेदावगाहिनी प्रत्यक्षप्रतीतिरस्तीत्युक्तम् । तेन प्रत्यक्षत एव सिद्धः पटशौक्ल्ययोरभेदः । दृश्यन्ते च भेदकार्याणि, पटशौक्ल्यबुद्ध्योरन्यूनानतिरिक्तविषयत्वाभावः, तच्छब्दयोरपर्यायत्वं अपर्यायशब्दस्मारकत्वं, जलाहरणाद्यर्थक्रियाभेदः, पटमानयेत्युक्ते यत्किञ्चिच्छुक्लानानयनं, शुक्लमानयेत्युक्ते नियमेन पटस्यानानयनम्, अपटः पट इतिवदशुक्लः पट इत्यनयोर्विरोधाभावः, अन्धस्यापि पटोऽयमितिवच्छुक्लोऽयमिति च प्रतीत्यनुत्पत्तिः, शुक्लाप्रतिपत्तिवत् पटाप्रतिपत्त्यभावः, महारजनसम्पर्केण शुक्लत्ववत्पटस्या(प्या)वृतत्वाभावः, पटवद्वा शौक्ल्यस्याप्यनावृतत्वाभावः; इत्येवमादीनि । न चैषा प्रतीतिर्भ्रान्तिः । बाधितत्वाभिमानस्याप्यभावात् । व्यवहाराद्यविसंवादाच्च तदेतयोरभेदभेदकार्यप्रतीत्योरन्यथाऽनुपपत्त्या निर्भेदेऽपि पटेऽस्ति कश्चिदतिशयो भेदप्रतिनिधिर्यद्वशादिदं सर्वं समञ्जसं स्यादित्येव कल्पनीयम् । स चातिशयोऽभिन्नेऽपि विशेषकत्वाद्विशेष इति गीयते । एवमन्यत्रापि द्रव्ये विशेषः प्रतिपत्तव्यः ।

ननु भेदाभेदाङ्गीकारेणानुपपत्तेः शमनात् किं विशेषेणेति चेन्न । परस्परविरुद्धयोर्भेदाभेदयोरेकत्रावस्थानघटनाया(म)पि विशेषस्याप्यङ्गीकरणीयत्वात् । प्रतीतत्वात् को विरोध इति चेत् । सत्यम् । प्रतीतिरपि कथमुपपन्नेति चिन्तायां वस्तुस्वभावातिशयस्यानुसरणीयत्वात् । भेदाभेदानवस्थापरिहाराय(र्थमपि) विशेषाङ्गीकार(स्य)ावश्यकत्वस्योक्तत्वादिति ।

**परि०— अङ्गीकारयित्वेति** । अङ्गीकारशब्दात् 'तत्करोति तदाचष्टे' इति णिचि कृते ण्यन्तात् क्त्वाप्रत्यये रूपम् । अङ्गीकार्य इति शङ्कानवकाशः । अस्तीत्यस्य तात्पर्यमाह **अङ्गीकर्तव्य**

**इति**। अर्थापत्तेरन्यथोपपत्तिमाशङ्क्य निराह **ननु भेदाभेदाङ्गीकारेणेति**। **एकत्रेति**। यस्य येन भेदाभेदौ तत्र वस्तुनीत्यर्थः। **उक्तत्वादितीति**। 'भेदाभेदौ यदि तदा स्यादेव ह्यनवस्थितिः' इत्यादाविति भावः।

**गु०दी०— अङ्गुलीद्वयवद्भेदेनानुपलम्भात्** इत्यत्र एकपात्रस्थक्षीरनीरयोरेकपात्रस्थपूर्वोत्तरनीरयोश्च अङ्गुलीद्वयवद्भेदेनादर्शनेऽपि हंसेन गुरुत्वविशेषेण च भेदोपलम्भस्याङ्गुलिद्वयभेदोपलम्भवदेव सत्त्वान्नानुमान-मूलव्याप्तेः शैथिल्यम्। **बाधितत्वाभिमानाभावात्** इत्यत्र अत एव नोपचरितत्वम्। व्यवहारस्य सार्वजनीनत्वाच्च इत्यपि ग्राह्यम्।

**यादु०—** अस्ति इत्यस्य तात्पर्यम् **अङ्गीकर्तव्य इति**। अन्यथाऽन्यानप्यङ्गीकारयतीत्युक्तस्यालाभ इति द्रष्टव्यम्। **अयुतसिद्धत्वादिति**। तथा चोक्तानुमानेऽन्यथासिद्धिरिति भावः। **अवश्यमिति**। कुटुम्बदारादि-व्यावृत्त्यर्थमिदम्। नियमेनेत्यर्थः। अत्राविनश्यतोरिति विशेषणीयम्। तेन विनश्यदवस्थयोराश्रयाश्रयि-भावेनावस्थानाभावादव्याप्तिरिति निरस्तम्। यथाहुः 'तावेवायुतसिद्धौ द्वौ विज्ञातव्यौ ययोर्द्वयोः। अविनश्यदेकमपराश्रितमेवावतिष्ठत' इति। ननु कथमेतत्। अविनश्यतोरित्यस्य हि विनश्यताशून्ययोरित्यर्थो वर्णनीयः। अन्यथोक्ताव्याप्त्यपरिहारात्। तथा च नित्यायुतसिद्धयोरप्रसिद्धेः। न च ययोर्द्वयोः सत्त्वदशायामिति विवक्षितम्। भूतलघटाभावयोरप्ययुतसिद्धताप्रसङ्गात्। न च भावयोरित्यपि विवक्षितम्। कालघटत्वयोरपि तत्त्वप्रसङ्गादिति चेन्न। उभयस्थित्यवच्छिन्नकालावच्छेदेन नियताधारताप्रयोजकीभूतसम्बन्धातिरिक्तसम्बन्धा-श्रयत्वमेवायुतसिद्धत्वमित्यत्र तात्पर्यात्। एतेन प्रलयकाले व्यक्त्यभावेऽपि जातेः सत्त्वात्कथं तयोराश्रयाश्रयि-भावेनावस्थानमिति निरस्तम्। उभयस्थित्यवच्छिन्नकालावच्छेदेन तत्रापि तत्सत्त्वात्। इदमयुतसिद्धत्वं भेदोपलम्भानुकूलमेव न प्रतिकूलमतो नोक्तान्यथासिद्धिरित्याशयेनाह **किमेतावतेति**। येनान्यथासिद्धिरुक्ता तदयुतसिद्धत्वमसिद्धं चेत्याह **नापि कुण्डमिवेति**। ननु विरुद्धधर्माधिकरणत्वरूपमनुमानं तदन्यथाऽनुपपत्ति-रूपार्थापत्तिर्वा वैशेषिकसमयरूप आगमो वा तयोर्भेदे मानमित्यत आह **अनुमानादीनामिति**। **अन्यूनातिरिक्तेति**। पटं विना शौक्ल्यबुद्धेर्बलाकादौ शौक्ल्यं विना पटबुद्धे रक्तपटादौ सत्त्वादिति भावः। **जलाहरणाद्यर्थक्रियेति**। अतद्गुणसंविज्ञानबहुव्रीहिणा शीतनिवारणाद्यर्थक्रिया ग्राह्येति वा घटशौक्ल्ययोरित्यादिपाठमपेक्ष्य वेदमिति ज्ञातव्यम्। **घटमानयेत्युक्त इत्यादि**। नन्वत्र ययोः पटशुक्लरूपव्यक्तिविशेषयोरभेदः प्रत्यक्षसिद्धः। न तयोरेतानि भेदकार्याणि किन्तु पटशौक्ल्यसामान्ययोः तयोश्च नाभेदः प्रत्यक्षसिद्धः। न हि पटमात्रं शुक्लमात्राभिन्नमिति कस्यचित्प्रतीति-रस्ति। तथा च कथमेतत्सङ्गतमिति चेत्। उच्यते। सत्यम्, पटशौक्ल्यसामान्याश्रितानीमानि भेदकार्याणीति। तथापि नासङ्गतिः। व्यक्तिविशेषाभेदविषयकेणापि पटशौक्ल्यसामान्यव्यक्त्योरपि अभेदावगाहनस्य प्राप्तेः। विशेषव्यक्तिरूपातिरिक्तस्य सामान्यव्यक्तिस्वरूपस्यैवाभावात्पटत्वशुक्लत्वयोरपि धर्मत्वेन पटशौक्ल्यरूपधर्म्यभिन्न-त्वात्। उक्तं हि भगवत्पादैः। 'व्यावृत्तं यच्च सामान्यं तदेव स्याद्विशेषतः' इति। एतद्व्याख्यावसरे सुधायामप्येव-





मेवोक्तम् । 'व्यावृत्तस्वरूपाभिन्नस्य प्रतिनियतसामान्याकारस्याभ्युपगमेन विशेषसामान्यरूपं सर्वमपीष्यत' इति । तथा च शुक्लः पट इति सामान्याकारेणाभेदावगाहिनी प्रत्यक्षप्रतीतिः सामान्ययोरप्यभेदमवगाहत इति तदाश्रित-भेदकार्यप्रदर्शनं नासङ्गतम् । यदत्रोक्तम् 'पटमात्रं शुक्लमात्राभिन्नमिति न प्रतीयत' इति तत्तथैव । उक्तरीत्या सामान्ययोरभेदे तत्र भेदकार्यनिर्वाहकविशेषानङ्गीकारेऽस्यापि भेदकार्यस्यानुपपत्तेः । नन्वस्तु सिद्धान्त इत्थं समाधानम्, प्रकृते तार्किकादीन्प्रति कथमिदं सङ्गतमिति चेत् । तान्प्रत्यपि पटशौक्ल्यव्यक्त्योर्भेदानुपलम्भेनादावभेदं प्रसाध्य तदाश्रितयोः पटत्वशुक्लत्वसामान्ययोरपि तेनैव हेतुना स्वाश्रयाभेदे सिद्धे तेन परस्परमपि तरुत्ववृक्षत्वयोरिवाभेदमापाद्य तदाश्रितभेदकार्यान्यथाऽनुपपत्त्युद्भावनात् । यद्वा । पटशुक्लविशेषयोरत्यन्ताभेदे पटशुक्लसामान्ययोरपि अत्यन्ताभेदः प्राप्नोति । घटघटयोरिव विशेष्यसामान्ययोरत्यन्ताभेदस्याप्रतीत्या विशेषानङ्गीकारे विरुद्धयोर्भेदाभेदयोश्च समाधातुमशक्यत्वस्य वक्ष्यमाणत्वेन च विशेषानतिरिक्तसामान्यस्यैव वक्तव्यत्वादिति भावः । ननु तर्ह्यतिशय एव कल्पनीयो न विशेष इत्यत आह **स चातिशय इति** ।

**वं०प०— अन्यूनेति** । समानविषयत्वाभावः । पटबुद्धौ प्रतीयमानः शौक्ल्यबुद्धौ न प्रतीयते । तत्र प्रतीयमानः पटबुद्धौ न प्रतीयत इति भावः ।

**आनन्दः— अनुमानादीनामिति** । बाधितत्वादिति भावः । **उक्तम्** अङ्गुलीद्वयवदित्यत्रेति शेषः । **इत्येवमादीनि** इत्यत्र आदिपदेन व्यवहारपरिग्रहः ।

**श्रीनिधि०—** तर्हि प्रत्यक्षप्रतीतिरेव बाधिकाऽस्त्वित्यत आह **न च भेदावगाहिनीति** । उक्तम् **अङ्गुलीद्वयवदित्यादिना** । **जलाहरणादिति** । आदिपदेन शीतनिवारणादिर्गृह्यते ।

**वा०चं०—** सत्यत्ववादिनं प्रति ब्रह्मण्येव विशेषो व्युत्पादनीय इति न निर्बन्धः किन्तु सर्वत्रापीत्याशयेनाशेषत इति व्युत्पादयितुं प्रपञ्चसत्यत्ववादिभिरिति विशेषणम् । **अवश्यमिति** । नियमेनेत्यर्थः । सम्बन्धविनाशस्य सम्बन्धिविभागस्य च कालान्तरेऽप्यभावेनेति यावत् । पटतच्छौक्ल्ययोः कुण्डबदरयोश्च भेदे सम्बन्धे च समाने कालान्तरभाविनः सम्बन्धविनाशस्य सम्बन्धविभागादेर्वा प्रत्यक्षप्रतीत्यप्रयोजकतया-ऽऽश्रयाश्रयिभावेनावस्थानतौल्यात्तद्वदेव भेदेनोपलम्भः स्यादेव । न हि यावदयावद्द्रव्यभाविश्यामतास्थले श्यामतादशायां प्रतीतिवैलक्षण्यानुभवः कस्यचिदित्याशयेनाह **किमेतावतेति** । आश्रयाश्रयिभावेन प्रतीतिमभ्युपेत्येदमुक्तम्, वस्तुतस्तु न तथा प्रतीतिरपि त्वभेदेनैवेत्याह **नापीति** । **अनुमानादीनामिति** । अन्यथा कालात्ययापदिष्टोच्छेद एव स्यादिति भावः । असञ्जातबाधस्थलवदुपपत्तिं निरस्यति **व्यवहारादीति** । **एवमिति** । तन्तुपटादिबुद्धीनां भिन्नघटादिबुद्धितो वैलक्षण्यं तावदनुभूयते । तच्च न तावत्सम्बन्धविषयत्वेन । कुण्डबदरादिबुद्धितोऽपि वैलक्षण्यानुभवात् । नापि संयोगान्यसम्बन्धविषयत्वेन । घटतज्ज्ञानतदभावादिबुद्धितोऽपि वैलक्षण्यानुभवात् । नापि स्वरूपप्रत्यासत्तिसंयोगान्यसम्बन्धविषयत्वेन । घटतद्धर्मिकान्योन्याभावादिबुद्धेर्घटपटादिबुद्धितो





वैलक्षण्याभावापातात् । नाप्ययुतसिद्धिविषयत्वेन । आश्रयाश्रयिभावनियमो ह्ययुतसिद्धिः । तत्र च तदानीन्तनाश्रयाश्रयिभावः कुण्डबदरादिबुद्धावपि भाति । नियमस्तु न तन्तुपटादिबुद्धावपि । न हि प्रत्यक्षा तन्तुपटादिधीस्तन्तुपटसम्बन्धनाशो वा तन्तुपटविभागो वा न भविष्यतीत्याकारा । नापि कुण्डबदरादिधीस्तयोः सम्बन्धनाशो वा कुण्डबदरादिविभागो वा न भविष्यतीत्याकारा नापि समवायविषयत्वेन । उक्तरीत्या सम्बन्धनित्यत्वस्य सम्बन्ध्ययुतसिद्धत्वस्य वा तत्रास्फुरणात् । तस्मादभेदविषयत्वेनैव वैलक्षण्यं वाच्यम् । अत एव ह्यातानवितानात्मकास्तन्तव एव पट इत्यादिरेव प्रत्ययो न त्वाश्रयाश्रयिभावेन कस्यचित् । दृश्यन्ते च भेदकार्याणि तन्तुपटबुद्ध्योरन्यूनातिरिक्तविषयत्वाभावः, तच्छब्दयोरपर्यायित्वम्, अपर्यायशब्दस्मारकत्वं, शीतनिवारणाद्यर्थक्रियाभेदः, सामानाधिकरण्यव्यवहार इत्येवमादीनि । न चैतयोर्बाधोऽस्ति येन भ्रान्तित्वं शङ्केत । तदेतयोरभेदभेदकार्यप्रतीत्योरन्यथाऽनुपपत्त्या तत्रापि विशेषः प्रतिपत्तव्य इत्यर्थः । भाष्यकारोक्तान्यथाऽनुपपत्तिं समर्थयितुमन्यथोपपत्तिं शङ्कते **नन्विति** । यद्वा मीमांसकेनापि विशेषमङ्गीकारयितुं तन्मतेनान्यथोपपत्तिं शङ्कते **नन्विति** । उक्तयुक्तिं स्मारयति **भेदाभेदेति** ।

**वा०र०— अङ्गीकारयित्वेति** मूलम् । अत्राङ्गीकार्येति वाच्यमित्याद्याशङ्कापरिहारादिकं रचनाधिकरणटीकायां तदुपपादने च ज्ञेयम् । ननु 'सोऽस्ति वस्तुष्वशेषत' इत्यादिभाष्यमूले वस्तुपदं द्रव्यार्थमाश्रित्य द्रव्येष्विति व्याख्यातम् । 'विशेषास्तेऽप्यनन्ताश्चे'त्येतद्भाष्यमूले अशेषतो वस्तुषु अनन्तद्रव्येष्विति च व्याख्यातम् । प्रतिद्रव्यमनेकत्वे द्रव्याभेदे द्रव्यस्यापि । पूर्वं द्रव्येण विशेषस्याभेदचिन्तेत्यादिकं चोक्तम् । तत्कथम् । कार्यस्य तत्तन्निष्ठत्वं गुणादेर्व्यापितादिक इत्यादि वैशेषिकाधिकरणानुभाष्यमूले द्रव्यादिषु सप्तस्वपि पदार्थेषु विशेषसमर्थनात्तदनुसारेणात्रापि वस्तुशब्देन द्रव्यादिपदार्थग्रहणस्यैव कर्तव्यत्वादिति चेत्सत्यम् । अत्र हि प्रकरणे लक्ष्यलक्षणयोर्भेद इत्यादि शङ्कासमाधानग्रन्थे 'अतोऽनन्तगुणं ब्रह्म निर्भेदमपी'त्यन्ते द्रव्यतद्धर्मेष्वेव भेदाभेदविचारस्य प्रक्रान्ततया तत्र विशेषाङ्गीकारेण समाधानव्याख्यावसरे वस्तुपदं द्रव्यमात्रपरत्वेन व्याख्यातम् । तद्भाष्ये गुणादिनिष्ठतद्गतत्वादिधर्माणामप्रसक्तत्वेन तत्रापि विशेषप्रतिपादनपर्यन्तं धावनस्यानावश्यकत्वेन वस्तुपदस्य द्रव्यमात्रार्थतयैव व्याख्येयत्वात् । गुणादिषु विशेषविचारस्तु कार्यस्य तत्तन्निष्ठत्वमित्यादिना द्रव्यादिसाधारण्येन वैशेषिकाधिकरणे भविष्यतीति तत्राभिप्रेतम् । अत एव वैशेषिकनयेऽपि द्रव्यमेव ततोऽनन्तेत्येतद्भाष्ये गुणगुण्यादीनामत्यन्ताभेदेऽपि गुणादीनां द्रव्यविशेषत्वेन द्रव्यमेव विशेषशक्त्यैवापर्यायशब्दवाच्यत्वादिव्यवहारहेतुर्भविष्यतीत्युक्त्वैवं द्रव्यमेव घटादिकं गुणक्रियाद्यनन्तं विशेषात्मतया नानाव्यवहारहेतुर्भविष्यतीति योजनान्तरे उक्त्वा कल्पनागुरुतादोषादित्यादिना गुणगुण्यादीनां पदार्थान्तरता नास्तीत्यादिप्रमेयप्रतिपादनेन द्रव्यतद्गतगुणादिधर्मभेदस्य भेदकार्यकारिविशेषस्य चोपपादनानन्तरमेव सामान्यादिपदार्थेष्वित्यादिना गुणादिगतधर्माणामप्यवयविरूपद्रव्यसाहित्येन सविशेषाभेदोपपादनं कृतम् । प्रागुक्तं समवाये विशेषोऽङ्गीकृत इति तन्न तावदेव किं नाम सर्वेष्वपि पदार्थेष्विति दर्शयन् विशेषस्य व्यवहारान्यथानुपपत्तिसिद्धतां चोपपादयति । सामान्य इत्येवं मूले अवतारकरणादिना च स्पष्टमेतत् । तथा च विशेषोपपादनं समवायस्थलतया परोक्तगुणादिपञ्चकानुसारेण





द्रव्यतद्गतगुणादिपञ्चकपुरस्कारेणैकम् । गुणादीनां तद्गतद्रव्यगतत्वादिधर्माणां च पुरस्कारेणापरमिति द्वैविध्याल्लक्ष्यलक्षणयोर्भेद इत्यादिना च ब्रह्मरूपद्रव्यतद्गुणादेरेव भेदाभेदशङ्कासमाधानप्रवृत्तेस्तत्र द्रव्यतद्धर्मव्यतिरिक्तस्थलेऽभेदेऽपि विशेषोऽस्तीति प्रतिपादनस्याप्रसक्त्या सोऽस्ति वस्तुष्वशेषित इति भाष्यस्थवस्तुपदस्य द्रव्यमात्रपरत्वेन व्याख्यानं युक्तम् । वैशेषिकपरीक्षायां तु समवायनिराकरणप्रसङ्गसङ्गत्या द्रव्यमेव ततोऽनन्तेत्यादिना द्रव्ये विशेषोपपादनानन्तरं अवयविसहितगुणादिधर्मेष्वपि विशेषोपपादनं पृथगेव कार्यस्य तत्तन्निष्ठत्वमित्यादिना कृतमिति न दोषः । तथा विशेषविशेषिभावनिर्वाहाय विशेषेऽपि विशेषोपपादनं तृतीयम् । असङ्ख्यातविशेषत्वादिच्छाया अपि सर्वदा । ईशो देशश्चेत्यादि वैशेषिकनया अनुभाष्योक्तं इच्छायाः सिसृक्षादिरूपायाः सदा सत्त्वेऽपि विशेषबलाद्व्यक्तत्वाव्यक्तत्वदेशादेरपि विशेषादेव स्वगतत्वादिकं ईश्वरस्य सार्वज्ञ्यविशिष्टेनात्यन्ताभेदेऽपि विशेषेण पर्यायित्वादिपरिहारः भगवद्रूपेष्वपि विशेषेण नानाव्यवहारश्चेत्यादिकं तत्र तत्र विशेषोपपादनं चतुर्थम् । स विशेषोऽपि क्रियाशक्त्यात्मना स्थित इति सैव यत्सविशेषा स्यादिति च क्रमेणात्तृत्वाहिकुण्डलाधिकरणभाष्योक्तरीत्या शक्तिव्यक्त्योर्विशेषश्चापर इत्युपपादनं पञ्चमं द्रष्टव्यम् । एवं विशेषोपपादनस्य सम्बन्धिभेदेनानेकविधत्वादेव वस्त्वादिपदैर्द्रव्यादिपदव्याख्यानं युक्तमिति सूरयो विदांकुर्वन्तु । वस्तुष्वित्यस्य द्रव्येष्वित्येव व्याख्योपपादिता । स्मृत्वा श्रीगुरुपादाब्जं तत्प्रीतोऽस्तु रमापतिः ॥ स्मृत्वा श्रीगुरुपादाब्जं वोचार्य खिलवस्तुषु । विशेषस्तेन सुप्रीतो गुरुगोऽस्तु रमापतिः ॥ इति पाठान्तरम् ॥ सम्बन्धिविभागस्य वा प्रत्यक्षेति पाठः । अनश्यदेकमपराश्रितमेवेत्येतदनुसारि सम्बन्धिविभागस्य वेति पूर्ववाक्यानुसारात् । **तद्वदेव** । कुण्डबदरवदेव । **यावदयावदिति** । यावद्द्रव्यभाविनी श्यामता अयावद्द्रव्यभाविनी च सा तदुभयस्थल इत्यर्थः । विशेषसमर्थनस्थलीयन्यायामृतानुसारेणाह **तन्तुपटादिबुद्धीनामित्यादिना विशेषः प्रतिपत्तव्य इत्यन्तेन** ।

**स०व्र०— अङ्गुलीद्वयवदिति** । न चैकपात्रनिक्षिप्तक्षीरनीरादौ अङ्गुलीद्वयवद्भेदेनानुपलम्भात् भेदो न स्यादिति वाच्यम्, तत्रापि हंसादीनां भेदेनोपलम्भस्य विद्यमानत्वादिति भावः । न च भूतले घटाभाव इत्यत्र दोषतादवस्थ्यमिति वाच्यम्, ततोऽपि वैलक्षण्यस्य शुक्लः पट इत्यत्रानुभूयमानत्वात् । **पटमानयेत्युक्त इति** । इदं चैकमेवरूपम् अनुगतमिति प्राभाकरमतानुसारेणोक्तमिति ध्येयम् । **अशुक्लः पट इति** । अशौक्ल्यं पट इत्यर्थः इति प्रतिभाति।

**विठ्ठल०— अवश्यमिति** नियमेनेत्यर्थः । **किमेतावतेति** । आश्रयाश्रयिभावेनावस्थानमित्येतावता भेदेन प्रतीत्यभावः कुत इत्यर्थः । पटशौक्ल्ययोराश्रयाश्रयिभावोऽप्यनुभवविरुद्ध इत्याह **नापीति** । बाधकमाशङ्क्य परिहरति **शौक्ल्यपटयोरिति** । अनुमानादीनां बाधकतामनर्हत्वादिति हिशब्दार्थः । विरुद्धधर्माधिकरणत्वरूपम् अनुमानं, तदन्यथानुपपत्तिरूपार्थापत्तिर्वा वैशेषिकसमयरूपागमो वा तयोर्भेदे मानं भवति, तत्कथं प्रत्यक्षप्रतीतिर्हीति तन्मात्रपर्यवसानेन शङ्क्येत्यतो अनुमानादीनां प्रकृते असम्भावितत्वेन शङ्कानर्हत्वम् इत्याशयेनाह





**अनुमानादीनामिति** । तर्हि भेदावगाहि प्रत्यक्षप्रतीतिरेव बाधिकाऽस्त्वित्याह **न चेति** । **उक्तमिति** । अङ्गुलिद्वयवत् भेदेन अनुपलम्भादित्युक्तत्वादिति भावः । **अन्यूनातिरिक्तेति** । यावति पटबुद्धिस्तावति शौक्ल्यबुद्धिरित्येतदभावः किन्तु धर्मत्वधर्मित्वरूपेण पृथगाकारद्वयोल्लेखिबुद्धिद्वयं भेदकार्यमिति ज्ञेयम् । **बाधितत्वेति** । वैय्यात्येनापि बाधितत्वं वक्तुं शक्यते तत्प्रकारकानुभवस्यैवाभावादिति सूचयितुम् **अभिमानाभावादित्युक्तम्** । तस्यातिशयस्य विशेष इति नाम किमर्थमित्यत आह **स चेति** । अभिन्नेष्वपि पदार्थेषु रूपं रूपीत्यादिप्रकारकविशेषबुद्धिजनकत्वाद्विशेष इत्युच्यते इत्यर्थः । विशेषसाधकार्थापत्तेरन्यथोपपत्तिमाशङ्क्य निराह **ननु भेदाभेदेति** । **उक्तत्वादिति** । भेदाभेदौ यदि तदेत्यादावित्यर्थः ।

**॥ इति 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषाङ्गीकारे लक्ष्यलक्षणव्यवहारोपपत्तौ' अद्वैतीतरान् विशेषाङ्गीकारणम् ॥**

* * *

**॥ अथ 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषाङ्गीकारे लक्ष्यलक्षणव्यवहारोपपत्तौ' विशेषाङ्गीकारे सकलवस्त्वैक्यापत्तिपरिहारः ॥**

**५४ सु०—** ननु सर्ववस्तुषु यद्यस्ति विशेषः, स च वस्तुनो न भिद्यते, प्राप्तं तर्हि सकलवस्तूनामैक्यमित्यत आह **विशेषा इति** ।

**अनु०—** विशेषास्तेऽप्यनन्ताश्च परस्परविशेषिणः ॥
स्वनिर्वाहकतायुक्ताः सन्ति वस्तुष्वशेषतः ।

ते प्रकृतस्वरूपा विशेषा अशेषतो वस्तुष्वनन्तेषु द्रव्येष्वनन्ता एव सन्ति, न पुनरेक एव सर्वत्रातो नोक्तदोषः । सोऽस्तीत्येकवचनं तु समुदायापेक्षया प्रयुक्तमिति भावः । नन्वेकैकस्मिंश्च द्रव्ये विशेषोऽप्येकैकोऽस्ति तदा पटो महांश्छुक्लश्चलतीति विचित्रानेकव्यवहारानुपपत्तिः । न ह्येकस्मादविचित्रस्वभावाद्विचित्रानेककार्योत्पत्तिर्दृष्टा । तथा सति आकस्मिकत्वप्रसङ्गात् । ततश्च विशेषाङ्गीकारो व्यर्थः स्यादित्यत आह **विशेषा इति** ।

तेऽप्युक्तलक्षणा विशेषा अशेषतोऽपि वस्तुषु प्रत्येकमनन्ताः सन्ति । अतो नोक्तदोषावकाशः ॥ अनन्ता इत्युपलक्षणम् । यत्र यावन्तो व्यवहारास्तत्र तावन्तो विशेषा इति ज्ञातव्यम् ।





प्रतिद्रव्यमनेकत्वे विशेषाणां परस्परं भेदेन भाव्यम् । भेदाविनाभूतत्वादनेकत्वस्य । तथा च भिन्नानां द्रव्याभेदे द्रव्यस्यापि भेदप्रसङ्ग इत्यत आह **परस्परेति** । परस्परविशेषवत्त्वेनैवानेकत्वं सम्भवति । विशेषस्य भेदकार्यकारिताया उक्तत्वादिति भावः ।

विशेषाणामपि विशेषान्तराङ्गीकारेऽनवस्थेत्यत आह **स्वनिर्वाहकतेति** । पूर्वं द्रव्येण विशेषस्याभेदचिन्ता इदानीं तु परस्परमिति स्फुटोऽर्थभेदः । सर्वं चैतद्विशेषस्वरूपसाधकार्थापत्त्यैव सिद्धमिति न पृथक् प्रमाणमुक्तम् । न हि स्वयमनुपपन्नमनुपपत्त्यन्तरशान्त्यै प्रभवति । किन्तु यथायथोपपद्यते तथातथैव स्वरूपग्राहिण्याऽर्थापत्त्यैव कल्प्यते ।

यद्यपि विशेषः प्रत्यक्षोऽपि भवति । 'येन प्रत्यक्षसिद्धेन' इति वक्ष्यमाणत्वात् । तथाऽपि विप्रतिपन्नो न तन्मात्रेण बोधयितुं शक्यत इत्यर्थापत्तिरुपन्यस्तेति ।

**परि०**— सोऽस्तीत्युक्त्या एक एव विशेषः सर्ववस्तुष्वनुगत इति भ्रान्तः शङ्कते **ननु सर्ववस्तुष्विति** । **ऐक्यमिति** । घटाद्यभिन्नविशेषाभिन्नत्वात्सर्ववस्तूनां यो यदभिन्नधर्माभिन्नः स तदभिन्न इति व्याप्तेरिति भावः । असम्भावनानिरासायाह **अनन्ता इत्युपलक्षणमिति** । अपौनरुक्त्यायाह **पूर्वमिति** । 'विशेषतद्वतोश्च' इत्यादावित्यर्थः । 'सर्वं चैतत्' इत्याद्युक्तं व्यनक्ति **न हीति** । **येनेति** । 'येन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेत् । भावाभावविभागेन यं विना न कथञ्चन । एतादृशे विशेषेऽस्मिन् को द्वेषो वादिनां भवेत्' इति वैशेषिकनये वक्ष्यमाणत्वादित्यर्थः ।

**यादु०**— सोऽस्तीत्येकवचनेन भ्रान्तः शङ्कते **ननु सर्वेति** । ननु पूर्वमेकस्यैव विशेषस्योक्तत्वात्ते विशेषा इति बहूनां परामर्शः कथमित्याशङ्कायां न बहुत्वस्य परामर्शः । किन्तु विशेषस्वरूपस्यैवेत्याह **ते प्रकृतस्वरूपा इति** । **यत्र यावन्त इति** । इदं च भगवदितरचेतनज्ञेयविशेषानपेक्ष्यैवोक्तम् । अतो घटादावपि स्वभिन्नानां सूक्ष्मरजसां कालक्षणानामीश्वरगुणानां चानन्तानां सत्त्वात् । तत्प्रतियोगिकत्वरूपानन्तविशेषविशिष्टभेदात्मकत्वेनानन्तविशेषप्राप्त्येदमनुपपन्नमिति चोद्यानवकाश इति ध्येयम् । यद्वा । तत्तत्प्रतियोगिकत्वानामनन्तत्वेऽपि तेषां भेदधर्मत्वेन प्रतिद्रव्यं च भेदस्यैकत्वेन घटादौ द्रव्येऽनन्तभेदकार्याणामभावः । अनन्तपरमाणुकालसम्बन्धस्यापि अनित्यघटादावभावात् । यद्यपीश्वरानन्तानन्तरूपगुणकर्मसम्बन्धः सर्वस्याप्यस्ति । तथाऽपि तत्तन्निरूपितत्वानामनन्तत्वेऽपि न सम्बन्धानन्तत्वम् । भेदवदनन्तप्रतियोगिकत्वस्यैकस्यापि सम्बन्धस्योपपत्तेः । प्रतियोगिभूतगुणकर्मसु भेदाभावाच्चेति द्रष्टव्यम् ।





**वं०प०— प्राप्तं तर्हीति** । यद्यदभिन्नाभिन्नं तत्तेनाभिन्नमिति व्याप्तेरित्यर्थः । **महानित्यादि** । महत्त्वादि-धर्मवान् । 'सन्ति वस्तुष्वशेषतः' इति वक्ष्यमाणं 'विशेषास्तेऽप्यनन्ताश्च' इत्यनन्तरं सम्बध्यत इत्याशयेन योजयति **तेऽप्युक्तलक्षणा विशेषा इत्यादि** । मूले 'स्वनिर्वाहकतायुक्ताः सन्ति' इत्यस्य स्वनिर्वाहकत्वरूप-धर्मयुक्ताः सन्तीत्यर्थो द्रष्टव्यः । **भेदप्रसङ्ग इति** । अनेकाभिन्नत्वादिति भावः ।

**आनन्दः— ननु सर्ववस्तुष्विति** । तथा च घटाभिन्नस्य विशेषस्य पटाभिन्नत्वे घटपटयोरप्यैक्यं स्यादिति भावः । **आकस्मिकत्वेति** । कारणाभावेऽपि कार्यं स्यादित्यर्थः । नन्वेकस्मिन्वस्तुनि अनन्तविशेषा-ङ्गीकारो न युक्तः । प्रयोजनाभावादित्यत्राह **अनन्ता इतीति** । ननु पूर्वं विशेषाभेदचिन्ता इदानीमपि सैवेत्यतः पौनरुक्त्यमत आह **पूर्वमिति** । **स्वरूपग्राहिण्याऽर्थापत्त्येति** । यथाभूतविशेषस्वरूपग्राह्यार्थापत्त्येत्यर्थः ।

**श्रीनिधि०— ततश्चेति** । आकस्मिकत्वमित्यर्थः । अनन्ता इत्युपलक्षणमिति इदं चानन्त्यतारतम्या-पेक्षया उक्तम् । न तु क्वचिद् व्यवहाराणामितत्वाभिप्रायेण । सर्वत्रापि सर्वज्ञानां अनन्तव्यवहारसम्भवादिति द्रष्टव्यम् । **परस्परविशेषवत्त्वेनैवेति** । तत्तद्रूपविशेषवत्त्वेन । न तु विशेषान्तरमिति द्रष्टव्यम् । अभिसन्धि-मजानस्य शङ्कापरिहाराय मूलमिति भावेनाह **विशेषाणामपि इति** ।

**वा०चं०—** सोऽस्तीत्येकवचनाद्भ्रान्तः शङ्कते **नन्विति** । न चैवं सोऽस्तीत्यनेन विरोध इत्यतः शङ्कामूलं विघटयति **सोऽस्तीतीति** । एकस्मिन्नप्यनेकविशेषप्रतिपादनपरतया विशेषास्तेऽपीत्येतदेव योजयितुं तद्व्यावर्त्यशङ्कां दर्शयति **नन्विति** । नन्वीश्वरस्यानन्तधर्मवत्त्वात्तत्र तावद्विशेषसत्त्वेऽपि नाशेषवस्तुष्वनन्तविशेषा इत्यत आह **अनन्ता इत्युपलक्षणमिति** । सङ्ग्राहकमुपलक्ष्यतावच्छेदकमाह **यत्रेति** । 'विशेषतद्वतोश्चैव स्वनिर्वा-हकता भवेत्' इत्यनेनापाततः प्राप्तां पौनरुक्त्यशङ्कां परिहरति **पूर्वमिति** । ननु प्रतिज्ञामात्रेण भाष्यकारेणोक्तं 'विशेषास्तेऽपि' इत्यादि प्रमाणानुक्तौ कथं सिद्ध्यतीत्यत आह **सर्वं चैतदिति** । प्रथमप्राप्तप्रत्यक्षपरित्यागे-नार्थापत्त्युक्त्या प्राप्तां भाष्यकारस्याचातुरीं परिहरति **यद्यपीति** ।

**वा०र०— समुदायापेक्षयेति** मूलम् । विप्राणां भोजनमित्यादिवदिति योज्यम् । **नाशेषवस्तुष्वनन्त-विशेषा इति** । न च घटादिष्वप्यनन्तभगवद्रूपादिसंयोगवैशिष्ट्यनिर्वाहायानन्तविशेषाणामावश्यकत्वात् कथं तेषु वस्तुषु तेषामानन्त्याभाव इति वाच्यम् । अनन्तज्ञानादिधर्मानादाय विष्णुरनन्तधर्म इतिवद्घटादावुक्तसम्बन्धा-नेकत्वमात्रेण अनन्तधर्मा घटादिरिति व्यवहाराभावात् । निरूपकभेदसद्भावेऽपि संयोगादेः संयोगत्वादिना क्रोडीकारसम्भवेनानन्त्यप्राप्तेश्च । भगवति तु क्रोडीकृता एव ज्ञानादयो धर्मा अनन्ता इति न तत्साम्यम् । किञ्चैवं प्रत्येकमपि संयोगाद्यानन्त्यस्यापि भगवति सत्त्वेन भगवति घटादितोऽपि अनन्ता विशेषाः सिद्धाः । तस्मात् संयोगत्वादिना संयोगादिकं क्रोडीकृत्य घटादौ कतिपयधर्मविशिष्टत्वमेवेति विशेषा अपि तन्निर्वाहका अल्पा एव । नानन्ताः । भगवति तु क्रोडीकृता एवानन्तधर्मा इति तद्वैशिष्ट्यनिर्वाहका अनन्ता एव विशेषा इति युक्तमिति ज्ञेयम् । एवं च यत्र यावन्त इत्युत्तरमूलमपि व्याख्यातं भवति ।





**स०व्र०**— ननु 'विशेषतद्वतोश्चैव' इत्यनेनैव स्वनिर्वाहकत्वस्य प्रतिपादितत्वेन पुनः 'स्वनिर्वाहकता युक्ताः' इत्यनेनापि स्वनिर्वाहकत्वस्यैव प्रतिपादनात् पौनरुक्त्यमित्यत आह **पूर्वं द्रव्येणेति** । तथापि पूर्वं विशेषस्य द्रव्येणाभेदमङ्गीकृत्य तत्र विशेषविशेषिभावनिर्वाहकस्वनिर्वाहकत्वमुपपादितम् । इदानीं परस्पराभेद-मङ्गीकृत्य तत्र भेदकार्यनिर्वाहार्थं स्वनिर्वाहकत्वमुपपादितमिति न दोष इति भावः ।

**विठ्ठल०**— सोऽस्ति वस्तुष्वशेषतः इत्येकवचनोक्त्या एक एव विशेषः सर्ववस्तुगत इति भ्रान्तः शङ्कते **नन्विति** । घटपटादावेकस्मिन् धर्मानन्त्यासम्भवादाह **अनन्ता इत्युपलक्षणमिति** । यद्यप्येकैकस्मिन् स्वान्या-नन्तपदार्थगतभेदप्रतियोगित्वमपर्यवसिताणुतराणुतमादिकालसम्बन्धादयोऽनन्ताः सन्ति । तथापि भेदप्रति-योगित्वादेरेकजातीयतया तदविवक्षया रूपरससङ्ख्यापरिमाणक्रियाजातिलक्षणविशेषविवक्षया यत्र यावन्त इत्युक्तमिति ध्येयम् । सर्वं चैतदित्युक्तं विशदयति **न हि स्वयमिति** । **विशेषः प्रत्यक्ष इति** । पटशौक्ल्यचयो रूपरूपित्वादिप्रकारकवैलक्षण्यं प्रत्यक्षसिद्धमिति भावः ।

**॥ इति 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषाङ्गीकारे लक्ष्यलक्षणव्यवहारोपपत्तौ' विशेषाङ्गीकारे सकलवस्त्वैक्यापत्तिपरिहारः ॥**

* * *

**॥ अथ 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषाङ्गीकारे लक्ष्यलक्षणव्यवहारोपपत्तौ' विशेषसाधनोपसंहारः ॥**

**५५ सु०— यदर्थं तदैक्यस्येत्यादिना सर्ववादिभिर्विशेषोऽङ्गीकारितस्तदिदानीमाह अत इति ।**

## अनु०— अतोऽनन्तगुणं ब्रह्म निर्भेदमपि भण्यते ॥

निर्भेदमपि ब्रह्म अतो विशेषसामर्थ्यादनन्तगुणं भण्यत इति ।

यत्परेण पृष्टं लक्ष्यलक्षणयोर्भेद इत्यादि तस्येदमुत्तरम् **ब्रह्म निर्भेदमिति** । यदत्रोक्तमनेकलक्षणाभिन्नस्यानेकत्वप्रसङ्गः, लक्षणानां वाऽनेकत्वानुपपत्तिः, शब्दपर्यायत्वं, गुणगुणित्वाद्यनुपपत्तिरिति; तस्योत्तरं, निर्भेदमप्यतो विशेषाद्गुणानामनन्तत्वं, ब्रह्मण-श्चैकत्वम्, अनन्ता गुणा अस्येति गुणगुण्यादिभावः, ब्रह्म च गुणाश्चेत्यपुनरुक्तभणनं च युज्यते इति ।





**अत्र जगज्जन्मादिकारणत्वमिति वक्तव्ये अनन्तगुणम् इति वचनमिदं सूत्रमनन्त-गुण(वत्)त्वमेव ब्रह्मणो लक्षणमभिप्रेत्य तत्साधनाय जगज्जन्मादिकारणत्वलक्षणं प्रतिपादयितुं प्रवृत्तमिति सूचयितुम् ।**

**तदेवं जगज्जन्मादिकारणत्वस्य स्वलक्षणत्वे बाधकाभावान्न तटस्थत्वकल्पनं युक्तमिति सिद्धम् ॥**

**परि०— भणनमिति** । कथनमित्यर्थः ।

**आनन्दः**— तथापि परकृतलक्ष्यलक्षणभावानुपपत्तिशङ्कायाः कः परिहार इत्यतस्तं वक्तुमाह **यदर्थमिति** । **अत्र जगज्जन्मादिकारणत्वमितीति** । तस्यैव स्वलक्षणत्वाभावनिरासस्य कृतत्वादिति भावः ।

**वा०चं०**— एवं योग्यमन्वयं प्रदर्श्य पक्षपरिग्रहतद्दूषणपरिहारभाष्यांशौ विविच्य दर्शयति **यत्परेणेति** । **वक्तव्य इति** । सूत्रानुसारात्स्वोपक्रमानुसाराच्चेत्यर्थः ।

**विट्ठल०**— अबाधिताभेदानुभवादौ सति प्रतीयमानं वैलक्षण्यं हि विशेषः । अभेदानुभवाभावे वैलक्षण्यं भेदः इति तत्त्वविदः । ''लक्ष्यलक्षणयोर्भेदोऽभेदो वा यदि वोभयमि''ति । परेण लक्षणस्य तटस्थतासिद्धये पृष्टे प्राप्तपक्षदूषणे च कृते तदैक्यस्य गतिरेव न विद्यत इति प्रतिबन्द्या परपक्षो विकल्प्य दूषितः । तथापि स्वाभ्युपगतः पक्षः क इति न ज्ञायते इत्यतो निर्भेदमित्यनेन अभेदपक्षो ज्ञायत इत्याह **यत्परेण पृष्टमिति** । उत्तरप्रकारं विशदयितुमाह **यदत्रोक्तमिति** ।

**॥ इति 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषाङ्गीकारे लक्ष्यलक्षणव्यवहारोपपत्तौ' विशेषसाधनोपसंहारः ॥**

* * *

**॥ अथ 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषाङ्गीकारे लक्ष्यलक्षणव्यवहारोपपत्तौ' विशेषसाधनस्य उपपादनम् ॥**

**५६ सु०— ''अत्राह । किमर्थं लक्ष्यलक्षणयोरभेदमङ्गीकृत्य विशेषबलेन सर्वव्यवहार-समाधानं क्रियते, भेद एव कस्मान्नाङ्गीक्रियते; गुणगुणिभावस्तु समवायसम्बन्धाद्भविष्यति । यदि च सूत्रकारेण समवायो निराकरिष्यत इति नाङ्गीकारार्हस्तदा गुण-**





गुणिनोरेव स कश्चित्तादृशः स्वभावभेद इत्यङ्गीकरणीयम्; न हि पटादौ भेदाभावेऽपि विशेषबलाद्व्यवहारविशेषदर्शनमात्रेण ब्रह्मण्यपि तथा कल्पयितुं युक्तम्, निश्चायकप्रमाणाभावात् । निश्चायकप्रमाणोपन्यासार्थं हि सम्भावना कल्प्यते, यथाऽऽहुः 'सम्भावितः प्रतिज्ञाया अर्थः साध्येत हेतुना । न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो मृतः' इति, न पुनः सम्भावनैवार्थ(स्य)साधिकेत्यत आह **एवं धर्मानिति** ।

## अनु०— एवंधर्मानिति श्रुत्या तदभेदोऽप्युदीर्यते ॥

**अपिशब्दाद्विशेषोऽपि । अत्र हि ब्रह्मधर्माणां पृथक्दर्शननिन्दयाऽभेदोऽवगम्यते । धर्मानिति च धर्मबहुत्वोक्त्या सविशेषत्वम् । न च धर्मानित्यनुवादमात्रं श्रुतिं विना तदसिद्धेः । मूलश्रुत्यङ्गीकारे सैव विशेषाभिधात्री भविष्यतीति प्रमितमेतन्निर्भेदमेव ब्रह्म विशेषबलादेव नानाव्यवहारालम्बनमिति ।**

**गु०दी०— पृथग्दर्शननिन्दयाऽभेदोऽवगम्यत** इत्यत्र 'नेह नानास्ति किञ्चने'ति पूर्ववाक्ये ब्रह्मणि भेदाभावस्य समर्थनाद्भेददर्शननिन्दा मिथ्यादृष्टित्वेनैव न तु 'न नग्नां स्त्रियमुद्वीक्ष्येत' इतिवत् निषिद्धत्वमात्रादित्यूह्यम् ।

**यादु०—** पटादौ भेदाभावेऽपि विशेषबलाद्भेदव्यवहार इत्यस्तु प्रमितत्वात्, न ब्रह्मणि; तत्र भेदेनैव व्यवहारोपपत्तौ सविशेषाभेदकल्पकाभावादिति मन्वानमुत्थापयति **अत्राहेति** । **लक्ष्यलक्षणयोरिति** । इदमुपलक्षणम् । गुणगुणिनोरित्यपि द्रष्टव्यम् । प्रकृते ब्रह्मणीति शेषः । **स्वभावभेद इति** । स्वरूपसम्बन्धविशेष इत्यर्थः । तथा च ब्रह्मणि गुणभेदेऽपि स्वरूपसम्बन्धविशेषेणैव गुणगुणिभाव इति भावः । ननु घटादौ सविशेषाभेदस्य समर्थितत्वाद्ब्रह्मण्यपि तथैव कल्पनीयं सम्भावितत्वात्, सम्भावनया अपि विप्रतिपन्नार्थसिद्धेर्लोके बहुलमुपलम्भात्, इत्यत आह **न हि पटादाविति** । **अनुवादमात्रमिति** । तथा च न धर्मबहुत्वे तात्पर्यं यदर्थं विशेषः कल्पनीय इति भावः ।

**वं०प०— श्रुतिं विनेति** । प्राप्तस्यैवानुवाददर्शनादीश्वरनिष्ठधर्मबहुत्वस्य श्रुतिं विना प्राप्त्यसिद्धेरित्यर्थः । **मूलश्रुतीति** । ईश्वरधर्मबहुत्वप्रापकेत्यर्थः ।

**आनन्दः—** ननु 'एवं धर्मानि'त्यत्र धर्मभेदज्ञानस्यानर्थहेतुत्वकथनमयुक्तम्, प्रकृतासङ्गतत्वादित्यतस्तन्निवर्त्यां शङ्कां दर्शयति **अत्राहेति** । ननु घटादौ विशेषस्य दृष्टत्वात्तदनुरोधेनात्रापि तत्कल्पनमित्याशङ्क्य





निषेधति **न हि पटादाविति** । **निश्चायकप्रमाणाभावादिति** । ज्ञानादिधर्माणां ब्रह्माभेदे निश्चायकप्रमाणाभावादित्यर्थः । मास्तु निश्चायकप्रमाणाभावस्तथापि सम्भावनयैवार्थसिद्धिः स्यादित्यत आह **निश्चायकेति** । तथापीति विशेषसिद्धिः कथमित्यत आह **अपिशब्दादिति** । श्रुत्यैवोच्यत इति सम्बन्धः **श्रुतिं विनेति** । अज्ञातस्यानुवादायोगात् तज्ज्ञानस्य च प्रमाणान्तरेण सम्भवात् श्रुत्यैव तत्सिद्धिर्वक्तव्येत्याशयः । श्रुत्यन्तरेण तत्सिद्धीत्यत्राह **मूलश्रुतीति** ।

**श्रीनिधि०— अत्राहेति** । पटादौ विशेषमङ्गीकृत्य ब्रह्मणि न पुनः सम्भावनैवार्थसाधकेति वक्ष्यते । तत्कुत इत्यतः तत्र हेतुमाह **निश्चायकप्रमाणेति** । **हेतुभिः** औषधादिभिः । **त्राणं** रक्षणम् । **अयं** दृष्टान्तः । **विशेषाभिधात्री** = धर्माभिधात्री ।

**वा०चं०—** ब्रह्मतद्गुणादीनामभेदे पूर्वं प्रमाणानुपन्यासादुत्तरत्र तदुपन्यासात् तद्व्यावर्त्यतया भेदेन अन्यथासिद्धिशङ्कामुत्थापयति **अत्राहेति** । लक्षणादीनां ब्रह्मणाऽभेदमभ्युपगम्य विशेषबलेनैव तदनुपपत्तिनिरासो गत्यन्तराभावाद्वा पटादौ क्लृप्ततया वा । आद्यं निषेधति **भेद एवेति** । ननु पटादौ भेदाभावेऽपि विशेषबलादेव व्यवहाराणामुपपादनादन्यत्र क्लृप्ततया ब्रह्मण्यपि तथा कल्पना युक्तेति द्वितीयं निराह **न हीति** । **निश्चायकेति** । अस्याश्च सम्भावनात्वादिति भावः । सम्भावनाया निश्चायकप्रमाणोपन्यासार्थत्वे सम्मतिं दर्शयति **यथाऽऽहुरिति** । अत्र साक्षादभेदोक्तिभ्रान्तिं निराकरोति **अत्र हीति** । धर्मबहुत्वोक्त्येत्यत्र धर्मत्वोक्त्या तेषां बहुत्वोक्त्या चेत्यर्थः ।

**वा०र०— सम्भावनानिश्चायकेति** । सम्भावनाया यन्निश्चायकप्रमाणोपन्यासार्थत्वं तत्रेत्यर्थः । सम्भावनाया इति पाठस्तु स्पष्ट एवेति मङ्गलम् ॥

**॥ इति 'मायिमतोक्तलक्षणसूत्रारम्भानुपपत्तौ', 'विशेषाङ्गीकारे लक्ष्यलक्षणव्यवहारोपपत्तिः'**
**॥ इति मायिमतोक्तस्य लक्षणसूत्रारम्भस्यैव अनुपपत्तिः ॥**

* * *

**॥ अथ 'सूत्रोक्तार्थे मतान्तरोक्तार्थप्राप्तविरोधपरिहारे'**
**'परोक्तानामन्यविषयाणां निराकरणस्य स्थलान्तरनिर्देशः' ॥**

**५७ सु०— अत्र यत्परेण जगत्कारणत्वं किं ब्रह्मणो निमित्तत्वमेव, उत उपादानत्वमेव, अथ उभयमपीति विमृश्य तृतीयः पक्षः (परि)गृहीतः । उपादानत्वं च परिणामित्वेनेति कश्चित् । प्रपञ्चभ्रमाधिष्ठानमात्रत्वेनेत्यपरः । तदेतत्सर्वं प्रकृत्यधिकरणे निपुणतरं निराकरिष्यते ।**





**गु०दी०**— **अथोभयम् इत्यत्र उभयं** निमित्तत्वमुपादानत्वं चेत्यर्थः । **प्रकृत्यधिकरणे निपुणतरं निराकरिष्यत** इत्युपलक्षणम् । 'निमित्तमात्रं तत्रात्मा निर्गुणः पुरुषर्षभे'ति भागवतवाक्ये स्पष्टमुपादानत्वस्य मात्रशब्देन व्यावर्तत्वादित्यपि द्रष्टव्यम् ।

**यादु०**— नन्वत्र निर्णीतं जगत्कारणत्वं यदि पररीत्योपादानत्वरूपम् । तर्हि न तेन गुणपूर्णता सिद्ध्यति । तस्य च परिणामरूपत्वेऽल्पगुणजगदभेदेनाल्पगुणप्राप्तेः । भ्रमाधिष्ठानरूपत्वे तु गुणानामेवाप्राप्तिर्दूरे तत्पूर्णत्वस्य; इत्यत आह **अत्र यत्परेणेत्यादिना** । अत्र यद्यपि मायावादिनाऽत्रायं विमर्शो न स्पष्टमभिहितः किन्तु प्रकृत्यधिकरण एव । तत्रापि ब्रह्म किं निमित्तमेवोतोपादानमपीति द्विकोटिक एव विमर्शः प्रदर्शितो न त्रिकोटिकः । तथाऽपि तदभिप्रेतानुवादो व्यावृत्तिकारान्तरोक्तो वा त्रिकोटिको विमर्शोऽत्र प्रदर्शित इति द्रष्टव्यम् ।

**आनन्दः**— परोक्तां रचनां दूषयितुमाह **अत्र यदिति** ।

**श्रीनिधि०**— निराकर्तव्यांशे न्यूनतामाशङ्क्य परिहरति **अत्र यत्परेणेत्यादिना** । **तदेतत्सर्वमित्यादि** । अतो नेह पुनर्निराकार्यमिति । न न्यूनतेति भावः ।

**वा०चं०**— अत्र परेण विरुद्धप्रमेयान्तरे प्रतिपादितेऽपि तदनिरासप्रयुक्तां भाष्यकारस्य न्यूनतां निरस्यति **अत्रेति** ।

**विठ्ठल०**— नन्वत्र निर्णीतं जगत्कारणत्वं पररीत्योपादानरूपं चेत् तर्हि न तेन गुणपूर्णता सिद्ध्यति । तस्य परिणामित्वेऽल्पगुणजगदभेदेनाल्पगुणत्वप्राप्तेः । विश्वविवर्ताधिष्ठानत्वरूपतायां तु न गुणानां प्रसक्तिः गुणपूर्णता तु दूरोत्सारितेत्यत आह **अत्र यत्परेण जगत्कारणत्वमित्यादिना** ॥

**चषकः**— अत्राद्वैतवादिप्रदर्शितप्रतीतप्रमेयान्तराप्रतिविहितिनियन्त्रितभाष्यकृन्न्यूनतापरिजिहीर्षया तदनुवदति **अत्र यत्परेणेति** । प्रतिविधत्ते **तदेतदिति** ।

**॥ इति 'सूत्रोक्तार्थे मतान्तरोक्तार्थप्राप्तविरोधपरिहारे'**
**परोक्तानामन्यविषयाणां निराकरणस्य स्थलान्तरनिर्देशः ॥**
**॥ इति 'सूत्रोक्तार्थे मतान्तरोक्तार्थप्राप्तविरोध'स्य परिहारः ॥**

* * *





**॥ अथ अधिकरणार्थोपसंहारः ॥**

**५८ सु०— तस्मादुक्तलक्षणद्वयोपपन्नं ब्रह्म नारायणाख्यं मुमुक्षुणा जिज्ञास्यमिति स्थितम् ॥**

**परि०—** कण्ठोक्तमार्थिकं चाधिकरणार्थं फलोक्त्योपसंहरति **तस्मादिति** । जगज्जन्मादि-हेतुत्वानन्तगुणत्वरूपलक्षणद्वयेत्यर्थः ॥

**चषकः—** एतन्नयार्थं निगमयति **तस्मादिति** ।

## ॥ इति जन्माधिकरणम् ॥
## ॥ १-१-२ ॥





# ॥ अथ शास्त्रयोनित्वाधिकरणम् ॥

## ॥ १-१-३ ॥

**॥ अथ जगज्जन्मादिकारणत्वरूपस्य जिज्ञास्यब्रह्मलक्षणस्य सूत्रकारोक्तमतिव्याप्त्यभावकथनम् ॥**

**॥ तत्रादौ तल्लक्षणस्य सूत्रकारोक्ता अतिव्याप्तिशङ्का तत्परिहारश्च ॥**

**६९ सु०— जगज्जन्मादिकारणत्वं परब्रह्मणो विष्णोर्लक्षणमभिहितम् । तस्य हर-हिरण्यगर्भादिचेतनेषु प्रधानाद्यचेतनेषु च पाशुपताद्यागमानुमानावष्टम्भेनातिव्याप्ति-माशङ्क्य अत्र परिहरति भगवान् सूत्रकारः ॥**

**परि०—** पूर्वेणाधिकरणेनास्याधिकरणस्य सङ्गतिफले आह **जगदिति** । **परिहरतीति** । शास्त्ररूपप्रमाणोक्त्येति योज्यम् ।

**आनन्दः—** ननु द्वितीयसूत्रे लक्षणस्योक्तत्वादत्र सूत्रे तस्यातिव्याप्त्यादिनिरास एव कृतः । ब्रह्मणः शास्त्रप्रतिपाद्यत्वकथनं प्रकृतानुपयुक्तमित्यत्राह **जगज्जन्मेति** । ननु हरादिषु लक्षणस्यातिव्याप्तिः । शास्त्रप्रति-पाद्यत्वेनैव तेषां इत्याशङ्क्य परिह्रियते । उत्तरसूत्रेऽपि तत्प्रतिपादनात्पौनरुक्त्यमित्यत आह **पाशुपतादीति** । तथा चात्र पाशुपताद्यागमावष्टम्भेन अतिव्याप्तिशङ्का तत्र तु **शास्त्रावष्टम्भेनेति** । न पुनरुक्तिरिति भावः ।

**वा०चं०—** अधिकरणप्रतिपाद्यस्य सङ्गतेश्च स्पष्टत्वात्पूर्वपक्षाद्युक्त्या ज्ञातुं शक्यत्वाच्च भाष्यकारानुक्त-मधिकरणप्रतिपाद्यं ससङ्गतिकमाह **जगदिति** । उक्तलक्षणस्यातिव्याप्तिपरिहारेण समर्थनादनन्तरसङ्गतिरिति भावः ।

**वा०र०—** **अधिकरणेति** । ज्ञातुं शक्यत्वाच्चेत्यन्तं भाष्यकारानुक्तत्वे हेतुः । सङ्गतेरस्पष्टत्वात्तां दर्शयति **उक्तेति** ।

**विठ्ठल०—** पूर्वाधिकरणसङ्गतिं दर्शयति **जगज्जन्मादीति** ।

**चषकः—** प्रकृतनयप्रतिपाद्यप्रमेयस्य प्राक्तननयनिरूपितैतन्नयाधिकरणसङ्गतेश्च प्रौढमतीनां सुगमतया पूर्ववादिमतप्रवर्तनादिना सुप्रतिपदतया च भाष्यकारानभिहितत्वेऽपि तादृङ्मतीतरसुप्रतिपदत्वाय तादृशसङ्गति-विशेषिततादृशप्रमेयमभिधत्ते **जगदिति** । तथा च पूर्वनयनिरूपितैतन्नयवृत्तिराक्षेपिकी सङ्गतिरिति भावः ।





॥ अथ शैवाद्यागमबलादतिव्याप्तिशङ्का ॥

६० **सु०**— तत्र पूर्वपक्षमारचयति **शैवाद्येति**।

**अनु०— शैवाद्यागमसम्प्राप्तदृष्टगेन फलेन तु ॥**
**तद्वाक्योपमयाऽन्यच्च प्रमाणत्वेऽनुमीयते।**
**ईशवाक्यत्वत**

शिवेन रचितः **शैवः**। **आदि**ग्रहणाद्धिरण्यगर्भादिरचिता गृह्यन्ते। तैः **सम्प्राप्तं** तदुक्तसाधनानुष्ठानसम्प्राप्तम्। दृष्टं दृष्टिः प्रत्यक्षमिति यावत्, तत्सिद्धं **दृष्टगम्**। **फलेन तु** तद्वाक्यस्य प्रामाण्यमनुमायेति शेषः। **प्रमाणत्व** इति विषयसप्तमी ॥ दृष्टफलार्थं साधनानि विदधद्वाक्यं तावत् प्रमाणतयाऽनुमीयते। केन लिङ्गेन, फलेन। तस्य पक्षासम्बन्धिनोऽनुमापकत्वं कथमित्यत उक्तं **शैवाद्यागमसम्प्राप्तेति**। अज्ञाना-सिद्धिं परिहर्तुमुक्तं **दृष्टगेनेति**। तुशब्दोऽनुमानद्वये हेतुविशेषद्योतकः। ईशवाक्यत्वत इत्यत्रादिशब्दो योज्यः।

अयमर्थः। द्विविधो हि शिवप्रणीत आगमः। कश्चित् प्रत्यक्षयोग्यसम्पदादिफल-मुद्दिश्य साधनानि विदधत्। अपरस्तु स्वर्गापवर्गाद्यप्रत्यक्षफलानि विदधानः शिवस्य जगज्जन्मादिकारणत्वसर्वज्ञत्वसर्वशक्तित्वसत्यसङ्कल्पत्वाद्यशेषगुणपूर्णत्वं निरवद्यत्वं च प्रतिपादयति ॥ तत्राद्यस्तावत्प्रमाणम्। तदुक्तसाधनानुष्ठाने सति प्रत्यक्षत एव फल-दर्शनात्। तदयं प्रयोगः। विमत आगमः प्रमाणं सफलप्रवृत्तिजनकत्वात् चरक-सुश्रुतादिवत्। यद्यप्रमाणमभविष्यत् न समर्थां प्रवृत्तिमकरिष्यद्विप्रलम्भकवाक्यवत्। तदुक्तम् 'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम्' इति ॥ ततश्च तत्प्रणेतुः शिवस्य परमाप्तत्वमवधार्य तद्दृष्टान्तेन तत्प्रणीतस्य द्वितीयस्याप्यागमस्य प्रामाण्य-मवसीयते। अत्र च प्रयोगः। विप्रतिपन्न आगमः प्रमाणं शिववाक्यत्वात्सम्प्रतिपन्न-वदिति। विपक्षे शिवस्यानाप्तत्वप्रसङ्गो बाधकः ॥ तदेवमनुमितप्रामाण्येन शैवागमेन शिवस्य जगज्जन्मादिकारणत्व(स्य)ाभिधानान्नेदं लक्षणं विष्णोरुपपद्यत इति शैवाः।





**अनयैव दिशा तत्तदागमप्रामाण्यं प्रसाध्य तत्तद्देवतावादिनां प्रत्यवस्थानानि द्रष्टव्यानि ॥**

**परि०**— भावे निष्ठेत्युपेत्याह **दृष्टं दृष्टिरिति** । केन लिङ्गेनेत्यस्योत्तरं **फलेनेति** । **इत्यत उक्तमिति** । फलजनकसाधनबोधकत्वरूपसम्बन्धसिद्ध्यर्थमुक्तमित्यर्थः । **अनुमानद्वय इति** । दृष्टान्ते दार्ष्टान्तिके च प्रामाण्यसाधकानुमानद्वये यथाक्रमं सकलप्रवृत्तिजनकत्वशिववाक्यत्वरूपहेतुविशेषद्योतक इत्यर्थः । **चरकेति** । वैद्यग्रन्थविशेषः । विपक्षे बाधकतर्कमाह **यदीति** । न्यायसूत्र(भाष्य)सम्मतिमाह **तदुक्तमिति** ।

**गु०दी०**— **चरकसुश्रुतादिवत्** इत्यत्र 'चर गतिभक्षणयोः' 'शृ पाके' इति धातुभ्यां भक्षणयोग्यौषधविधायकं वाक्यं चरकम् । वाताजीर्तिव्याधिपरिहारार्थमङ्गविशेषे दाहप्रतिपादकं सुश्रुतम् । आदिपदेन शस्त्रवैद्यज्योतिश्शास्त्रादिकमुच्यते ।

**यादु०**— ननु शैवाद्यागमेत्यत्र न कर्मधारयः । शिवादिभ्योऽणित्यनेनापत्यार्थे शिवादिभ्योऽण्प्रत्ययस्य विहितत्वेनागमानां चानपत्यत्वेन सामानाधिकरण्याभावात् । षष्ठीतत्पुरुषत्वे तु शिवाद्यपत्यकृतानां स्कान्दादीनामेव प्राप्त्या पाशुपताद्यप्राप्तिप्रसङ्गात् । अतः कथमेतदित्यत आह **शिवेन रचित इति** । तथा चात्र नापत्यार्थकोऽयमण्प्रत्ययः । किन्तु 'कृते ग्रन्थे' इत्यनेन विहितस्तत्कृतग्रन्थार्थकोऽण्प्रत्यय इति भावः । कर्मणि प्रत्यये त्वेतद्व्यर्थमतो व्याचष्टे **दृष्टं दृष्टिरिति** । **अनुमानद्वय इति** । अनुमानद्वयकरण इत्यर्थः । अनुमानद्वयकरणे तु शब्दसूचितं हेतुविशेषं दर्शयति **द्विविधो हीति** । तथा च शिवप्रणीतागमस्य द्वैविध्यमेवानुमानद्वयकरणे हेतुरिति भावः । चरकसुश्रुतौ वैद्यकग्रन्थविशेषौ । अत्र न्यायभाष्यसम्मतिमाह **तदुक्तमिति** । अत्र प्रमाणमर्थवदिति नित्ययोगे मतुप् । नित्यता चाव्यभिचारिता । तेनार्थाव्यभिचारीत्यर्थः । अत्र हेतुः प्रवृत्तिसामर्थ्यात् । समर्थप्रवृत्तिजनकत्वात् । प्रवृत्तिजनकत्वं तु न प्रमाणस्य साक्षात् किं त्वर्थप्रतिपत्तिद्वारेणेत्याह **प्रमाणतोऽर्थप्रतिपत्ताविति** । अर्थस्यापेक्षितोपायताप्रतिपत्तिश्चार्थप्रतिपत्तिशब्देनेह विवक्षिता तस्यामित्यर्थः ।

**आनन्दः**— ननु अतिव्याप्तिमाशङ्क्य परिहरतीत्ययुक्तम् । शैवादीत्यत्रातिव्याप्तिमनुपपाद्य प्रामाण्यमात्रस्यैव व्युत्पादनादित्यत अतिव्याप्तिसमर्थनार्थमेव तत्प्रामाण्यव्युत्पादनमित्याशयेनाह **तत्र पूर्वपक्षमिति** । ननु शैवेत्यस्य शिवप्रतिपादक इत्यर्थः । शिवप्रतिपादकत्वं च एको रुद्रो न द्वितीयोऽवतस्थेत्यादिवेदस्याप्यस्ति । तथा च तस्य प्रामाण्यव्युत्पादनमयुक्तम् । अविप्रतिपत्तेरित्यत आह **शिवेनेति** । फलसाधनैरेव फलप्राप्तिर्निर्गमैरित्यतो मध्यमपदलोपितत्पुरुषं मनसि निधायाह **तदुक्तेति** । दृष्टशब्दस्य पदार्थपरत्वात्फलस्य च तद्गतत्वासम्भवादाह **दृष्टं दृष्टिरिति** । ब्रह्मागमस्यापि ईशवाक्यत्वेन प्रामाण्यसाधने स्वरूपासिद्धिरित्यत आह **ईशेति** ।





ननु सर्वस्याप्यागमस्यैकप्रकारत्वात्सर्वस्यापि फलसंवादेनैव प्रामाण्यानुमानं कर्तव्यम् । तद्वाक्योपमया अन्यस्य प्रामाण्यव्युत्पादनमयुक्तम् । किञ्चानुमानप्रकारोऽपि कथमित्यत्राह **अयमर्थ इति** । तावच्छब्दः क्रमापेक्षः । अप्रयोजकत्वं परिहरति **यद्यप्रमाणमिति** । स्वोक्तार्थे न्यायसूत्रसम्मतिमाह **तदुक्तमिति** । प्रमाणतो निर्दुष्टकरणादर्थप्रमितौ सत्यामपि यावत्प्रवृत्तिसामर्थ्यमवगम्यते न तावत्प्रमाणमर्थवत्, सफलप्रवृत्तिजनकत्वादेव प्रामाण्यावसायादित्यर्थः।

**श्रीनिधि०**— प्रमाणत्वे पक्षे अनुमीयत इति प्रतीयत अत आह **विषयसप्तमीति** । अनुमितौ वाक्यनिष्ठप्रामाण्यविषय इत्यर्थः । **प्रमाणतोऽर्थप्रतिपत्ताविति** । **प्रमाणतः अर्थप्रतिपत्तौ** अर्थलाभे सति **प्रवृत्तिसामर्थ्यात्** समर्थप्रवृत्तिजनकत्वलिङ्गेन **अर्थवत्** अर्थविषयकज्ञानकरणमिति यावत्, **प्रमाणं** प्रमाणत्वाभिमतम् अर्थवद्याथार्थ्यमिति साध्यत इत्यर्थः ।

**वा०चं०**— 'शिवादिभ्योऽण्' इत्यपत्येऽणो विधानात्प्रकृते च तदर्थानुपयोगात्तत्कृतग्रन्थेऽत्र शिवशब्दादण् द्रष्टव्य इत्याह **शिवेनेति** । (कृते ग्रन्थे इत्यनेन सूत्रेण तत्कृते ग्रन्थेऽस्मिन्नर्थे । अत्र शैवेत्यत्रेत्यर्थः) । आगमानां फलं प्रति कारकत्वाभावादाह **तदुक्तेति** । फलेनेत्यस्य प्रमाणत्वेऽनुमीयत इत्यनेनान्वयस्य जगत्कारणत्वाद्यदृष्टार्थवाक्ये फलेन प्रामाण्यानुमानासम्भवेन बाधिततयेशवाक्यत्वत इति हेत्वन्तरोक्त्यनुपपत्तेश्च दृष्टार्थवाक्यप्रामाण्यासाधने तद्वाक्योपमयेत्यस्यानुपपत्तेश्च फलेन त्वित्यस्यानन्तरं योग्यमध्याहरति **फलेन त्विति** । एवं पदार्थं व्याख्याय तद्वाक्योपमयेत्येतल्लब्धं दृष्टार्थवाक्यप्रामाण्यानुमानस्य प्राथमिकत्वं वदन्नेव वाक्यार्थमाह **दृष्टेति** । **शैवादीति** । **दृष्टगेनेति** । विशेषणयोरन्यतरवैयर्थ्यपरिहारायोक्तार्थं मनसि निधाय पृथक् तद्व्यावर्त्यमाह **तस्येत्यादिना** । शैवादीत्यादिशब्दानुसारादाह **ईशेति** । ननु शैवागमस्यैकत्वात्तदुपमया कथं तत्र प्रामाण्यानुमानं कथं च सर्वत्राविद्यमानेन व्यधिकरणेन च फलेन तदनुमानम् । ईशवाक्यत्वोक्तेश्च न प्रयोजनम् । कथं च हेतोरप्रयोजकतापरिहारः कथं चानेन शिवादीनां जगत्कारणतासिद्धिरित्यत आह **अयमर्थ इति** । उक्तेऽर्थसम्मतित्वेन पक्षिलभाष्याद्यवाक्यं प्रमाणयति **तदुक्तमिति** । **अर्थवदिति** । नित्ययोगे मतुप् । नित्यता चार्थाव्यभिचारिता । अर्थाव्यभिचारिता च देशकालान्तरावस्थान्तरेष्वविसंवादोऽर्थस्वरूपप्रकारयोस्तदुपदर्शितयोः । तत्र हेतुः केवलव्यतिरेकी । **प्रवृत्तिसामर्थ्यादिति** । समर्थप्रवृत्तिजनकत्वादित्यर्थः । प्रमाणस्य समर्थप्रवृत्तिजनकत्वं च न साक्षात्किन्त्वर्थप्रतिपादनद्वारैवेत्युक्तम् । **प्रमाणतोऽर्थप्रतिपत्ताविति** । उत्तरानुमाने विपक्षबाधकतया शिवस्यानाप्तत्वप्रसङ्गं वक्तुं पूर्वानुमानपर्यवसानं दर्शयति **ततश्चेति** । आदिशब्दाभिप्रायमाह **अनयैवेति** ।

**वा०र०**— **तत्कृत इति** । 'सर्वपुरुषाभ्यां णढञावि'ति सूत्रीय 'पुरुषाद्वधविकारसमूहतेनकृतेष्वि'ति भाष्यकारोक्त्यनुसारेण कृते ग्रन्थे ढञः सिद्धत्वादत्रापि ढञ्स्थाने विचित्रा तद्धितगतिरिति तद्धिता इति बहुवचनज्ञापितोक्त्या कृते ग्रन्थेऽणित्यर्थः । अन्वयस्य बाधिततयेति सम्बन्धः । बाधितत्वे हेतुः **जगत्कारणत्वेत्यादि** । अन्वयाङ्गीकारे बाधकान्तरमप्याह **ईशेत्यादि** । **शैवादीतीति** । 'शैवाद्यागतसम्प्राप्तेति' 'दृष्टगेनेति' च यद्विशेषणं





तयोरित्यर्थः । **उक्तार्थमिति** । शैवादीत्यादिविशेषणयोः शिवेन रचित इत्यादिनोक्तमर्थमित्यर्थः । **ईशेतीति** । ईशादीति वा वाक्यत्वादेरिति वा योज्य इत्यर्थः । **अनुमानद्वय इति** मूलम् । अनुमानद्वये हेत्वोर्यो विशेषः फलस्य दृष्टार्थके सत्त्वेऽप्यदृष्टार्थकेऽभावः । ईशवाक्यत्वस्य दृष्टार्थकेऽपि सत्त्वेऽपि तत्रैव प्रामाण्यसाधनावसरे तद्वाक्यत्वस्य प्रामाण्येन व्याप्त्यवधारणाभावेन दृष्टार्थके तस्याप्रयोज्यत्वम् । अदृष्टार्थके तु तस्य दृष्टार्थकप्रामाण्यावधारणानन्तरं प्रयोज्यत्वोपपत्तिरित्येवं परस्परव्यावृत्तत्वरूपस्तद्द्योतनाय तुशब्द इत्यर्थः । एतमेवार्थं मनसि निधाय अनुमानद्वय इत्यस्य अनुमानद्वयकरण इत्यर्थमागमद्वैविध्यरूपद्विधोहीत्युक्तहेतुविशेषेत्यर्थे च व्याकुर्वदन्यथाख्यातिं च निराकुर्वता गुरुराजेन फलेन त्विति फलरूपहेतूक्तं तुशब्दस्य हेतौ विशेषाभिधायकतायाः स्वरसत्वाभिप्रायेण दृष्टार्थस्य शैवागमस्य प्रामाण्यसाधने फलसंवादो हेतुरदृष्टार्थस्य तत्साधने त्वीशवाक्यत्वं हेतुर्न तु सर्वत्र फलमेवेशवाक्यत्वमेव वा हेतुर्येनान्यतरस्य वैयर्थ्यं स्यादित्याद्युक्तम् । उपलक्षणं चेदम् । आगमद्वैविध्यस्यानुभाष्य एव स्पष्टत्वे सति तुशब्देन तत्सूचनवर्णनायोगात् । वाक्यार्थचन्द्रिकाया नागमस्यैकत्वादित्यादिरूपोऽवतारोऽयमर्थ इत्यस्य कृतः, तत्र तु मूलोक्तमागमद्वैविध्यादिकं तत्सूचितं प्रमेयान्तरं शेषपूरणलब्धं च मिलित्वा अयमर्थ इत्यनेन कथितमस्ती-त्यनुभाष्योक्तस्यैव व्यावर्त्यत्वेन शङ्काप्रवृत्तावपि न दोष इत्याद्यपि ज्ञेयम् । तदनुपदर्शनायोगाच्चेति दूषणग्रन्थे पाठः । प्रमाणमर्थवदिति नित्ययोगेन तुबित्यादिव्याख्यानं तात्पर्यटीकायां वाचस्पतिमिश्रैः कृतमस्ति तदनुसारेण भाष्यकारीयैतद्वाक्यं व्याचष्टे **अर्थवदितीति** । **नित्येति** । ननु प्रमाणार्थयोरेवानित्यत्वेन तयोर्नित्ययोगानुपपत्ते-र्नित्ययोग इति दुर्घटम् । समवायस्यैव नित्ययोगतया प्रमाणार्थयोश्च परस्परमसमवायाच्चेत्यतो नित्यत्वं निरूपयति **नित्यता चेति** । अत्र नित्यता चाव्यभिचरितेत्येव वक्तव्यम् । अर्थयोगनिष्ठनित्यतामात्रनिरूपणे अर्थपदप्रवेशा-योगात् । तथापि अर्थपदसमभिव्याहारेण लब्धमर्थमभिप्रेत्यार्थाव्यभिचारितेत्युक्तम् । ततश्चैवं योजना नित्यता चाव्यभिचारिता सा च पदयोगेऽर्थाव्यभिचारिता लब्धेति । नित्यता चाव्यभिचारिता तेनार्थाव्यभिचारीत्यर्थ इति वाचस्पतिवाक्यपर्यालोचनया तथैव योजनाभिप्रायप्रतीतेः । नन्वर्थेनाव्यभिचारोऽपि व्याप्यव्यापकभावलक्षणो न प्रमाणप्रमेययोरस्तीत्यतोऽर्थाव्यभिचारित्वं निरूपयति **अर्थाव्यभिचारिता चेति** । प्रमाणोपदर्शितयोरर्थ-स्वरूपप्रकारयोः अविसंवाद इति सम्बन्धः । ननु समर्थप्रवृत्तिजनकत्वरूपेण व्याख्यास्यमानप्रवृत्तिसामर्थ्यस्य प्रामाण्येनाविनाभावस्य धर्मिणोरप्रत्यक्षतया प्रत्यक्षेण गृहीतुमशक्यत्वम् । प्रामाण्यस्य समर्थप्रवृत्तिजनकत्वेन तस्य चान्वयव्यतिरेकाभ्यामनुमेयत्वात् । प्रामाण्यस्य क्वचिदप्यसिद्धत्वेऽनुमानेनापि व्याप्तिग्रहासिद्धेः । क्वचित्सिद्धत्वे चानुमानवैयर्थ्यमित्यत आह **केवलव्यतिरेकीति** । तत्र प्रवृत्तिसामर्थ्यादिति केवलव्यतिरेकी हेतुरिति योज्यम् । प्रवृत्तिसामर्थ्यहेतोः व्यधिकरणत्वशङ्कापरिहाराय व्याचष्टे **समर्थेति** । यद्यपि समर्था प्रवृत्तिर्यस्येति समर्थप्रवृत्तित्वं प्रमाणतया साध्ये पक्षेऽस्तीति समर्थप्रवृत्तित्वादित्येव समञ्जसम् । तथापि समर्था प्रवृत्तिर्यस्येति विग्रहे यस्येति षष्ठ्यर्थः सम्बन्धः प्रमाणप्रवृत्त्योर्जन्यजनकभाव एवेत्याशयेन तदुपदर्शनायाधिकमुक्तम् । ननु समर्थप्रवृत्तिजनकत्वादित्येतावतैव पूर्तेः प्रमाणतोऽर्थप्रतिपत्तावित्येतदसमर्थविशेषणं व्यधिकरणं चेत्यत आह **प्रमाणस्य समर्थेति** । अधिकं तात्पर्यटीकाव्याख्यानरूपनिबन्धादवगन्तव्यमिति भावः । प्रामाण्यनिश्चये विप्रति-पन्नवादिन एवाभावात् कथं क्वचित्प्रामाण्यनिश्चयाङ्गीकारेऽन्वये ऋजौ सम्भवति तत्परित्यागेन केवलव्यतिरेका-





श्रयणमित्याशङ्क्यान्वयमङ्गीकृत्यापि अन्वयव्यतिरेकी चेति तात्पर्यटीकायामुक्तम् । तदनुसारेण सर्वविचारमुपर्येव कर्तव्यत्वेन मनसि निधायात्र केवलेत्युक्तम् । अन्वयलाभादिति पक्षमनुरुध्य तथोक्त्युपपत्तेः । अत एव तात्पर्य-टीकास्थं व्यतिरेकिवचनमेवमेव तात्पर्यपरिशुद्धावुदयनाचार्यैरुपपादितम् । इह तु यदि पुनरर्थवन्न भविष्यदि-त्यादितात्पर्यटीकावाक्यवद्यद्यत्प्रमाणमित्यादि मूलवाक्यमपि तर्कमुखेनैव व्याप्तिप्रदर्शकमिति तर्काङ्गव्याप्तेरेवा-नुमानीयव्यतिरेकव्याप्तित्वेन तत्प्रदर्शनं सिद्धमेवेति न पृथक् तत्प्रदर्शनयत्नापेक्षाम्बरकादिदृष्टान्तोपादानादेव अन्वयव्याप्तिरपि दर्शितैवेति अन्वयव्यतिरेकिप्रयोग एवाभिहित इत्यादि ज्ञेयम् ।

**स०व्र०—** **हेतुविशेषद्योतक इति** । हेतुव्यावृत्तिद्योतक इत्यर्थः । **चरकसुश्रुतादिवदिति** । **चरकं** वैद्यशास्त्रं **सुश्रुतं** शाकुनशास्त्रमिति वदन्ति । **प्रमाणतोऽर्थप्रतिपत्ताविति** । प्रमाणतोऽर्थे प्रतिपन्नेऽपि यावत्प्रवृत्तिसामर्थ्यं तत्र न ज्ञायते तावत्तत्रार्थवत्त्वं तद्घटितं प्रामाण्यं न निश्चीयते, किन्तु प्रवृत्तिसामर्थ्यात् समर्थप्रवृत्तिजनकत्वात्प्रमाणत्वेनाभिमतं ज्ञानं अर्थवत् प्रामाण्यवदवसीयत इति शेषः ।

**विठ्ठल०—** मूले दुर्गमानि पदानि व्याख्याय पदानां व्यावृत्त्यमाह **दृष्टफलार्थमित्यादिना** । **तुशब्द इति** । अनुमानद्वय इति करण इत्यर्थः । तमेव हेतुविशेषं दर्शयन्ननुमानद्वयं दर्शयति **अयमर्थ इति** । **द्विविधो हीति** । तथा च शिवप्रणीतागमस्य दृष्टादृष्टफलकत्वेन द्वैविध्यमेव अनुमानद्वयकरणहेतुरिति सूचितं भवति । **अपरस्तु इति** । अन्यः शैवागमभागस्तु स्वर्गाद्यप्रत्यक्षफलसाधनानि विदधानस्सन् । शिवस्य जगज्जन्मादिकारणत्वादिकं प्रतिपादयतीति सम्बन्धः । चरकेति 'चर' गतिभक्षणयोः 'सृक' इति धातुभ्यां भक्षणयोग्यौषधविधायकवाक्यं चरकं, वाताजीत्यादि परिहारार्थमङ्गविशेषदाहप्रतिपादकं सुश्रुतमित्येके । चरकं वैद्यशास्त्रं शुश्रुतं शाकुनशास्त्रम् इति केचित् । अप्रयोजकतापरिहाराय विपक्षे बाधकं तर्कमाह **यदीति** । प्रमाणतः इति न्यायसूत्रस्यायमर्थः । प्रमाणतोऽर्थे प्रतिपन्ने सति प्रवृत्तिसामर्थ्यात् समर्थप्रवृत्तिजनकत्वाद्धेतोरर्थवत् = अबाधितार्थतया निश्चितमेव प्रमाणम् इत्यवसीयते । प्रवृत्तिसामर्थ्यानिश्चये बाधितार्थवत्त्वात् प्रामाण्यं न निश्चीयत इति ।

**चषकः—** ननु शिवशब्दप्रकृतिकाण्प्रत्ययस्य 'शिवादिभ्योऽणि'ति लक्षणलक्षितापत्यप्रत्यायक-ताकतया तत्कृतत्वार्थकषष्ठ्या समस्तेनागमपदेन शिवापत्यभूस्कन्दादिरचितागमा एव प्रतीयेरन् न तु पाशुपतागम इत्याशङ्कायां 'कृते ग्रन्थे' इत्यनुशिष्टतत्कृतग्रन्थार्थकाण्प्रत्ययस्यैव शिवशब्दप्रकृतिकत्वोपगमेन शैवपदेन पाशुपतागमप्रत्यायनात्तेन कृतबहुव्रीहिणा तद्गुणसंविज्ञानेन तादृशागमस्कान्दागमादिघटितसमुदाया-वगतिः सङ्गच्छत इत्याह **शिवेन रचित इति** । **दृष्टं दृष्टिरिति** । 'नपुंसके भावे क्तः' इति भावे क्त इति भावः । **अनुमानद्वय इति** । पक्षे निदर्शने चानुगतमनुमानद्वये सफलप्रवृत्तिजनकत्वशिववाक्यत्वरूपहेतुविशेषद्वयं ध्वनयितु-मित्यर्थः । विदधत् शत्रन्तः, 'नाभ्यस्ताच्छतुः' इति नुम्निषेधः । विदधानः शानजन्तः, प्रकृत्यंशस्य त्रित्वा-त्पदद्वयम् । **वाक्यवदिति** । प्रथमान्ताद्वतिः उपमेये प्रथमादर्शनात् । 'स्थानिवदादेशोऽनल्विधौ' इतिवत् । असंयोगाल्लिट्किद्भवति अपि सार्वधातुकं ङिद्भवति । अब्रह्मदत्तं ब्रह्मदत्त इत्याह । तेन मन्यामहे ब्रह्मदत्तवद् ह्ययं





भवतीत्यादिभाष्यकारीयनिर्देशाच्च । 'तत्र तस्येव' इत्यादीनां प्रायिकतया व्याख्यातत्वात् । **अनुमानद्वय इति** । पक्षे निदर्शने चानुगतमनुमानद्वये सफलप्रवृत्तिजनकत्वशिववाक्यत्वरूपहेतुविशेषद्वयं ध्वनयितुमित्यर्थः । चरकपदं सुश्रुतपदं च भिषजां ग्रन्थविशेषसंज्ञे । अभिहितार्थे न्यायभाष्यं प्रमाणयति **तदुक्तमिति** ।

**॥ इति शैवाद्यागमबलादतिव्याप्तिशङ्का ॥**

* * *

**॥ अथ सा 'ब्रह्मलक्षणस्य सूत्रकारोक्ता अनुमानबलादतिव्याप्तिशङ्का' ॥**

**६१ सु०— उपलक्षणं चैतत् । अनुमानेनापि शिवादीनां जगज्जन्मादिकारणत्वं सर्वज्ञत्वादिकं (च) शक्यसाधनम् । तथा हि । क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवत् । विवादा-ध्यासितं कर्म प्रयत्नाधारजम् कर्मत्वात्सम्प्रतिपन्नवत् । विप्रतिपन्ने पृथिव्युदके, प्रयत्नवता धृते, गुरुत्वे सत्यपातित्वात्, सम्प्रतिपन्नवत् । क्षित्यादिकं प्रयत्नवद्विनाश्यम् (वि)नाश्यत्वात्सम्प्रतिपन्नवत् । इत्यादिभिरनुमानैर्विश्वोदयस्थितिलयकर्तरि सामान्यतः सिद्धे अस्मदादीनां तदसम्भवात् भगवांश्छिव एव परिशेषाज्जगज्जन्मादिकर्ता सिद्ध्यति । यथा च (वि)चित्रादिकार्यदर्शनात् तदनुगुण एव कर्ता कल्प्यते एवं विचित्रानेककार्यदर्शनात्(नेन) कल्प्यमानोऽपि कर्ता तदनुगुणः सार्वज्ञादिमानेव सिद्ध्यति । अथवा क्षित्यादीनां कर्तेत्येतदन्तर्गतमेव सर्वज्ञत्वादिकं न यत्नान्तरमपेक्षते, निमित्तोपादानफलाद्यभिज्ञस्य तदनुगुणेच्छाप्रयत्नवत एव कर्तृत्वात् ।**

**एवं हिरण्यगर्भादिष्वपि परिशेषेण जगत्कारणत्वं योज्यमिति ॥**

**परि०—** 'अनुमानतोऽन्ये न कल्पनीयाः' इति भाष्यं मनसि कृत्वाऽऽह **उपलक्षणं चैतदिति** । शैवाद्यागमेत्यादिनाऽऽगमावष्टम्भेन शिवादीनां जगत्कारणत्वसाधनमित्यर्थः । सृष्टिकर्तृत्वस्थितिकर्तृत्वलयकर्तृत्वेष्वनुमानान्याह **क्षित्यादिकमित्यादिना** । **कर्मेति** । आद्यकालीनं परमाणुकर्मेत्यर्थः । ननु कथमस्य शिवत्वं सार्वज्ञादेरभावात् इत्यत आह **यथा चेति** ।

**गु०दी०— विवादाध्यासितं कर्म** इत्यत्र **कर्म** जगत्सृष्ट्यादिकर्म ।

**यादु०—** अनुमानतोऽन्ये न कल्पनीया इति भाष्यं मनसि निधायाह **उपलक्षणं चैतदिति** । **विवादाध्यासितं कर्मेति** । द्व्यणुकासमवायिकारणसंयोगजनकं परमाणुकर्मेत्यर्थः । स्थितिकर्तृत्वसाधनायाह **विप्रतिपन्ने**





**पृथिव्युदके इति** । भूसागरौ इत्यर्थः । गुरुत्वे सति इत्याकाशादौ व्यभिचारवारणाय । पतनदशायां फलादौ व्यभिचारवारणाय विशेष्यम् । अत्र गुरुत्वप्रतिबन्धकवेगसंयोगयोरभावे सति इत्यपि विशेषणीयम् । तेन न वेगवति शरादौ वृक्षसंयोगवति फलादौ व्यभिचार इति ध्येयम् । **सम्प्रतिपन्नवदिति** । गगनतलगतखगशरीरादिवदित्यर्थः । **विनाश्यत्वादिति** । स्वत एव विनाशिनो घटविशेषादेः पक्षतुल्यत्वान्न व्यभिचार इति ध्येयम् । **शिव एव परिशेषादिति** । जगत्कारणत्वादिकं शिवनिष्ठमन्यत्रानुपपत्तौ सत्यां किञ्चिन्निष्ठतया प्रमितत्वादिति परिशेषादित्यर्थः । न चात्र विष्णवादिनिष्ठत्वोपपत्त्या विशेषणासिद्धिः । सामान्यतो विश्वोदयादिकर्तृसाधकानुमानस्य स्वप्रामाण्यनिषेधकश्रुत्युक्ते कर्तरि न पर्यवसानम् । किन्तु शैवाद्यागमोक्त एवेत्याशयात् । **तदनुगुण एवेति** । तदनुकूलज्ञानादिमानित्यर्थः । **कारणत्वं** कारणत्वादि । एवमग्रेऽपि ।

**आनन्दः**— नन्वत्र आगमेन शिवस्य जगत्कारणताया उक्तत्वादतिव्याप्तिरभिधीयते चेत्तर्हि भाष्येऽनुमानशब्दस्याप्युपलक्षणत्वं ज्ञातव्यम् । नन्वनुमानं शिवशब्दवाच्यं कञ्चन पक्षीकृत्य प्रवर्तते उत सार्वज्ञादिविशिष्टम् । नाद्यः । तथा सति तादृशसङ्केतवतः प्रसिद्धपुरुषस्यापि पक्षीकारे बाधापत्तेः । न द्वितीयः । तस्यासिद्धेरित्यत आह **तथा हीति** । न चैतेषामनुमानानां साधारणत्वेन परिशेषाद्धरेरेव वैदिकस्य सिद्धिः किन्न स्यात् । शिवादिसिद्धिरेव वा किन्न स्यादिति वाच्यम् । वेदस्यानुमानदूषकत्वेन तयोर्विरोधादनुमानं स्वविरुद्धार्थं न पर्यवस्यतीति भावः ।

**श्रीनिधि०— पृथिव्युदकेति** । न च जलांशे पृथिवीधृतत्वेन बाधः शङ्क्यः । अन्ततः पृथिव्यूदकयोर्मिश्रणस्येव दृष्टेः । अन्यस्यान्यधृतत्वात् दर्शनात् चित्रादीत्यादिपदेन बहुकार्यं विवक्षितं कल्प्यते । लोके प्रसादादिकार्ये तद्गतचित्रादिकार्ये चेत्यर्थः । **इत्येतदन्तर्गतमिति** । पूर्वं कर्तृत्वं कार्यानुकूलकृतिमत्वं अर्थात् सार्वज्ञलाभः इति विवक्षितम् । इदानीं कर्तृत्वं नाम तदुपादानापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं विवक्षितमिति भावः । **न यत्नान्तरमिति** । न तत्रार्थापत्तिरूपं प्रमाणमुपन्यसनीयमित्यर्थः । **फलाद्यभिज्ञस्येति** । आदिपदेन तेषां तेषामधिकरणादिविशेषादिर्गृह्यते । निमित्तोपादानफलादिज्ञानतदनुगुणेच्छाप्रयत्नवत इत्यर्थः । **फलव्यभिचारवद् दृश्यते** फलव्यभिचारयुक्तं दृश्यत इत्यर्थः ।

**वा०चं०**— अनुमानत इति भाष्यं 'न पृथक् चानुमेश्वरे' इति सिद्धान्तानुव्याख्यानं च मनसि निधायाह **उपलक्षणं चैतदिति** । आकाशेऽव्यभिचाराय **गुरुत्वे सतीति** । अत्र न्यायविवरणटीकोक्तपक्षान्तरेण असम्भवपर्यन्तत्वपूर्वपक्षे तदनुसारेणातिव्याप्तिपर्यन्तत्वपूर्वपक्षे च शिव एवेत्येवकारो विष्णुव्यावर्तकतयाऽपि व्याख्येयः । श्रुतेः स्वप्रामाण्यनिषेधकत्वात् तदुक्ते कर्तरि नानुमानं पर्यवस्यति किन्तु स्वप्रधानकागमोक्त इति पूर्वपक्षाशयो वर्णनीयः । अन्यथाऽनुमानस्याप्यन्यथासिद्धत्वे शिवकारणत्वेऽनन्यथासिद्धप्रमाणाभावेनान्यथासिद्धविषयश्रुत्या प्रतिपक्षानुपपत्त्याऽतिव्याप्तेः शङ्कितुमप्यशक्यत्वात् । तथा चानुमानस्य शिवादिमात्रविषयकत्वेऽपि विष्णुमात्रविषयकश्रुत्यादिसाम्याभिमानेनातिव्याप्तिपर्यन्तः पूर्वपक्षस्तस्य श्रुत्याद्यपेक्षया प्राबल्याभिमानेनासम्भव-





पर्यन्तः स इति द्रष्टव्यम् । अत्र परिशेषसूचनं च पुंस्त्वहेतुबलादिति प्रतिपक्षोक्त्येति द्रष्टव्यम् । **वनकृत्त्वादिरूपेणेति** प्रतिपक्षोक्त्या सूचितं सर्वज्ञत्वादिसाधनं द्वेधा व्युत्पादयति **यथा चेत्यादिना** । नन्वेवं परिशेषे हिरण्यगर्भादीनां जगत्कारणत्वासिद्धिरित्यतो विप्रलम्भादिमूलत्वाभावभावाभ्यां स्वस्वेतरागमयोः प्रामाण्यतदभावाभिमानेन सर्वेषां परिशेषसिद्धिरप्रत्यूहेत्याशयेनाह **एवमिति** ।

**वा०र०— अनुमानत इति भाष्यमिति** । सिद्धान्तभाष्यमित्यर्थः । सिद्धान्तानुव्याख्यानेत्युत्तरानुसारात् । अधिकं प्रतिविहितं सूत्रकृतेत्युत्तरमूलोपपादनावसरे वक्ष्यामः । कार्ययोजनधृत्यादेरिति कुसुमाञ्जलिकारिकायां कार्यत्वसंयोजनककर्मधृतिविनाशानामीश्वरसाधकत्वमुक्तं, तदनुसारेण तथा हि क्षित्यादिकमित्यादिर्मूलग्रन्थः । कुसुमाञ्जलौ प्रकारान्तरेण कर्मादिपक्षकानुमानोक्तावपि विशेषाभावात्स्वयं प्रकारान्तरमपि क्वचित्क्वचिदनुसृतं मूले । आद्यानुमाने सकर्तृकत्वसाध्यादेर्निष्कर्षो दूषणव्याजेन भविष्यति । द्वितीये विवादाध्यासितमित्यस्य सर्गाद्य-द्व्यणुकासमवायिकारणसंयोगकारणं परमाणुकर्मेत्यर्थः । न च गुरुत्वादिजन्ये फलादिपतने व्यभिचार इति वाच्यम् । तस्यापि प्रयत्नवज्जन्यत्वेन सिसाधयिषितत्वेन पक्षसमत्वादित्याशयः । न च तृतीये वाद्यादिधृत-तृणादौ व्यभिचारः । तस्यापि पक्षतुल्यत्वाभिप्रायात् । अत्र शरादौ फलादौ च वेगसंयोगयोः प्रतिबन्धकत्वे । न च वक्ष्यमाणतया तदभावे सतीति हेतुविशेषणलाभान्न तदुभयत्राव्यभिचार इति बोध्यम् ।

**स०व्र०— विवादाध्यासितं कर्मेति** । द्व्यणुकासमवायिकारणसंयोगजनकपरमाणुकर्मेत्यर्थः । स्थिति-कर्तृत्वसाधनायाह **विप्रतिपन्ने पृथिव्युदक इति** । भूसागरावित्यर्थः । आकाशे व्यभिचारवारणाय सत्यन्तम् । **इत्यादिभिरनुमानैरिति** । 'कार्ययोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः । वाक्यात्सङ्ख्याविशेषाच्च साध्यो विश्व-कृदव्ययः ।' इति कारिकायामुक्तानि परित्यज्यान्यानि आदिशब्दग्राह्याणि ।

**विठ्ठल०—** अनुमानतोऽन्ये न कल्पनीया इति भाष्यानुसारेणाधिकं वक्तुमाह **उपलक्षणमिति** । सृष्टिस्थितिलयकर्तृत्वेषु क्रमेणानुमानान्याह **क्षित्यादिकमित्यादिना** । विवादाध्यासितं द्व्यणुकासमवायिकारण-संयोगजनकं = परमाणुकर्मेत्यर्थः । **प्रयत्नाधारजमिति** । प्रयत्नवत्पुरुषजन्यमित्यर्थः । पृथिव्युदके, भूसमुद्रौ आकाशे व्यभिचारवारणाय गुरुत्वे सतीति पतनदशापन्नफलादौ वारणायापातित्वादिति द्रष्टव्यम् । ननु शिवस्यापि चेतनत्वेनास्मदादितुल्यत्वाज्जगज्जन्मादिकर्तृत्वस्य शिवे परिशेषात्पर्यवसानं न सम्भवति । तदीय-सार्वज्ञादिसिद्ध्यभावेन कर्तुः परमेश्वरत्वानिश्चयादित्यतः क्षित्यादिकर्तृत्वादिना सार्वज्ञादिसिद्धिं प्रकारद्वयेनाह **यथा चेत्यादिना** ।

**चषकः— उपलक्षणं चैतदिति** । 'अनुमानतोऽन्ये न कल्पनीयाः' इति भाष्यप्रतीकमभिसन्धायैतत् । **विवादाध्यासितं कर्मेति** । प्रकृतसाध्यतदभावकोटिकविमतिविषयीभूतं द्व्यणुकोत्पादप्रयोजकपरमाणुद्वय-संयोगारम्भकपरमाणुगतकर्मेत्यर्थः । जगत्कर्तृत्वपर्यवसायीदमनुमानद्वयम् । स्थितिकर्तृत्वसाधकमनुमानमाह





विनाऽप्रसङ्गात्प्रयोगप्रकारं दर्शयति **अयमत्रेति** । ननु शिवासिद्धावाश्रयासिद्धिस्तत्सिद्धौ च जगत्कारणत्वेनैव तत्सिद्धेर्धर्मिग्राहकबाधो मदनुमाने च शिवस्यापक्षत्वान्नैतद्दूषणावकाश इति दूषणं मनसि निधाय यथेश्वरत्वं सर्वज्ञानादिघटितजगत्कर्तृत्वादिकमेव नान्यत्, तथा शिवत्वमेव न जगत्कारणत्वं किन्तु देवविशेषत्वमेव शिवत्वं तथा च सर्वज्ञत्वादिघटितजगत्कर्तृत्वादिसिद्धिरीश्वरसाधकेनैवेतीश्वरः किञ्चिज्ज्ञः पुंस्त्वादित्यनुमाने धर्मिग्राहकविरोधादिप्राप्तौ तन्निमित्तप्रयत्नसार्थक्येऽपि शिवसाधकागमानुमानादेरुक्तौ तस्य शिवस्वरूपवज्जगत्कर्तृत्वादिसाधकत्वाद्धर्मिग्राहकविरोधोक्तिसम्भवेऽपि शिवस्वरूपमात्रग्राहकप्रमाणोक्तौ न धर्मिग्राहकविरोधो वक्तुं शक्यत इति धर्मिग्राहकविरोधमीश्वरः किञ्चिज्ज्ञ इत्युत्तरानुमान इव स्पष्टमनुक्त्वा सामान्येन प्रमाणमेव पृच्छति **नन्विति** । एवं चोत्तरत्र धर्मिग्राहकविरोधं स्पष्टमुक्त्वा तन्निवृत्तये यत्नान्तरमाचरितम् । अत्र त्वन्यथेति वैषम्यमयुक्तमिति निरस्तमिति द्रष्टव्यम् । एवं तर्हि शिवस्यापक्षत्वेऽपि साध्यविशेषणतया तत्प्रवेशस्यावश्यकत्वात्तदप्रसिद्धावप्रसिद्धविशेषणता प्रसिद्धौ च तेनैव शिवे जगत्कर्तृत्वसिद्धेः परिशेषानुमानवैयर्थ्यमिति दूषणं साधनानुमानेऽपि मया वक्तुं शक्यत एवेति मनसि निधाय शिवस्वरूपमात्रे प्रमाणोदाहरणे वैयर्थ्यादिर्वक्तुमशक्यत्वात्स्वयमपि सामान्यमुखेन समाधत्ते **अथेति** । ननु शिवस्वरूपमात्रविषयकलोकप्रवादानुमानादेर्मयाऽपेक्षणान्नाप्रसिद्धविशेषणता नापि वैयर्थ्यादीति शङ्कते **लोकेति** । तर्हि मयाऽपि तादृशस्यैवापेक्षणान्न धर्मिग्राहकविरोधो नाप्याश्रयासिद्धिरिति समाधत्ते **ममापीति** । त्वत्पक्ष इव न मत्पक्षेऽनैकान्त्यप्रसर इति वैषम्यान्तरं शङ्कते **भवदिति** । मदभिप्रायाज्ञानेन त्वयोद्भावितस्य न मत्पक्षेऽपि प्रसर इति समाधत्ते **केवलेति** । एकधर्मिकप्रयोगाभावेन सत्प्रतिपक्षत्वस्यैवाभावाद्वैषम्यादिविचारो दूरोत्सारित इत्याशयेन शङ्कते **नन्विति** । शङ्कामूलं विघटयति **प्रयोगतोऽपीति** । **प्रतिरोधकत्वस्येति** । एवमप्यदूषणत्वे हेत्वाभासलक्षणस्यातिव्याप्तिः । दूषणत्वेन त्वत्सम्मतानामप्यदूषणत्वापत्तेश्चेति भावः । नन्वन्यथा सामान्यसिद्धित्वव्याघाताद्विशेषान्तरविषयत्वेन परिशेषे त्वयाऽपि वाच्ये तत्राप्येतद्दूषणसाम्यात् तत्परिहारस्य च ममापि साम्यान्नेदं युक्तमिति शङ्कते **नन्वेवं सतीति** । ईश्वरमभ्युपगम्य सामान्यसिद्धिबलेन तत्साधनस्य मदभिप्रेतत्वे कथञ्चित्साम्यप्रसक्तावप्यनीश्वरवादाङ्गीकारेण सामान्यसिद्धिमपि निराकुर्वतो मम नैतत्साम्यप्रसक्तिरिति समाधत्ते **आपद्यतामिति** । नन्वित्यारभ्य बलादित्येतद्व्यावर्त्यकथनमपि द्रष्टव्यम् ।

वा०र०— **अजानतः शङ्केति** । तत्प्रतिपक्षत्वमात्रातिदेशः न तु प्रागुक्तेशवाक्यत्वहेतुनेत्यस्यापीत्येवं योऽभिप्रायः तमजानतो या शङ्का तदुत्तरतया पुंस्त्वहेतुविशेषोक्तिं योजयतीत्यर्थः । विशेषोक्तिमिति पाठः । विशिष्येति लेखकागतम् । **उक्ताभिप्रायेति** । अभिप्रायं स्पष्टयन् परशङ्कामूलं विघटयतीत्यर्थः । **प्रतिप्रयोगेति** । प्रतिपक्षप्रयोगेत्यर्थः । आश्रयासिद्ध्यादिरूपदोषस्य प्रतिपक्षानुमान इव पूर्वानुमानेऽपि प्रसङ्गो नास्तीति युक्तमेतद्दोषस्य परं प्रत्युद्भावनमित्याह **मदनुमाने चेति** । मदीये जगत्कारणत्वं शिवनिष्ठमिति परिशेषानुमान इत्यर्थः । मनसि निधायेत्यस्य सामान्येन प्रमाणं पृच्छतीति वक्ष्यमाणेनान्वयः । धर्मिग्राहकप्रमाणविरोधमभिप्रेत्य कुतः सामान्येन प्रमाणमात्रप्रश्नः कार्यः । वनकृत्वादिरूपेणेत्युत्तरानुव्याख्यानव्याख्यावसरे ईश्वरः किञ्चिद् इत्यनुमाने





स्पष्टमेव धर्मिग्राहकप्रमाणविरोधाशङ्कावदत्रापि तच्छङ्कायाः कर्तुं शक्यत्वादित्यत उक्तं शिवस्वरूपमात्रगाहक-प्रमाणोक्तौ न धर्मीत्यादि स्पष्टमनुक्त्वेत्यन्तम् । धर्मिग्राहकविरोधं स्पष्टमनुक्त्वेति सम्बन्धः । तदवचने हेतुः स वक्तुं न शक्यत इति । तत्रापि हेतुः शिवस्य स्वरूपमात्रग्राहकेति । तत्प्रमाणस्य स्वरूपमात्रग्राहकत्वेऽपि तज्जगत्कर्तृत्वादि साधकत्वाभावादित्यर्थः । ननु शिवसाधकप्रमाणोक्तौ यदि न धर्मिग्राहकप्रमाणविरोधस्तर्हि स सर्वथा नोद्भाव्य एव किमित्यतः स्वरूपमात्रसाधकप्रमाणोक्तावेव तदनुद्भाव्यत्वमुच्यते । अन्यथा तु तदुद्भाव्यत्वं युक्तमेवेत्याशयेनोक्तं शिवसाधकागमानुमानादेरित्यादिकं सम्भवेऽपीत्यन्तम् । ननु शिवपक्षकानुमाने धर्मिग्राहकविरोधायोगवत्पुंस्त्वहेतुकेश्वरपक्षककिञ्चिज्ज्ञात्वानुमानेऽपि तद्विरोधानुदयप्रसङ्गादुत्तरत्र तदभिधानायोग इत्यत उक्तं **यथेश्वरत्वमित्यादि** । ईश्वरसाधकेनैवेश्वरस्य सर्वज्ञत्वादिघटितजगत्कर्तृत्वादिसिद्धेः सत्त्वाद्युक्तस्तत्र तद्विरोधोदयः । शिवसाधके न तु तस्योक्तकर्तृत्वादिसिद्ध्यभावान्न तद्विरोधप्रसक्तिः । यथा हीश्वरत्वं सर्व-ज्ञानादिघटितजगत्कर्तृत्वादिरूपं तथैव शिवत्वमपि तद्रूपं चेत्स्यात्तर्हि तत्प्रसङ्गो भवेत् । न चैवम् । शिवत्वस्य देवविशेषत्वमात्ररूपत्वादित्यर्थः । तथा चैवं निष्कर्षः । ईश्वरपक्षकोत्तरानुमाने ईश्वरत्वस्य जगत्कारणत्वादि-रूपतयेश्वरसाधकप्रमाणेन जगत्कारणत्वादि चैवेश्वरसिद्धेरीश्वरस्य प्रमाणसिद्धत्वाङ्गीकारे धर्मिग्राहकप्रमाणविरोधो वक्तुं शक्यत इति तस्योत्तरत्राशङ्कनं युक्तम् । अत एव तन्निरासाय वनकर्तृत्वादिरूपेणैव पक्षताश्रयणान्न तद्विरोध इति यत्नान्तरमाश्रितम् । शिवपक्षकप्रतिपक्षानुमाने तु शिवत्वस्य जगत्कारणत्वादिरूपत्वाभावेन शिवस्वरूपग्राहि-प्रमाणविरोधाभावात् शिवसाधकागमानुमानादेः तत्स्वरूपवत् तत्कर्तृत्वादिसाधकत्वेऽपि तस्यात्र शिवप्रमाणतया शङ्कनाभावाच्छङ्कनीयस्य प्रमाणसामान्यस्य च शिवस्वरूपमात्रविषयकतया तत्कर्तृत्वादिविषयकत्वस्याप्यभावेन प्रतिपक्षानुमाने धर्मिग्राहकप्रमाणविरोधस्य अप्रसक्तेः स्पष्टमेवेश्वरपक्षकोत्तरानुमानवदत्र तद्विरोधमनभिधाय तं मनसि निधायैव च सामान्येन प्रमाणमेव पृच्छतीति । एवमभिप्रायकल्पने किं निमित्तमित्यतो वैषम्यायोग-शङ्कानिवृत्तिरेवेति स्वप्रवृत्तौ स्वयमेव निमित्तमाह **एवं चोत्तरत्रेति** । **शक्यत एवेति मनसीति** । स्पष्टवचनमकृत्वा मनसि केवलं निधायेत्यर्थः । कुतः स्पष्टमेव परिशेषवैयर्थ्यमनभिधाय प्रमाणमात्रप्रश्नकरणमित्यत उक्तं **शिवस्वरूपेत्यादि** । स्वरूपमात्रग्राहिप्रमाणमात्रोदाहरणे सति तेनैव जगत्कर्तृत्वस्य शिवे सिद्धत्वात् परिशेष-वैयर्थ्यमित्यस्य वक्तुमशक्यत्वादित्यर्थः । **लोकप्रवादानुमानादेरिति** । अनेनादिपदार्थप्रदर्शनम् । **वैषम्यादिविचार इति** । पूर्वानुमाने धर्मिग्राहकविरोधाभावः प्रतिपक्षानुमाने तु तत्सद्भाव इत्यादि प्रागुक्तविचारो दूरोत्सारितः अस्माभिः प्रागङ्गीकारवादेन कृतः । वस्तुतस्तु न कर्तव्य एवेत्यर्थः । अनुभवे औदासीन्ये बाधकमाह **एवमपीति** । अनुभवे सत्यपीत्यर्थः । **हेत्वाभासेति** । विरुद्धहेत्वाभासेत्यर्थः । **लक्षणस्य** साध्यविपरीतसाधकहेतुत्वरूप-स्येत्यर्थः । **अन्यथेति** । मदुक्तशिवपरतामनङ्गीकृत्य विशेषान्तरपरत्वस्याप्यनङ्गीकार इत्यर्थः । तथा सति सामान्यसिद्धेर्दुष्टत्वापातादिति भावः । **विशेषान्तरेति** । शिवातिरिक्तभवदभिमतेश्वररूपविशेषेत्यर्थः । **ईश्वरमिति** । परब्रह्मरूपेश्वरमित्यर्थः । आपद्यतामितीत्यनन्तरं नन्वित्यारभ्येति वाक्यमस्ति । तस्यायमर्थः । वक्ष्यमाणरीत्या हि बलादित्यस्य प्रकारान्तरेणासिद्धिरूपबलादित्यर्थः । तत्र शास्त्रयोनित्वे हेतुत्वेनाभिप्रेताया प्रकारान्तरेणासिद्धिस्तद्रूपं यद्बलं तत्समर्पकाद्बलादित्यस्य व्यावर्त्यं यत्प्रकारान्तरेण सिद्धिरूपं तस्य नन्वित्यारभ्य कथनम् । सूत्रार्थ-





कथनावसरे शास्त्रयोनित्वहेतूपन्यासानन्तरं स्यादेतद्यदि शास्त्रैकसमधिगम्यत्वं हेतुः सिद्धः स्यादित्यादिग्रन्थमारभ्य जगत्कारणस्य पाशुपताद्यागमानुमानगम्यत्वशङ्कायां तन्निवर्तकतयेति चेत्तन्नेत्यादि भाष्यप्रवृत्तिवर्णनान्मध्ये शैवाद्यागमेन जगत्कर्ता न सिद्ध्यतीत्युपसंहृत्य मा भूच्छैवाद्यागमाज्जगज्जन्मादिकर्तृसिद्धिः उक्तानुमानैस्तु भविष्यतीत्याशङ्कानिवर्तकतया न पृथक्त्वानुमेत्यादेरवतारादत्र च किमतो यद्येवमिति चेत् सिद्धः सौत्रो हेतुरित्याहेत्यवतारकरणादुपक्रममध्ये परामर्शोपसंहारैः स्यादेतदित्यारभ्य शास्त्रयोनित्वस्य प्रकारान्तरेण असिद्धिव्युत्पादनाय तद्व्यावर्त्यतया प्रकारान्तरेण सिद्धिः शङ्कितेति गम्यते । नन्वित्यारभ्येत्युक्तिरर्थानुवादः । स्यादेतदित्यारभ्येति वक्तव्यत्वात् । तथा चोपसंहारे प्रकारान्तरेणासिद्धिरूपबलाच्छास्त्रयोनित्वं जगत्कारणस्य सिद्धमित्युक्तेः प्रकारान्तरेण तत्सिद्धिशङ्कोत्थापनं प्रकारान्तरेण तत्सिद्ध्यसम्भवोपपादकतद्व्यभिचारिणेत्यादि भाष्यसिद्धप्रकारान्तरेण तदसिद्धिरूपबलोक्तिव्यावर्त्यकथनमिति । एवमेतद्वाक्यं योजितम् । परं त्वर्थेति स्वरसतया चेतसि न चकास्ति । प्रकारान्तरं तु न प्रतीयते । विचार्यमस्ति ।

**स०व्र०— आर्थिकेति** । अर्थतः एकधर्मिनिष्ठाः । **प्रतिपक्षाः** आर्थिकप्रतिपक्षा इत्यर्थः ।

**विठ्ठल०**— ईश्वर इत्यनूद्य शिव इति व्याख्यानम् । द्वितीयानुमाने पक्षग्रहणाय(स्य) जगत्कर्तरीत्युक्तम् । पूर्वोक्तेनेत्यभिप्रायमजानतः शङ्कोत्तरत्वेन पुंस्त्वहेतुबलादित्येतद्योजयितुमाह **ईशवाक्यत्वमिति** । सत्प्रतिपक्षमात्रं निर्दिष्टम् इत्याशयाविष्करणम् । द्वितीयानुमाने प्रतिपक्षासम्भवमाशङ्कते **न च इति** । नन्वन्यत्रानुपपद्यमानस्य जगत्कारणत्वस्य यदि शिवनिष्ठत्वमपि न स्यात्तर्हि आश्रयाभावेन सामान्यानुमाने सिद्धिर्न स्यादतस्तदन्यथानुपपत्त्या परिशेषानुमानप्रामाण्यमङ्गीकर्तव्यमित्याशङ्क्य निराह **नन्वेवमिति** । सामान्यानुमानैः सिद्धस्य कथमनुपपन्नतेत्यत आह **तदनुमानानामिति** ।

**६७ सु०— किमतो यद्येवमिति चेत्; सिद्धः सौत्रहेतुरित्याह शास्त्रयोनित्वमिति ।**

## अनु०— शास्त्रयोनित्वमेतेन कारणस्य बलाद्भवेत् ।

**एतेन** उक्तप्रकारेण । **कारणस्य** जगत इति शेषः । **बलात्** प्रकारान्तरेणासिद्धिबलात् ।

**परि०— यद्येवमिति** । इति चेदित्यादिग्रन्थेनोक्तदिशा जगत्कारणस्यागमानुमानाभ्यामगम्यत्वे सतीत्यर्थः ।

**वा०चं०**— बलादिति पृथक्श्रवणाद्बलशब्दार्थभूतप्रकारान्तरासिद्ध्युपपादकातिदेशार्थकत्वेनैतेनेति व्याचष्टे **एतेनेति** । बलान्तरस्यासम्भवाद्व्याप्त्यादिरूपस्य तस्य प्रकृतानुपयोगात् तदुपयुक्तं बलशब्दार्थमाह **बलादिति** ।





**वा०र०— मूले किमत इति ।** यद्येवमनुमानगम्यत्वं जगत्कारणस्य न सम्भवतीति सिद्धं ततः किं सिद्धमित्यर्थः । सिद्ध इति प्राक् हि मास्तु शैवाद्यागमादिति शङ्काग्रन्थे तत्कथं शास्त्रैकसमधिगम्यत्वमिति शङ्कनादनुमानागम्यत्वे प्राप्ते शास्त्रैकसमधिगम्यत्वसिद्धिः । ततःपूर्वमुपपादितागमागम्यत्वस्योपपादकान्तरस्य परेणाप्यङ्गीकारेणागमानुमानागम्यत्वरूपविशिष्टहेतोर्लभादित्यर्थः । एतत्प्रकरणस्यानुमानागम्यत्वोपपादनपरतया किमत इत्यत्रानुमानागम्यत्वे सिद्धे किमित्येवार्थस्य कर्तव्यत्वात् । उत्तरत्रापि नावेदविदित्यादिभाष्यस्यानुमान-गम्यत्वविषयत्वेन प्रकरणशुद्धिलाभाच्च । आगमागम्यत्वं तु प्रागुपपादितं सिद्धमेवेत्येकदेशसिद्धिप्रयुक्तशास्त्रैक-समधिगम्यत्वासिद्धिशङ्कायाः परिहारे सति तदेकदेशसिद्धेरेव विशिष्टसिद्धौ हेतुतया वाच्यत्वात् । अनुमानागम्य-त्वोपपादनप्रकरणस्य समास्यभावेन मध्ये सम्पूर्णोऽयं संहारानन्तरमनुमानावेद्यत्वस्य पुनः प्रतिपादने सङ्गत्यन्तरा-न्वेषणप्रयासापातश्चेति सुधीभिराकलनीयम् । **पृथक्श्रवणादिति** । ततश्चेतेनेत्यस्य बलेनेत्यर्थो न युक्त इति भावः । **अतिदेशार्थकत्वेनेति** । इहातिदेशः पूर्वोक्तस्य परामर्शमात्रम् । न तु कार्यान्तरार्थं व्यापारितस्य तदन्यकार्येऽपि व्यापारणमिति ज्ञेयम् । **बलान्तरस्येति** । सेनादिबलस्येत्यर्थः । **असम्भवादिति** । तस्य शास्त्रयोनित्वसाधकताया असम्भावितत्वादित्यर्थः । जगत्कारणे सेनादिसद्भावाभावादित्याशयः । व्याप्तिबलेनेत्यादिप्रयोगात्प्रकारान्तरमपि प्रसक्तं निराकरोति **व्याप्त्यादीति** । शास्त्रैकसमधिगम्यत्वे हि प्रकारान्तरेणासिद्धिराकाङ्क्षिता न तु केवलं व्याप्त्या-दिकम् । तावन्मात्रस्य तदनुपपादकत्वात् । नापि तदसिद्धिगतं व्याप्त्यादिकम् । धर्मिण एवासिद्धौ तदीयव्याप्त्यादे-राकाङ्क्षाया अवकाशाभावेन तदुक्तेरनवसरहतत्वापातादित्यर्थः । **प्रकारान्तरेणेति** मूले अनुमानगम्यत्वरूप-प्रकारान्तरेणेत्यर्थः । अनुमानगम्यत्वरूपप्रकारान्तरस्यैव प्रकरणादिति ज्ञेयम् ।

**॥ इति ब्रह्मलक्षणस्यातिव्याप्तिशङ्कापरिहारे**
**परिशेषानुमानबलप्राप्तातिव्याप्तिशङ्कायाः परिहारः ॥**

* * *

**॥ अथ ब्रह्मलक्षणस्यातिव्याप्तिशङ्कापरिहारे तल्लक्षणस्य अनुमानावेद्यत्वं**
**श्रुतिभिरपि सिद्धम् इति प्रदर्शनम् ॥**

६८　**सु०**— जगत्कारणस्यानुमानावेद्यत्वं श्रुतिभिरपि सिद्धमित्याह **नावेदविदिति** ।

**अनु०— नावेदविन्न तर्केण मतिरित्यादिवाक्यतः ॥**
**तर्को ज्ञापयितुं शक्तो नेशितारं कथञ्चन ।**

**'नावेदविन्मनुते(दं) तं बृहन्तम्', 'नैषा तर्केण मतिरापनेया', 'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति', इत्यादिवाक्यतः, इति ज्ञायत इति शेषः । तर्क इत्यनुमानमात्रोपलक्षणम् । ईशितारं जगत्कारणं(त्कर्तारम्) । कथञ्चन सामान्यतो विशेषतश्च ।**

**परि०**— 'कथञ्चन' इत्यनन्तरं पदद्वयाध्याहारमाह **इति ज्ञायत इति शेष इति** । दूषणानुमानमात्रभ्रमनिरासायाह **तर्क इति** । प्रकृतोपयोगायेशितृशब्दार्थमाह **जगत्कारणमिति** ।

**गु०दी०**— **सामान्यतो विशेषतश्च** इति कथञ्चनेत्याक्षेपस्य विषयनिरूपणम् ।

**यादु०**— प्रकृतोपयोगार्थमाह **ईशितारं जगत्कारणमिति** ।

**आनन्दः**— ननु जगत्कारणत्वस्यानुमानावेद्यता पूर्वमुक्ता । इदानीमपि तदुक्तौ पुनरुक्तिरित्यत्राह **जगदिति** ।

**श्रीनिधि०**— तदनुमानानां सामान्यसिद्धिहेतुभूतानां आदिपदगृहीतां श्रुतिमाह **नेन्द्रियाणीति** ।

**वा०चं०**— योगमाश्रित्येशितारमिति व्याख्याति **ईशितारमिति** । उभयविधानुमानावेद्यतायाः श्रुत्युक्तताप्रदर्शनाय प्रवृत्तं कथञ्चनेत्येतत् तदर्थतया व्याख्याति **कथञ्चनेति** ।

**वा०र०**— ईश्वरशब्दपर्यायेशितृशब्दस्य विशेष्यमात्रसमर्पकतया तन्मात्रस्य तर्कविद्यत्वप्रतिपादनमसङ्गतमित्यत ईशितारमित्येतज्जगत्कारणमिति मूले व्याख्यातम् । तद्व्याख्यानप्रापकं वदन्नवतारयति **योगमाश्रित्येति** । ईष्ट इति ईशितेतियोगेन जगत्स्वामित्वे प्रतिपादितेऽर्थतस्तदुत्पत्त्यादि हेतुता सिद्ध्यति । यद्वेशितृपदोक्तं नियमहेतुत्वमष्टकान्तर्गतमुपलक्षणया जन्मादिहेतुत्वे पर्यवस्यतीति भावः ।

**॥ इति ब्रह्मलक्षणस्यातिव्याप्तिशङ्कापरिहारे तल्लक्षणस्य अनुमानावेद्यत्वं श्रुतिभिरपि सिद्धम् इति प्रदर्शनम् ॥**

* * *

**॥ अथ ब्रह्मलक्षणस्यातिव्याप्तिशङ्कापरिहारे तल्लक्षणसाधकानां केवलानामनुमानानां प्रतिपक्षदुष्टत्वम् ॥**

६९ **सु०**— यदपि कार्यत्वादिहेतोः पक्षधर्मताबलादन्यस्माद्वाऽनुमानादीश्वरस्य सार्वज्ञादिसिद्धिरिति तदपि प्रतिपक्षदुष्टत्वादयुक्तमित्याह **वनकृत्त्वादीति** ।





अनु०— वनकृत्त्वादिरूपेण पक्षभूतस्य चेशितुः ॥
किञ्चिज्ज्ञत्वं हि पुंस्त्वेन शक्यं साधयितुं सुखम् ।

ननु "अत्रैवं प्रयोक्तव्यम्, ईश्वरः किञ्चिज्ज्ञः पुंस्त्वाद्देवदत्तवदिति । तत्रेश्वरः प्रमितो वा न वा ॥ आद्ये येन प्र(यत्प्र)माणेन सिद्धस्तेनैव तस्य सार्वज्ञसिद्धेर्धर्मिग्राहक(प्रमाण)-विरोधः । द्वितीये त्वाश्रयासिद्धिः ।" तत्कथमुच्यते ईशितुः किञ्चिज्ज्ञत्वं च पुंस्त्वेन साधयितुं शक्यं हीति तत्राह **सुखमिति** । तत्कथमित्यत उक्तं **वनकृत्त्वादिरूपेण पक्षभूतस्येति** । प्रसिद्धकर्तृरहितं वनं सकर्तृकं कार्यत्वादित्यादिना यो वनादिकर्ता सिद्धः तेनैवाकारेण तं पक्षीकृत्य प्रयोगे न कोऽपि दोष इत्याशयः । वनकृत्त्वं पर्वताधारकत्वमित्यादिरूपो धर्मस्तेनोपेतस्य ।

न हि वनकर्तेत्येतावता सर्वज्ञ इति लभ्यते । प्रसिद्धवनकर्तुरसर्वज्ञत्वात् । स एव क्षित्यादिकर्तेति कथं न सार्वज्ञ्यमिति चेन्न । तद्भावे प्रमाणाभावात् । न हि कार्यत्वादिहेतुः कर्तारमिव तस्य सर्वत्रैकत्वं गमयितुं शक्नोति । लाघवादेकत्वमाश्रीयत इति चेत् (न) । लोकदर्शनानुसारेण कर्तारं कल्पयतो गौरवाश्रयणस्यैवो(स्यो)चितत्वात् । लोके हि गजगवयगर्दभादीनां घटपटादीनां च निर्मातारो विजातीया एवोपलभ्यन्ते । न च वनकर्ता किञ्चिज्ज्ञ इति साधने किमीश्वरस्येति वाच्यम् । तस्यैवेश्वरतया परेणाङ्गीकृतत्वात् । अन्यथा वनकर्तरि सिद्धे किमीश्वरसिद्धावायातमित्यपि स्यात् ।

परि०— ईश्वरः सार्वज्ञ्यादिगुणवान् सर्वजगत्कर्तृत्वात् व्यतिरेकेण कुलालवदित्यनुमानं हृदि कृत्वाह **अन्यस्माद्धेति** । यद्यपि पक्षधर्मताबलादपि व्यापकस्य पक्षीयतामात्रं सिद्ध्यति तथापि नाधिकमिति पृथगुक्तिरिति भावः । कर्तेत्येतदन्तर्गतमेव सर्वज्ञत्वमित्येतदपि निराह **न हि कर्तेति** । क्षित्यादिकर्तेत्युक्त्या तल्लाभोऽस्तीति भावेनाशङ्क्य निराह **स एवेति** ।

गु०दी०— **अन्यथा वनकर्तरि सिद्धे** इत्यत्र त्वयाऽपि प्रसिद्धकर्तृरहितं वनं सकर्तृकमिति वनकर्तुस्साधनात् किमीश्वरसिद्धावायातमिति मयाऽपि वक्तुं शक्यत्वादित्यर्थः ।

यादु०— **पक्षधर्मताबलादिति** । यावता विना पक्षे न साध्यपर्यवसानं तावत्सर्वमपि पक्षधर्मतालभ्यं न तु व्यापकतावच्छेदकावच्छिन्नस्य पक्षसम्बन्धमात्रमिति भावः । **अन्यस्माद्धेति** । ईश्वरः सार्वज्ञादिगुणवान्





सर्वजगत्कर्तृत्वात् व्यतिरेकेण देवदत्तवदित्यस्मादित्यर्थः । पक्षधर्मताबलादपि व्यापकतावच्छेदकावच्छिन्नस्य पक्षीयत्वमात्रं सिद्ध्यति नाधिकमतिप्रसङ्गादिति भावः । **नन्वत्रेति** । इयमाशङ्का पक्षधर्मताबलात्सार्वज्ञसिद्धिरिति पक्षे अनुमानान्तर्गतसिद्धिरिति पक्षे वक्ष्यमाणधर्मिग्राहकविरोधासम्भवादिति ध्येयम् । **स एव क्षित्यादिकर्तेति** । तथा च धर्मिग्राहकमानविरोधस्तदवस्थ एवेति भावः । यद्यप्यत्र यद्धर्मिग्राहकवनकर्तृसाधकमनुमानं न तत्र क्षित्यादिकर्त्रैक्यादिकं भासते, यत्र च स्थापनायां क्षितिवनादिसर्वकर्त्रैक्यादिकं भासते न तद्धर्मिग्राहकतया सिद्धान्त्यभिमतम्; अतो न धर्मिग्राहकमानविरोधशङ्का । तथापि कर्त्रैक्यादिसाधकस्थापनानुमानस्य पूर्वं प्रवृत्तत्वात् तदुपनीतं कर्त्रैक्यादिकं वनकर्तृसाधके धर्मिग्राहकेऽनुमाने भासते एवेति शङ्कितुरभिमानोऽतो धर्मिग्राहक-मानविरोधशङ्का युक्तैवेति । स्यादेतदेवं कथञ्चित् यदि पूर्वप्रवृत्ते स्थापनानुमाने कर्त्रैक्यादिभानं स्यात् । तदेव न सम्भवतीत्याह **तद्भाव इत्यादिना** ।

**वं०प०— तेनोपेतस्येति** । तेन वनकृत्त्वादिरूपेणेत्यनन्तरमुपेतस्येति शेष इत्युक्तं भवति । ननु प्रसिद्धकर्तृरहितं वनं सकर्तृकमित्युक्त्यैव सर्वज्ञत्वमिति लाभेन तस्य किञ्चिज्ज्ञत्वसाधने धर्मिग्राहकमानबाध इत्यत आह **न हीति** । **स एवेति** । वनकर्तैवेत्यर्थः । **तद्भावे इति** । प्रसिद्धकर्तृरहितवनकर्तुरेव क्षित्यादिकर्तृत्वभाव इत्यर्थः । ननु कार्यत्वहेतुबलादेव वनकर्तुरेव क्षित्यादिकर्तृत्वं सिद्ध्यति । अनेककर्तृकल्पने गौरवापत्तेरित्यस्ति प्रमाणमिति चेत्तत्राह **न हीति** ।

**आनन्दः—** ननूत्तरकारिकायां पुंस्त्वेन हेतुना सर्वज्ञत्वाभावसत्प्रतिपक्षकरणमयुक्तम् । सर्वज्ञत्वस्य परेणासाधनादित्यत्राह **यदपीति** । वनकृत्वादीत्यत्रादिशब्दार्थो न प्रतीयते । रूपशब्दार्थश्च न प्रतीयते । अतो व्याख्याति वनकृत्वमिति रूपमित्यस्य व्याख्या **धर्म इति** । कर्तृत्वे साधिते सर्वज्ञत्वस्यैव लाभात्तदभावे साध्यमाने धर्मिग्राहकमानविरोध इत्यत आह **अप्रसिद्धेरिति** । सोऽपि कर्तेत्युच्यते । न हि तावता तस्य सर्वज्ञत्वं सिद्ध्यतीत्यर्थः । **स एवेति** । यो वनकर्ता स एवेत्यर्थः । **तद्भाव इति** । कर्त्रैकत्वाभाव इत्यर्थः । किमेवं स्वसमयमात्रेणाभ्युपगम्यते लोकदर्शनानुसारेण वा । नाद्यः । तस्याप्रामाणिकत्वात् । न द्वितीय इत्याह **लोकेति** ।

**श्रीनिधि०— अन्यस्माद्वानुमानादिति** । ईश्वरः सर्वज्ञः जगत्कर्तृत्वात् इत्यनुमानेनेत्यर्थः । **येन प्रमाणेन इति** । क्षित्यादिकं स्वोपादानापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यं कार्यत्वादिति प्रमाणेनेत्यर्थः । वनकर्ता असर्वज्ञ इति साधने प्रसिद्धवनकर्तुरसार्वज्ञमादाय अर्थान्तरं स्यादित्यत आह **प्रसिद्धकर्तृरहितमित्यादिना** । तेनैवकारेण वनपर्वतादीनि प्रत्येकं पक्षीकृत्य ईश्वरसाधनादिति भावः ।

**वा०चं०—** वनकृत्त्वादीत्युत्तरग्रन्थस्योक्तोपपादकताभ्रान्तिनिरासाय तत्प्रतिपाद्यमाह **यदपीति** । वनकृत्त्वादिरूपेणेति प्रयोगप्रकारविशेषप्रदर्शनात् तद्व्यावर्त्यशङ्काग्रन्थे प्रसक्तप्रकारं प्रदर्श्य तत्रानुपपत्तिमुद्भावयति **नन्वत्रेति** । नन्वत्र प्रसिद्धवत्कर्तृपक्षीकारे सिद्धसाधनता अप्रसिद्धतत्पक्षीकारे त्वाश्रयासिद्धिरिति नायमपि प्रकारो





युक्त इत्यत एवं प्रयोगप्रकारप्रदर्शकभाष्याभिप्रेतमाश्रयासिद्धिपरिहाराय तत्साधकानुमानान्तरोपजीवनप्रकारमाह **प्रसिद्धेति** । ननु वनकर्त्रादीनां पक्षत्वे तथैवोक्तिप्रसङ्गेनैतादृशोक्तौ गौरवं, वनकृत्त्वादिस्वरूपस्य पक्षत्वाभिप्राये बाध इत्यत आदिपदार्थं दर्शयन्नेव विवक्षितमर्थमाह **वनकृत्त्वमित्यादिना** । ननु वनकर्तुः पक्षत्वेऽपि धर्मिग्राहकविरोधतादवस्थ्यमिति गूढाभिसन्धिना शङ्किते स्वयमभिप्रायमजानान इव परिहारमाह **न हीति** । ननु वनकर्तुरनेन सार्वज्ञासिद्धावपि वनकर्तुः क्षित्यादिकर्तुश्चैकत्वात्क्षित्यादिकर्तुश्च सार्वज्ञस्य तदनुमानेन सिद्धत्वा-देतद्धर्मिणो वनकर्तुरपि सार्वज्ञं सिद्धमेवेति क्षित्यादिकर्त्रनुमानमनुपजीव्य वनकर्त्रनुमानोपजीवनेऽपि वह्न्यनु-ष्णत्वानुमान इव धर्मिग्राहिजातीयविरोधः स्यादेवेति स्वाभिसन्धिमुद्घाटयति **स एवेति** । वह्निजातीयैकतायाः प्रामणिकत्वेन तत्र तथात्वेऽपि, वनकर्तुः क्षित्यादिकर्तुश्चैकतायां न प्रमाणमिति न साम्यमित्याशयेन समाधत्ते **तद्भाव इति** । ननु वनकतुरिव क्षित्यादिकर्तृत्वे क्षित्यादिकर्तुरीश्वरत्वाद्वनकर्तुरसार्वज्ञे साधिते, क्षित्यादिकर्तु-स्तत्प्राप्तावपि, तयोर्भेदे वनकर्तुरनीश्वरत्वात् तदसार्वज्ञसाधनं नास्माकमनिष्टसाधनमित्याशङ्कते **न चेति** । प्रसिद्धकर्तृशून्यवनकर्तुरीश्वरताया अकामेनापि त्वया वाच्यत्वादन्यथा क्षित्यादिकर्तुरपीश्वरता न स्यात् समान-न्यायत्वादिति भावेनाह **तस्य चेति** । नेदमस्माभिरुपपादनीयं परेणैव तादृशानुमानानामीश्वरसाधकतयोप-न्यासादित्याशयेनाङ्गीकृतत्वादित्युक्तं विशदयति **अन्यथेति** । अत्र वनकर्तृसाधकानुमानोपजीवनेन प्रवृत्तेनास्म-दीयेनेश्वरकिञ्चिज्ज्ञतासाधकानुमानेन क्षित्यादिकं सकर्तृकं कार्यत्वादित्यनुमानेन पर्यवसानगत्येश्वरसार्वज्ञसिद्धेः प्रतिपक्षोऽयं न तु वनकर्तृत्वानुमानस्य तस्य सार्वज्ञ्येऽपर्यवसानात् पर्यवसाने वा धर्मिग्राहकविरोधापत्तेः । न च वनकर्तुः क्षित्यादिकर्तृभेदे नानेन क्षित्यादिकर्तृरसार्वज्ञ्ये सिद्धिरिति वाच्यम् । तस्येश्वरसार्वज्ञ्ये पर्यवसानेन अस्यापीश्वरासार्वज्ञसाधकत्वेन परं प्रत्यनिष्टतया प्रतिरोधकत्वोक्तेरुपपन्नत्वादिति द्रष्टव्यम् ।

**वा०र०— उक्तोपपादकतेति** । जगत्कारणस्यानुमानावेद्यत्वोपपादकतेत्यर्थः । **रूपेणेतीति** । इत्यनेन इत्यर्थः । **तद्व्यावर्त्यशङ्काग्रन्थ इति** । प्रयोगप्रकारविशेषप्रदर्शनं हि प्रकारान्तरानुपपत्तिशङ्कानिरासाय । तथा च अत्रोत्तरभाष्यनिवर्तनीयशङ्कायां प्रवर्तनीयायां किं तत्र दूष्यमिति शिष्यशङ्कावारणायोत्तरभाष्यस्थप्रयोगप्रकार-विशेषप्रदर्शनमुपलभ्य तद्व्यावर्तनीयशङ्काया ग्रन्थे ग्रथनात्मके नन्वत्रेत्यारभ्य शक्यं हीत्यन्तग्रन्थे नन्वत्रेतीत्यनेन प्रसक्तप्रकारान्तरं प्रदर्श्य तत्रानुपपत्तिमुद्भावयति ग्रन्थकृदिति योजना । तद्व्यावर्त्यतया प्रसक्तप्रकारं प्रदर्श्य तत्र अनुपपत्तिमुद्भावयन्नाशङ्कत इति फलितोऽर्थः । तद्व्यावर्त्यप्रसक्तप्रकारं प्रदर्श्य तत्रानुपपत्त्युद्भावनाशङ्कामुत्थाप-यतीति यावत् । तथैव पाठस्तु स्वरस एव । यद्यपीयं शङ्का सुखमित्येतद्व्यावर्त्या तथापि कथं सुखं साधयितुं शक्यमित्येतच्छङ्कावारणाय प्रवृत्तस्य वनकृत्त्वादिरूपेणेत्यस्य सुखमित्येतद्विवरणरूपत्वात् सुखमित्येतद्व्यावर्त्य-शङ्का वनेत्यादेरपि भवतीति नानुपपत्तिरिति ज्ञेयम् । **सिद्धसाधनतेति** । प्रसिद्धस्य वनकर्तुः कृषीवलादेः किञ्चिज्ज्ञातायाः सिद्धत्वादित्यर्थः । तथा च साधयिष्यमाणेश्वरे तदप्राप्तेरर्थान्तरतेति भावः । **भाष्याभिप्रेतमिति** । अनेन प्रसिद्धस्यैव वनकर्तुः पक्षीकार इति द्वितीय उपादीयन्त इति सूचयति । न च तत्राश्रयासिद्धिः । तन्निरासा-याश्रयसाधकानुमानान्तरोपजीवनस्याभिप्रेततया तेनाश्रयसिद्धौ तदसिद्धेरनवकाशादित्याशयेनानुमानान्तरोपजीवन-





प्रकारमाहेत्यर्थः । **वनकर्त्रादीनामिति** । आदिपदेन पर्वतधारकादेर्ग्रहणम् । **तथैव** वनकर्त्रादिरूपस्येत्येवोक्तीत्यर्थः । **एतादृशेति** । वनकृत्वादिरूपेणेत्युक्तावित्यर्थः । **स्वरूपस्येति** । रूपशब्दो हि स्वरूपार्थकः । पृथुबुध्नोदराकारत्वं घटरूपं दृश्यत इत्यादौ तथा दर्शनात् । तथा च वनकृत्वादेर्यत्स्वरूपं वनकृत्त्वादिकमेवेति यावत् । तस्य पक्षतायां बाध इत्यर्थः । वनकृत्त्वादिधर्माणामचेतनतया तत्र ज्ञानमात्रस्य बाधितत्वादित्याशयः । **विवक्षितमर्थमिति** । उपेतस्येति पदाध्याहारेण लब्धमर्थमित्यर्थः । **गूढाभिसन्धिना शङ्कित इति** । वनकर्तृत्वरूपेण पक्षत्वेऽपि कथं धर्मिग्राहकप्रमाणविरोधाभाव इति शङ्कित इति शेषपूरणेन योजनाच्छङ्काप्रकाराप्रदर्शनप्रयुक्तन्यूनतानवकाशः । शङ्कित इत्यस्य गूढाभिसन्धेरेवमाशङ्कामुत्थाप्येत्यर्थः । **एतद्धर्मिण इति** । किञ्चिज्ज्ञत्वसाधकानुमानधर्मिण इत्यर्थः । **अनुपजीव्येति** । धर्मिग्राहकमानविरोधपरिहारायेति शेषः । **वह्न्यनुष्णत्वानुमान इवेति** । यथा वह्न्यनुष्णत्वानुमाने धर्मिभूतवह्नेरुष्णस्पर्शाश्रयतया स्पार्शनप्रत्यक्षवेद्यत्वेन तत्सिद्धवह्नेः पक्षीकारे धर्मिग्राहिप्रत्यक्षविरोध एव । यत्र तु चक्षुरादिना सिद्धवह्नेः पक्षीकृतत्वं तत्रापि चक्षुरादेरुष्णताग्राहकत्वाभावेऽपि तद्ग्राहिस्पार्शनसजातीयतया तद्विरोधेनैव अनुष्णतानुमानस्याप्रामाण्यमिति स्थितत्वात् प्रकृतेऽपि क्षित्यादिकर्तृभिन्नवनादिकर्तृपक्षीकारे धर्मिग्राहिस्वजातीय-क्षित्यादिकर्त्रनुमानविरोधो भवेदेवेत्यर्थः । अत एव चक्षुरादेः शब्दतज्जन्यज्ञानप्रामाण्यग्राहकत्वाभावेनोपजीव्य-त्वाप्राप्तावपि तत्स्वरूपादिग्राहकश्रौत्रप्रत्यक्षसाक्षिप्रत्यक्षसजातीयत्वेनोपजीव्यता आश्रीयते । दृष्टं च नरशिरः-कपालशुचित्वागमस्य तच्छुचित्वानुमानादुपजीव्यशुचित्वग्राहिशब्दसाजात्यमात्रेण प्राबल्यमिति भावः । **तत्रेति** । वह्न्यनुष्णत्वानुमाने धर्मिग्राहिजातीयविरोधावसरोऽस्ति । चक्षुरादिना स्पर्शनेन च गृहीतवह्नेरेकत्वेन यमहं चक्षुषाद्राक्षं तमेव स्पृशामीत्यादिप्रमाणसिद्धतया एकधर्मिविषयकत्वात् । न चैवं प्रकृत इत्यर्थः । वनकर्तृत्वादि-रूपेणेति भाष्योक्तः ईश्वरः किञ्चित् ज्ञानासाधकेन प्रतिपक्षो वनं सकर्तृकं कार्यत्वादित्यनुमानस्यैवेति प्रतीयते । तदनुमानोपजीवनेनैवास्य प्रवृत्तत्वात् । परं तु तथा नाङ्गीकार्यम् । किन्तु क्षित्यादिकमित्येतदनुमानेन पर्यवसानगत्या या ईश्वरसार्वज्ञ्यसिद्धिः तस्या एवायं उक्तानुमानेन प्रतिपक्ष इत्याह **अत्र च वनेति** । उपजीवनेन प्रवृत्तेनेत्युक्त्या प्रकारान्तरप्रतीतिमूलसत्त्वेऽपीति सूचयति । वनकर्तृत्वानुमानस्यैव कुतो न प्रतिपक्ष इत्यत आह **तस्येति** । कुतोऽपर्यवसानं क्षित्याद्यनुमानवत्तदुपपत्तेरित्यतस्तदङ्गीकारे बाधकमाह **पर्यवसाने वेति** । **धर्मीति** । यदि वनं सकर्तृकमित्यनुमानस्य सार्वज्ञ्ये पर्यवसानं तर्हि तत्सिद्धेश्वरं पक्षीकृत्य किञ्चिज्ज्ञतासाधने धर्मिग्राहिविरोधः स्यादित्यर्थः । ननु क्षित्यादिकर्त्रनुमानेन पर्यवसानेन जातेश्वरसार्वज्ञ्यसिद्धेरपि कथमयं प्रतिपक्षः । वनकर्तुः क्षित्यादिकर्तुश्चाभिन्नत्वे वनकर्ता किञ्चिज्ज्ञ इत्यनुमानेन क्षित्यादिकर्तुरसार्वज्ञ्यप्रसङ्गेऽपि वनकर्तुः क्षित्यादि-कर्तृभिन्नत्वे वनकर्तेत्यनुमानेन क्षित्यादिकर्तुस्तदप्रसङ्गादित्याशङ्क्ते **न च वनकर्तुरिति** । वनकर्तुः क्षित्यादिकर्तृभेद एवास्तु । प्रतिपक्षस्तु युज्यत एव । वनकर्तृत्वादिरूपेणेश्वरपक्षककिञ्चिज्ज्ञतासाधकानुमानस्येश्वरसर्वज्ञत्वाभाव-विषयत्वं तावदस्त्येव । क्षित्याद्यनुमानस्य पर्यवसानगत्येश्वरसार्वज्ञ्यसाधकता चास्ति । तथा च क्षित्याद्यनुमानेन ईश्वरसार्वज्ञ्यमनुमिमानं प्रति तत्किञ्चिज्ज्ञतासाधनमनिष्टमिति पराभ्युपगतविपरीतसाधनत्वेन प्रतिपक्षोक्तेरुपपन्न-त्वादित्याह **तस्येश्वरेति** । अत्र प्रतिरोधकत्वोक्तेरुपपन्नत्वादिति पाठः । मूलकोशे सत्त्वादुपपादनसङ्गतत्वाच्च । अनुपपन्नत्वादिति तु लेखकागतमिति ज्ञेयम् ।





**स०व्र०— नन्वत्रैवं प्रयोक्तव्यमिति** । इयमाशङ्का पक्षधर्मताबलात्सार्वज्ञ्यसिद्धिरिति पक्षे वक्ष्यमाण-धर्मिग्राहके विरोधासम्भवात् धर्मिग्राहकप्रमाणेन च कर्तृत्वमात्रस्यैव सिद्धेरिति ध्येयम् ।

**विठ्ठल०— अन्यस्माद्वाऽनुमानादिति** । विचित्रानेककार्यकर्तृत्वादित्यनुमानादित्यर्थः । ननु प्रसिद्ध-कर्तृरहितं वनं सकर्तृकम् इत्यनेनैव सर्वकर्ता सिद्धः । तं पक्षीकृत्य किञ्चिदज्ञतासाधने धर्मिग्राहकविरोधस्तदवस्थ इत्यत आह **न हि कर्तेत्येतावतेति** । क्षित्यानन्तकर्तृत्वे सार्वज्ञं लभ्यत इत्याशङ्क्य निराह **स एव इति** । कार्यत्वादिहेतुरेव तत्र मानमित्यत आह **न हीति** । कार्यत्वस्य कर्तृसद्भावमात्रेण पर्यवसितत्वेन सर्वकार्याणा-मेककर्तृकत्वसाधने सामर्थ्याभावात् तदभावे च सार्वज्ञासिद्धेरिति भावः । **तस्यैवेति** । प्रसिद्धकर्तृरहितवनकर्तुरेव क्षित्यादिकर्तृतया परेणाङ्गीकृतत्वादित्यर्थः ।

७० **सु०— न केवलं किञ्चिज्ज्ञत्वसाधनं सुकरम् । किन्तु स्वकृतकार्याज्ञत्वमपि शक्यसाधनमित्याशयेनाह वृक्षकृदिति ।**

## अनु०— वृक्षकृन्नाखिलं वृक्षं वेत्ति पुंस्त्वाद्धि चैत्रवत् ॥

वृक्षकृदिति पूर्ववद्धर्मिग्राहकविरोधाश्रयासिद्धिपरिहारायोक्तम् । प्रसिद्धकर्तृरहितेत्यपि योज्यम्, अन्यथा सिद्धसाधनताप्रसङ्गात् । **अखिलम्** इत्यारम्भकावयवसङ्ख्यापलपरिमाण-विशेषसहितम् । अस्मदादीनां विप्रतिपन्नवृक्षज्ञानमात्रसद्भावादनैकान्त्यपरिहारायाखिल-मित्युक्तम् । हीति विपक्षे बाधकाभावं सूचयति । न हि यो यत्कर्ता स सकलं तज्जानातीति नियमः, कुलालादावभावात्, अनुपयोगाच्च तज्ज्ञानस्येति ।

अनेनैव न्यायेन सर्वत्र प्रतिपक्षसम्भवात् सत्यसङ्कल्पत्वाशरीरित्वनित्यज्ञानेच्छा-प्रयत्नत्वदुःखादिराहित्यादिकमपि नानुमानेन साधयितुं शक्यमित्याशयवानाह **इत्यादीति** ।

## अनु०— इत्याद्यनुमया स्पर्धि नानुमानं परेशितुः ।
## शक्तं विज्ञापने

आदिशब्दः प्रकारवचनः । **परेशितुः** सत्यसङ्कल्पत्वाद्युपेतस्य ।





**परि०— प्रसिद्धकर्त्रीति।** प्रसिद्धकर्तृरहितं यद्वनं तत्कृदिति ध्येयमित्यर्थः। **विपक्ष इति।** परोक्ताखिलज्ञत्वविपक्षेऽखिलज्ञत्वाभाव इत्यर्थः। बाधकाभावं व्यनक्ति **न हि यो यत्कर्तेति।**

**गु०दी०— आदिशब्दः प्रकारवचन** इत्यत्र पुंस्त्वहेतुना सर्वत्र प्रतिपक्षस्य विवक्षितत्वेन आदिपद-ग्राह्यहेत्वन्तरासम्भवात् आदिशब्दः प्रकारवचन इत्युक्तम्। अत्र यथा साधितं तथा तत्राप्यनेनैव प्रकारेण साधनीय-मिति भावः।

**यादु०—** ननु तत्कर्तृत्वादेव तदखिलवेत्तृत्वं सिद्धमतः सत्प्रतिपक्षमेतदित्यत आह **हीति विपक्ष इति। विपक्षे** प्रतिपक्षे। तत्साधकानुमान इति यावत्। **बाधकभावं** व्याप्त्यभावरूपं सूचयतीत्यर्थः। तमेव दर्शयति **न हीत्यादिना**। बाधकाभावमिति पाठे तु शङ्किते सत्प्रतिपक्षानुमाने पक्षस्य विपक्षत्वे साध्याभाववत्त्वे बाधकाभावादप्रयोजकत्वं सूचयतीत्यर्थः। एतदेव दर्शयति **न हीत्यादिनेति** योज्यम्। यद्वा। विपक्षे सार्वज्ञ्यसाधकानुमानप्रतिपक्षभूतपुंस्त्वानुमाने विरोधिप्रबलप्रमाणाभावं सूचयतीत्यर्थः। ननु वृक्षकर्तृत्वमेव साकल्येन वृक्षानभिज्ञत्वे बाधकमित्यत आह **न हीति**। आदिशब्दस्य प्रभृत्यर्थकत्वे पूर्वोक्तस्यासार्वज्ञ्य-साधकानुमानस्य सत्यसङ्कल्पाद्यनुमाने प्रतिपक्षत्वं प्रतिभाति। तच्च न सम्भवतीत्यतोऽन्यथा व्याचष्टे **आदिशब्द इति।**

**वं०प०— योज्यमिति।** वृक्षेत्येतत्पूर्वं योज्यमित्यर्थः। **विप्रतिपन्नेति।** प्रसिद्धकर्तृरहितवृक्षेत्यर्थः। **ज्ञानमात्रेति।** सामान्याकारेणेत्यर्थः।

**आनन्दः— अस्मदादीनामिति।** वनहेतावेव व्यभिचारवारकं विशेषणं वक्तव्यम्। न तु साध्य इति वाच्यम्। विशेषणदानस्य व्याप्तिग्रहमात्रप्रयोजनत्वेन तदर्थं सिद्धेऽपि तद्दाने दोषाभावात्। **विपक्ष इति।** स्वकृतकार्याज्ज्ञत्वरूपविरुद्धसाध्यसाधनपक्ष इत्यर्थः। ननु कथं बाधकाभावः यो यत्कर्ता स सकलं तज्जानातीति नियमस्यैव बाधकस्य सत्त्वादित्यत्राह **न हीति**। नन्वीश्वरसाधकसकर्तृकत्वानुमानस्य सत्प्रति-पक्षतायाः पूर्वमुक्तत्वात्पुनरित्याद्यनुमेयेत्यादिना सत्प्रतिपक्षकरणं पुनरुक्तमित्यत आह **अनेनैवेति**।

**श्रीनिधि०—** ननु कुलालादावभावमात्रेण कथं प्रकृते अभावसाधनम्। न हि कर्तरि शरीरं नास्ती-त्येतावता कुलालस्यापि तदभावसाधनं शङ्क्यमित्यत आह **अनुपयोगाच्चेति**। उपयोगभावाभावाभ्यां वैषम्यमिति भावः। **आदिशब्दः प्रकारवचन इति**। तथा च इत्याद्यनुमया एवंप्रकारकानुमेयेत्यर्थः। एवंप्रकारकत्वं च सत्प्रतिपक्षत्वेनैव न तु पूर्वोक्तसाध्यवत्त्वेन वा तद्धेतुमत्त्वेन वेति द्रष्टव्यम्। अनुमा तु प्रसिद्धकर्तृरहितवनादिकर्ता सत्यसङ्कल्पो न पुंस्त्वात् चैत्रवदित्यादिका सोत्तर इत्युक्तमिति। स्वोत्तररसवत्त्वं च प्रथमादिरसे प्रसिद्धमिति भावः।





**वा०चं०**— वृक्षकृदित्युत्तरवाक्येऽपि प्रकारान्तरेण किञ्चिज्ज्ञत्वमेवोच्यत इति तस्यात्यन्तमुपयोगाभाव इति शङ्का तत्राप्यवान्तरविशेषप्रतिपादकत्वेन परिहरन्नखिलपदतात्पर्यलब्धं तदभिप्रायमाह **न केवलमिति** । नन्वेकस्याखिलत्वानुपपत्त्याऽनेकविवक्षायां चैकवचनानुपपत्तेस्तस्य जात्यभिप्राये च वृक्षकर्तुस्तत्स्वरूपज्ञान-स्यावश्यकत्वेन तदभावसाधने बाधापत्त्या नाखिलत्वविशेषणमुपपन्नमित्यत एकस्मिन्नपि विवक्षाविशेषेण अखिलत्वमुपपादयति **अखिलमितीति । विपक्ष इति** । विप्रतिपन्ने पक्षे उदाहृते प्रतिपक्षानुमान इति यावत् । प्रतिकूलतर्करूपबाधकाभावम् । यद्वोदाहृतप्रत्यनुमाने बाधकत्वेन परेण वक्तव्ये, यद्यखिलज्ञो न स्यात्तर्हि कर्ता न स्यादिति प्रतिकूलतर्के, विपक्षे बाधकाभावं, सूचयतीति हिशब्दार्थः, ततश्च तर्कस्याप्रयोजकतेति भावः । अथवैतस्य यत्र कर्तृत्वेन सार्वज्ञ्यसाधकानुमाने प्रतिपक्षता तत्र विपक्षे बाधकाभावं सूचयतीत्यर्थः । ततश्च तस्याप्रयोजकत्वमित्यस्य प्राबल्यवर्णनेन बाधकसूचनम् । न हि प्रतिपक्षो यावज्जीवं प्रतिपक्ष इति भावः । बाधकभाव इत्येव पाठे तु न काऽप्यनुपपत्तिः । अस्मदनुमाने प्रतिकूलतर्करूपं साधनानुमाने च विपक्षे बाधकं भवद्यद्यखिलतज्ज्ञो न स्यात्तर्हि तत्कर्ता न स्यादित्याकारकं वक्तव्यं तत्र व्याप्त्यभाव इत्याह **न हीति** । कुत इत्यतः प्रसिद्धकर्तॄणां पुंसामखिलतत्कार्यज्ञानाभावस्य दृष्टत्वात्तत्कार्यकरणेऽखिलतज्ज्ञानस्यानुपयोगेन चाखिल-तज्ज्ञानाभावः पुंस्सु निश्चित इति हिशब्दसूचितं हेतुं दर्शयति **कुलालादावित्यादिना** । इत्यादीत्युत्तरवाक्यस्य किञ्चिज्ज्ञत्वसाधकप्रतिपक्षान्तरपरत्वे तदुक्तेर्विशेषप्रयोजनाभावात् सत्यसङ्कल्पत्वादिनिरासस्य मूलानारूढता-ऽऽपाताच्च पूर्वन्यायातिदेशेन विषयान्तरनिरासपरतया वाक्यं व्याख्याति **अनेनैवेति** । तर्हि प्रभृत्यर्थकादि-शब्दानुपपत्तिरित्यत उक्तन्यायातिदेशस्य मूलारूढतायै आदिपदं व्याख्याति **आदिशब्द इति** । जगत्कारणत्व-रूपोक्तविषयान्यस्य विषयविशेषस्य मूलारूढताऽर्थमाह **परेशितुरिति** ।

**वा०र०**— **तस्यात्यन्तमिति** । प्रकारान्तरेण तत्साधनादेवोपयोगसिद्धेरत्यन्तपदम् । प्रकारान्तरेण साध्यस्यार्थस्य पूर्वसिद्धत्वादपूर्वार्थत्वं नास्तीत्यर्थः । **तत्रापीति** । किञ्चिज्ज्ञतायामपीत्यर्थः । **अवान्तरेति** । स्वकृतकार्याज्ञत्वरूपविशेषस्य प्रतिपादकत्वेन । प्रतिपादकत्वोक्त्या परिहरन्नित्यर्थः । **अखिलपदतात्पर्यलब्धेति** । एतद्योज्यमस्ति । **एकस्येति** । अखिलं वृक्षमित्यत्र वृक्षमित्येकवचनानुसारेण वृक्षस्यैकत्वसिद्धेस्तस्मिन्नेकस्मि-न्नखिलपदोक्तसाकल्यस्यानेकनिष्ठस्यानुपपत्त्या साकल्योपपत्तये वृक्षस्यानेकत्वविवक्षायां च वृक्षमित्येकवचना-योगप्रसङ्गाज्जात्यभिप्रायमेकवचनमित्यङ्गीकारे यो वृक्षं करोति स तच्छङ्कादिकं जानात्येवेति तज्ज्ञानस्य तस्मिन्नावश्यकत्वेन तदभावसाधने बाधः स्यात् । तस्मादेकोपपादनेऽपरप्रच्युतिरापद्यत इत्यखिलमिति विशेषण-मनुपपन्नमित्याशङ्कार्थः । यदुक्तं वृक्ष एक इति । तत्तथैव । न चैवमखिलपदोक्तसाकल्यायोगः । एकवृक्षसम्बन्धि-पदार्थानामनेकत्वेन तद्विवक्षयाऽखिलपदोपपत्तेरित्याशयेनाखिलत्वमुपपादयतीत्याह **एकस्मिन्नपीति** । प्रतिपक्षा-नुमाने विपक्षे बाधस्यैव तत्संरक्षकतया वक्तव्यत्वेन तदभावस्य प्रतिपक्षानुमानविघातकस्यावक्तव्यतया हिशब्देन तत्सूचनोक्त्ययोग इत्यतो विपक्ष इत्यस्य प्रसिद्धार्थपरित्यज्यार्थान्तराश्रयणेन वाक्यं योजयति **विप्रतिपन्न इति** । अस्मदीयप्रतिपक्षानुमानस्य परसम्प्रतिपत्त्यभावाद्विप्रतिपन्नः पक्षः प्रतिवाद्यङ्गीकृतोऽर्थस्तत्रेत्यर्थः । तदेवाह **उदाहृत**





**इति** । अस्मदनुमानस्य पूर्वानुमानमेव बाधकमस्तीति तदभावोक्त्ययोग इत्यतो बाधकविशेषपरतया बाधकपदं व्याचष्टे **प्रतिकूलेति** । विपक्ष इत्यस्य प्रसिद्धार्थत्यागोऽत्र पक्षे भवतीत्यपरितोषाद्यथाश्रुतार्थमङ्गीकृत्य प्रकृत-प्रेत्यनुमानातिरिक्तपरोक्ततर्करूपविषये विपक्षे बाधकाभावमिति योजयति **यद्वोदाहृतेति** । पूर्वानुमानप्रत्यनुमानयोः प्रकृतत्वेऽपि प्रत्यनुमानबाधकतर्कस्याप्रकृतत्वात्तत्र बाधकाभावप्रतिपादनं स्वरसं न भवतीत्यपरितोषाद्यथाश्रुतार्थं स्वारस्येनोपपादयत्प्रकारान्तरमाह **अथवेति** । एतस्येत्यनेनास्मदीयप्रत्यनुमानपरामर्शः । अनुमाने यत्र यस्मिन्निति योज्यम् । ननु प्रत्यनुमानेन पूर्वानुमानदुष्टताप्रतिपादनानन्तरं पुनः पूर्वानुमाने अप्रयोजकत्वाभिधानमसङ्गत-मित्यतस्तदभिधानप्रयोजनमाह **इत्यस्येति** । इत्येवमस्य प्रत्यनुमानस्य प्राबल्यवर्णनेनेत्यर्थः । पूर्वोत्तरानुमानयोः साम्येन प्रतिपक्षोक्तिः । पूर्वानुमानेऽप्रयोजकत्वे प्राप्ते तच्छून्योत्तरानुमानस्य ततोऽपि प्राबल्यमिति भावः । तथा च प्राबल्यनिरूपणात्प्रागनेन प्रतिपक्षवचनम् । निश्चिते तु प्राबल्येऽनेन पूर्वानुमानबाध एवोच्यत इत्याह **बाधसूचनमिति** । ननु यद्यनेन बाधस्तर्ह्येतस्य प्रागुक्तं प्रतिपक्षत्वं न स्यादित्याशङ्क्येष्टापत्त्या समाधत्ते **न हि प्रतिपक्ष इति** । प्राबल्यनिर्णयदशाविशेष एव प्रतिपक्षत्वमिति दशान्तरे तदभावो नानिष्ट इत्यर्थः । वक्ष्यते नविलक्षणत्वाधिकरणमूले । प्रतिपक्षस्य यावज्जीवं प्रतिपक्षत्वाभावादितीत्यभिप्रायः । **न कापीति** । विपक्ष-पदार्थयोजनाय विप्रतिपन्न इत्यादिना या प्रागाश्रिता प्रसिद्धार्थपरित्यागादिरूपानुपपत्तिः । अन्यथा यथाश्रुता-ऽनुपपत्तिः सा कापि नास्तीत्यर्थः । बाधकाभावमित्यस्य प्रत्यनुमाने बाधकत्वेन प्राप्तप्रतिकूलतर्कस्यैवोपस्थित्या तदभावप्रतिपादकत्वमिति तदर्थं सिद्धं कृत्वा पृथङ् न व्याख्यानम् । प्रागुक्तपक्षत्रये विपक्ष इत्येतद्यथाश्रुतार्थाश्रयणेन प्रकृतपूर्वानुमानाश्रयणेन च प्रवृत्ताथवेति तृतीयपक्षस्यैव स्वरसतया प्राप्तत्वेऽपि प्रत्यनुमानेऽपि बाधकाभाव-प्रतिपादनस्यावश्यकत्वेन प्रथमयोजनामप्याश्रित्य वा बाधकाभावमिति पाठबलाद्वा प्रत्यनुमाने बाधकाभाव-सूचनार्थतयाऽपि हिशब्दव्याख्यानस्य प्राचीनस्याश्रयणेन तृतीययोजनानुसारेण च बाधकाभावस्योपपादनं न हीत्युत्तरत्र मूलेन क्रियत इत्याशयेन तदुभयादत्र बाधकस्यैकत्वेनैकीकृत्यैव बाधकमाशङ्क्य तन्निरास-परतयोत्तरमूलं योजयति **अस्मदनुमान इत्यादि** । प्रतिपक्षसंप्लव एव प्रयोजनमित्यत आह **सत्यसङ्कल्प-त्वादीति** । **पूर्वन्यायेति** । प्रतिपक्षरूपन्यायेत्यर्थः । **विषयान्तरं** सत्यसङ्कल्पत्वादिरूपम् । **प्रभृत्यर्थकेति** । आदिपदस्य प्रभृत्यर्थकत्वात्तेन च पूर्वानुमानसमानविषयस्यैवानुमानस्य प्राप्त्या तेन च सत्यसङ्कल्पत्वा-द्यनुमानस्य प्रतिपक्षायोगात्पूर्वन्यायातिदेशानुपपत्तिरित्यत इत्यर्थः । **आदिपदं व्याख्यातीति** । प्रभृत्यर्थं परित्यज्य प्रकारवचनत्वाश्रयणे यथापूर्वानुमानं तत्प्रकारेण वानुमेति लाभे हेत्वतिदेशमात्रम् । साध्यं तु पराभिहितानुमानेषु साध्यतयोक्तानामभावरूपम् । न तु किञ्चिज्ज्ञतारूपमिति नानुपपत्तिरिति भावः । **विषय-विशेषस्येति** । सत्यसङ्कल्पत्वादिरूपविशेषस्येत्यर्थः ।

**विट्ठल०— पूर्ववदिति** । शिवो नाखिलं वेत्तीति पक्षीकारे शिवसिद्धौ धर्मिग्राहिविरोधः । असिद्धा-वाश्रयासिद्धिरिति परिहारायेत्यर्थः । **अन्यथा इति** । वृक्षकृदित्येवोक्ते प्रसिद्धवृक्षकर्तरि साध्यस्य सिद्धत्वात् सिद्धसाधनतेत्यर्थः । **वृक्षज्ञानमात्रेति** । सामान्याकारेणेति शेषः । ननु अयमखिलवेत्ता कर्तृत्वादित्यनेन सत्प्रतिपक्षं





भवदनुमानम् इत्यत आह **(न) हीति** । **विपक्षे इति** । **विपक्षे** प्रतिपक्षानुमाने अप्रयोजकत्वशङ्कायां न बाधकमस्तीत्यर्थः । तमेव दर्शयति **न हीति** । **अनुपयोगाच्च इति** । उपादानादिसामान्यज्ञानमात्रेण कार्यनिष्पत्त्युपपत्तेरारम्भकावयवसङ्ख्याफलपरिमाणादिज्ञानस्यानुपयोगादित्यर्थः । **आदिशब्द इति** । सर्वत्रापि पुंस्त्वहेतोरेव प्रतिपक्षत्वादादिपदग्राह्यहेत्वन्तराभावादादिशब्दः प्रकारवचन इत्याह किञ्चिज्ज्ञत्वादिसाधनप्रकारेणैव साधनीयमित्यर्थः ।

**॥ इति ब्रह्मलक्षणस्यातिव्याप्तिशङ्कापरिहारे**
**तल्लक्षणसाधकानां केवलानामनुमानानां प्रतिपक्षदुष्टत्वम् ॥**

* * *

**॥ अथ ब्रह्मलक्षणस्यातिव्याप्तिशङ्कापरिहारे**
**तल्लक्षणसाधकानां केवलानामनुमानानां अतिप्रसङ्गापत्तिश्च ॥**

७१ सु०— आभाससमानयोगक्षेमं चेश्वरानुमानजातमित्याह **चातिप्रसङ्ग इति**।

**अनु०— चातिप्रसङ्गोऽनुमयेदृशा ॥**

ईदृशा आगमादिसहायसम्पदमपहायात्यन्तातीन्द्रियार्थे(षु) प्रयुज्यमानया अनुमया अतिप्रसङ्गश्च भवतीत्यर्थः । अतिप्रसङ्गमेव दर्शयति **वस्तुत्वादिति** ।

**अनु०— वस्तुत्वात्तुरगः शृङ्गी पुष्पवत्खं सुतैर्युता ।**
**चित्रिणी च रसः षष्ठो रसत्वात्सोत्तरो भवेत् ॥**

चित्रिणी वन्ध्या । षष्ठो रसो रसान्तरवानित्युक्ते प्रथमादिरसेन सिद्धसाधनं स्यात् । सप्तमरसवानित्युक्ते अप्रसिद्धविशेषणता स्यात् । अतः सोत्तर इत्युक्तम् । ईश्वरानुमानस्य प्रमाणतायामेतेषामपि प्रामाण्यं स्यादिति शेषः ।

ननु वस्तुत्वं घटादावनैकान्तिकमिति चेन्न, तस्यापि पक्षत्वात् । तुरगशृङ्गादीनामनुपलम्भबाध इति चेत्, क्षित्यादिकर्तुरप्येवमेव । अयोग्यत्वान्नोपलभ्यत इति चेत्, तुरगविषाणमपि एवम(मेवा)स्तु । न च(नु) विषाणं नाम महत्त्वे सत्युद्भूतरूप(: )-





**शरीरावयवविशेषः, स कथमुपलब्ध्ययोग्यः स्यादिति चेत्, कर्ताऽपि तर्हि कुलालादिरिव महत्त्वे सत्युद्भूतरूपशरीरवान् कथमुपलब्ध्ययोग्यो भविष्यति । अशरीरत्वान्नोपलभ्यत इति चेत्, रूपाभावात्तुरगविषाणमपि तथाऽस्तु । विषाणं रूपवदेवेति चेत्, कर्ताऽपि शरीरवानेव । शरीरं कर्तृत्वेऽनुपयुक्तमिति चेत् न, किमुपयोगेन, न हि तदुत्पत्त्या व्याप्तिर्बौद्धानामिव भवताम् । धर्मादिमत्त्वं शरीरित्वे प्रयोजकमिति चेन्न, तस्यापि कर्तृत्वेन साधनादिति ।**

**ननु कथमत्र प्रयोक्तव्यम् । अनुमानत्वं यदि कार्यत्वादौ वर्तेत तदा तदविशिष्टे वस्तुत्वादौ (अपि) वर्तेतेत्येवमिति ।**

**परि०— न हि तदुत्पत्त्या व्याप्तिरित्यादि** । तदभिन्नयोः कार्यकारणयोश्च व्याप्तिरिति बौद्धमतम् । तथा च यथा बौद्धानां हि कार्यकारणयोरेव व्याप्त्यङ्गीकारो न तथा भवतां तार्किकाणाम् । तथा च नित्यज्ञानेच्छाकृतिषु शरीरस्याजनकत्वेऽपि चैत्रादावन्यत्र व्याप्तिदर्शिनेनेहापि व्याप्तिबलात् स्यादेव शरीरमित्यर्थः ।

**गु०दी०—** तुरगस्य शृङ्गित्वे मद्धेतोः किमायातमिति शङ्कते **ननु कथमत्र प्रयोक्तव्यमिति** ।

**यादु०— तदुत्पत्त्येति** । तत्तादात्म्यं वा तदुत्पन्नत्वं वा तद्व्याप्यत्वे निमित्तं, नान्यदिति बौद्धमतं, न भवतामतादृशस्यापि रसादे रूपादिव्याप्यतोपलम्भादित्यर्थः । ननु यदीश्वरानुमानं प्रमाणं स्यात् तदोक्तानुमान-जातमपि प्रमाणं स्यादित्युक्तावतिप्रसङ्गरूपतर्के वैय्यधिकरण्यम्, आपाद्यापादकयोः प्रकारान्तरं च न मूले प्रतीयत इत्याशयेन पृच्छति **नन्वत्रेति** । यद्यपि यद्येनाविशिष्टं तत्तथेति व्याप्तौ सत्यां न वैय्यधिकरण्यं तथाऽपि तुष्यत्विति न्यायेन मूलाभिप्रेतं सामानाधिकरण्यं दर्शयति **अनुमानत्वं यदीति** ।

**वं०प०—** ईदृक्शब्दस्य तृतीया ईदृशेति । (**पूर्ववदिति** । कार्यत्वविप्रतिपन्नं प्रत्यन्यत्वस्यासिद्ध-त्वादित्युक्तरीत्येत्यर्थः ।) ईदृश्येति भाव्ये छान्दसत्वाददोषः । **अनुपयुक्तमिति** । तथा च यः कर्ता स शरीरवानेवेति नेत्यर्थः । **न हि तदुत्पत्त्येति** । यदि कार्यकारणभावोपेतयोरेव धूमवह्न्योरिव व्याप्तिः स्यात्तदैव कर्तृत्वे शरीरं न जनकमिति तयोर्जन्यजनकभावाभावात्कर्तृत्वाङ्गीकारेऽपि शरीरेण किं शरीरस्य कर्तृत्वाजनकत्वादिति वक्तुं शक्येत । न ह्येवम् । अतादृशयोरपि रूपरसयोरविनाभावदर्शनादेवं प्रकृतेऽपि शरीरकर्तृत्वयोर्जन्यजनकभावाभावे-ऽप्यविनाभावसद्भावात्कर्तृत्वाङ्गीकारे शरीरं प्राप्तमेवेत्याशयः ।





**आनन्द**ः— वस्तुत्वात्तुरगः शृङ्गीत्यादिना अनुमाननिराकरणमनुपपन्नम् । पूर्वोक्तानुमानविरोधित्वाभावेन सत्प्रतिपक्षत्वासम्भवात् । इत्यतोऽतिप्रसङ्गकथनरूपत्वाभावोऽपि दोषः । न चातिप्रसङ्गकथनेन पूर्वोक्तानुमानस्य को दोष इति वाच्यम् । आभाससाम्यस्यैवोक्तत्वादित्याशयेनाह **आभासेति** । ईदृशेत्यस्यार्थमाह **आगमादीति** । एवमपि प्रकृते किमायातमित्यतः फलितमाह **ईश्वरानुमानस्येति** । ननु नैतदनुमानसाम्यं ईश्वरानुमानस्य अस्यानैकान्तिकत्वादिदोषवत्त्वादीश्वरानुमानस्य च तदभावादित्याशयेन शङ्कते **ननु वस्तुत्वमिति** । ननु क्षित्यादेः शरीरादुत्पत्तेरभावान्न क्षित्यादिरूपकार्येण शरीरसिद्धिरित्यत आह **न हि तदुत्पत्त्येति** । अन्यथा कार्यकारणयोरेव व्याप्तौ रूपरसयोरपि सा न स्यादिति भावः । अथैवमस्त्वनुमानं तथापि प्रयोगप्रकारः कथम् । न च यदि क्षित्यादिकं सकर्तृकमिति साध्यते तर्हि तुरगादेः शृङ्गित्वमपि साध्यतेति वाच्यम् । पर्वतो वह्निमानिति साधनं चेत्क्रियते तर्हि द्रव्यत्वेन पाषाणवत्त्वमपि साधयितुं शक्यं स्यात् इत्यनुमानमात्रोच्छेदापत्तेरित्याशयेन पृच्छति **ननु कथमत्रेति** । परिहरति **अनुमानत्वमिति** । **तदविशिष्ट इति** । कार्यत्वाविशिष्ट इत्यर्थः । तत्रोक्तदूषणपरिहारे य उपायः स प्रकृतेऽपीत्यर्थः ।

**श्रीनिधि०**— **कर्तृत्वे अनुपयुक्तमिति** । येन कर्तृत्वेन शरीरमनुमीयेत इति भावः । **किमुपयोगेनेति** । उपयोगाभावेऽपि रसे रूपस्येव व्यभिचरितसामानाधिकरण्येन तदनुमानं युक्तमिति भावः । एवमपि कार्यकारणयोरेव व्याप्तिरिति वैयत्यात् वदन्तं प्रति भ्रान्तोऽसीत्याह **न हि तदुत्पत्त्येति** । तदुत्पत्त्या सम्बन्धेन व्याप्तिः तदुत्पन्ने तदुत्पादकेनेत्यर्थः । **भवतामिति** । अभिमतेति शेषः । येनाव्यभिचरितसामानाधिकरण्ये सत्यपि उपयोगाभावेनानुमानं न स्यादिति भावः ।

**वा०चं०**— अव्यवहितपूर्वविषय एवोत्तरवाक्यस्यातिप्रसङ्गपरत्वमिति भ्रान्तिं निवारयन्नेवाभाससमानयोगक्षेमत्वरूपं प्रसङ्गस्वरूपं च दर्शयति **आभासेति** । ईदृशानुमयेत्यस्योक्तप्रतिपक्षानुमानपरत्वे तस्यातिप्रसङ्गरूपत्वाभावाद्वक्ष्यमाणानुमानपरत्वे चेदृशेत्यस्य वैयर्थ्यापत्त्याऽऽभाससाम्यं यदनुमानानामुच्यते तावदीश्वरविषयकानुमानानां विवक्षाया अलाभाच्च तदनुमानजातस्य मूलारूढतायै न पृथक् चानुमेश्वर इत्युक्तागमादिसहायशून्यातीन्द्रियार्थविषयानुमानमात्रपरामर्शपरतया तद्व्याख्याति **आगमादीति** । आभाससाम्यस्यातिप्रसङ्गरूपताया मूलाभिमतत्वं दर्शयति **अतिप्रसङ्गमेवेति** । चित्ररूपवत् स्त्रियः पुत्रयुतत्वसाधनं नाभास इत्यत आह **चित्रिणीति** । अनुमानस्वरूपमात्रपरस्यास्य वाक्यस्यातिप्रसङ्गस्वरूपे तात्पर्यसिद्धये आपाद्यापादकस्वरूपप्रदर्शकमुचितं शेषं पूरयति **ईश्वरानुमानस्येति** । साम्योक्त्या सूचितं वैषम्यपरिहारं वक्तुं वैशम्यं शङ्कते **नन्वित्यादिना** । प्रतिज्ञादूषणबाधपरिहारस्य प्राथम्येऽपि, सूचीकटाहन्यायेनाल्पत्वाद्धेतुदूषणानैकान्तिकपरिहारस्य, प्राथम्यमनुसृतम् । शरीरमित्यप्रयोजकत्वस्य, धर्मादिमत्त्वमित्यन्यथासिद्धेः, शङ्केति द्रष्टव्यम् । नन्वनुमानस्य प्रमाणविशेषत्वादीश्वरानुमानानामनुमानत्वाभ्युपगमे प्रामाण्यस्यैवाभ्युपगमात् तदभ्युपगमेश्वरानुमानस्य प्रमाण-





तायामित्यापादकत्वनिर्देशेनानुपपत्तिः । आभासत्वाभिमतस्य चानुमानत्वाभ्युपगमेऽनिष्टत्वाभावेनैषामपि प्रामाण्यं स्यादित्यापादनानुपपत्तिश्चाप्रयोजकता च दृष्टान्ताभावश्चेति कथमेतदित्याशङ्कते **ननु कथमिति** । न पृथक् चानुमेश्वर इत्यारभ्य नान्या स्यादनुमा तत इति पूर्वोत्तरवाक्ययोर्धर्मिभूतानुमाया एव निर्देशात्तदनुसारेणेश्वरानुमानस्य प्रमाणतायामेषामपि प्रामाण्यं स्यादिति शेषपूरणे व्याख्यातेऽपि प्रयोगप्रकार एवमभिमत इत्याह **अनुमानत्वमिति** ।

वा०र०— **पूर्वविषय एवेति** । सत्यसङ्कल्पत्वादिविषय एवेत्यर्थः । **प्रसङ्गस्वरूपं चेति** । अयमर्थः । चातिप्रसङ्ग इत्युत्तरानुव्याख्यानेति प्रसङ्गकथनं न तन्मात्रपर्यवसन्नमपि त्वीश्वरानुमानप्रमाणत्वे वस्तुत्वादीनामपि प्रामाण्यं स्यात् तेषां च तदभावात् तदविशिष्टेश्वरानुमानानामपि कथं प्रामाण्यमित्याभाससमानयोगक्षेमत्वे पर्यवस्यतीति । अत्र च प्रसङ्गपदमतिप्रसङ्गपरम् । आभाससमानयोगक्षेमत्वं रूप्यते निरूप्यते येनेति आभाससमानयोगक्षेमत्वरूपं तन्निरूपकत्वरूपमित्यर्थः । **उक्तेति** । पुंस्त्वादिहेतुकेत्यर्थः । **अतिप्रसङ्गरूपत्वेति** । प्रामाण्यापत्तिर्हि प्रकृतेऽतिप्रसङ्गस्तस्य यद्रूपं रूप्यतेऽनेनेति व्युत्पत्त्या विषयः तत्त्वाभावात् । आपादनीयप्रामाण्यकत्वाभावादित्यर्थः । अथवा रूपयतीति रूपं निरूपकम् । तथा च अनुमयातिप्रसङ्ग इत्युक्तातिप्रसङ्गनिरूपकत्वाभावादित्यर्थः । आपादनीयप्रामाण्यकत्वाभावादिति फलितोऽर्थ इति ज्ञातव्यम् । **वैयर्थ्येति** । पुंस्त्वादिहेतुकत्वादेरभावेन वस्तुत्वाद्यनुमानानां पूर्वानुमानसादृश्यायोगेनेदृशेत्यस्य विरुद्धार्थत्वापत्त्या प्रकारान्तरेण सादृश्यस्य प्रतिपाद्यस्याभावेन विगतार्थत्वापत्त्या चेत्यर्थः । वैयर्थ्यापत्त्येत्यनन्तरमीश्वरानुमानसदृशयेत्यर्थाश्रयणेन अवैयर्थ्येऽपि वेति पूरणीयम् । **तावदिति** । ईश्वरविषयकयत्किञ्चिदनुमानसादृश्यमादाय पर्यवसाने तथाविधवक्ष्यमाणानुमानैरतिप्रसङ्गस्य यत्किञ्चिदनुमाने प्राप्तावपि प्रागुक्तेश्वरस्वरूपतत्सार्वज्ञ्यादिसाधकानुमानानामुक्तातिप्रसङ्गप्राप्त्यभावात् तावदनुमानानां वक्ष्यमाणानुमानैरतिप्रसङ्गोऽयमित्येवं विवक्षालाभोपपादकतावदनुमानानुगतधर्मपुरस्कारेणेदृक्तानिर्वचनस्य च तथाविधधर्माभावेन तल्लाभायोगादित्यर्थः । **मूलारूढताया इति** । ईदृशेत्यत्रोक्तसादृश्यनिरूपके इदं किमोरीशुकीति सूत्रेण प्राप्तेदमादेशभूतो य ईश् तत्प्रकृत्यर्थत्वेनेदृशेति भाष्यपदारूढताया इत्यर्थः । आगमादीत्यादेः प्रागुक्तत्वेन परामर्शयोग्यतेति प्रतिपादयितुमुक्तं **न पृथक् चानुमेश्वर इत्युक्तेति** । **अनुमानमात्रेति** । मात्रपदेनावधारणार्थेन यत्किञ्चिदनुमानपरामर्शं व्यावर्तयति । अथवा कात्स्न्यार्थिकेन तेन सर्वानुमानपरामर्शे सिद्धे व्यक्तिविशेषव्यावृत्तिसिद्धिरिति द्रष्टव्यम् । **तद्व्याख्यातीति** । ईदृशेत्येतद्गतप्रकृतेस्तदनुमानजातपरामर्शकतया तत्तुल्ययेत्यर्थलाभेऽपि यद्रूपेण सादृश्यं तद्रूपपुरस्कारेणैव निर्देशस्य मूले प्रयुज्यमानयेत्यन्तेन करणादीदृशेत्येतस्य प्रयुज्यमानयेत्यतादृशार्थकतया व्याख्यानेनैव ईदृशेत्यत्र प्रकृतेरपीश्वरानुमानमात्रपरामर्शपरतया व्याख्यानं सिद्धं भवतीति भावः । **अतिप्रसङ्गरूपताया इति** । उत्तरभाष्ये वस्तुत्वाद्यनुमानानां कथनं ह्याभाससाम्यस्य प्रयोजकतया वा तत्र पर्यवसानाभिप्रायेण वा क्रियत इति वाच्यम् । न चैतदनुमानानामतिप्रसङ्गरूपता भाष्यकृतोच्यते । तज्ज्ञापकाभावात् । तत्कथमाभाससाम्यस्य प्रागुक्तातिप्रसङ्गनिरूप्यता घटत इत्याशङ्का-





परिहारायोत्तरभाष्ये आभाससाम्यार्थकतयोक्तानुमानानां वक्ष्यमाणशेषपूरणानुसारादतिप्रसङ्गत्वेनैवाभिधानलाभान्न प्रागुक्तस्यानुपपत्तिरित्याशयेनाभाससाम्यस्य याऽतिप्रसङ्गरूप्यता तन्निरूप्यतेति यावत् तस्याः उत्तरमूलाभिमतत्वं दर्शयतीत्यर्थः। मूलाभिमतत्वप्रदर्शनाय वक्ष्यमाणानुमानान्यतिप्रसङ्गत्वेन कथयतीति तात्पर्यम्। **प्राथम्येऽपीति**। अनेन प्राथम्यात् तुरगशृङ्गादीनामित्यादिना करिष्यमाणप्रतिज्ञादूषणरूपबाधशङ्कामुत्थाप्य तत्परिहारानन्तरं हेतुदोष-भूतव्यभिचारशङ्कादि युक्तमिति शङ्कां सूचयति। प्रतिज्ञादूषणेत्युक्तिस्तु प्रतिज्ञायाः प्राथम्यात् तद्दूषणस्यापि प्राथम्यं युक्तमिति युक्तिसूचनाय। एवं हेतुदूषणेति पश्चाद्भावज्ञापनायेति ज्ञेयम्। **सूचीति**। हेतुदूषणपरिहारस्याल्पत्वादिति भावः। ननु शरीरं कर्तृत्वेऽनुपयुक्तमित्यनेन कर्तापि शरीरवानेवेति पूर्ववाक्योक्तविमतः शरीरी कर्तृत्वादि-त्यनुमाने कर्तृत्वमस्तु शरीरित्वं मास्त्वित्यप्रयोजकत्वमाशङ्क्यते। धर्मादिमत्वं शरीरित्वे प्रयोजकमित्युत्तरत्रापि कर्तृत्वमप्रयोजकमित्येवाशङ्क्यत इत्यन्यतरस्य वैयर्थ्यमित्याशङ्कां परिहरति **शरीरमित्यप्रयोजकत्वस्येत्यादिना**। शङ्केत्युत्तरेण सम्बन्धः। शरीरमिति वाक्येनैवाप्रयोजकत्वशङ्का क्रियते। अस्तु कर्तृत्वं मास्तु च शरीरित्वविपक्षे बाधकाभावादिप्रयोजकत्वमित्यभिप्रेत्य शरीरित्वाभावे कर्तृत्वं न स्यादिति हेतूच्छित्तिरेव विपक्षे बाधिका स्यादित्याशङ्कां वारयितुं हि शरीरस्य कर्तृत्वे उपयोगाभावाच्छरीरित्वाभावेऽपि कर्तृत्वं सम्भवतीति न हेतूच्छित्तेः बाधकत्वमिति तद्वाक्येऽप्रयोजकत्वसमर्थनप्रतीतेः। धर्मादिमत्वमित्युत्तरवाक्येन तु नाप्रयोजकत्वमुच्यते किन्तु हेतोरन्यथासिद्धिरुच्यते। तथा हि शरीरित्वे कर्तृत्वस्य प्रयोजकत्वे कर्तृत्वेन शरीरित्वसाधनमुपपन्नं भवेत्। न चैवम्। धर्मादिमत्वस्यैव शरीरित्वप्रयोजकत्वेन विद्यमानेऽपि कर्तृत्वे प्रयोजकीभूतधर्मादिमत्वराहित्यादेव शरीरित्वाभावोपपत्त्या कर्तृत्वहेतोः साध्याभावेऽप्युपपन्नत्वरूपान्यथासिद्धत्वमिति प्रतिपादनप्रतीतिः। न चैतावता अप्रयोजकत्वमेवेति शङ्का तु नायाति। उपाधिस्थले साध्यं प्रति हेतोर्न प्रयोजकत्वमपि तूपाधेरेवेति प्रतिपादनेऽपि हेतुरस्तु साध्यं माऽस्तु विपक्षे बाधकाभावादप्रयोजकत्वमिति प्राप्तोपाधिसद्भावासद्भावस्थलयोः साधारणाप्रयोजकत्व एव पर्यवसानाभाववत् प्रयोजकान्तरशङ्काया उक्तहेतोरन्यथासिद्धिशङ्कापरत्वेनाप्रयोजकत्व-पर्यवसानाभावात्। अत एवोत्तरत्र तत्प्रयोजकस्यापि पक्षे कर्तृत्वेनैव साधनात् प्रयोजकान्तराभावासिद्ध्या शरीरित्वापत्तिरवर्जनीयेति हेत्वन्यथासिद्धेः परिहार उच्यत इत्याशयो द्रष्टव्यः। **ननु कथमत्रेति** मूले प्रयोग-प्रकाराक्षेपशङ्काऽनुपपन्ना। यदीश्वरसाधकानुमानस्य प्रमाणता तर्हि एषामपि प्रमाणता स्यादिति प्रयोगप्रकारस्य प्रागेव शेषपूरणेन सूचितत्वादित्याशङ्कां परिहर्तुं मुक्तरूपापादनप्रकारेऽनुपपत्तीनां सत्त्वात् तथा प्रकारोऽनुपपन्न इत्यतो युक्तेयमाशङ्केति दर्शयन्नवतारयति **नन्वनुमानस्येति**। अभ्युपगमादित्यस्याभ्युपगमप्राप्त्येत्यर्थः। **निर्देशानुपपत्तिरिति**। तथापादककरणविपर्ययपर्यवसानकाले तस्मान्नेश्वरानुमानप्रमाणतेति वक्तव्यम्। तच्च स्वकृतप्रमाणत्वाभ्युपगमविरुद्धमित्यर्थः। **अभिमतस्य चेति**। अभिमतानां वस्तुत्वादीनामित्यर्थः। समुदाय-विवक्षयैकवचनम्। अनुमानत्वाभ्युपगम इति तु प्रामाण्यमात्रापादनेऽपि प्रमाणविशेषानुमानत्वस्यैवापादन-विषयतेति भावेन। **अनुमानत्वाभ्युपगमेऽनिष्टत्वेति**। प्रामाण्यं स्यादित्यस्य हि प्रमाणविशेषानुमानत्वमभ्युप-गमनीयं स्यादित्यर्थकत्वेनानुमानत्वाभ्युपगमस्यापादनीयताप्राप्त्याऽनिष्टस्यैव चापाद्यत्वेन तदभ्युपगमे चानिष्ट-





त्वाभावेन तदापादनानुपपत्तिरित्यर्थः । दृष्टान्तेति विशेषव्याप्तौ दृष्टान्ताभावः । सामान्यव्याप्तिप्रकारनिरूपणं त्वित्थमिति न वक्तुं शक्यमित्याशयः । **अनुमानत्वमिति** मूले अनुमानत्वरूपधर्मपुरस्कारेण प्रयोगप्रकारकथन-मीश्वरानुमानस्येत्यादि प्राचीनानुमानरूपधर्मिपुरस्कारेणोक्तिविरुद्धमित्याशङ्का मुक्तिभेदे निमित्तकथनेन परिहर-न्ननुमानत्वमित्युत्तरमूलमवतारयति **न पृथक् चानुमेत्यादिना** । प्रयोगप्रकार एवमनुमानत्वमित्यादिरूपेणाभिप्रेतः ईश्वरानुमानत्वेत्यादिप्राचीनमूले अनुमानपुरस्कारे तु भाष्यगतानुमापदप्रयोगो निमित्तम् । न तु तथाप्रयोगे तात्पर्यमित्यर्थः ।

**स०व्र०— न हि तदुत्पत्त्येति** । तन्तूनां पटोत्पादकत्वव्याप्तत्वेति, कर्तृत्वस्य शरीरोत्पाद्यत्वाभावात् तद्व्याप्तत्वाभाव इति न वाच्यम् । यद्यदुत्पाद्यं तत्तद्व्याप्यमिति उत्पत्तिनिमित्तिका बौद्धानामेव व्याप्तिर्न तु भवताम्, रूपरसादौ व्याप्त्यङ्गीकारादिति भावः ।

**विठ्ठल०—** वस्तुत्वादिति श्लोके वाक्यपर्यवसानादर्शनादध्याहरति **ईश्वरानुमानस्येति** । कर्तुः शरीरवत्व-मिति न नियमः शरीरस्य कर्तृत्वेऽनुपयोगादिति शङ्कते **अथेति** । उपयोगोऽस्तु वा मा वा । सशरीरस्यैव सर्वत्र कर्तृत्वं दृष्टमित्याशयेन परिहरति **किमिति** । ननु यदि शरीरं कर्तृत्वेऽनुपयुक्तं तर्हि शरीरस्य सत्त्वं न स्यात् । सजातीय-द्रव्यान्तरारम्भकत्वरूपार्थक्रियाकारित्वं हि सत्त्वं तदभावात् । तथा च कर्तुरीश्वरस्याशरीरत्वं सिद्ध्यतीत्यत आह **न हि तदुपपत्त्या इति** । यत्सत् तत्क्षणिकम् अर्थक्रियाकारित्वं सत्त्वम् इति वदतां बौद्धानां मते यथा तस्य पदार्थसत्त्वस्योत्पत्त्या सजातीयद्रव्यान्तरोत्पादकत्वेन व्याप्तिः न तथा भवतामित्यर्थः । यद्वा तदुत्पत्तिः सजातीयद्रव्यान्तरोत्पादः तेन व्याप्तिः सत्त्वस्येति शेषः षण्डापूर्वादौ व्यभिचारादिति शेषः । ननु यदीश्वरानुमानं प्रमाणं स्यात् तर्हि उक्तानुमानजातमपि प्रमाणं स्यादित्यापादनं न युज्यते । आपाद्यापादकयोः सामानाधिकरण्याभावा-दित्याशयेन पृच्छति **नन्वत्रेति** । उत्तरमाह **अनुमानत्वमिति** । यद्येनावशिष्टं तत्तथेत्यविशेषालम्बनेन व्याप्तौ सत्यां वैय्यधिकरण्यं न दोषाय, तथापि तुष्यत्विति न्यायेन मूलाभिप्रेतं सामानाधिकरण्यं दर्शितमिति बोध्यम् ॥ यद्वा अनुमानस्य प्रमाणविशेषत्वादीश्वरानुमानस्यापि प्रामाण्यम् अङ्गीकार्यम् । ततश्च ईश्वरानुमानस्य प्रमाणतायाम् इत्यापादकत्वेन कथनमनुपपन्नं विपर्ययापर्यवसानात् । अथ ईश्वरानुमानस्य न प्रामाण्यं किन्तु अनुमानाभासत्व-मेवेति चेत्तर्हि ईश्वरानुमानस्य प्रमाणतायां एतेषाम् अपि प्रामाण्यम् इत्यापादनानुपपत्तिरिति शङ्कते **कथमत्र इति** । ईश्वरानुमानस्य वस्तुतः प्रामाण्यमङ्गीकृत्य तदङ्गीकारेऽतिप्रसङ्गव्युत्पादनान्न दोष इति परिहरति **अनुमान-त्वमिति** ।

**॥ इति ब्रह्मलक्षणस्यातिव्याप्तिशङ्कापरिहारे**
**तल्लक्षणसाधकानां केवलानामनुमानानां अतिप्रसङ्गापत्तिश्च ॥**

* * *





**।। अथ ब्रह्मलक्षणस्यातिव्याप्तिशङ्कापरिहारे ब्रह्ममीमांसाशास्त्रे ब्रह्मणोऽनुमानावेद्यत्वे व्याघातशङ्कापरिहारः ।।**

**७२ सु०— ननु विचारशास्त्रमारभ्य जगत्कारणेऽनुमानानवकाशव्युत्पादनं व्याहतमित्याशङ्क्यं परिहरन्नुपसंहरति उपक्रमादीति ।**

**अनु०— उपक्रमादिलिङ्गेभ्यो नान्या स्यादनुमा ततः ।**

**आगमानुगृहीतानुमानोपलक्षणमेतत् । आगमानुग्रहे हि सर्वाण्येतान्यनुमानान्येव, पक्षधर्मतादीनामङ्गानामपौरुषेयतया स्वतःप्रमाणेन शास्त्रेण सिद्धेः, प्रतिपक्षादीनां च तद्विरोधेन बाधादिति सङ्क्षेपः ।**

**परि०— विचारशास्त्रम्** अनुमानरूपन्यायनिबन्धनशास्त्रम् । कर्मनिर्णये युक्तिश्चेत्यादिग्रन्थे कर्तृत्वादौ कार्यत्वादीनां अनुमानानामङ्गीकारादाह **आगमानुगृहीतेति** । **सङ्क्षेप इति** । विस्तरस्तु तर्कताण्डवे ।

**वं०प०— उपलक्षणमेतदिति** । उपक्रमादिलिङ्गेभ्यः उपक्रमादिलिङ्गोपेतागमानुगृहीतेभ्योऽनुमानेभ्यः इत्यर्थो द्रष्टव्यः ।

**आनन्दः— ननु विचारशास्त्रमिति** । शास्त्रस्य मीमांसात्मकत्वे न तदारम्भेऽनुमानविषयत्वमेव जगत्कारणत्वस्य स्वीकृतं पुनस्तदविषयत्वव्युत्पादने व्याघात इति भावः । उपक्रमाद्यतिरिक्तस्यानुमानत्वाभावे ईश्वरः सर्वज्ञः स्वतन्त्रत्वादित्यनुमानं प्रमाणं न स्यादित्यत्राह **आगमेति** ।

**श्रीनिधि०— व्याहतं** = विरुद्धं प्रक्रमेणेत्यर्थः । विचारशास्त्रमारभ्य विचारे करणमेवावधृतम् । इदं च विचारशास्त्रमुपयुक्तमेव । न हि प्रतिज्ञातार्थोपयुक्तविचारः प्रतिज्ञया विरुध्यते । अतो न विरोध इति सूचयति । उपक्रमादिलिङ्गेभ्य इत्यनेनेति भावः । वेदस्यापि सकलजगदन्तर्भावादिति । तथा च जगत्कारणत्वेन प्रमितं सार्वज्ञं च असङ्गतम् । पूर्वोक्तयुक्त्यैव तत्सम्भवे पुनः सूत्रस्य वैयर्थ्यप्रसङ्गादिति भावः ।

**वा०चं०—** ननूपक्रमादीत्यादिशब्देन तात्पर्यज्ञापकत्वेन वाक्यार्थज्ञानोपयुक्तत्वेन च सजातीयानामुपसंहारादीनां श्रुत्यादीनां च ग्रहणेन तदन्येषामीश्वरानुमानादीनां न मानत्वमित्युपक्रमादीति वाक्येनोच्यत इति भाति; तथात्वे जगत्कारणेऽनुमानानवकाशव्युत्पादनव्याहतिशङ्काया न निरासः, न पृथक् चानुमेश्वर इत्यत्रत्य-





पृथगित्यस्य वैयर्थ्यं च, 'न तु दृष्टान्तभावात्' इत्येतत्सूत्रार्थतयेश्वरादिसाधककार्यत्वादिहेतूपन्यासानुपपत्तिश्च; इत्यस्य 'आगमानुगृहीता तु मानमेषाऽनुमाऽपि तु' इत्यनुव्याख्यानं मनसि निधाय विजातीयैतादृगनुमानोपलक्षणतयोपक्रमादिशब्दं व्याख्याति **आगमेति** । ननूक्तरीत्याऽप्रसिद्धिप्रतिपक्षादिप्रसक्तेः कथमागमानुग्रहमात्रेणानुमानत्वमित्यतः 'अक्षजागममूलस्य स्यादेवास्य प्रतिष्ठितिः' इत्यनुव्याख्यानं मनसि निधाय आगमोपकारं दर्शयति **आगमेति** । प्रथमादिपदेन व्यास्यादेः सङ्ग्रहः । द्वितीयादिपदेनोपाध्यादीनाम् । ननु 'उपाधिप्रतिपक्षौ तु क्व नामातीव दुर्वचौ' इत्युक्तेः सर्वत्र प्रतिपक्षादेरवकाशान्नेदमर्धजरतीयं युक्तमित्याशङ्कानिरासः। 'अन्यथाऽस्याप्रतिष्ठा च स्ववाचा व्याहतैव हि' इत्युत्तरवाक्योक्तव्याहत्या द्रष्टव्य इत्याह **इति सङ्क्षेप इति** ।

वा०र०— **तात्पर्यज्ञापकत्वेनेत्यादि** । तात्पर्यज्ञापकत्वेन सजातीयानामुपसंहारादीनां वाक्यार्थज्ञानोपयुक्तत्वेन श्रुत्यादीनां चेति योज्यम् । विजातीयानामिति श्रुत्यादिविशेषणं स्पष्टत्वान्नोक्तम् । उपसंहारादिग्रहणे श्रुत्यादिग्रहणे च निमित्तस्य भेदेनाभिधानं **तात्पर्येत्यादि** । **जगत्कारणेऽनुमानेति** । जगत्कारणे यदनुमानानवकाशव्युत्पादनं तस्य या व्याहतिशङ्का विचारशास्त्रारम्भप्रयुक्ता तस्य न निरास इत्यर्थः । **वैयर्थ्यं चेति** । आगमसहकृतानुमानस्येश्वरे प्रवृत्तिमभ्युपगम्य तदसहकृतानुमानव्यावृत्तये हि पृथक्पदमुपात्तम् । यदि चोपक्रमाद्यतिरिक्तानुमानां मानत्वमेव नेत्यङ्गीक्रियते तर्हि पृथक्पदं व्यर्थमित्यर्थः । **हेतूपन्यासेति** । भाष्यादावुपन्यासेत्यर्थः । **विजातीयेति** । उपक्रमादिना कार्यत्वाद्यनुमाया आगमादिसहकृताया विजातीयत्वं सिद्धमेव । तात्पर्यज्ञापकत्वादिति ज्ञेयम् । तात्पर्यज्ञापकत्वार्थज्ञापकत्वविवेकः उत्तराधिकरणे करिष्यते । **ननूक्तरीत्येत्यादि** । कार्यत्वाद्यनुमानेषु हि भवद्भिरेवासिद्धिप्रतिपक्षादिकमुक्तमस्ति तद्रीत्याऽसिद्ध्यादिदोषप्रसक्तेरागमानुग्रहमात्रेण कथमनुमानत्वमित्यर्थः । अत्र टीकायां प्रतिपक्षादिप्रसक्तेरिति पाठः । प्रतिपक्षाद्यपरिहारादिति पाठः प्रथमत आसीत् तदुपरि रेखाकरणेन दिप्रसक्तेरिति पाठः कृतोऽस्ति । तत्र द्यकारोपरिकृतदिकारस्याव्यक्ततया द्यकार एव लिखित इति ज्ञेयम् ।

विठ्ठल०— अस्माभिरपि कार्यत्वाद्यनुमानैरीश्वरसिद्धेः कर्मनिर्णयादौ उक्तत्वादाह **आगमानुगृहीतेति** । **सङ्क्षेप इति** । वेदादिशास्त्रस्य संवादानपेक्षप्रामाण्यं तेन पक्षधर्मतासिद्ध्यादि प्रकारो नविलक्षणत्वाधिकरणादौ प्रपञ्चयिष्यत इति भावः ।

**।। इति ब्रह्मलक्षणस्यातिव्याप्तिशङ्कापरिहारे**
**ब्रह्ममीमांसाशास्त्रे ब्रह्मणोऽनुमानावेद्यत्वे व्याघातशङ्कापरिहारः ।।**

* * *





॥ अथ ब्रह्मलक्षणस्यातिव्याप्तिशङ्कापरिहारोपसंहारः ॥

७३ सु०— तदेवं जगत्कारणत्वस्य(णस्य) शास्त्रैकसमधिगम्यत्वान्नानुमानादिना लक्षणस्यातिव्याप्तिकथनं युक्तमिति सिद्धम् ॥

॥ इति ब्रह्मलक्षणस्य अनुमानबलप्राप्तातिव्याप्तिशङ्कायाः परिहारः ॥
॥ इति ब्रह्मलक्षणस्य सूत्रोक्तोऽतिव्याप्तिशङ्कापरिहारः ॥

* * *

॥ अथ परकीयव्याख्यानस्य अनुपपन्नत्वात्
उक्तस्यैव सूत्रार्थस्य युक्तता ॥

७४ सु०— अत्र केचित् शास्त्रस्य योनिरिति व्याचक्ष(कुर्व)ते ॥ तदनुपपन्नम् प्रकृतानुपयोगात्।

न हि शास्त्रकारणत्वं जगत्कारणत्वे हेतुः, व्याप्त्यदर्शनात्। पूर्वसूत्रे जगत्कारणत्वेन प्रतीतं सार्वज्ञं ब्रह्मणो वेदकारणत्वेन स्फुटीक्रियत इति चेन्न, वेदस्यापि सकलजगदन्तर्भावात्। कथं चानन्तपदार्थात्मकस्य प्रपञ्चस्य कर्तृत्वेन न स्फुटम्, तदेकदेशवेदकारणत्वेन स्फुटीभविष्यति सार्वज्ञम्।

अथ जगत्कारणत्वं प्रधानादिव्युदासेन ब्रह्मण्येव साधयितुं हेतुत्वेनोक्तं सार्वज्ञं शास्त्रयोनित्वेन साध्यत इति चेन्न, असिद्धिप्रसङ्गात्। न हि ब्रह्मणो जगत्कारणत्वमनङ्गीकुर्वाणो वेदकारणत्वमङ्गीकरोति। आगमेन साध्यत इति चेत्, तर्हि जगत्कारणत्वमेव तेन किं न साध्यते, ईक्षत्यधिकरणादिना जन्मादिसूत्रस्य पुनरुक्तताप्रसङ्गाच्च।

जगत्कारणत्वेन सर्वज्ञत्वं न सिद्ध्यति वेदाकर्तृत्वादित्याशङ्क्येदमुक्तमिति चेन्न। तथा सति प्रतिज्ञामात्रत्वप्रसङ्गात्, वियदादिविषयेऽप्येवमाशङ्काप्रसङ्गात्। वियदधिकरणादौ साऽपि निराकरिष्यत इति चेत् (न)। तर्हि तेनैवेदं गतार्थं स्यात्।

किञ्च वेदकर्तृत्वाभावे(न) सार्वज्ञ्यं न सम्भवतीति शङ्कैव निर्दला। न हि तत्कर्त्रैव तज्ज्ञातव्यमिति नियमोऽस्ति।





**किञ्च वेदकर्तृत्वं कथं सार्वज्ञ्यसाधकम् । यो यावदर्थप्रतिपादकस्य वाक्यस्य प्रणेता स ततोऽप्यधिकमर्थं जानात्येव, यथा पाणिन्यादिः, अयं चाशेषार्थप्रतिपादकस्य शास्त्रस्य प्रणेताऽतः (कथं न) सर्वज्ञ इति चेत् न । किमिदं वेदप्रणेतृत्वं नाम । किं प्रमाणान्तरेणार्थमुपलभ्य स्वेच्छया (पदादिनि)प्रबन्ध(न)कर्तृत्वं किं वोच्चारणमात्रम् । आद्ये पौरुषेयत्वापत्तिः । द्वितीये सार्वज्ञ्यासिद्धिः । उपाध्याय(ादि)वत्, रज्जौ भुजङ्गवद्ब्रह्मण्यारोपितो वेद इति चेत्, कथं तर्हि पाणिन्यादिदृष्टान्तः । न हि पाणिनावारोपितं व्याकरणम् । कथं चैवं सति सार्वज्ञ्यसिद्धिः । तस्यैव विज्ञानशक्तिविवर्तत्वाच्छास्त्रस्येति चेत् (न), वियदादीनामपि प्रकाशशक्तिप्रसङ्गात्, अविद्यागतावरणादिशक्तेरपि ब्रह्मणि तात्त्विकत्वप्रसङ्गात् (च) ।**

**किञ्च वेदे ज्ञानकरणत्वशक्तिर्ब्रह्मणि च तत्कर्तृत्वशक्तिरिति किं केन सङ्गतम् । कुत्र चेदमुपलब्धमारोप्यगता शक्तिरारोपाधिष्ठाने वास्तवीति ।**

**तस्मादपव्याख्यानमेव तदित्युक्त एव सूत्रार्थः ॥**

**परि०**— अद्वैतमतं प्रत्याचष्टे **अत्र केचिदिति** । **वेदस्यापि सकलजगदन्तर्भावादिति** । तथा च पूर्वसूत्र एव वेदकारणत्वस्यापि प्राप्त्या पुनरिह तदुक्तौ पौनरुक्त्यं स्यादिति भावः । दोषान्तरं चाह **कथं चेति** । **हेतुत्वेनोक्तमिति** । पूर्वसूत्रे जगत्कारणत्वेनोक्तमित्यर्थः । अथ जगत्कारणत्वं प्रधानादिव्युदासेनेत्याद्युक्तार्थे दोषमाह **ईक्षतीति** । तत्रापीक्षणरूपहेतुना प्रधानकारणत्वनिरासादिति भावः । आदिपदेनानुमानिकमप्येकेषामित्यस्य ग्रहणम् । **इदमिति** । शास्त्रयोनित्वादित्येतदित्यर्थः । **प्रतिज्ञामात्रत्वेति** । शास्त्रयोनित्वे प्रमाणस्य सूत्रेऽनुपन्यासादिति भावः ।

**इति नियमोऽस्तीति** । घटाद्यकर्तुरपि घटादिज्ञानदर्शनादिति भावः । शङ्कते **तस्यैवेति** । ब्रह्मणो या विज्ञानशक्तिः तयैव ब्रह्मशास्त्रत्वेन भ्रमविषयत्वमापद्यत इति शास्त्रस्य ब्रह्मविज्ञानशक्तिविवर्तत्वम् । अत आरोप्ये वेदे विज्ञानजनकत्वादधिष्ठानेऽपि ब्रह्मणि विज्ञानशक्तिः सत्यभूतोपेयेति सार्वज्ञसिद्धिरिति भावः । वियदादेरपि शास्त्रस्येव विज्ञानशक्तिविवर्तत्वस्य वाच्यत्वात् शास्त्रस्येव तस्याप्यर्थज्ञानजनकत्वं स्यादित्याह **वियदादीनामपीति** । आरोप्यगता शक्तिः अधिष्ठानेऽवश्यमङ्गीकार्या इत्यत्र दोषान्तरमाह **अविद्यादीति** । **तत्कर्तृत्वेति** । ज्ञानकर्तृत्वेत्यर्थः । आरोपितवेदस्य





ज्ञानजननशक्तित्वेऽप्यधिष्ठाने विज्ञानशक्तिसिद्धिर्नास्ति । येन सार्वज्ञसिद्धिः स्यादिति भावेनाह **कुत्र चेदमिति** ॥

**गु०दी०**— परेण हि ईक्षितृत्वापरपर्यायसर्वज्ञत्वाज्जगत्कारणं प्रधानं नेति साधितमीक्षत्यधिकरणे । अत्रापि सर्वज्ञत्वात्प्रकृतेः जगत्कारणत्वं निराक्रियते अतः पौनरुक्त्यं स्यादित्याह **ईक्षत्यधिकरणादिनेति** । **जन्मादि** सूत्रपदेन जन्मादिकं प्रकृतेर्न भवतीत्यर्थसमर्थकं तृतीयसूत्रं गृह्यते । **विज्ञानशक्ती**त्यत्र विज्ञानशक्तिपदेनाखिलविषयज्ञानशक्तिरुच्यते।

**यादु०**— सूत्रवाक्यादापाततः प्रतीयमानं हेतुत्वं दूषयति **न हीति** । **व्याप्त्यदर्शनादिति** । वेदादिप्रणेतुरन्यस्याभावेन दृष्टान्ताभावादिति भावः । भाष्योक्तां सङ्गतिमाशङ्कते **पूर्वसूत्र इति** । विवरणोक्तां सङ्गतिमाशङ्कते **अथेति** । **हेतुत्वेनोक्तमिति** । पूर्वसूत्र इति शेषः । ईक्षत्यधिकरणादिनेत्यत्रादिपदेनानुमानिकमप्येकेषामिति चेदित्यादीनां ग्रहणम् । विवरणोक्तमेव सङ्गत्यन्तरं शङ्कते **जगत्कारणत्वेनेति** । **तेनैवेदमिति** । 'प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः' इत्यादिसूत्रार्थतया त्वदुक्तन्यायसाम्यादिति भावः । मीमांसकमतानुसारेणोदाहरणादित्वेन तद्भाष्याभिप्रेतमनुमानमनुवदति **यो यावदर्थेति** । इदमिहानुमानम् । ब्रह्म, वेदविषयादधिकविषयज्ञं, तत्कर्तृत्वादिति । ननु सकलवेदकर्तृत्वरूपहेतुबलात्सकलवेदार्थविषयत्वमीश्वरज्ञानस्य सिद्ध्यतीति तावतैव तस्य सार्वज्ञ्यसिद्धेरधिकविषयत्वं विशेषणान्तरं किमर्थम् । न च तावता तस्य सार्वज्ञं न सिद्ध्यति । अवेदप्रतिपादिताद्यतनवृत्तान्ताद्यभिज्ञत्वस्य तेनासिद्धेरिति वाच्यम् । अधिकविषयत्वविशेषणेनापि तदसिद्धेरिति चेत् । उच्यते । सकलवेदार्थाभिज्ञत्वमेवेह साध्यम् । पक्षधर्मताबलात्सार्वज्ञसिद्ध्युक्तिरिति तन्मताभिप्रायः । वेदार्थाधिकाद्यतनवृत्तान्ताद्यभिज्ञतासिद्धिस्तु स्वतः सर्ववेदार्थगोचरमीश्वरज्ञानमन्यदपि सर्वं गोचरयेदिति न्यायसाम्यात् । अधिकविषयत्वस्य साध्यानुप्रवेशनं तु पाणिनीयादिदृष्टव्याप्तिबलादधिकविषयत्वमपि सेद्धुमर्हति किमुत वेदार्थविषयत्वमिति कैमुत्यादिन्यायेन सिषाधयिषितसाध्यदार्ढ्यार्थमनुमानप्रवृत्त्यनन्तरभाविन्यायलभ्यार्थानुवादरूपं चेति ज्ञातव्यम् । सार्वज्ञसिद्धिमाशङ्कते **तस्यैव विज्ञानशक्तीति** । अयं भावः । अस्ति तावत्कार्ये शास्त्रे प्रकाशनसामर्थ्यम् । तच्चोपादानकारणधर्म एव । प्रदीपगतप्रकाशनसामर्थ्यस्य वह्निधर्मतादर्शनात् । कार्योपादानयोः शक्तिद्वयकल्पनाऽयोगात् । एवं च सर्वार्थप्रकाशनसमर्थत्वात्सर्वज्ञं ब्रह्मेति । कारणगतैव शक्तिः कार्य इति नियमस्यान्वयव्यभिचारमाह **वियदादीनामिति** । व्यतिरेकव्यभिचारमाह **अविद्या(दि)गतेति** । वह्निदीपादावेकशक्तिकत्वसम्भवेऽपि न प्रकृते तत्सम्भव इत्याह **किञ्च वेद इति** । **कुत्र चेदमिति** । वह्निश्च न दीपारोपाधिष्ठानभूतः । अतस्तदुदाहरणं प्रकृतासङ्गतमेवेति ॥

**वं०प०**— ननु कथं निर्दलत्वं यो यत्कर्ता तेनैव तस्य ज्ञातत्वाद्ब्रह्मणश्च वेदाकर्तृत्वे वेदज्ञानं न स्यादित्यत आह **न हीति** । तथात्वे कुलालकृतघटस्य कुविन्दादिनाऽज्ञेयत्वप्रसङ्गादित्याशयः । एवं चान्यकृतस्यापि वेदस्य





ज्ञानमीश्वरस्य सम्भवतीति ध्येयम् । अधिष्ठानगता शक्तिरारोप्ये भवतीत्यस्य व्यभिचारेणासम्भवेऽप्यारोप्ये शक्तिर्या प्रतीयते सा शक्तिः सर्वाप्यधिष्ठानगतैवेति नियमस्य व्यभिचाराभावादित्यत आह **अविद्येति** । अविद्यायाश्चैतन्ये आरोपितत्वादिति भावः । **ब्रह्मणीति** । ब्रह्मचैतन्यस्य प्रकाशकत्वेन तत्रावरणशक्त्यभावादिति भावः । अस्तु वाऽधिष्ठानगता शक्तिरारोप्ये । आरोप्यगता शक्तिरधिष्ठाने प्रतीयत इति नियमः; तथाऽपि न ब्रह्मणः सार्वज्ञं सिद्ध्यतीत्याह **किञ्चेति** । न ह्यधिष्ठानगता ज्ञानकर्तृत्वशक्तिरारोप्ये वेदेऽस्ति । न वाऽऽरोप्यवेदगता ज्ञानाकरणत्वशक्तिरधिष्ठानेऽस्तीति ब्रह्मगतविज्ञानकर्तृत्वशक्तिविवर्तत्वस्य वेदेऽभावान्न तेन सार्वज्ञसिद्धिरिति भावः । **कुत्र चेति** । भुजङ्गगतभयजनकत्वशक्ते रज्जावभावादिति भावः ।

**आनन्दः**— ननु शास्त्रयोनिरिति तत्पुरुषस्य वृत्तिः पदार्थप्रधानत्वेन प्रबलत्वात् तं विहाय अन्य-पदार्थप्रधानबहुव्रीह्यनुसरणमयुक्तमिति केषाञ्चिन्मतं दूषयितुमनुवदति **अत्र केचिदिति** । **प्रकृतानुपयोगादिति** । पूर्वसूत्रे जगज्जन्मादिकारणत्वस्य प्रकृतत्वात् तदनुपपाद्यवेदकारणत्वकथनं प्रकृतानुपयुक्तमित्यर्थः । कुतो नेत्यत्राह **व्याप्तीति** । यत्र शास्त्रकारणत्वं तत्र जगत्कारणत्वमिति व्याप्तेः क्वाप्यदृष्टत्वादिति भावः । **तथा सतीति** । शास्त्रयोनित्वादित्यत्र वेदकर्तृत्वमात्रप्रतिज्ञानं न तु तत्र कश्चन हेतुरुक्त इति प्रतिज्ञामात्रमयुक्तमित्यर्थः । **एवमिति** । वियदाद्यकर्तृत्वान्न जगत्कारणत्वेन सर्वज्ञसिद्धिरित्येवमित्यर्थः । शङ्कते **यथेति** । **विज्ञानशक्तीति** । तात्त्विकशक्तीत्यर्थः । **वियदादीनामिति** । तेषामपि ब्रह्मनिष्ठविज्ञानशक्तिविवर्तत्वादिति भावः । **अविद्येति** । तस्यापि ब्रह्मोपपादनकत्वादिति भावः । **आरोप्येति** । तथा च विज्ञानशक्तिविवर्तत्वेन सार्वज्ञसिद्धिरित्युक्त-मित्यर्थः । उपादानोपादेययोरेकशक्तित्वादिति भावः ।

**श्रीनिधि०**— ननु तेनैव न स्फुटीक्रियते किन्तु जगदेकदेशे वेदकर्तृत्वेन पूर्वसूत्रे च वेदमात्रकर्तृत्व-स्यानुक्तेः न चेत् न पौनरुक्त्यमित्यतो मुग्धोऽसीत्याह **कथञ्चेति** । **हेतुत्वेनोक्तमिति** । पूर्वसूत्रे अभिमतमित्यर्थः । जगत्कारणत्वमेव न किं साध्यत इति । तथा च किमनेनान्तर्गूढिनेत्याशयः । **प्रतिज्ञामात्रत्वप्रसङ्गादिति** । तत्र नियामकानुक्तेरिति भावः । सार्वज्ञं न सम्भवतीत्यस्य यत्किञ्चिज्ज्ञानमपि न सम्भवतीत्याशयो वा उत वेद-ज्ञानाभावेन सर्वज्ञानं न सम्भवति सर्वान्तःपातित्वात् वेदस्येत्यभिप्रायः । नाद्यः । असङ्गतत्वात् वेदकर्तुरपि बहुधाज्ञानदर्शनात् । द्वितीयमाह **न हीति** । कुलालादिकृतघटादेरस्माभिरपि ज्ञायमानत्वादिति भावः । **ततो-ऽप्यधिकमर्थं जानात्येवेति** । वेदानां अनन्तत्वेन अनन्तार्थप्रतिपादकत्वात् । स तावदर्थं जानातीत्युक्तावपि सार्वज्ञलाभात् ततो अधिकमिति किमर्थमिति चेत् । सत्यम् । निरुपचरितसार्वज्ञलाभार्थमेव मुक्तेः गुणाः अश्रुताश्च सन्तीत्युक्तेः । मायिनापि व्यवहारदशायां सगुणे तदङ्गीकारादिति तस्यैव विज्ञानशक्तीति । ब्रह्मण एव या विज्ञानशक्तिस्तद्विवर्तत्वात् तदसमानसत्ताकान्यथाभाववत्त्वात् । तत्रारोपितत्वादिति यावत् । **वियदादीनामपीति** । तेषामपि तत्रैवाध्यस्तत्वादिति भावः । ननु वियदादीनां ब्रह्माध्यस्तत्वेऽपि तेषां अवकाशादिशक्तिविवर्तत्वेन प्रकाशनशक्तिप्रसङ्गो नैवेति चेन्न । शक्तेरखण्डत्वेनाङ्गीकृतरशोमात्रत्वात् कल्पितविशेषोऽस्तीति चेन्न । कल्पित-





तन्तुत्ववत् मृत्पिण्डादिषु पटादिकार्यवैचित्र्यादिदूषणे सत्येव दूषणान्तरमाह **अविद्यागतेति** । अविद्याया अपि तत्रारोपादिति भावः । **किं केन सङ्गतमिति** । तथाच ज्ञानकर्तृत्वशक्तिविवर्तत्वेन वेदेऽपि तत्कर्तृत्वमेव स्यात् न तु तत्करणत्वशक्तिः । अन्यथा वियदादेरपि तत्करणत्वशक्त्यविवर्तत्वाविशेषेण ज्ञाने कारणत्वं किं न स्यादिति भावः ।

**वा०चं०**— नन्वेतावता ग्रन्थेन कारणस्य प्रमाणान्तरागम्यत्वेन शास्त्रैकसमधिगम्यत्वव्युत्पादनं भाष्यकारीयं तदा युक्तं स्याद्यदि शास्त्रैकसमधिगम्यत्वं सूत्रार्थः स्यात् । न चैवम् । परोक्तरीत्या समासप्राबल्याच्च सूत्रस्यान्यार्थत्वादिति शिष्यहार्दशङ्कां परिहर्तुमर्थान्तरानुपपत्तिं दर्शयितुं तमनुवदति **अत्र केचिदिति** । पूर्वसूत्रेण लक्षणेऽभिहिते लक्षणविशिष्टे प्रमाणस्यैवाकाङ्क्षितत्वेन वेदकारणत्वादेरनाकाङ्क्षितत्वादाकाङ्क्षादिवशादेव वाक्यार्थस्यावधेयत्वाद्योनिशब्दं प्रमाणवाचिनमङ्गीकृत्य बहुव्रीहिवशादस्मदुक्तार्थस्यैव प्रकृतोपयोगेऽपि, प्रकृतानुपयोगान्नायं वाक्यार्थ इत्याह **प्रकृतेति** । ननु शास्त्रकारणत्वं पूर्वसूत्रोक्तजगत्कारणत्वे हेतुत्वेनानेनोच्यतेऽतो नानाकाङ्क्षिताभिधानमित्यत आह **प्रकृतेति** ।

हेतुत्वेनोपयोगाभावं दर्शयति **न हीति** । हिशब्दार्थं प्रपञ्चयति **व्यासीति** । उपलक्षणं चैतत् । एकदेशकारणत्वेन समुदायकारणत्वानुमानेऽतिप्रसङ्गाच्चेत्यपि द्रष्टव्यम् । न च नायं निश्चयहेतुः किं त्वशक्यसृष्टेर्वेदस्य स्रष्टुः सर्वजगत्स्रष्टृत्वं सम्भवतीति सम्भावनाहेतुरिति वाच्यम् । अधिकेनाल्पस्य सम्भावनेऽप्यल्पेनाधिकस्यासम्भावनादिति भावः । श्रुतेर्जगत्कारणत्वे हेतुत्वेनासङ्गतावपि तदुक्त्यर्थलभ्यसार्वज्ञे हेतुत्वेनान्वयान्नासङ्गतिरित्याशङ्कते **पूर्वेति** । जगदेकदेशवेदस्रष्टृत्वेन सार्वज्ञसिद्धावन्तर्भावितवेदस्य जगतः स्रष्टृत्वेन सुतरां सार्वज्ञं सिद्ध्यत्येवेत्यर्थादपि जन्मादिसूत्रेणैव सार्वज्ञस्य स्फुटं प्रतीतत्वेन स्फुटं पुनर्हेत्वाकाङ्क्षाया अभावेनासङ्गतिस्तदवस्थैवेत्याह **वेदस्यापीति** । एवमपि पूर्वसूत्रोक्तजगत्कारणत्वेन स्फुटं सार्वज्ञाप्रतीतौ शास्त्रकारणत्वोक्त्याऽपि न तत्प्रतीतिरित्येतदुक्तिरयुक्तैवेत्याह **कथं चेति** । उपलक्षणं चैतत् । पूर्वसूत्रेऽर्थलब्धसर्वशक्त्यादित्यागेन सार्वज्ञस्यैव स्फोरणे निमित्ताभावाच्चेत्यपि द्रष्टव्यम् । न च 'अस्य महतो भूतस्य निःश्वसितं' इति श्रुत्या नामरूपात्मकस्य सर्वस्यापि प्रपञ्चस्य निःश्वसितवदप्रयत्नसाध्यब्रह्मकार्यत्वोक्तेस्तादृशश्रुत्युदाहरणेन सर्वशक्त्याद्यपि दृढीकृतमेवेति वाच्यम् । श्रुत्यन्तरस्यापि सूत्रसूचितत्वसम्भवेनास्या एव सूत्रोपात्तत्वे नियामकाभावात्सार्वज्ञे कण्ठत एव शास्त्रयोनित्वरूपसाधकमभिधाय तत्सूचितप्रमाणेनार्थतः सर्वशक्त्यादिसाधने निमित्ताभावाच्चेत्याशयात् । ननु न पूर्वसूत्रेण अर्थतो लब्धस्य सार्वज्ञस्य स्फुटीकरणार्थमिदं येनोक्तदोषः स्यात्किन्तु प्रधानादिव्युदासेन जगत्कारणत्वं ब्रह्मण्येव साधयितुं हेतुत्वेनोक्तं सार्वज्ञं शास्त्रयोनित्वेन साधयितुमिदम्, अतः सार्वज्ञस्यैव विशिष्य साधनमुपपन्नम्; इति शङ्कते **तथेति** । आगमेन शास्त्रयोनित्वं तेन च सार्वज्ञ्यं प्रसाध्य तेनान्यव्युदासेन ब्रह्मणि जगत्कारणत्वसाधनाद्वरं श्रुत्यैवान्यव्युदासेन ब्रह्मण्येव जगत्कारणत्वसाधनमित्याह **तर्हीति** । ईक्षत्यधिकरणादीत्यादिपदेन चतुर्थपादोपादानम् । ननु प्रधानादिव्युदासेन ब्रह्मण्येव जगत्कारणत्वसाधकतया सार्वज्ञ्यसिद्धेरावश्यकत्वाज्जगत्कारणत्वेन सार्वज्ञं न सिद्ध्यति वेदाकर्तृत्वादिति शङ्कया च जगत्कारणत्वेन सार्वज्ञसिद्धेरसम्भवाद्वेदकारणत्वेन सार्वज्ञ्यसिद्ध्यर्थमिदमुच्यते । अयमेव जगत्कारणत्वेनास्फुटं सार्वज्ञ्यं स्फुटीक्रियत इत्यस्याभिप्राय इत्याशयेन शङ्कते





**जगदिति**। तर्हि नोक्तशङ्काया अनेन परिहारो वेदकारणत्वे हेतोरनुपन्यासादित्याह **तथा सतीति**। तर्हि 'यावद्विकारं तु विभागः' इत्यादिसूत्रोक्तैर्भिन्नत्वादिसाधारणहेतुभिर्ब्रह्मेतरसर्वानित्यताया वियदधिकरणादौ प्रतिपादनेन तेनैव तच्छङ्कानिवृत्तेस्तदर्थत्वे तेनास्य गतार्थता स्यादित्याह **तर्हीति** । न चात एव हेतुमनुपन्यस्य प्रतिज्ञामात्र-मुक्तशङ्कानिरासस्सूचनाय कृतमिति वाच्यम्, वियदादिविषयेऽपि तथा प्रतिज्ञायाः कर्तव्यत्वात्तद्भाष्येऽस्य महत इत्यादिप्रमाणोपन्यासानुपपत्तेश्च । न च तर्ह्यत्र श्रुत्या शास्त्रयोनित्वसाधनं तत्र युक्त्येति न गतार्थतेति वाच्यम्, वियदादिकारणत्व इवैतत्कारणत्वेऽपि श्रुत्यादेस्तत्रैवोपन्यसनीयतया वैलक्षण्ये निमित्ताभावात् । अन्यथा वियदादिविषये श्रुत्युपन्यासायात्र यत्नः कर्तव्यः स्यादिति भावः । एतेन 'अथवा वेदनित्यत्वाद्ब्रह्मणो विश्व-योनिता । नेति शङ्कामपाकर्तुं शास्त्रयोनित्वमुच्यते' इति सार्वज्ञ्यप्रसङ्गमपहाय जगत्कारणत्वासम्भवशङ्का-परिहारकत्वेन सूत्रसार्थक्यप्रकारः कल्पतरूक्तो निरस्तो वेदितव्यः । प्रतिज्ञामात्रत्वप्रसङ्गस्य वियदादि-वैलक्षण्याभावप्रयुक्तदोषस्य चापरिहारात् । एवं च सार्वज्ञ्यसिद्ध्यर्थं शास्त्रयोनित्वेऽवश्यं वाच्ये एतच्छङ्का-परिहारोऽप्यनुषङ्गतः सिद्ध्यतीत्येव कल्पतरुतात्पर्यं न तु सार्वज्ञ्यसिद्ध्यर्थतामस्यापहायैतत्सूत्रस्यैत-च्छङ्कानिरासकत्वमेवेत्यत्रेति केनचिदुक्तं निरस्तम् । अस्य सार्वज्ञ्यसिद्ध्यर्थताया निरस्तत्वान्निराकरिष्यमाण-त्वाच्च प्रतिज्ञामात्रेण शङ्काया अपरिहारादानुषङ्गिकतासिद्धेरनुपपत्तेश्चेति प्रधानादिव्युदासेन ब्रह्मण्येव जगत्कारणत्वं साधयितुं हेतुत्वेनोक्तसार्वज्ञं शास्त्रयोनित्वेन साध्यत इत्यभिप्रायस्य वेदाकर्तृत्वाज्जगत्कारणत्वेन सर्वज्ञत्वं न सिद्ध्यतीत्यभिप्रायस्य च सूत्रावतारिकावसरे विवरणग्रन्थात्स्पष्टप्रतिभासेऽपि चन्द्रिकायां तत्तदाशङ्कापरिहारौ तु पक्षान्तरनिरासेनार्थत एतदभिप्राये दूषणलाभाभिप्रायेणेति द्रष्टव्यम् ।

सर्वपक्षसाधारणं दूषणमाह **किञ्च वेदकर्तृत्वमिति** । एतेन यद्भामतीविवरणयोर्जगत्कारणत्वेन सिद्धे सार्वज्ञे शास्त्रयोनित्वं हेत्वन्तरमुच्यत इत्युक्तं तदपि निरस्तं भवति । **यो यावदिति** । वेदः स्वविषयाधिकज्ञानव-त्प्रणीतो वाक्यप्रमाणत्वात्पाणिन्यादिशास्त्रवदिति वा ब्रह्म वेदविषयादधिकविषयज्ञं तत्कर्तृत्वात्पाणिन्यादिवदिति वा प्रयोगप्रकारो द्रष्टव्यः । सर्वावभासकवेदकर्तृत्वेन पक्षधर्मताबलात्सार्वज्ञसिद्धिरित्याशयेन तदनुगुणतया व्याप्तिस्वरूपं प्रदर्श्य पक्षधर्मतास्वरूपमपि दर्शयति **अयं चेति** । यद्यपि सकलवेदकर्तृत्वहेतूकरणबलात् सकलवेदार्थविषयत्वमीश्वरज्ञानस्य सिद्ध्यतीति तावतैव तस्य सार्वज्ञ्यसिद्धेरधिकविषयत्वविशेषणं व्यर्थम् । अद्यतनपुरुषपाणिगतवराटकसङ्ख्यादिज्ञानस्य चाधिकविशेषणेनाप्यसिद्धिरेव । इक्षुक्षीरादिमाधुर्यादिविशेषाणां शब्दाबोध्यानुभवमात्रगोचराणां ज्ञानस्य सिद्ध्यर्थं तदुपादाने च तादृशाधिकविशेषविषयत्वेन साध्यस्योपपत्त्या-ऽर्थान्तरापत्तिस्तथाऽपि सकलवेदार्थाभिज्ञत्वमेव साध्यम् । सामान्यव्याप्तिबलात्स्वप्रयुक्तवाक्यार्थाभिज्ञत्वमात्र-सिद्धावपि विशिष्य सकलवेदार्थाभिज्ञत्वसिद्धिः सकलवेदकर्तृत्वहेतुपक्षधर्मताबललभ्या । वेदार्थाधिकाऽद्यतन-वृत्तान्ताद्यभिज्ञत्वसिद्धिस्तु स्वतः सर्ववेदार्थगोचरमीश्वरज्ञानमन्यदपि गोचरयेदिति न्यायसाम्यात् । अधिक-विषयत्वस्य साध्यानुप्रवेशनं तु, पाणिनीयादिदृष्टव्याप्तिबलादधिकविषयत्वमपि सेद्धुमर्हति, किमुत वेदार्थ-विषयत्वमिति कैमुतिकन्यायेन सिषाधयिषितसाध्यसिद्धिदार्ढ्यार्थमिति परस्याशयः । यद्यप्येकार्थमात्रज्ञेन प्रयुक्ते प्रतीयमानानेकार्थकवाक्ये स्वविषयज्ञानवत्प्रणीतत्वस्याप्यभावेन व्यभिचारस्तद्वदुपपत्त्या चार्थान्तरता, दुष्कर-





करणसमर्थस्यापि सुकरकरणसामर्थ्याभावदर्शनेन वेदार्थाभिज्ञस्यापि पाणिगतवराटकाद्यज्ञानोपपत्त्या न्यायबलेनापि तज्ज्ञानालाभश्चेत्यादिदूषणमपि वक्तुमुचितम्, तथाऽपि यत्परेणैतदनुमानहेतौ विकल्पदूषणमाशङ्क्य समाधानमभिहितं तन्निरासेन तदेव तदद्याचातुरीं प्रदर्शयितुमुद्भावयति **किमिदमिति** । **रज्जाविति** । एवं च वेदारोपाधिष्ठानत्वं तत्प्रणेतृत्वमित्युक्तं भवति । तर्हि दृष्टान्ते साधनवैकल्यमित्याह **कथं तर्हीति** । कार्याध्यस्तयोरुभयोः कारणाधिष्ठानाधीनत्वमात्रेण तदुक्तौ तूभयानुगताधीनताया निर्वक्तुमशक्यत्वाच्छब्दसाम्यमात्रेण दृष्टान्ततायाश्चातिप्रसञ्जकत्वेनायुक्तत्वादिति भावः । अप्रयोजकत्वं चाह **कथं चेति** । वियदादीनामित्यादिपदेनाविद्यादिग्रहणम् । ननु कार्यगतत्वेन निश्चितशक्तेः कारणशक्तिं विनाऽनुपपत्तावपि कारणगतसर्वशक्तेः कार्यगतत्वनियमानभ्युपगमात् कथमेतदित्यतः साऽप्यनुपपत्तिर्नास्तीत्याह **अविद्यादीति** । प्रकृते कार्यकारणयोरेकशक्तिकत्वमभ्युपगम्य तन्नियमाभावव्युत्पादनं कृतम्, वस्तुतस्तु तदेव नास्तीत्याह **किञ्चेति** । न च बोधकत्वमात्रमुभयानुगतमस्तीति वाच्यम् । एकत्र बोधकत्वं नाम तत्करणत्वमेव । अपरत्र तत्कर्तृत्वमेवेत्यर्थभेदे सति शब्दसाम्यमात्रस्य अप्रयोजकत्वादित्याशयः । किञ्च प्रसिद्धोपादानोपादेययोरेकशक्तिमत्त्वस्य क्वचिद्दर्शनेऽपि त्वदभिमताधिष्ठानाध्यस्तयोस्त्वनयोर्न क्वचिदपि दृष्टमित्याह **कुत्र चेति** । **तस्मादिति** । तथा च भाष्यकारीयः शास्त्रैकसमधिगम्यत्वसाधनायासो युक्त एवेति भावः ।

**वा०र०— एतावता ग्रन्थेनेति** । शैवाद्यागमसम्प्राप्तेत्यारभ्य उपक्रमादीतिवाक्यान्तग्रन्थेन इत्यर्थः । सूत्रस्यान्यार्थत्वे परोक्तरीतिमात्रं कथं प्रयोजकमित्यतः तद्रीतिसाधकं भवत्पक्षबाधकं च समासप्राबल्यमस्तीत्याह **समासेति** । तत्पुरुषस्य वर्तिपदार्थप्रधानस्य बहुव्रीहेरन्यपदार्थप्रधानतया जघन्यात् प्राबल्यमित्याशयः । शिष्यहार्देत्युक्त्या किमत्र परव्याख्यानपराकरणेन । न चैतच्छङ्कानिवारणमेव प्रयोजनमिति वाच्यम् । एतच्छङ्कायाः परेणाकारणात्पररीतिमालम्ब्य शिष्येणापि तदकरणात् तत्परिहारायोग इत्याशङ्का निवारिता । परिहर्तुमुपयुक्ताया अर्थान्तरानुपपत्तिस्तां दर्शयितुमिति योज्यम् । **अङ्गीकृत्य बहुव्रीहीति** । अङ्गीकृत्य यो बहुव्रीहिराश्रीयते तद्वशादिति योज्यम् । अनेन बहुव्रीह्याश्रयणं तल्लब्धार्थस्य प्रकृतोपयोगात्कर्तुं शक्यम् । न तु प्रकृतानुपयोग्यर्थसम्पादकता पुरुषाश्रयणम् । अर्थानुपयोगे समासप्राबल्यस्याप्रयोजकत्वादिति सूचयति । प्रकृतेतिवाक्यं महीत्याद्युत्तरग्रन्थप्रवृत्त्यङ्गप्रमेयान्तरप्रतिपादकतयापि योजयितुं तद्व्यावर्त्याशङ्कामुत्थाप्य तन्निवर्तकतया तदवतारयति **ननु शास्त्रेति** । **तदुक्त्यर्थेति** । तदुक्त्या अर्थतो लभ्येत्यर्थः । **एवमपीति** । वेदस्यापि जगदन्तर्भावितवेदस्य जगतः स्रष्टृत्वोक्तावपीत्यर्थः । पूर्वसूत्रेऽर्थलब्धेति चन्द्रिकोक्तमाह **उपलक्षणं चैतदिति** । **तादृशश्रुत्युदाहरणेनेति** । अस्य महत इत्यादि वेदवाक्यं ब्रह्मणो वेदकर्तृत्वेन सर्वज्ञत्वं न साधयति वेदस्य सापेक्षत्वप्रसङ्गादित्याशङ्क्य साधयति । अर्थमुपलभ्य रचितत्वस्याभावादित्यादेः परभाष्ये उक्तत्वादित्याशयः । **चतुर्थेति** । अनुमानिकपादस्य प्रधानाशाब्दत्वप्रतिपादकतया परेणाभिधानादिति भावः । **एतेनेति** । अथवेत्यादिनोक्तः प्रकारः एतेन निरस्त इति सम्बन्धः । एतेनेत्युक्तमेव दर्शयति **प्रतिज्ञेत्यादि** । **इत्यत्रेति** । तात्पर्यमिति वर्तते । सार्वज्ञ्यप्रसङ्गपरित्यागे बहुविरोधा आयान्तीत्यतः कल्पतरुग्रन्थस्यार्थान्तरे तात्पर्यं परिमले वर्णितं तदप्ययुक्तमिति वक्तुमाह **एवं च सार्वज्ञ्येति** ।





अत्रैव च सार्वज्ञ्यसिद्ध्यर्थमित्येव पाठः । मूलकोशेन चेत्येतद्विनाश्यैवं चेति करणात् । स्पष्टत्वाभावेन लेखकेन न चेत्येव लिखितम् । तथा च न चेत्यस्य निरस्तमित्यस्य च विरोध इति शङ्कानवकाशः । केनचिदुक्तमित्यनन्तरमेवं चेत्यत्रत्यश्चशब्दो योज्यः । एवं केनचिदुक्तं च निरस्तमिति । चशब्दो वा पूरणीयः । तदैवंचेत्यस्यैवमेवेत्यर्थः । एवमेवेत्युक्तमेव दर्शयति **अस्य सार्वज्ञ्येति** । ननु चन्द्रिकायां जगत्कारणत्वं प्रधानादिव्युदासेन ब्रह्मण्येवेत्यादिनोक्तो भाष्याभिप्रायः जगत्कारणत्वेन सर्वज्ञत्वं न सिद्ध्यति वेदाकर्तृत्वादित्युक्ततदभिप्रायश्च मूल इति च कुतो नाशङ्क्य परिहृतः । न च भामतीविवरणोक्तप्रमेयदूषणाय प्रवृत्तेन चन्द्रिका कृता तद्ग्रन्थात् तदभिप्रायाप्रतीतेर्नाशङ्क्य तौ निराकृताविति वाच्यम् । सूत्रावतारिकावसरे विवरणे तदभिप्रायद्वयप्रतीतेरित्याशङ्कां परिहर्तुमाह **प्रधानादि व्युदासेनेत्यादि** । अत्र चन्द्रिकायां न तदाशङ्कापरिहारौ त्विति पाठः । मूलकोशे सत्त्वात् स्पष्टप्रतिभासेऽपीत्युक्तशङ्कानुगुणत्वाच्च । तस्यायं योजनाप्रकारः विवरणग्रन्थात्स्पष्टभासेऽपि चन्द्रिकायां तदभिप्रायस्य यौ नाशङ्कापरिहारौ आशङ्कावयवः परिहाराभावश्चेति यावत् तौ तु पक्षान्तरनिरासेनेत्यादिरूपः । **पक्षान्तरनिरासेनेति** । पूर्वसूत्रेऽर्थलब्धस्य सार्वज्ञ्यस्य संस्फोरणार्थं ब्राह्मणो ऋगादिकारणत्वमिहोच्यत इत्येतद्भाष्यप्रमेयनिराकरणाय प्रवृत्तेन चन्द्रिकाकृता साङ्ख्याभिमताचेतनकारणतायाश्च चेतनत्वमात्रेण निषेधसम्भवादिति प्रक्रम्य साङ्ख्यानङ्गीकृतेन शास्त्रयोनित्वेन सार्वज्ञ्यस्य साधनायोगाच्च । श्रुत्या शास्त्रयोनित्वं तेन सार्वज्ञ्यं प्रसाध्य तेन प्रधानस्य कारणतानिषेधाद्वरं श्रुत्यैव तन्निषेध इति प्रतिपादनेनोक्तभाष्योक्तपक्षनिरासे सति अर्थतः प्रधानादीत्युक्ताद्याभिप्राये दूषणलाभात् तथा ननु तर्हि पूर्वसूत्रोक्तसर्वकारणत्वाक्षेपे तत्समाधानार्थमिदमस्तु । उक्तं हि कल्पतरौ । अथवा वेदनित्यत्वादिनेति चेन्नेत्यनन्तरं श्रुतीनां परस्परविरोधपरिहारेण यावद्विकारमित्यादिसूत्रोक्तैर्भिन्नत्वादि साधारणहेतुभिर्ब्रह्मेतरसर्वानित्यत्वप्रतिपादके वियत्त्यादौ अस्य वक्तव्यत्वादिति भाष्याभिप्रेततया पक्षान्तरमाशङ्क्य तन्निरासवर्णनेनार्थतः द्वितीयाभिप्राये च दूषणलाभात् तदभिप्रायेणेत्यर्थः । एतदभिप्राये दूषणेतिवाक्ये एतदर्थेत्यर्थपदं लेखकागतम् । तत्तदाशङ्कापरिहारौ त्विति पाठेऽपि विवरणग्रन्थादुक्ताभिप्राययोः स्पष्टप्रतिभासेऽपि चन्द्रिकायां यौ तत्तदाशङ्कापरिहारौ पूर्वसूत्रेऽर्थलब्धस्य सार्वज्ञ्यस्येत्यादि भाष्याभिप्रेतमनूद्य यस्तत्परिहारः । ननु तर्हि पूर्वसूत्रोक्तसर्वेत्यादिकमाशङ्क्य च यस्तत्परिहारस्तौ तु तावन्मात्रं त्विति यावत् । प्रधानादीत्यादिमूलोक्तशङ्कयोस्तत्परिहारयोश्च कथनाभावस्त्विति यावत् । पक्षान्तरनिरासेनेत्यादि समानमिति योज्यम् । **तदपि निरस्तं भवतीति** । सर्वपक्षदूषणत्वे सति तन्मात्रनिरासकत्वेनैतन्मूलव्यापारः कुतो वर्णनीय इत्याशयेनात्र भामतीविवरणयोरिति चन्द्रिकायां विशिष्य निराकरणेऽपि तत्पक्षनिरासमात्रपरत्वेन किञ्चेत्यादिग्रन्थो न योजित इति ज्ञेयम् । यो यावदिति मूलसूचितचन्द्रिकोदाहृतविवरणोक्तप्रयोगप्रकारमुपदर्श्य यो यावदर्थेति मूलवाक्याल्लब्धकल्पतरूक्तमपि तत्प्रकारमाह **ब्रह्म वेदविषयादधिकेति** । . . . . . . अनुसारेणैतदनुमानं विचारयति **यद्यपीत्यादिना परस्याशय इत्यन्तेन** । सकलेति पदोपादानेन वेदादिपक्षकप्रागुदाहृतानुमानयोर्वेदपदं सकलवेदपरम् । तथा सत्येव सार्वज्ञ्यसिद्धिरिति सूचितम् । **तावतैवेति** । वेदविषयादधिकविषयज्ञमिति साधने हीश्वरज्ञानस्य वेदस्य यो विषयः तद्विषयकत्वे सति तद्विषयातिरिक्तविषयविषयकत्वं साध्यतया पर्यवसन्नम् । तत्र सकलवेदानां सर्वार्थप्रतिपादकत्वेन सकलवेदविषयीभूतसर्वार्थविषयकत्वे ईश्वरज्ञानस्य सिद्धे सर्वज्ञत्वस्यैव सिद्धेरित्यर्थः । **अधिकविषयत्वेति** ।





अधिकविषयेतिपदेनोक्तमधिकविषयत्वं भवतीत्यतोऽधिकविषयत्वप्रतिपादकमधिकविषयेति विशेषणमित्यर्थः । वेदविषयज्ञत्वसाधनमात्रेण सर्वज्ञत्वसिद्धेर्वेदविषयज्ञमित्येतावतैव पूर्तेरधिकविषयेति विशेषणं व्यर्थमित्याशयः । **असिद्धिरेवेति** । तथा च तत्सङ्ख्यादिरूपो यो वेदविषयातिरिक्तो विषयः तद्विषयकत्वस्येश्वरज्ञाने सिद्ध्यर्थमधिकविषयेतिपदोपादानमिति वक्तुमशक्यमित्याशयः । **शब्दाबोध्यानुभवेति** । शब्दाबोध्यत्वे सत्यनुभवमात्रगोचराणामित्यर्थः । **अधिकविषयेति** । विशेषणाभावेऽपि सर्वज्ञत्वसिद्धिरित्येतत्पराशङ्कितमङ्गीकृत्य विशेषणप्रयोजनान्तरं च विवक्षुस्तद्विशेषणमयास्यैव साध्यमङ्गीकृत्योपयुक्तं चाह **तथापि सकलेति** । एकार्थमात्रज्ञेन प्रयुक्तस्यानेकार्थस्य शब्दस्याबाधितानेकार्थबोधकत्वदर्शनादित्येतच्चन्द्रिकोक्तदोषं विवृण्वन्नेव तदुपलक्षितदोषान्तरं च दर्शयंस्तदनुक्तिं मूले घटयन्नवतारयति **यद्यप्येकार्थमात्रेति** । **तन्निरासेनेति** । तत्समाधाननिरासेनेत्यर्थः । **तदेवेति** । परकृतविकल्पपूर्वकदूषणमेवोद्भावयतीति सम्बन्धः । तत्र निमित्तं **तदचातुरीमिति** । स्वयमेव विकल्पप्रदर्शनपूर्वकं दूषणमाशङ्कितम् । तदेव परस्योद्भावनायानुकूलं जातमिति तथाशङ्कनं स्वघातकं न कार्यमित्यचातुरीमित्यर्थः । तदेवेत्यनेन दूषणान्तराण्यपि शिष्यैरेवोह्यानीत्याशयो मूल इति सूचयति **तदुक्तौ त्विति** । दृष्टान्तोक्तावित्यर्थः **अप्रयोजकत्वं चेति** । सर्वज्ञत्वस्य सकलवेदकर्तृत्वादिना साधने हेतुपक्षधर्मताबलेन तत्सिद्ध्युपपत्तेः सर्वज्ञत्वे तस्य प्रयोजकत्वेऽपि आरोपाधिष्ठानत्वस्य कथमपि तत्प्रयोजकत्वाप्रतीतेरित्याशयः ॥

**स०व्र०— तस्यैव विज्ञानशक्तीति** । अत एव शास्त्रमर्थप्रकाशकम् । तथा च रौप्यगता या शक्तिः सा सर्वाप्यधिष्ठानगतैव नान्येति शङ्कितुरभिप्रायः ।

**विठ्ठल०—** अपव्याख्यानं प्रत्याख्याति **अत्र केचिदिति** । पूर्वाधिकरणोक्तजगत्कारणत्वे शास्त्रकारणत्वं हेतुरुच्यते तत्कथम् अनुपयोग इत्यत आह **न हीति** । **वेदस्यापीति** । तथा वेदकारणत्वस्य प्रागेवोक्तत्वेनात्र पुनः कथने पुनरुक्तिदोष इति भावः । दोषान्तरमप्याह **कथञ्चेति** । **हेतुत्वेनोक्तमिति** । ज्ञानपूर्वं कर्तृत्वस्य प्रधाने अयोगादिति हेतुत्वेनाभिप्रेतमित्यर्थः । **ईक्षत्यधिकरणादिनेति** । परैरीक्षत्यधिकरणस्य जन्मादिसूत्रोक्तजगत्कारणतायाः प्रधाननिष्ठतानिरासार्थतया व्याख्यातत्वेनात्रापि प्रधानस्य जगत्कारणताव्युदासे व्याख्यायमाने पुनरुक्तिरित्यर्थः । **जन्मादिसूत्रपुनरुक्ततेत्यस्य** जन्मादिसूत्रोक्तब्रह्मकर्तृत्वानुपपत्तिपरिहारस्य पुनरुक्ततेत्यर्थः । **प्रतिज्ञामात्रेति** । वेदकर्तृत्वे हेत्वनुपन्यासात् । न च वेदकर्तृत्वं सर्वज्ञत्वे हेतुत्वेनैवात्रोच्यते न तु प्रतिज्ञेति चेत्तर्हि हेत्वसिद्धिप्रसङ्गात् इत्यर्थः । **तेनैवेदमिति** । वियत्पदं स्वेतरोपलक्षणमिति वक्ष्यमाणत्वादिति भावः । **निर्दलेति** । कर्तृत्वाभावेऽपि तद्विषयकज्ञानोपपत्तेरिति भावः । तदकर्तुः कथं तज्ज्ञानमित्यत आह **न हीति** । घटाद्यकर्तर्यपि तज्ज्ञानदर्शनादिति भावः । प्रणेतृत्वे न सार्वज्ञं सिषाधयिषुः गूढाभिसन्धिः सन् आरोपाधिष्ठानत्वमेव प्रणेतृत्वमिति शङ्कते **रज्जाविति** । ननु वेदे तावत् अशेषार्थज्ञापकत्वरूपाविज्ञानशक्तिरनुभवसिद्धा । अतो वेदारोपाधिष्ठानस्य ब्रह्मणो विज्ञानशक्तियुक्तत्वावश्यंभावात् तत्सार्वज्ञसिद्धिः इति स्वाशयमुद्घाटयन् शङ्कते **तस्यैवेति** । यद्यच्छक्तिविवर्तरूपं तत्र सा शक्तिरस्तीति व्याप्तेरभावान्नेयं प्रक्रियोपपन्नेत्याह **वियदादीनामिति** । परेण विज्ञानशक्तिक्रियाशक्त्यावरणशक्तिप्रकाशशक्तिष्वन्यतमान्तर्भावः सर्वस्योच्यते । तत्र विज्ञानक्रियावरण-





शक्तिमत्वेन वियदादीनां प्रकाशशक्तिविवर्तकत्वाङ्गीकारात् तेषामपि प्रकाशशक्तिप्रसङ्गात् । अस्तु तत्रापि प्रकाशशक्तिरिति चेत् तर्ह्यालोकवदर्थप्रकाशकत्वप्रसङ्गात् इति भावः । आरोप्यगता शक्तिरधिष्ठाने अवश्यमङ्गीकार्येत्यत्र दोषान्तरमाह **अविद्यादीति** । किञ्च वेदे विज्ञानकरणत्वशक्तिर्ब्रह्मणि विज्ञानकर्तृत्वशक्तिः । तत्कथं वेदेऽनुभवसिद्धया विज्ञानशक्त्या ब्रह्मण्यपि साऽनुमीयत इत्युच्यते सम्बन्धाभावादित्याह **किञ्चेति** । अपि च ब्रह्मणो निर्विशेषत्वेन तात्त्विकशक्त्यसम्भवान्निर्मूलेयं प्रक्रियेत्याह **कुत्र चेति** । उपसंहरति **तस्मादिति** ॥

**चषकः**— अद्वैतवादिव्याख्याप्रत्याचिख्यासया तामनुवदति **अत्र केचिदिति** । तदीयभाष्यभाषितां सङ्गतिमाशङ्कते **पूर्वसूत्र इति** । वैवरणिकीं सङ्गतिं शङ्कते **अथेति** । अत्रेत्थमनुमिमानानामाशयः । पाणिन्यादौ निखिलपाणिनीयादिकर्तृत्वान्निखिलपाणिनीयप्रतिपाद्यार्थज्ञानवत्ता यथा तद्वद्ब्रह्मण्यपि निखिलवेदकर्तृत्वरूपहेतोः पक्षवृत्तित्वबलान्निखिलवेदप्रतिपाद्यार्थज्ञानवत्ता निखिलवेदजनितान्वयधीनिरूपितात्वावच्छिन्नव्यापकस्वनिरूपितविषयतात्वावच्छिन्नकज्ञानवत्तारूपा सिद्ध्यतीति । स्वनिरूपितविषयतात्वावच्छिन्ने तादृशान्वयधीनिरूपितविषयतात्वावच्छिन्नाभावसमानाधिकरणत्वनिवेशफलकस्याधिकविषयकत्वाविशेषणस्योपादानं मन्दप्रयोजनमेव । न च सार्वज्ञसिद्धिफलकं तद्विशेषणोपादानमिति वाच्यम् । तादृशवेदजनितान्वयबोधाविषयीभूतानामद्यतनपुरुषपाणिगतवराटकसङ्ख्यादीनां शब्दाबोध्यानुभवगोचरेक्षुक्षीरादिमाधुर्यादिविशेषाणां तादृशाद्यतनवृत्तान्तादीनां च ज्ञानस्य तद्विशेषणोपादानेनाप्यसिद्ध्या सार्वज्ञसिद्धिफलकत्वस्य दुरुपपादत्वात् । दुष्करकण्टकाद्यदनकर्तर्यपि सुकररम्भाफलादनकर्तृत्वाभावदर्शनेन दुष्करातीन्द्रियार्थविषयीकरणचणमीश्वरज्ञानं सुकराद्यतनपुरुषपाणिगतवराटकसङ्ख्यादिविषयीकरणे कथं नेष्ट इत्युक्तिरप्यसमञ्जसैव । यथाश्रुते साध्यशरीरे तादृशविशेषणनिवेशनं तु पाणिन्यादौ दृष्टव्याप्तिबलादधिकविषयत्वमपि सेद्धुमर्हति किमुत वेदार्थविषयत्वमिति कैमुत्येन सिषाधयिषितसाध्यसिद्धिदार्ढ्यार्थमिति स्थितमिति । भङ्ग्यन्तरेण सार्वज्ञसिद्धिमाशङ्कते **तस्यैव विज्ञानशक्तीति** । तदाश्रितविज्ञानशक्तिजन्यत्वादित्यर्थः । ब्रह्मणः कार्यभूते शास्त्रे वर्तमाना निखिलार्थप्रकाशनशक्तिस्तदुपादानभूतब्रह्मगततादृशशक्तिनियन्त्रितैव । प्रदीपगतप्रकाशनशक्तेस्तदुपादानवह्निधर्मतादर्शनेन कार्योपादानयोरेकशक्तिमत्तानियमादित्थं च वेदसवर्थिप्रकाशनशक्त्यनुरोधेन तादृशशक्तिमद्ब्रह्मेति तस्य सार्वज्ञमसैत्सीदेवेति भावः । अभिहितनियमस्यान्वयव्यभिचारमाह **वियदादीनामिति** । व्यतिरेकव्यभिचारमाह **अविद्यादिगतेति** । वह्निदीपयोरेकशक्तिमत्तायां प्रकृते ब्रह्मवेदयोरेकशक्तिमत्तैव दुरुपपादेत्याह **किञ्चेति** । वह्नेर्दीपाधिष्ठानत्वायोगेन तदुदाहरणमपि प्रकृतासङ्गतमित्याह **कुत्र चेदमिति** । अपव्याख्याप्रतिविहितिं निगमयति **तस्मादिति** ।

**॥ इति परकीयव्याख्यानस्य अनुपपन्नत्वात् उक्तस्यैव सूत्रार्थस्य युक्तता ॥**

**॥ इति जगज्जन्मादिकारणत्वरूपस्य जिज्ञास्यब्रह्मलक्षणस्य सूत्रकारोक्तमतिव्याप्त्यभावकथनम् ॥**

## ॥ इति शास्त्रयोनित्वाधिकरणम् ॥

## ॥ १-१-३ ॥



## ॥ अथ समन्वयाधिकरणम् ॥

## ॥ १-१-४ ॥

### ॥ अथ एतत्सूत्रपरिहृतशङ्कायाः प्रदर्शनम् ॥

**७५ सु०—** अस्तु शास्त्रैकसमधिगम्यं जगत्कारणम् । तथाऽपि शास्त्रत एवान्येषां हरहिरण्यगर्भादीनां प्रधानादीनां च जगत्कारणत्वप्रतीतेरतिव्यापकमिदं लक्षणम् । न च तच्छास्त्रं विष्णुपरमिति वाच्यम्, अभियुक्तैः शिवादिपरत्वेन व्याख्यातत्वात् । यद्यपि नामानि सर्वाणीत्यादिश्रुत्या शिवादिनाम्नां विष्णौ शक्तिमात्रमवसीयते, तथाऽपि न तात्पर्ये प्रमाणमस्ति, यत्परः शब्दः स शब्दार्थ इति हि न्यायः । न च शक्तिमात्रेण तात्पर्यं कल्पयितुं युक्तम्, अतिप्रसङ्गात् । अन्यत्र तात्पर्यस्य च ज्ञापकमभियुक्तव्याख्यानमस्तीत्युक्तम् । तस्मादलक्षणमेतदित्याशङ्क्य परिहृतं सूत्रकृता **तत्तु समन्वयादिति** ।

## ब्र०सू० — ॥ ॐ तत्तु समन्वयात् ॐ ॥

**परि०—** मूले सूत्रार्थस्यैव भाषणेन सूत्रस्य गमनिकानुक्तेः पूर्वाधिकरणफलाक्षेपपूर्वं पूर्वपक्षं वदन् सूत्रं स्वयमवतारयति **अस्त्वित्यादिना** । **हरेति** । 'एक एव रुद्रो न द्वितीयोऽवतस्थे (एको रुद्रो न द्वितीयाय तस्थे)', 'हिरण्यगर्भः समवर्तताग्रे', 'प्रधानादिदम्', 'आविरासीत्', 'जीवाद्भवन्ति भूतानि' इत्यादिशास्त्रतो हरादेः प्रतीयत इत्यर्थः । ननु न प्रतीतिमात्रादर्थसिद्धिः, तथात्वे यजमानः प्रस्तर इत्यादौ ऐक्याद्यर्थसिद्धिप्रसङ्गात्; किन्तु वाक्यतात्पर्यविषयत्वादेव; तथा च कथमेतत्; इति भावेनाशङ्क्याह **न चेति** । अभियुक्तैः पशुपत्यादिभिः सम्प्रतिपन्नैरित्यर्थः । **न तात्पर्ये प्रमाणमस्तीति** । उपक्रमादिकं हि प्रमाणतया वक्तव्यम् । तत्तु न तात्पर्यनिर्णायकम् । अन्योन्यं बलाबलनिर्णयासम्भवादिति भावः । **अतिप्रसङ्गादिति** । गङ्गायां घोष इत्यादावपि प्रवाहादौ तात्पर्यकल्पनाप्रसङ्गादित्यर्थः । कथं तर्हि रुद्रादिकारणत्वेऽपि तात्पर्यमित्यत आह **अन्यत्रेति** । व्याख्यानं पाशुपताद्यागमरूपम् । ननु 'नारायणो वा इदमग्र आसीदि'त्यादौ विष्णोरपि कारणत्वं प्रतीयते । न च तच्छिवादिपरम् । अभियुक्तविष्णवादिकृत-





पञ्चरात्रादिना विष्णुपरत्वेन व्याख्यानात् । विष्णोरपि कारणत्वं सिद्धमिति चेत् । अस्त्वेवं कालादिभेदेन द्वयोरपि कारणत्वोपपत्तेरित्येतावान् ग्रन्थोऽत्र तस्मादित्यतः प्राक् योज्यः । तेनातिव्यापकमिदं लक्षणमिति प्राचीनो ग्रन्थस्साधुः । सौत्रोऽवधारणार्थस्तुशब्दश्च समञ्जसो भवतीति ध्येयम् ।

**यादु०— तथाऽपि न तात्पर्य इति** । ननु शक्त्यतिरिक्तं किं तात्पर्यम् । तात्पर्यवृत्तेरतिरिक्ताया अन्यत्र निराकृतत्वादिति चेत् । सत्यमेवम् । तथाऽपि तयोरस्ति भेदः । पदस्य सामान्यत इतरान्विते या वृत्तिः सा शक्तिः । एतस्या एव पदान्तरादिसमभिव्याहारेण विशेषान्वयप्रमाजनकत्वे पर्यवसानं वा तदाहितशक्त्यन्तरं वा तात्पर्यमिति । तथा च तत्प्रमितिजनकत्वमेव तात्पर्यशब्दार्थ इत्यवगन्तव्यम् ।

**वं०प०— अतिप्रसङ्गादिति** । भोजनसमये सैन्धवमानयेति पदस्याश्वे शक्तेः सत्त्वेऽपि तत्र न तात्पर्यमपि तु लवणे इत्यस्ति तदपि न स्यादित्यर्थः ।

**आनन्दः**— ननु शास्त्रयोनिसूत्रेणैव जगत्कारणत्वलक्षणस्यातिव्याप्तिनिरासात् पुनस्तदर्थमेतत्सूत्रारम्भो न युक्तः । अन्यथा पौनरुक्त्यापत्तेरित्यत आह **अस्तु शास्त्रेति** । तथा च पूर्वं अनुमानपाशुपताद्यागमावष्टम्भेनातिव्याप्तिशङ्कायां तन्निरासः । इह तु ऋगादिशास्त्रावष्टम्भेनैव तच्छङ्काया निरास इति न पौनरुक्त्यमिति भावः । **शक्तिमात्रमिति** । मात्रशब्देन तात्पर्यं नावसीयत इत्यर्थः । ननु तात्पर्यप्रमाणाभावेऽपि अस्तु तस्य शब्दार्थत्वमित्यत आह **यत्पर इति** । यत्तात्पर्यक इत्यर्थः । नन्वेतावता कथमनेनातिव्याप्तिः परिहृतेत्यत आह **न चेति** । **अतिप्रसङ्गादिति** । भोजनसमये सैन्धवमानयेत्युक्ते शक्तिबलेन तस्मिन्नपि समये तस्याश्वेऽपि तात्पर्यप्रसङ्ग इत्यर्थः । रुद्रादावपि तात्पर्यं मानमित्यत्राह **अन्यत्रेति** ।

**श्रीनिधि०— तच्छास्त्रं** वेदादिकम् । **न्यायो** नियमः । **अतिप्रसङ्गादिति** । भोजनकाले सैन्धवमानयेत्युक्ते अश्वानयनप्रसङ्गादिति भावः । शक्तितात्पर्यगोचरेण तद्विषयेण तदिदमाहेति । उपक्रमादीनामेव शास्त्रतात्पर्यलिङ्गत्वापातप्रतीतिशिवादिव्याख्यानयोरित्येतत् आह एवकारेणेति भावः (?) ।

**वा०चं०**— शास्त्रयोनित्वेन कारणत्वस्य नातिव्याप्तिरिति पूर्वाधिकरणफलस्य शास्त्रयोनित्वेऽपि कारणत्वस्यातिव्याप्तिरेवेत्याक्षेपादाक्षेपिकीं पूर्वाधिकरणेनास्य सङ्गतिं सूचयन्नेव न च पाशुपतशास्त्रोदितत्वादिशास्त्रप्रतिपाद्यत्वे कारणमिति न्यायविवरणं मनसि निधाय स्पष्टत्वादत्रानुक्तं पूर्वपक्षमारचयति **अस्त्विति** । अत्र प्रथमादिपदेन तत्तद्वाद्यभिमतानां चेतनानां द्वितीयेन चाचेतनानां ग्रहणम् । यद्यपि न्यायविवरणे प्रतीतेरादिपदेनोपादानाद्व्याख्यानेऽविश्वासशङ्कानिरासाय प्रतीत्यनुसरणेन प्रतीतिसध्रीचीनश्रुत्युक्तटीकायां पूर्वपक्षो दर्शितः, तथाऽपि तत्रत्यादिपदस्वारस्याय व्याख्यानप्रतीतिभ्यां निरपेक्षाभ्यामपि पूर्वपक्षो दर्शयितुं शक्य इत्याशयेन प्रतीतिमननुसृत्य तच्छास्त्रोदितत्वादिति वक्तव्ये पाशुपतादिशब्दप्रयोगेण लब्धमभियुक्तत्वमविश्वासशङ्कानिरा-





सकत्वेन योजयन्नेव तदुक्तं हेतुं विष्णुपरत्वे बाधकतया योजयति **अभियुक्तैरिति**। 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' इत्यादिशास्त्रं शिवस्य मोक्षदत्वादिपरमिति तदागमेषूक्तत्वाद्व्याख्येयस्य व्याख्यानानुसारितायाश्च सुप्रसिद्धत्वादिति भावः। जन्माधिकरणे 'यं नामानि विशन्त्यद्धा' इत्यादिना भाष्योक्तमेतच्छङ्कापरिहारमन्यथासिद्धं कर्तुं शङ्कते **यद्यपीति**। आदिपदेन 'यो देवानां नामधा' इत्यस्य ग्रहणम्। **तथापीति**। न तावत् 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुतिस्तत्र मानम्। तस्याः शिवे वेदतात्पर्यमित्येवंपरतया तदागमे व्याख्यातत्वात्। नापि 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादीतिहासो वा पञ्चरात्राद्यागमो वा तत्र मानम्। तथाऽपि प्रतिपक्षापत्त्या विष्णावेव तात्पर्यमित्यवधारणा-सिद्धेः। नाप्युपक्रमादिस्तत्र मानम्। 'श्रद्धां जुह्वती'त्युपक्रमस्य इति तु पञ्चम्यामाहुतावाप' इत्युपसंहारस्य च तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति जीवप्रापकोपसंहारस्य ब्रह्मशब्दाभ्यासस्य च 'जीवाद्भवन्ति भूतानि' इति जीवशब्दाभ्यासस्य ब्रह्मपरत्वेऽपूर्वतायाश्च 'असतः सदजायत' इत्यसतः सदुत्पत्तावपूर्वताया ब्रह्मानुत्पत्तौ फलस्य च कर्मसु पश्वादिफलस्य 'कर्मणा ज्ञानमातनोति, ज्ञानेनामृतीभवति' इत्याद्यर्थवादस्य च तत्त्वमसीत्यादावभेदपरत्वे-ऽर्थवादस्य भेदे उपपत्तेश्च सत्त्वात्तेषां च परस्परविरुद्धत्वेनोभयानुसारेण तात्पर्यनिश्चयस्याशक्यत्वादेकप्रहाणेनापरेण तन्निश्चये च तत्र तत्र तस्य तस्य तात्पर्यव्यभिचारेण नैकस्यापि तात्पर्यनिश्चायकत्वम्। न चैकेनापरबाधनिश्चयः। बाध्यबाधकभावप्रयोजकप्राबल्यदौर्बल्ययोर्नियामकाभावेन निश्चेतुमशक्यत्वात्। तथा च तात्पर्ये न किमपि प्रमाण-मिति भावः। ननु माऽस्तु तात्पर्यं तथाऽपि शक्तिविषयत्वमात्रेण शब्दार्थत्वसिद्धिरित्यत आह **यत्पर इति**। ननु माऽस्तु प्रमाणान्तरं शक्तिरेव तत्र मानं भविष्यतीत्याशङ्क्य निषेधति **न चेति**। **अतिप्रसङ्गादिति**। गङ्गायां घोष इत्यस्य प्रवाहे तात्पर्यापत्तेरित्यर्थः। प्रतिपक्षस्योभयत्र तात्पर्ये प्रमाणाभावमात्रेणोपपत्तावपि स्वपक्षे-ऽभ्युच्चयेनाधिक्यमुपपादयति **अन्यत्रेति**। **तस्मादिति**। उपलक्षणं चैतत्। शास्त्राद्रुद्रादीनां कारणत्वप्रतीते-रबाधितप्रतीत्या तात्पर्यस्यापि निश्चेतुं शक्यत्वाच्छास्त्रातिरिक्तस्य च साधकत्ववद्बाधकत्वस्याप्यभावा-द्विष्णोर्जगत्कारणत्वसाधकस्य रुद्रादेः कारणत्वनिषेधकशास्त्रस्य च वैपरीत्यस्यापि सम्भवेन शङ्कितुमशक्यत्वेन बाधकाभावादतिव्याप्तिरिति पूर्वपक्षोऽप्यत्राभिमतः। अत एव व्याख्यानसमकक्षतया प्रतीतिं वक्ष्यतीति बोध्यम्।

**वा०र०**— शास्त्रयोनित्वेनेत्यादि चन्द्रिकानुसारेण फलाक्षेपप्रकारं दर्शयन्नेव पूर्वाधिकरणसङ्गतिसूचन-ग्रन्थाभिप्रायं पूर्वपक्षप्रवृत्त्युपपत्तिं च दर्शयन्नवतारयति **शास्त्रयोनित्वेनेति**। फलस्याक्षेपादिति सम्बन्धः। **सङ्गति-**मित्यस्य सङ्गतिरितीत्यर्थः। अत्र भाष्ये पूर्वपक्षानुक्तौ हेतुः **स्पष्टत्वादिति**। तर्हि भाष्यकारीयं सर्वथाऽवचनमेवेति भ्रान्तिनिरासाय स्थलान्तरे तदुक्तिरस्तीत्याशयेनोक्तं **न च पाशुपतेति**। **चेतनानामिति**। स्कन्दसूर्यादीनामित्यर्थः। **अचेतनानामिति**। शाक्ताभिमतशक्तेः साङ्ख्याभिमतप्रधानस्य . . . . . तत्तदभिमत . . . . . . देश्च ग्रहणम्। अत्र चाद्यः पूर्वपक्ष इत्यादि चन्द्रिकानुसारेणैतत्पूर्वपक्षग्रन्थाभिप्रायमाह **यद्यपीत्यादिना**। **प्रतीतिसध्रीचीनेति**। अत्र प्रतीतिसध्रीचीनागमेनेति पाठः। चन्द्रिकायां तथैवोक्तेः। तात्पर्यावगतौ पाशुपताद्यागमस्य लिङ्गत्वे उक्ते सति तत्राविश्वासशङ्कापरिहाराय प्रतीत्यनुसरणेऽपि व्याख्यारूपागमस्य प्रतीतिसध्रीचीनत्वाश्रयणेन तात्पर्याव-गतिहेतुत्वाङ्गीकारेण पूर्वपक्षकर्तव्यत्वशङ्का तत्परिहारपरपूर्वोत्तरवाक्यपर्यालोचनयापि तथैव लाभाच्च। अत एव





मूलकोशे श्रुत्येत्येतदुपरि रेखा कृता । श्रुतिपदस्य अनादिकालतोऽनुवृत्तत्वसाम्यादागमे प्रयोग इत्याश्रयणान्न दोष इत्यप्याहुः । **स्वारस्यायेति** । अन्यथा पाशुपतशास्त्रादितत्त्वस्य च प्रधानतया तत्समकक्षतया प्रतीतेरुपन्यासायोग इति भावः । अननुसृत्येत्यस्याभियुक्तत्वमित्युत्तरेण सम्बन्धः । **तदुक्तहेतुमिति** । अनेन मूले व्याख्यानस्य स्वपक्षे साधकत्वेन परपक्षदूषणत्वेन चोपन्यास इति मूलाशयो वर्णितो भवति । **सुप्रसिद्धत्वादिति भाव इति** । काव्यादि-व्याख्यानानुसारित्वस्य काव्यादौ दृष्टत्वात् सिद्धे शब्दार्थसम्बन्ध इत्येतद्व्याख्यानरूपप्रथमाह्निकगतव्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति महाभाष्यकारीयपरिभाषावचनाच्चेति भावः । **इत्यस्या इति** । श्रुतेरिति शेषः । सर्वे वेदा यत्पदमामनन्तीत्यादिश्रुतिरपि शिवे वेदेत्यादि चन्द्रिकानुसारेण तात्पर्ये प्रमाणाभावमुपपादयति **न तावत् सर्वे वेदा इत्यादिना** । यद्यप्युपक्रमादि तु न तात्पर्यनिश्चायकमिति प्रतिज्ञायाश्च प्रतिग्रहेष्टिरुपक्रमाद्दातु-रूपसंहारात्प्रतिग्रहीतुरिति प्रसङ्गात् इत्यादि चन्द्रिकाग्रन्थे पूर्वमीमांसाधिकरणेषु निर्णीतस्थलान्युदाहृत्यैव तत्र बलाबलविचारसम्भव उक्तः । तथापि तत्रचैकप्रकरण इत्यादि चन्द्रिकायामुत्तरमीमांसायामुदाहृतस्थलेषु उपक्रमादित उपसंहारादेः प्राबल्यव्युत्पादनात् प्राबल्यनिर्णयात्प्राक् परस्परविरुद्धोपक्रमादितस्तात्पर्यनिर्णयायोगशङ्कायां बाधका-भावेन च श्रद्धां जुह्वतीत्याद्युपक्रमादेरेवोपसंहारादिविरोधेन तात्पर्यनिश्चायकत्वाभावाभिप्रायत्वमेवास्य वाक्यस्येति दर्शयति **श्रद्धां जुह्वतीत्युपक्रमस्येत्यादिना** । अत्र चशब्दसमुच्चितयोर्द्वयोर्द्वयोः परस्परं विरोधाभिप्रायेण प्रत्येकं चशब्दानां प्रयोगः । षष्ठ्यन्तानां सत्त्वादिति वक्ष्यमाणेनान्वयः । प्रीत्या मोक्षफलत्वाच्चेत्यनुव्याख्यानव्याख्याना-नुसारेण भगवन्निर्दोषत्वज्ञानस्य मोक्षफलत्वादित्याशयेनोक्तं **ब्रह्मानुत्पत्तौ फलस्येति** । एवं तत्तदुपपादनं चन्द्रिकोक्तरीत्या ज्ञेयम् । न्यायवाचस्पतौ शब्दमणिग्रन्थादौ च व्यवहृतं यत्परःशब्दः स शब्दार्थ इति वाक्यं जिज्ञासाधिकरणे व्याख्यातं कार्यतावादे जैमिनीयानुवादव्याख्यावसरे टीकाकृता तद्व्याख्यानं तत एव प्रतिपत्तव्य-मित्याशयेनात्र तदव्याख्यानम् । **प्रतिपक्षस्येति** । अयमर्थः । नामानीत्यादिश्रुत्यनुसारेण विष्णुपरत्वे उक्ते व्याख्यानानुसारेण शिवादिपरत्वमेव वाच्यम् । तावतैव प्रतिपक्षसिद्धेः । न पुनः स्वपक्षे तात्पर्ये प्रमाणमभिधातव्यं परपक्षे तात्पर्ये प्रमाणाभावात्स्वपक्षेऽपि प्रतिपक्षत्वोपपत्तेः । तथाप्यभ्युच्चयेन स्वपक्षे आधिक्यप्रतिपादनाय तदुक्तिरिति । यद्वा शास्त्राद्रुद्रादेरित्यादिचन्द्रिकोक्तरीत्या प्रतीत्यवलम्बनेन पूर्वपक्षस्याप्यत्रोपलक्षणया ज्ञेयत्वमाह **उपलक्षणं चैतदिति** । प्रतीतेरत्र टीकाकृता अनुपादानात् कुतस्तदाश्रयणेन पूर्वपक्षोपलक्षणाश्रयणमित्यतो-ऽत्रानुपादानेऽपि न शास्त्रतात्पर्याविगतावापातप्रतीतिरित्युत्तरत्र तदुपादानात्प्रागपि तदाश्रयणेन पूर्वपक्षोपलक्षणं युक्तमित्याशयेनाह **अत एव व्याख्यानेति** । तत्त्वप्रकाशिकायां प्रतीतिव्याख्यानयोरन्योन्यापेक्षयोः पूर्वपक्ष-साधकतया वर्णनात् तथाप्रतीतिनिरासाय व्याख्यानसमकक्षतयेत्युक्तमिति ज्ञेयम् ।

**विठ्ठल०**— मूले सूत्रार्थमात्रोक्तेः स्वयं सङ्गतिसूचनपूर्वकं पूर्वपक्षं दर्शयन् मूलमवतार्य भाष्यं सङ्गमयति **अस्तु इत्यादिना** । **शास्त्रत एवेति** । 'एको रुद्रो न द्वितीयाय तस्थे', 'हिरण्यगर्भस्समवर्तताग्रे', 'प्रधाना-दिदमुत्पन्नं' इत्यादेः शास्त्रत इत्यर्थः । **अभियुक्तैः** = सम्प्रतिपन्नैः पशुपत्यादिभिः । विष्णौ तात्पर्याभावेऽपि नामानि सर्वाणीति शिवादिनाम्नां विष्णुवाचकत्वेन 'एको रुद्र' इत्यादि शास्त्रं विष्णवर्थकं किं न स्यादित्यत आह





**यत्पर इति** । **अतिप्रसङ्गादिति** । गङ्गायां घोष इत्यादौ शक्तानां गङ्गादिपदानां प्रवाहे तात्पर्यप्रसङ्गादिति भावः । कथं तर्हि रुद्रादौ तात्पर्यनिश्चय इत्यत आह **अन्यत्र इति** । गोचरेणेत्यतःपरम् अर्थेनेति शेषः ।

**चषकः**— जगज्जन्मादिहेतुत्वस्य शास्त्रजन्यप्रमितिविषयत्वरूपशास्त्रयोनित्वेन तदुपरक्ततादृशप्रमितिविषयतानापन्ने शिवादौ लक्षणस्य नातिप्रसङ्ग इति पूर्वनयफलस्य शिवादीनामपि तद्धेतुत्वोपरक्ततादृशप्रमितिविषयतापन्नतया तत्र तस्यातिप्रसङ्गः स्यादेवेत्याशङ्कनात्पूर्वनयनिरूपितैतन्नयवृत्तिराक्षेपिकी सङ्गतिरिति ध्वनयन्नेव न च पाशुपतशास्त्रोदितत्वादिशास्त्रप्रतिपाद्यत्वे कारणमिति न्यायविवृतिमनुसन्दधानः स्फुटत्वनियन्त्रितभाष्यकृदनभिहितताकपूर्ववादिमतमप्रौढमनीषविनेयानुजिघृक्षया विशदयति **अस्त्विवति** । **शास्त्रत एवेति** । 'एको रुद्रो न द्वितीयाय तस्थे', 'हिरण्यगर्भः समवर्तताग्रे', 'जीवाद्भवन्ति भूतानि', 'प्रधानादिदमाविरासीत्' इत्यादित इत्यर्थः । अत्र प्रथमतद्गुणसंविधानघटकादिपदेन तत्तद्धर्मोपरागेण तद्वाद्यभिमतचेतनानां द्वितीयेन तादृशेन तेन तादृशाचेतनानां परिग्रहः । **तथापि न तात्पर्य इति** । अत्र शक्त्यतिरिक्ततात्पर्यवृत्तेस्तर्कताण्डवादौ प्रत्याख्याततया कथमेतदिति शङ्कमानाः 'सत्यमेवं, तथापि तयोरस्ति भेदः; पदस्य सामान्यत इतरान्विते स्वार्थे या वृत्तिः सा शक्तिः, तस्या एव पदान्तरादिसमभिव्याहारेण विशेषान्वयप्रमाजनकत्वे पर्यवसानं तदाहितशक्त्यन्तरं वा तात्पर्यमिति । तथा च तत्प्रमितिजनकत्वमेव तात्पर्यशब्दार्थ इत्यवगन्तव्यम्' इति व्याकर्तारः समादधति । **यत्परः** यत्तात्पर्यकः । **अतिप्रसङ्गादिति** । लक्षकपदानां लक्ष्यार्थेऽपि तात्पर्यप्रसङ्गादित्यर्थः । स्वपक्षे आधिक्यं तद्बाधनौपयिकमुपपादयति **अन्यत्रेति** । शिवादावित्यर्थः । पूर्ववादिमतं निगमयति । अत्र चानुपदं प्रतीतिव्याख्यानयोरिति प्रतीतेर्व्याख्यानतुल्यकक्ष्यापन्नतया निर्देशेन शास्त्रोत्पादितशिवादिधर्मिकजगज्जन्मादिहेतुत्वोपरक्ताबाधितप्रतीत्या तत्र तात्पर्यस्याप्यवधृत्या शास्त्रान्यस्य साधकत्वबाधकत्वौदासीन्याद्विष्णोस्तद्धेतुत्वसाधकस्य शिवादेस्तत्प्रतिविधायकस्य च वैपरीत्यस्यापि सुशङ्कतया बाधकाभावादिति प्रसङ्ग इत्यपि पूर्ववादिमतावतारोऽवसेयः ।

**॥ इति एतत्सूत्रपरिहृतशङ्कायाः प्रदर्शनम् ॥**

* * *

**॥ अथ एतत्सूत्रगतस्य अन्वयपदस्य विवक्षितो यौगिकः सूचितश्चार्थः ॥**

७६ **सु०— तत्रान्वयपदार्थमाह त एवेति ।**

## अनु०— त एवान्वयनामानः

**उपक्रमादय एव । अन्वीयन्ते शक्तितात्पर्यगोचरेण सम्बध्यन्ते तथा ज्ञायन्त इति यावत् वाक्यान्येतैः इत्यन्वयनामानः ॥ अत्रोपक्रमादिप्रसिद्धपदं परित्यज्य यौगिकान्वय-**





**पदपरिग्रहणे(हेणे)दं सूचयति । न शास्त्रतात्पर्यावगतावापातप्रतीतिर्वा व्याख्यातृवचनं वा लिङ्गम्, किन्तूपक्रमादय एव, तेषामव्यभिचारित्वात्, प्रतीतिव्याख्यानयोस्तु व्यभिचारित्वात् । यत्रापि प्रतीतिव्याख्याने न व्यभिचरतस्तत्राप्युपक्रमाद्यनुसन्धानपूर्वकत्वेनैव न तु स्वतः । अत उपजीव्यत्वादुपक्रमादीनामेव तात्पर्यलिङ्गत्वमिति । तदिदमाह त एवेति ।**

**परि०**— रूढेरभावाद्योगमाह **अन्वीयन्त इति** । अनुपूर्वादिण्गतावित्यतः करणे 'एरच्' इत्यच्प्रत्यये सत्यन्वय इति रूपनिष्पत्तिरिति भावः । उपक्रमादीनामविद्यमानसम्बन्धकारक(ण)त्वाभावादाह **तथा ज्ञायन्त इति** । सम्बद्धतया ज्ञायन्त इत्यर्थः । **अत्रेति** । सूत्रे । **सूचयतीति** । सूत्रकार इति शेषः । **व्याख्यातृवचनं वेति** । वेदगतोपक्रमाद्यननुगुणं यत्पशुपत्यादिरूपव्याख्यातृणां पाशुपतादिग्रन्थरूपवचनं तदित्यर्थः । वाशब्दद्वयमन्योन्यनिरपेक्षं सत्प्रत्येकमेव पूर्वपक्षप्रापकं न टीकायामिव मिलितमिति सूचयति **अव्यभिचारित्वादिति** । तात्पर्याव्यभिचारित्वादित्यर्थः । ननु प्रतीतिव्याख्यानयोस्तात्पर्यव्यभिचारित्वोक्तिरयुक्ता प्रतीतेः पञ्चरात्रादिव्याख्यानस्य च विष्णुकारणत्वे वेदस्य यत्तात्पर्यं तदव्यभिचारित्वदर्शनादित्यत आह **यत्रापीति** ।

**यादु०**— **तेषामव्यभिचारित्वादिति** । अन्वयपदेनोक्तयोगेनाव्यभिचरितसम्बन्धस्य सूचनादिति भावः ।

**वं०प०**— **गोचरेण** अर्थेन । **तथेति** । शक्तितात्पर्यविषयार्थसम्बन्धत्वेनेत्यर्थः ।

**आनन्दः**— ननूपक्रमादिभिः शक्तितात्पर्यसम्बन्धस्योत्पत्तिः सम्बध्यन्त इत्यस्यार्थत्वेन प्रतीयते तदयुक्तम् । औत्पत्तिकः शब्दस्यार्थेन सम्बन्ध इति न्यायविरोधादित्यत आह **तथा ज्ञायन्त इति** । **यावदिति** । शक्तितात्पर्यवत्तया ज्ञायन्त इत्यर्थः । ननु तत्तूपक्रमादेरित्येव किं न सूत्रितमित्यत्राह **अत्रेति** । ननु तर्हि यत्र प्रतीतिव्याख्यानाभ्यां निर्णयस्तत्र कथं इत्यत्राह **यत्रापीति** । किमत्राचार्यीयज्ञापकमत्राह **तदिदमिति** ।

**वा०चं०**— उपक्रमादिलिङ्गेभ्यः इति पूर्ववाक्ये लिङ्गशब्दोपसर्जनस्य बुद्ध्या विवेकेनोपक्रमादेरेवात्र तच्छब्देन परामर्शोऽतः पुल्लिङ्गोपपत्तिरित्याशयेनाह **उपक्रमादय एवेति** । नामग्रहणोत्थरूढिमात्राभिप्रायभ्रान्तिं निवारयति **अन्वीयन्त इति** । तथा चोपक्रमादीनां तात्पर्यज्ञानकारणत्वोक्त्या पूर्वपक्षनिरासः सिद्धो भवतीत्याह **अत्रेति** । ननु यादृशतादृशप्रतीतिव्याख्यानयोस्तात्पर्यव्यभिचारेऽपि नाबाधितप्रतीतिमानान्तराविरुद्धव्याख्यानयोस्तद्व्यभिचारः अन्यथा यादृशतादृशोपक्रमादेरपि तद्व्यभिचारात्तेषामपि तात्पर्यज्ञानकरणत्वाभावापत्तेः; तथा च प्रतीत्याद्यवज्ञानेनोपक्रमादीनामेवान्वयपदेन तात्पर्यज्ञानकारणत्वोक्तिरनुपपन्ना; इत्याशङ्कायाः 'त एव' इत्यवधारणेन सूचितं परिहारं दर्शयति **यत्रापीति**।





**वा०र०— पूर्ववाक्य इति**। पूर्वानुव्याख्यान इत्यर्थः। **शक्तितात्पर्यगोचरेणेति**। ननूपक्रमादीनामर्थनिश्चायकत्वाभावात्कथमत्र शक्तिग्रहणम्। अत एवेक्षत्यधिकरणचन्द्रिकायां गङ्गायां घोष इत्यादिव्यावृत्त्यर्थमुपक्रमादिकं विषं भुंक्ष्वेत्यादि व्यावृत्यर्थं श्रुत्यादिकमित्युक्तम्। अत एव च पूर्वाधिकरणटीकायां तात्पर्यज्ञानोपयुक्तत्वेनार्थज्ञानोपयुक्तत्वेनेत्यादिकमुक्तमिति चेन्न। उपक्रमादीनां श्रुत्यादीनां च सन्निकर्षविप्रकर्षाभ्यामित्युत्तरमूलम्। श्रुत्यादिषट्कं च ग्राह्यमिति तत्त्वप्रकाशिका। वायवाया हि दर्शतेति ऋग्भाष्यटीकायामुपक्रमावयवः खल्वर्थस्य निश्चायका इत्युक्तिः। शक्तितात्पर्यावधारणरूपविचारप्रयोजनस्य जिज्ञास्योऽयं विधीयत इत्येतन्मूले विधीयत इत्येतन्मूले उक्तिशक्तितात्पर्यावधारणरूपः समन्वय इति चन्द्रिका। उपक्रमादिलिङ्गानां बलीयो ह्युत्तरेति ज्ञानपादमूलटीकायां श्रुतिलिङ्गेत्यादिनोक्ततात्पर्यनिर्णायकत्वविचारो द्वेधा कृतोऽस्ति आनन्दमयाधिकरणे सकलस्यापि शास्त्रस्य यो ब्रह्मणि परममुख्यवृत्त्या प्रतिपाद्यप्रतिपादकत्वलक्षणसमन्वय इत्युक्तिः। सर्वश्रुत्यादिषट्कं चेत्येतच्चन्द्रिका तट्टीके चावलोक्य स्पष्टनीयमस्ति।......। तेन चेति प्रतीकोपादानपाठः।

**विठ्ठल०**— उपक्रमादीनां वाक्यतदर्थसम्बन्धकारकत्वाभावादाह **तथा सम्बद्धतया ज्ञायन्त इति यावत् इति**। **एतैः** = उपक्रमादिभिः। इति हेतोः उपक्रमादय एव अन्वयनामान इत्यर्थः। **अव्यभिचारित्वादिति**। तात्पर्यगोचरार्थाव्यभिचारित्वादित्यर्थः। प्रतीतिव्याख्यानयोरव्यभिचरितत्वमप्यस्तीत्यत आह **यत्रापीति**। **उपजीव्यत्वा**दित्यत्र प्रतीतिव्याख्याने प्रतीति शेषः।

**चषकः**— इत उत्तरम्। भावे 'अकर्तरि च कारके' इत्येतत् 'कृत्यल्युटो बहुलमि'ति यावत्। द्वयमप्यनुवर्तत इत्युक्त्या 'एरजि'त्यत्र तदनुवर्तनादनुपसृष्टस्येणः करणसाधनाच्प्रत्ययमभिप्रेत्य व्याचष्टे **एतैरित्यन्वयनामान इति**। **शक्तितात्पर्यगोचरेण** शक्तितात्पर्यविषयत्वेन। **तेषामव्यभिचारित्वादिति**। अन्वयपदेनावयववृत्त्याऽव्यभिचरितसम्बन्धस्य ध्वनितत्वादिति भावः।

**॥ इति एतत्सूत्रगतस्य अन्वयपदस्य विवक्षितो यौगिकः सूचितश्चार्थः ॥**

* * *

**॥ अथ सूत्रवाक्ययोजना ॥**

७७ **सु०**— सूत्रवाक्यं योजयति **तैरिति**।

**अनु०**— तैः सम्यक् प्रविचारिते।
मुख्यार्थो भगवान्विष्णुः सर्वशास्त्रस्य नापरः ॥





हेतूच्छित्तिरूपविपक्षबाधकं तद्व्याप्यव्यापकभावानुपपत्तिशङ्कां भाष्यदिशा तत्परिहारप्रकारं ततो लक्षणयोपपत्तिशङ्कां च दर्शयन्नेव तन्निवर्तकतयोत्तरमूलं योजयति **नन्वित्यादिना** । आपाद्यस्यानिष्टत्वं दर्शयितुमाह **तथा चेति** । न तावत्स्पष्टदृष्टव्यभिचारेणानयोर्व्याप्यव्यापकभावानुपपत्तिरपि तु ब्रह्मण्येवेक्षणमन्यथा किं न स्यादिति शङ्कया सेति वाच्यम् । सा च ब्रह्मेक्षणस्य भाष्योक्तदिशा प्रकारान्तरेणानुपपन्नतया शङ्का न युक्तेत्याह **न तावदित्यादिना** । उपदिष्टमितीक्षणमेवासिद्धमिति शङ्कानिरासाय मोक्षार्थमित्युक्तिप्रयोजनकथनं **भ्रान्तेरिति** । तथा चौपनिषदत्वादिति भाष्यमुपलक्षणमित्युक्तं भवति । **प्रकारान्तराभावे सतीति** । प्रमाणाभासप्रत्यक्षानुमानरूपेक्षणनिमित्तकारकविषयत्वे सतीत्यर्थः । तथा च वाच्यत्वाभावमात्रस्यापादकत्वासम्भवेऽपि प्रकारान्तरासम्भवविशिष्टस्य तस्यापादकतायां नोक्तानुपपत्तिरिति भावः । यदीक्षणीयं तत्प्रकारान्तरासम्भवे सत्यवाच्यमपि नेति व्यतिरेकव्याप्तेर्घटादावेव सुप्रसिद्धत्वादन्वयव्याप्तिग्रहणस्थलाभावेऽपि नानुपपत्तिरित्याह **व्यतिरेकेति** । सामान्यव्याप्तेः सुज्ञानत्वाच्च नानुपपत्तिरित्याह **यद्यदिति** । अत्र तर्कमूलव्याप्तिकथनावसरे प्रकारान्तराभावस्यापि कारकाविषय इति व्याप्यकोटिनिवेशसूचनेन कारकान्तराभावे सतीत्यस्य ब्रह्मरूपपक्षविशेषणत्वमभिप्रेतमिति भ्रान्तिः परिहृता भवति । तथा चात्र पूर्वप्रदर्शितो वाच्यत्वेक्षणीयत्वयोरेव साध्यसाधनभावो न तु प्रकारान्तराभावे सतीत्यस्य हेत्वादिविशेषणत्वं स्पष्टदृष्टव्यभिचाराद्यभावात् अप्रयोजकत्वपरिहाराय विशेषणप्रक्षेपस्य चायुक्तत्वाद्विपक्षबाधकतर्के च सामान्यविशेषयोर्विपरीतव्याप्यव्यापकभावानुपपत्त्या व्यापकनिवृत्त्या व्याप्यनिवृत्तेरापादयितुमशक्यतया तदुपपादनायापादके विशेषणप्रक्षेपोऽभिमतः । तत्त्वप्रकाशिकायां तु 'औपनिषदत्वात्' इति भाष्यस्वारस्यानुरोधेन विशिष्टेक्षणीयत्वान्यथानुपपत्तिपरिशेषयोः कथनम् । अत्र त्वीक्षणीयत्वतो विष्णुर्वाच्य एवेत्यनुव्याख्यास्वारस्यानुसारेण केवलयोः साध्यसाधनभावो विपक्षबाधकतर्के च विशेषणप्रक्षेपोऽभिमत इति बोध्यम् ।

**वा०र०**— अनुष्ठान इत्यनेन क्रियाया असिद्धस्वरूपत्वेन विकल्पविषयता व्रीहियवस्थले यद्यप्यस्तीति सूचितं **भाष्योक्तमर्थमिति** । ईक्षणीयत्वत इतीक्षणकर्मत्वरूपमित्यर्थः । मञ्जर्याद्यनुसारेण व्याचष्टे **अनुकरणमित्यर्थ इति** । ततश्चानुकरणस्यापि प्रकृतिवदनुकरणमिति धातुतया (धात्वेन स्तिपोऽप्येतत् ?) धातोरेकाच इति सूत्राद्धातोरित्यधिकारे सिद्धे धातोरिति सूत्रे पुनर्धातुग्रहणाव्यर्थतान्यथानुपपत्त्या कृदतिङितिप्राप्तकृत्संज्ञा द्वितीयधात्वधिकारस्थल एवेति नियमो लभ्यत इति वैयाकरणैर्वर्णितत्वेन श्तिपोऽप्येतद्धात्वधिकारे विहितस्य कृत्प्रत्ययतया तदन्ते क्षतिशब्दस्य कृत्तद्धितेति प्रातिपदिकत्वे स्वाद्युत्पत्तौ पञ्चम्येकवचने ङसि ईक्षतेरिति साध्विति ज्ञेयम् । प्रसादोक्तसमाधानस्य शङ्कामुखेन मञ्जरीशेष्योः स्पष्टं च मनोरमायां दूषितत्वात्तदनुसारेण प्रसादोक्तं समाधिमनूद्य प्रदूष्य च स्वाभिमतं समाधिमाह **श्तिपः शित्करणेत्यादिना** । **पिबतिर्ग्लायतिरित्यादाविति** । शित्करणाभावे पिबतिरित्यत्र पिबादेशो न स्यात् । पाघ्रीध्मेति सूत्रेष्विबुकम्वा च मां शितीति सूत्रात् शितीत्यस्यानुवृत्तौ शिति परत एव पिबादेशस्य उत् पि इत्यादौ पाघ्राध्माधेट् दृशः श इति सूत्रं प्राप्त श प्रत्ययान्ते दृष्टतया प्रकृते च शितेः परतोऽभावात् । एवं ग्लायतिरित्यपि न स्यात् । ग्लै धातोरादे च उपदेशेऽशिती-





त्यनेनात्वे ग्लातीत्येवापत्तेः । अतः पिबादेशार्थमशितः परत्वाभावेन चात्वाभावार्थं शित्करणस्यावश्यकत्वमिति भावः । **सुनोति सुवतीति** । षुञ् अभिषव इत्यस्मात्स्वादिभ्यश्नुरिति सूत्रेण कर्तरि सार्वधातुके परपैत एव शपोपवादेन श्नुप्रत्ययेऽभिषुणोति । सुनुत इत्यादेर्दर्शनात् सुनोतीत्यत्र च कर्त्रर्थकसार्वधातुकस्य परत्वाभावेन तत्र षूञ्धातोः श्नुप्रत्ययानुत्पत्तिप्रसङ्गात् । एवं सुवतीत्यत्रापि प्रेरणार्थक इत्यस्माद्धातोस्तुदादिभ्यः श इति कर्त्रर्थकसार्वधातुके परत एव शबपवादेन शप्रत्यये विषुवतीत्यादि रूपसिद्धेर्दृष्टतया कर्तृनियमे सुवतीत्यत्राकर्तरि शप्रत्ययानुपपत्तिप्रसङ्गः तथा च तज्ज्ञापकादकर्तर्यपि शप् यदपवादेन श्नुशप्रत्ययाविति सिद्धं भवति । ध्यायतेरित्यत्रापि कर्त्रर्थकसार्वधातुके परतोऽविद्यमानेऽपि शप् दृष्ट इत्यादि ज्ञेयम् । न च विवक्षितार्थस्य धातुस्वरूपस्य चेतनोपादानत्वसाधनत्वसम्भवः इत्येतदभिप्रायाविष्करणाय परिमलकृता ईक्षतिपदस्य तु धातुपरत्वमपि युज्यते । यत्रेक्षणं मुख्यं नास्तीत्यादिना आशङ्कासमाधाने कृते तदनुसारेणाभिप्रायं दर्शयति **ननु यत्र मुख्येक्षणमिति** । साङ्करभाष्ये ईक्षतेरिति धात्वर्थनिर्देशोऽभिप्रेतो यजतेरितिवत् न तु धातुनिर्देश इत्युक्तं तद्व्याख्यावसरे प्रसिद्धा चेयं लक्षणेत्याहेति भामत्यामवतारः कृतः । भामतीवाक्यव्याख्यावसरे कल्पतरुकृता लक्षणाया एव निरूढार्थं प्रयोगानुगमो न वाचकत्वायेत्यर्थ इति व्याख्याय यजतेरितिवदित्येतदुपपादनाय सप्तमे स्थितमित्यादिना जैमिनिसूत्रोदाहरणपूर्वकं यजतिशब्दं प्रतिपाद्यतया सौर्यादिविकृतियागानभिसन्धायाधिकरणशरीरमुक्तम् । तदनुरोधेन यजतेरितिवदिति दृष्टान्तविवरणपूर्वकं तत्फलं च दर्शयन् प्रकृते तदनुक्तिनिमित्तं चाह **इतिकर्तव्यताविधीत्यादिना** । सौरादियागेष्वितिकर्तव्यतानाम्नानात् तेषामनितिकर्तव्यताकत्वे प्राप्ते इतिकर्तव्यतेति सूत्रं प्रवृत्तम् । तस्यायमर्थः । इतिकर्तव्यतायाः सामान्यतः प्रकृतिषु विधावपि सौरादियागेषु अविधेः विधानाभावात् यजतेः सौरादिविकृतियागानां पूर्ववत्वं दर्शादिप्रकृतिविहितपूर्वेतिकर्तव्यतावत्वमिति । तमेतमर्थमभिप्रेत्येतिकर्तव्यताविधिशून्येत्यादिकमुक्तम् । अत्र दर्शादि विहितेतिकर्तव्यतयैवेतिवचनेनैव अनितिकर्तव्यताकत्वपूर्वपक्षनिराससिद्धावपि दर्शादिगतेतिकर्तव्यतयेति कर्तव्यतावत्त्वं सौरादीनां कुत इत्यतो इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरित्याद्याष्टमिकसूत्रैः दर्शादिप्रकृतिकत्वस्य सिद्धत्वाद्युक्तं दर्शादीतिकर्तव्यतया सौरादेरितिकर्तव्यतावत्वमिति सूचयितुं प्रकृतीति सिद्धवत्कृत्य प्रयोगः । शिष्टं परिमलादौ द्रष्टव्यम् इति कर्तव्यतावत्वमिति पाठः । **तस्य चेति** । अनुपपत्तिरित्यर्थः । **लक्षितलक्षणयेति** । अविवक्षितार्थशब्दमात्रस्य साधकत्वानुपपत्त्या धातुवाचकपदेन तदर्थेक्षणे लक्षिते तस्यापि ब्रह्मासम्बन्धिनो वाच्यत्वसाधकत्वानुपपत्त्या पुनरीक्षतिशब्देनेक्षणकर्मत्वं लक्ष्यत इत्यर्थः । द्वौ नञौ प्रकृतमर्थमित्येतत् निषेधस्य निषेधोऽपि विधिरेवेति विद्यैवेत्यधिकरणभाष्यव्याख्यानस्थलीयनेयड्डवङ्स्थानावस्त्रीत्यादिमूले अहिकुण्डलाधिकरणमूलेऽसत्यं नोक्तमित्युक्ते सत्यमित्येवेति चतुर्थाध्यायानुव्याख्यानमूले वैलक्षण्यं सतश्चापीति जिज्ञासानयानुभाष्यमूले अन्यत्सदसतोर्विश्वमिति शून्याधिकरणानुभाष्यमूले विलक्षणं सदसतोरिति स्वप्नाधिकरणानुभाष्यमूले कर्मनिर्णयरोक्त्यादिषु च प्रतिपादितप्रकारेणोपपाद्यम् । स्थापनासाधनं प्रतिषेध उपालम्भस्तौ च साधनोपालम्भौ पक्षप्रतिपक्षाश्रयौ व्यतिषिक्तावनुबन्धेन प्रवर्तमानौ पक्षप्रतिपक्षावित्युच्येते इति भाष्यं अत्र पक्षप्रतिपक्षयोः कर्मतया न निर्णयसाधनत्वमित्यनुपपत्त्या साधनोपालम्भौ वादसूत्रगतौ लक्षणीयाविति तावेव तावद्भाष्यकृद्विभजत इत्यादि तद्व्याख्यानरूपवाचस्पतिग्रन्थं च मनसि निधाय पक्षप्रति-





पक्षशब्दौ व्याचष्टे **अत्र पक्षप्रतिपक्षशब्दाभ्यामिति । तत्साधनेति** । पक्षसाधनोपालम्भौ प्रतिपक्षसाधनोपालम्भौ चेत्यर्थः । एकस्य सम्भवो द्वितीयस्यासम्भवः तावेतौ सम्भवासम्भवौ सह विमर्शं निर्वर्तयत इत्यादि भाष्यादिकमभिप्रेत्याह **विमर्शशब्देनेत्यादिना** । अत्र वादिनः साधनस्य सम्भवः प्रतिवादिन उपालम्भस्यासम्भव एवं प्रतिवादिनः साधनस्य सम्भवः वादिन उपालम्भस्यासम्भव इति वाचस्पतिग्रन्थानुसारेण सम्भवासम्भवयोः स्वपक्षसाधनोपालम्भाभ्यां परपक्षसाधनोपालम्भाभ्यां च क्रमेणैव अन्वयः । सामान्यतः स्वपरपक्षनिर्णयलक्षणत्वेन स्वपक्षसाधनसम्भवतदुपालम्भसम्भवयोरेव स्वपक्षनिर्णयहेतुत्वं एवं परपक्षसाधनेऽपि सम्भवतदुपालम्भासम्भवयोरेव परपक्षनिर्णयहेतुत्वमिति विवेकस्य ज्ञातुं शक्यत्वात् । एवं मेलनाभिप्रायेणैव स्वपरपक्षसाधनेति तात्पर्यमुक्तम् । न तु स्वपक्षनिर्णयं प्रति परपक्षसाधनोपालम्भयोरपि सम्भवासम्भवौ हेतुः इत्याशयेन । अतो नासङ्गतिः । स्वपक्षनिर्णयो वा परपक्षनिर्णयो वा यत्र भवति तत्र तदुभयसाधनोपालम्भसम्भवासम्भवौ हेतुः इति उभयोर्निर्णययोर्मेलनेन कथने दोषाभावादिति ज्ञेयम् । अत्र परपक्षनिषेधस्य आवश्यकतायां सम्मतिप्रदर्शनाट्टीकायां सम्भवासम्भवविषयीभूताभ्यामित्यत्र स्वपरपक्षसाधनेत्युत्तरत्र च सम्भवासम्भवयोर्यथायोग्यं सम्बन्धादल्पाच्तरत्वेन पूर्वनिपातस्य पूर्ववाक्ये निर्देशान्यथात्वनिमित्तत्वोपपत्तेश्च स्वपक्षसाधनसम्भवः तदुपालम्भासम्भवः परपक्षसाधनासम्भवस्तदुपालम्भसम्भव इति प्रकारचतुष्टयं विवक्षितम् । चतुर्भिश्च प्रकारैरित्यादेः कथालक्षणटीकायामुक्तेः । न चायं निर्णये नियमः इत्यादिभाष्यं तर्कविषये नियमो नान्यत्रेत्यादि वार्तिकादिकं च मनसि निधायोक्तं **तर्कविषयेति** । न निर्णयमात्रं लक्षणमिदं अपि तु निर्णयविशेषस्येत्यर्थः । तथा चात्र वादिन इत्यादि वाचस्पतिग्रन्थानुसारो न कल्पः । मूलाननुसारापत्तेरिति ज्ञेयम् । युक्तिपादीयलक्षणनिष्कर्षेऽपि अत्र योज्यः । **प्रत्यक्षादीत्यादिना** वादशास्त्रयोर्ग्रहणम् । ज्योतिष्टोमादेः स्वर्गादिसम्बन्धनिर्णये आगमेन कर्तव्ये विमर्शाभावाद्वादजल्पवितण्डासु च वादिप्रतिवादिनोरुभयोरपि निश्चयवतोरेव प्रवृत्त्यादिविमर्शाभावात्तत्र विमर्शघटितलक्षणायोगेन अर्थावधारणमात्रनिर्णयसामान्यलक्षणमित्याशयः । **समभिव्याहृतार्थवाचकत्वमिति** । नञ्द्वयसमभिव्याहृतवाच्यपदार्थभूतवाच्यत्ववाचकत्वमित्यर्थः । अत्र पक्षे नञ्द्वयस्य समभिव्याहृतपदार्थे शक्तिः कल्पनीया भवतीत्यपरितोषात्पक्षान्तरमाह **यद्वेति । इदम्** । श्रुत्यर्थाभ्यामेकविध्यार्थिकापरलाभरूपं कार्यम् । अत्र वाच्य एवेत्यवधारणस्थलाभिप्रायेणेति वक्तव्ये वह्निमानेवेत्यादीत्यधिकोक्तिर्दृष्टान्तार्थम् । वह्निमानेवेत्यादौ वह्न्यादिविधेः श्रौततायां वह्न्यभावादिनिषेधस्यार्थिकतायाश्च सिद्धत्वात् तद्दृष्टान्तीकरणमिति बोध्यम् । **वाच्य एवेत्या**दावित्यादिपदेन शब्दशक्तिविषय एवेत्यादेः समानार्थकप्रयोगस्य ग्रहणम् । **न तावत्स्पष्टेति** । तदभावादिति भावः । अनेन ब्रह्मण्येव व्यभिचारशङ्कानिमित्तं चोक्तं भवति । सा च ब्रह्मेति वाक्ये सा च शङ्केति सम्बन्धः । **उपलक्षणमिति** । ईक्षणस्य वचनेतरप्रमाणजन्यत्वनिराकरणपरं भाष्यं प्रमाणाभासजन्यत्वनिरासोपलक्षणतया व्याख्येयम् । अन्यथा न्यूनतापत्तेरित्याशयः । **निमित्तकारकेति** । विशिष्टस्य तस्येत्यत्र तच्छब्देन बुध्याविविक्तवाच्यत्वाभावस्यैव परामर्शः । **घटादावेवेति** । प्रकारान्तरासम्भवे सत्यवाच्यत्वरूपविशिष्टस्योभयाभावेनापि घटादावभावादिति भावः । **अत्र तर्कमूलेत्यादि** । स्पष्टनीयमस्ति । . . . . . . ।





स०व्र०— **श्रुत्यननुगमादिति**। 'पुरि शयं पुरुषमीक्षते' इति पुरुषस्येक्षणकर्मतयोक्तत्वादिति भावः। **अवधारणार्थमिति**। इतरकोटिव्यवच्छेदलक्षणातिशयसाहित्येन प्रकृतार्थावगाहिनिश्चयोत्पादार्थमित्यर्थः। अत एव 'प्रकृतमर्थं सातिशयं गमयत' इत्युक्तम्। इतरकोटिव्यवच्छेदलक्षणातिशयसाहित्येनेत्यर्थः। **नन्ववधारणमपीति**। एतादृशज्ञानजनकप्रतिज्ञा किमर्थं कर्तव्येत्यर्थः। न्यायसारोक्तसम्मतिमाह **विमृश्य पक्षेति**। विमृश्यशब्देन सन्देहो गृह्यते। विमृश्य सन्देहं सम्पाद्येत्यर्थः। अत्र पक्षप्रतिपक्षशब्दौ स्वपक्षसाधनपरपक्षोपालम्भनपरौ तथा च सन्देहपूर्वं स्वपक्षसाधनपरपक्षोपालम्भाभ्यामुन्नीयमानमर्थावधारणं निर्णय इत्यर्थः। परार्थनिर्णयस्येदं लक्षणम्। तेन स्वपक्षे साधनादिविना करस्थितामलकनिर्णये नाव्याप्तिरिति द्रष्टव्यम्। नन्वेवं नञ्द्वयोपेततया प्रतिज्ञाकरणे परपक्षे प्रतिक्षेप एव प्रतीयते न स्वपक्षविधिः, तत्प्रापकपदाभावात् इत्याशङ्कापरिहरन्नवधारणार्थमित्युक्तमुपपादयति **तदत्रावधारणे कृत इति**। उक्तावधारणरूपज्ञानजनकनञ्द्वयप्रयोगे सूत्रकृता कृत इत्यर्थः। **श्रुत्यर्थाभ्यामिति**। यथायोग्यं सम्बन्धो न यथाक्रमम्। वाच्यत्वविधेरुक्तप्रतिज्ञायामार्थिकत्वात्। नन्वेवं वाच्यत्वविधेरार्थिकत्वे परपक्षप्रतिक्षेपस्य च श्रुतत्वस्य प्रथमप्रतीत्यापत्त्या अप्राप्तकालत्वप्रसङ्ग इत्याशङ्कापरिहाराय सूत्रकाराभिमत-प्रयोगप्रकारं दर्शयति **इदमुक्तं भवतीत्यादिना**। शङ्कते **ईक्षणीयत्वं न स्यादिति**। **सामान्यव्याप्तिसम्भवाच्चेति**। प्रकृते च शब्दलक्षणकारकाविषयो ब्रह्म। न तज्जन्ये ईक्षणरूपक्रियाविषय इति व्याप्त्यनुगमो द्रष्टव्यः।

विठ्ठल०— **न च विवक्षितार्थमिति**। धातुमात्रस्य विवक्षितार्थाप्रतिपादकत्वेन तादृशं शब्दमात्रं वाच्यत्वसमर्थनहेतुर्न भवतीति हेतोः ईक्षतिशब्दार्थभूतो ज्ञानक्रियालक्षणो योऽर्थः सोऽनेन धातुना लक्ष्यत इत्यर्थः। तिपो धातुनिर्देशरूपत्वेन ईक्षतेरित्युक्ते ईक्षतिधातोरित्येवार्थलाभेन तस्य चानुपयोगाद्धातुनिर्देशपरेणानेन शब्देन धात्वर्थभूतं ज्ञानं लक्ष्यत इति भावः। **अतिप्रसङ्गादिति**। ब्रह्मासम्बन्धिनो हेतोर्ब्रह्मणोऽवाच्यत्वरूपसाध्य-साधकत्वे महानससम्बन्धिधूमस्यापि पर्वते वह्निमत्वसाधकत्वप्रसङ्गादिति भावः। **श्रुत्यननुगमादिति**। पुरिशयं पुरुषमीक्षते इति श्रुतौ पुरुषपदोक्तस्य ब्रह्मणः ईक्षणकर्मतयोक्तत्वादिति भावः। विपक्ष इति कर्तृत्वादि-रूपसम्बन्धाङ्गीकारे ब्रह्म वाच्यम् ईक्षणकर्तृत्वात् इत्यनुमानं प्राप्तम्। तत्र हेतुमङ्गीकृत्य साध्यानङ्गीकारे विपक्षे बाधकाभावादिति भावः। **व्यधिकरणत्वेति**। ब्रह्म वाच्यं तत्कर्मकेक्षणस्य विद्यमानत्वादित्युक्ते व्यधि-करणत्वप्रसङ्गादित्यर्थः। **अवधारणार्थमिति**। इतरकोटिव्यवच्छेदसाहित्येन प्रकृतार्थावगाहिनिश्चयोत्पत्त्यर्थ-मित्यर्थः। अत एव प्रकृतमर्थं सातिशयं गमयत इत्युक्तम्। **विमृश्येति**। पूर्वपक्षसिद्धान्ताभ्यां विचार्य तेन जायमानमर्थावधारणम् इत्यर्थः। नन्वेवं नञ्द्वयेन प्रतिज्ञाकरणे परपक्षप्रतिक्षेप एव प्रतीयते न स्वपक्षविधिः तत्प्रापकपदाभावादित्याशङ्कां परिहरन् अवधारणार्थमित्युक्तमुपपादयति **तदत्रावधारण इति**। अवधारणार्थके नञ्द्वयप्रयोगे सूत्रकृता कृत इत्यर्थः। **श्रुत्यर्थाभ्यामिति**। यथायोगं सम्बन्धो न यथाक्रमं वाच्यत्वविधेरुक्त-प्रतिज्ञायाम् आर्थिकत्वात्। न च उभयसाधकाभावः शङ्कनीयः। ईक्षणीयत्वस्य ब्रह्मणि वाच्यता-साधकत्ववदवाच्यताप्रतिषेधकत्वस्यापि सम्भवादित्याशयेनाह **उभयेति**। **एवमन्यत्रापीति**। हेयत्वावचनाच्च इत्यादावपीत्यर्थः। यद्वा एवमन्यत्राप्यवधारणकृत्यं ध्येयमित्यर्थः। ननु वाच्यत्वविधेरार्थिकत्वे परपक्षप्रति-





पक्षस्यैव श्रुतत्वेन तस्यैव प्रथमप्रतीत्या अप्राप्तकालत्वप्रसङ्ग इत्याशङ्क्य परिहाराय सूत्राभिमतप्रयोगप्रकारं दर्शयति **इदमुक्तं भवतीति** । हेतोरप्रयोजकत्वं शङ्कते **ननु इत्यादिना** । पूर्वपक्ष्येव हेतूच्छित्तिं बाधकमाशङ्क्य परिहरति **ईक्षणीयत्वं न स्यादिति** । तथा च इत्यस्य ईक्षणीयत्वाभाव इत्यर्थः । वैपरीत्येनैव व्याप्यव्यापकभावस्य प्रमितत्वेन न वाच्यस्य व्यापकत्वं नापीक्षणीयत्वस्य व्याप्यत्वमित्युपपादयति **ईक्षणीयत्वं हीति** । प्रत्यक्षानुमानप्रमाणाभासाविषयस्येक्षणं वाच्यतां प्रति व्याप्तमेव तथा च व्यापकीभूतवाच्यत्वाभावे तद्व्याप्यमीक्षणीयत्वं च न स्यादिति हेतूच्छित्तिरेव बाधिकेत्याशयेन परिहरति **न च इति** । सर्वस्यापि वाच्यत्वेनापादकस्य क्वाप्यदर्शनादुक्ततर्के व्याप्त्यभाव इति न चेत्यर्थः । **सामान्यव्याप्तिसम्भवाच्चेति** । प्रकृते तु शब्दलक्षणकारकाविषयं ब्रह्म तज्जन्येक्षणरूपक्रियाविषयमिति व्याप्त्यनुगमो द्रष्टव्यः ।

**चषकः—** **धातुनिर्देश इति** । 'इक्श्तिपौ धातुनिर्देशे वक्तव्यौ' इति कात्यायनोक्तेरिति भावः । धातुस्वरूपप्रत्यायकेन श्तिबन्तेन स्ववाच्यधातुवाच्यत्वसम्बन्धसत्त्वेनेक्षणं लक्ष्यते तस्य च स्वनिरूपितकर्मतासंसर्गेण हेतुत्वमीक्षणकर्मत्वस्य हेतुत्वमिति चानर्थान्तरमित्यभिप्रेत्याहोक्तमित्यन्तेन । **द्वौ नञाविति** । 'व्यर्थं सत्किञ्चिज्ज्ञापयति' इति परिभाषया नञ्द्वयाविनिर्मोकेऽप्यर्थप्रतीतौ जायमानायां समासघटकप्राथमिकनञा समभिव्याहृतो द्वितीयो नञ्, स्वाभावासामानाधिकरण्यरूपातिशयं प्रकृतेऽर्थे ध्वनयतीत्याशयः । तेन 'भूतले घटो न पटश्च न' इत्यादावप्येतन्न्यायसञ्चारापत्तिरिति क्षत्यनवकाशः । न चैवमपि भूतलमस्नेहं न जलं गन्धवदित्यादौ दर्शितन्यायसञ्चारापत्तिः 'भूतले घटो नेति न' इत्यादौ उक्तन्यायसञ्चारानापत्तिश्च दुर्वारैवेति वाच्यम् । प्रतियोगितासंसर्गावच्छिन्नकिञ्चिद्धर्मावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यतारूपा तदवच्छिन्ना वा तादृशसंसर्गावच्छिन्ना या प्रकारता तन्निरूपितस्वोपस्थाप्यतावच्छेदकावच्छिन्नविशेष्यताशालिशब्दबोधौपयिकाकाङ्क्षाशाली नञ्, स्वोपस्थाप्यार्थे तादृशप्रकारतापन्नाभावासामानाधिकरणरूपातिशयं प्रकाशयतीत्यत्र तात्पर्यात् । तेन 'चैत्रमैत्रौ दण्डं वहत' इत्यादावेकत्वविशिष्टदण्डकर्मकवहनक्रियाकर्तृत्वं चैत्रमैत्रोभयत्वावच्छेदेन यथा प्रतीयते तद्वत्प्रकृतेऽपि नञ्द्वयत्वावच्छेदेनैकार्थगमकत्वं भायात् । तत्तु बाधितम् । प्रथमनञा बोध्याभावादतिरिक्ताभावस्य भावरूपस्य द्वितीयनञ्बोध्यत्वादिति निरस्तं वेदितव्यम् । **अवधारणार्थमिति** । परपक्षप्रतिक्षेपसाहित्येन स्वपक्षाधिगमार्थमित्यर्थः । प्रकृतप्रतीकमुपाददाना अवधारणार्थकं नञ्द्वयमपीत्यर्थ इत्यप्यार्तीथपन् । अभिहितार्थे न्यायसूत्रं प्रमाणयति **यथोक्तमिति** । विमृश्य संशय्य पक्षप्रतिपक्षाभ्यां वादिप्रतिवाद्यभिमतविधिनिषेधकोटिभ्याम् । तथा च तादृशकोटिद्वयवृत्तिविरोधघटितधर्मावच्छिन्नप्रकारताशालिसन्देहोत्तरकालीनार्थावधारणत्वं निर्णयलक्षणमिति समुदितार्थः । अत्र च तादृशसन्देहोत्तरकालीननिर्णयपदवाच्यत्वस्य लक्ष्यतावच्छेदकतामुपेत्य सन्देहानुत्तरकालीननिर्णयेऽव्याप्तिर्निरसनीया । कथाफलीभूतनिर्णयेतरेषु विशेषादर्शनसाधारणधर्मदर्शनादिघटितसामग्रीनिष्पाद्यस्थाणुत्वादिसन्देहोत्तरकालीनपुरुषत्वादिनिर्णयेषु कोटिद्वये वादिप्रतिवाद्यभिमतत्वाभावनिबन्धना व्याप्तिस्तत्र तादृगंशानिवेशेनैव परिहरणीया । न तूक्तदिशा नञ्द्वयस्य प्रतिज्ञावाक्यघटकतायां तदधीनान्वयबोधे परपक्षप्रतिविहितिरेव भायात्, न स्वपक्ष-





विधिस्तत्प्रत्यायकपदराहित्यादित्याशङ्कायां श्रूयमाणपदसमभिव्याहारेण परपक्षप्रतिषेधो भासते उदीच्यबोधेऽर्थात्स्वपक्षविधिरित्याशयेन समाधत्ते **तदत्रावधारण इति** । उक्तदिशावधारणफलकनञ्द्वयघटितसौत्रविन्यासाश्रयण इत्यर्थः । **श्रुत्यर्थाभ्यामिति** । यथायोग्यं सम्बन्धो न यथाक्रमं वाच्यत्वविधेरुक्तप्रतिज्ञायामार्थिकत्वात् । अभावाभावो भाव इति नञ्द्वयस्यापि समभिव्याहृतार्थवाचकत्ववैयर्थ्यान्यथाऽनुपपत्त्या चेतरनिषेधसिद्धिरिति पक्षे नावाच्यमित्यत्र वाच्यत्वविधिः श्रौतः अवाच्यत्वनिषेधस्त्वार्थिकः अभावाभावो भावव्याप्य इति नञ्द्वयस्य निषेधनिषेधमुखेन समभिव्याहृतार्थज्ञापकत्वमिति पक्षे तु विपरीतः श्रौतार्थिकभाव इत्यपि स्थितम् । **एवमन्यत्रापीति** । परपक्षप्रतिविधायकनञादिसमभिव्याहारविनिर्मुक्तेष्वन्तरित्यादिनयेषु तत्तु समन्वयात् इत्यतस्तादृशतुशब्दसर्वनाम्नोरध्यायसमाप्तिप्रधानसूत्रेष्वनुवृत्तेः समर्थिततया समीहितं सेत्स्यतीति ध्येयम् । यादृशस्थले नावधारणार्थकपदसमभिव्याहारस्तत्र तत्पूरणेनैव निर्वाह इति भावः । नन्वेवं सति सूत्रघटकपदविन्यासेनानाकाङ्क्षितपरपक्षप्रतिषेधावगाहि ह्यन्वयधीरेवोदीयादित्यप्राप्तकालताप्रसङ्ग इत्याशङ्कापरिजिहीर्षया सूत्रकृदभिप्रेतस्थापनाभङ्गीं दर्शयति **इदमुक्तं भवतीत्यादि** । लाघवानुरोधेन सूत्रघटकपदानुपूर्व्यास्तादृशत्वोपगमेऽपि स्थापनायां प्रतिज्ञाघटकतया वाच्यपदमेव निर्देष्टव्यं प्राथम्येनातो नोक्तक्षतिरिति सूत्रकृदाशय इति भावः । अत एव अथशब्दानुशासनमिति भाष्यप्रतीकव्याख्यावसरे अथशब्दः प्रारम्भस्य द्योतकः न तु वाचकः निपातत्वात् चादिवदित्याद्याकरप्रयोगः सङ्गच्छत इति भावः । शङ्कते **ईक्षणीयत्वं न स्यादिति** । वाच्यत्वेक्षणीयत्वयोः केवलान्वयित्वेन परस्परसमनियततया वाच्यत्वस्याव्यापकत्वादित्यादिकं सौवं कथं सङ्गमनीयमित्यतः स्वाशयमाविर्भावयति **ईक्षणीयत्वं हीति** । वाच्यत्वस्याव्यापकत्वोक्तिर्नेक्षणीयत्वसमानाधिकरणाभावप्रतियोगित्वदर्शननिबन्धना किन्तूक्तविवक्षाविशेषनियन्त्रितैवेति भावः । शब्देतरजन्यज्ञानविषयत्वबाधसहकृतं ज्ञानविषयत्वं वाच्यत्वव्याप्यं भवतीति बाधकाभिधानं सङ्गच्छत इत्याह **न तावदिदमित्यादिना** । **व्यतिरेकसम्भवादिति** । दर्शितबाधसहकृतशब्दज्ञानविषयत्वरूपापाद्यव्यतिरेकस्य वाच्यत्वरूपापादकव्यतिरेकस्य च व्याप्यव्यापकभावसम्भवादित्यर्थः । **सामान्यव्याप्तीति** । कारकविषयत्वाभावत्वस्य क्रियाविषयत्वाभावत्वस्य च शब्दरूपकारकविषयत्वाभावत्वज्ञानरूपक्रियाविषयत्वाभ्यां सामान्यधर्मत्वादिति भावः ।

**॥ अथ वाच्यत्वाभावे लक्ष्यत्वं क्वापि न दृष्टम् ॥**

**८५ सु०— ननु मा भूत्प्रमाणाभासैः प्रत्यक्षानुमानाभ्यां चेक्षणं ब्रह्मणः, मा च भूद्वाच्यम्; तथाऽपि शब्दलक्ष्यतयेक्षणीयं च भविष्यति; तथा च विपक्षे बाधकाभावादप्रयोजको हेतुः; इत्यत आह न चेति ।**

**अनु०— न चान्यथा ॥**

**लक्ष्यत्वं क्वापि दृष्टं हि**





**हि यस्मात् अन्यथा वाच्यत्वाभावे, लक्ष्यत्वं क्वापि न दृष्टम् । तस्मात्, अवाच्यत्वे ब्रह्मणो लक्ष्यत्वा(योगा)भावाल्लक्षणयाऽपि नेक्षणीयत्वमिति शेषः । केनचिच्छब्देन वाच्यमेव हि तीरादिकं केनचिल्लक्ष्यं दृष्टमिति ।**

**परि०**— न तावदित्यादिना ईक्षणीयत्वहेतोरप्रयोजकत्वं हि कारणान्तरजन्यज्ञानविषयत्वनिमित्तं वृत्त्यन्तरविषयत्वनिमित्तं च । तत्राद्यं शास्त्रयोनिसूत्रादिपर्यालोचनया सुपरिहरमिति स्वयं परिहृत्य द्वितीयाप्रयोजकत्वचोद्यनिवर्तकतया मूलमवतारयति **ननु मा भूदित्यादिना** । वाच्यत्वस्य लक्ष्यत्वाव्यापकत्वात् कथं तदभावेन लक्ष्यत्वाभावापादनमित्यत आह **केनचिच्छब्देनेति** ।

**यादु०**— ननु वाच्यत्वस्य लक्ष्यत्वाव्यापकत्वात्कथं तदभावेन लक्ष्यत्वाभावापादनमित्यत आह **केनचिच्छब्देनेति** । वह्निमानेव धूमवानित्यादौ वह्न्यादेरिव वाच्यमेव लक्ष्यमित्युक्ते वाच्यत्वस्य व्यापकतोक्ता भवतीति ज्ञातव्यम् । यद्वा । गङ्गाशब्दावाच्यमपि तीरं तल्लक्ष्यं दृष्टमित्युक्ततर्के व्यभिचार इत्यत आह **केनचिच्छब्देनेति** । तथा च वाच्यत्वसामान्याभावस्यापादकतयाऽत्र विवक्षितत्वान्नोक्तव्यभिचार इति भावः ।

**वा०चं०**— ननु शब्दवचनवृत्त्यविषयस्यापि लक्षणया शब्दवृत्तिविषयत्वसम्भवात्प्रकारान्तरासम्भवोऽसिद्ध इति नेदं बाधकमित्याशङ्कते **नन्विति** । फलमाह **तथा चेति** । ननु वाच्यत्वाभावे लक्ष्यत्वादृष्टयुक्तिमात्रेण न किञ्चिदपि विपक्षबाधकमुक्तं भवतीत्यतस्तदुक्तिलब्धं विपक्षे बाधकं तत्फलतयोक्ताशङ्कानिवृत्तिं च शेषपूरणेन मूलार्थतया दर्शयति **तस्मादिति** । ननु विपक्षबाधकतर्के व्याप्तिर्न सुग्रहेत्यतोऽन्यथा । न दृष्टमित्येतन्मूललब्धां व्यतिरेकव्याप्तिं दर्शयति **केनचिदिति** । एतद्विशेषणं च गङ्गापदलक्ष्यस्यापि तीरस्य तत्पदवाच्यत्वाभावादयुक्तमित्यतो न लक्षकपदवाच्यत्वमेव लक्ष्यस्य वयमाशास्महेऽपि तु तदन्यत्किञ्चित्पदवाच्यत्वमतो न दोष इति सूचनाय । यद्वा । तत्पदवाच्यत्वाभाव एव तल्लक्ष्यत्वं दृष्टमिति कथं न दृष्टमित्युक्तिरित्यतः स्वाभिप्रायप्रकटनाय **केनचिदित्यादि** । अनेन वाच्यत्वाङ्गीकारे लक्ष्यत्वस्य सूपपादत्वान्न प्रतिप्रसङ्ग इत्यपि सूचितं भवति ।

**वा०र०**— **प्रतिप्रसङ्ग इति** । यदि वाच्यं न स्यात्तर्हि लक्ष्यं न स्यादित्यस्य यदि वाच्यं स्यात् तर्हि लक्ष्यं न स्यादिति प्रतिकूलः प्रसङ्ग इत्यर्थः । न च एवमेव आपादकं प्रत्यापादयितुं शक्यमिति आत्माश्रयत्वोपपादनस्थलीयपद्धतिवाक्येऽपि प्रतीत्यस्य प्रतिकूलार्थकत्वं ज्ञातव्यम् । उपपादितं चैतत्तद्व्याख्यानावसरे अस्माभिः ।

**विठ्ठल०**— ईक्षणीयत्वस्य प्रत्यक्षादिभिः तदाभासैर्वोपपत्तेर्वाच्यत्वस्य ईक्षणीयत्वं प्रत्यव्यापकत्वात् प्रसङ्गस्य हेतोश्चाप्रयोजकतेति शङ्कां स्वयं परिहृत्य ब्रह्मणो वाच्यत्वं विनापि लक्षणया ईक्षणीयत्वोपपत्तेः पुनरप्रयोजकत्वमिति शङ्काव्यावर्तकतया न चान्यथेत्याद्यवतारयति **ननु मा भूदिति** । अवाच्यत्वे लक्ष्यत्वायोगं





उपपादयति **केनचिदिति**। तथा च यदि ब्रह्म केनापि शब्देन वाच्यं न स्यात्तर्हि लक्ष्यमपि न स्यादिति प्रसङ्गो ब्रह्म न लक्ष्यं केनापि शब्देनावाच्यत्वादिति हेतुश्च विवक्षित इति ज्ञेयम्। प्रसङ्गहेतुरित्यस्य प्रसङ्गसहितो हेतुरित्यर्थः।

**॥ इति वाच्यत्वाभावे लक्ष्यत्वं क्वापि न दृष्टम् ॥**

* * *

**॥ अथ वाच्यत्वाभावेऽपि लक्ष्यत्वाङ्गीकारे अनवस्थितिः ॥**

**८६ सु०— नन्ववाच्यमपि लक्ष्यं किं न स्यात्, ततश्च विपक्षे बाधकाभावादप्रयोजकोऽयं प्रसङ्गहेतुः; इत्यत आह किं तदिति ।**

**अनु०— किं तदित्यनवस्थितिः ।**

अन्यथेत्यनुवर्तते । यद्यवाच्यमपि ब्रह्म लक्ष्यमित्यङ्गीक्रियते; तदा 'किं तदि'ति जिज्ञासाप्रवृत्तावनवस्थितिः (स्यात्) । इदमुक्तं भवति । लाक्षणिको हि शब्दो न श्रुतमात्रोऽर्थान्तरे धियमुपजनयति, तत्रागृहीतशक्तित्वात् । किन्तु वाच्यार्थ(र्थे)बुद्धिमुत्पाद्य तदनुपपत्तिदर्शने सति । न तावताऽपि, वाच्यार्थानुपपत्तिदर्शनस्य तत्त्यागमात्रहेतुत्वात् । किं नामार्थान्तरस्य स्वरूपतो वाच्यार्थसम्बन्धितया चावगतौ सत्याम् । गङ्गादिशब्देन हि स्वरूपतो गङ्गादिसम्बन्धितया चावगतमेव तीरादिकं लक्ष्यं दृष्टम् । नानवगतस्वरूपं कूर्मरोमादि । नाप्यन्यसम्बन्धितयाऽवगतं तीरादि । तथा च वैदिकशब्दलक्ष्यत्वे ब्रह्मणः प्रतीतिरङ्गीकार्या । न च तीरादिवत्प्रत्यक्षादिना तस्य प्रतीतिः (सम्भवति) । ततो लाक्षणिकशब्दे प्रयुक्ते, वाच्यार्थेऽनुपपत्तिं पश्यतो, लक्षणीयेऽर्थे 'किं तद्यदनेन लक्ष्यमि'ति जिज्ञासायां शब्द एव प्रयोक्तव्यः । तेनापि चेन्न वाच्यं किन्तु लक्ष्यमेव, तर्हि पुनः 'किं तदि'ति जिज्ञासाया अनिवृत्तत्वाच्छब्दान्तरमेव वाच्यम् । तेनापि चेल्लक्ष्यमेव, पुनर्जिज्ञासैव, इत्यपर्यवसानं स्यात् । पूर्वपूर्वलक्षणाऽसिद्धावुत्तरोत्तरलक्षणाऽसिद्धेर्मूलक्षतिः । यदि च केनचिच्छब्देन वाच्यं स्यात्तदा तदुक्तावुपरतजिज्ञासो लाक्षणिकार्थं प्रतीयात् । वाच्यत्वेऽपि सम्बन्धग्रहणाय पूर्वसिद्धेरपेक्षिततत्वेनानवस्थितेरिति चेन्न, अभिमान्यधिकरणे वक्तव्यत्वात् ।





**तस्माद्विपक्षेऽनवस्थालक्षणबाधकसद्भावात्, अवाच्यत्वे लक्ष्यत्वं न स्यादिति युक्तोऽतिप्रसङ्ग इति ।**

परि०— **प्रसङ्गहेतुरिति** । प्रसङ्गरूपहेतुः दूषणानुमानमित्यर्थः । अन्यथेत्यनुवर्तत इत्युक्तं तस्यार्थमाह **यद्यवाच्यमपि ब्रह्म लक्ष्यमित्यङ्गीक्रियेतेति** । स्वव्याघातकोऽयं तर्क इति शङ्कते **वाच्यत्वेऽपीति** । **पूर्वसिद्धेरिति** । सम्बन्धस्य द्विनिष्ठत्वेन सम्बन्धज्ञानस्य सम्बन्धिज्ञानाधीनत्वात् शब्दरूपसम्बन्धिनः प्रत्यक्षत्वेऽपि ब्रह्मरूपसम्बन्धिन औपनिषदत्वेन शब्देनैव पूर्वं तत्सिद्धेर्वाच्यत्वेन तत्राप्येवमित्यनवस्थेत्यर्थः । **अभिमान्यधिकरण इति** । यौगिकानां शब्दानां वाक्यतुल्यतया पृथक् सङ्गतिग्रहणानपेक्षत्वादित्यादिसमाधानानां 'शास्त्रोक्तवस्तुनश्चैव(स्त्वेव) व्युत्पत्तिः शास्त्रलिङ्गतः' इत्येतद्व्याख्याप्रस्तावे वक्ष्यमाणत्वादिति भावः । वक्तव्यत्वादित्यनेन तदधिकरणव्युत्पाद्यमिदमिति दर्शितम् । युक्तोऽतिप्रसङ्ग इत्यादौ अतिप्रसङ्गशब्दः प्रसङ्गपर्यायः । तथा च न 'अति' इत्यस्याधिक्यशङ्केति भावः ।

गु०दी०— अन्यत्र गृहीतसङ्गतिकेन नारपदेनायनपदेन च पदान्तरसमवधाने सत्यपूर्वतया विशिष्यैव वाक्यार्थमर्यादयैव जलशायिनि नारायणे प्रतीते तत्राखिलशब्दानां समन्वय इति वक्तुं शक्यत्वान्नास्माकमनवस्था । अखण्डार्थवादिनः परस्य तु वाक्येऽपि स्वरूपमात्रलक्षणाङ्गीकारान्नोक्तानवस्थापरिहारोपाय इति वक्ष्यमाणार्थं मनसि निधायाह **अभिमान्यधिकरण इति** ।

यादु०— **प्रसङ्गहेतुरिति** । प्रसङ्गरूपो हेतुर्दूषणानुमानमिति यावत् । प्रसङ्गः प्रसञ्जनम् । तत्र हेतुरापादकमित्यन्ये । वस्तुतस्तु प्रसङ्गसहितो हेतुः प्रसङ्गहेतुः । उभयोरप्यप्रयोजनत्वमित्यर्थः । ईक्षणीयत्वहेतोरप्रयोजकत्वङ्कायां लक्ष्यत्वं न स्यादिति प्रसङ्गोऽभिहितः । अस्य चाप्रयोजकत्वे हेतोरप्रयोजकत्वं तदवस्थमेवेत्याशयः । **अभिमान्यधिकरण इति** । 'शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गतः' इत्यत्र यौगिकैः शब्दैर्वाक्यमर्यादयाऽपूर्वार्थोपस्थितौ तत्रेतरपदशक्तिग्रहोऽतो नानवस्थेति वक्ष्यमाणत्वादित्यर्थः । नैवं परेण वक्तुं शक्यम् । ब्रह्मणोऽखण्डस्यासंसर्गभेदरूपतया वाक्यार्थरूपत्वाभावादित्याशयः । युक्तोऽतिप्रसङ्ग इत्यादावतिप्रसङ्गशब्दः प्रसङ्गशब्दपर्यायः अतः 'अती'त्यस्य वैय्यर्थ्यशङ्काऽनवकाश इति ध्येयम् ।

वं०प०— **प्रसङ्गहेतुरिति** । अवाच्यत्वे लक्ष्यत्वं न स्यादिति प्रसङ्गे हेतुरापादकभूतमवाच्यत्वमप्रयोजकमित्यर्थः । **पूर्वपूर्वलक्षणाऽसिद्धाविति** । एवं लक्षणापरम्पराश्रयणे तत्रैव कालपर्यवसानापत्त्या मूलभूतप्रकृतलक्षणायाः कर्तुमवकाशाभावेन मूलक्षयकरत्वादनवस्था दूषणमित्याशयः । **सम्बन्धेति** । एकेन पदेन ब्रह्मणो वाच्यत्वं ज्ञातव्यम् । तत्र वाच्यत्वस्य सम्बन्धरूपत्वेन सम्बन्धज्ञाने च सम्बन्धिज्ञानस्य कारणत्वात् सम्बन्धिभूतब्रह्मज्ञानेन भाव्यं तज्ज्ञानं च न प्रमाणान्तरेनेति पदेनैव वाच्यम् । तदपि वाचकमेव । तेन च पुन-





र्वाच्यत्वे ज्ञातव्ये तस्य सम्बन्धरूपत्वेन सम्बन्धिज्ञानापेक्षायामनवस्था स्यादिति भावः । वैदिकपदानां यौगिकतया तैरपूर्वार्थोपस्थित्यङ्गीकारेण तत्र शक्तिग्रहस्याङ्गीकारात् । यथा सहस्राक्षादिपदैरन्यत्र गृहीतसङ्गतिकैः सहस्राण्यक्षाणि यस्येत्यपूर्वार्थोपस्थितौ सत्यां यः सहस्राक्षः स इन्द्र इति तत्रेन्द्रादिपदशक्तिग्रहो भवति एवं चक्रपाण्यादिशब्दैरन्यत्र गृहीतसङ्गतिकैश्चक्रं पाणौ यस्येत्यपूर्वार्थोपस्थितौ सत्यां यश्चक्रपाणिः स ब्रह्मपदवाच्य इति तत्र ब्रह्मादिपदशक्तिग्रह इति नानवस्थेति भावेनाह **अभिमानीति** ।

**आनन्दः**— ननु लक्षणया ईक्षणीयत्वमुपपाद्यत इत्युक्ते किं तल्लक्ष्यमिति प्रश्नस्यानवस्थया खण्डनमयुक्तम् । तावतापि लक्षणया ईक्षणीयत्वस्यादूषणादित्यत आह **इदमुक्तं भवतीति** । **न तावतापीति** । अनुपपत्तिदर्शनमात्रेणेत्यर्थः । कुत एवं कल्प्यत इत्यत आह **गङ्गादीति** । ननु मूलक्षयाभावान्नानवस्थेत्यत आह **पूर्वपूर्वेति** । **सम्बन्धग्रहणायेति** । वाच्यत्वपक्षेऽपि शक्तिग्रहार्थं ब्रह्मण उपस्थितिर्वक्तव्या । सा च शब्देनैव सोऽपि गृहीतसङ्गतिक एव बोधकः सङ्गतिग्रहश्चोपस्थितिं विना न सम्भवतीत्युपस्थित्यर्थं शब्दान्तरमेव प्रोक्तव्यं इत्यनवस्थेत्यर्थः । **अभिमान्यधिकरण इति** । वाच्यार्थमर्यादया ब्रह्मोपस्थितौ सत्यां तत्र शक्तिग्रह इति नानवस्था । न चैवं त्वया वक्तुं शक्यम् । वाक्यार्थस्य संसर्गरूपत्वात् ब्रह्मणश्च त्वया संसर्गरूपत्वानङ्गीकारात् इत्यादि वक्ष्यमाणत्वादित्यर्थः ।

**श्रीनिधि०**— **प्रसङ्गहेतुरिति** । **प्रसङ्गः** तर्कः तस्य **हेतुः** प्रयोजकः । आपादक इति यावत् । **अन्यसम्बन्धितया अवगतं तीरादिकमिति** । तटाकादिसम्बन्धितया अवगतमित्यर्थः । गंगापदलक्ष्यं न भवति । **अभिमान्यधिकरण इति** । लोके गृहीतसङ्गतिकैः यतो वा इमानि भूतानि जायन्त इत्यादिभिः पदजातैः अलौकिकार्थोपस्थितौ तत्र ब्रह्मादिपदानां शक्तिग्रह इति नास्मन्मते अनवस्थेति वक्ष्यत इति भावः । अनन्तरं वैलक्षण्यं अस्तीति शेषः ।

**वा०चं०**— 'किं तदित्यनवस्थितिः' इत्यापाद्यं प्रत्यापादकस्य मूलारूढतायै अन्यथेत्यनुवर्त्य प्रकृतोपयोगितया तदर्थमाह **अन्यथेति** । किं तदित्यस्यानवस्थाप्रकारप्रदर्शकत्वाभावादनवस्थाप्रयोजकप्रदर्शकत्वं दर्शयति **जिज्ञासाप्रवृत्ताविति** । ननु जिज्ञासाप्रवृत्तौ तन्निवृत्तये लक्षकशब्द एव प्रयोक्तव्ये खल्वनवस्था स्यात् । न चैतदस्ति । नियमेन जिज्ञासाप्रवृत्तौ नियामकाभावात् । न च लक्ष्यार्थप्रतीतिपूर्वकत्वाल्लक्षणाया लक्ष्यार्थजिज्ञासानियम इति वाच्यम् । शक्तिस्थल इव लक्षणास्थलेऽपि शब्दश्रवणमात्रेण वा शक्यार्थानुपपत्तिप्रतिसन्धानसहकृतेन वा तेनार्थप्रतीत्युपपत्त्या पूर्वं लक्ष्यार्थप्रतीतेर्नियामकाभावेनानावश्यकत्वात् तदावश्यकत्वेन जिज्ञासाप्रवृत्तौ वा तीरादिवत्प्रत्यक्षादिनाऽपि लक्ष्यार्थप्रतीत्युपपत्त्या न शब्द एव प्रयोक्तव्य इति नियमः । तत्प्रयोगनियमे वा वाचकशब्दप्रयोगेनाप्युपपत्तौ लाक्षणिकशब्दप्रयोगनियमोऽप्यनावश्यक एव । तस्याप्यावश्यकत्वे परम्परामात्रसद्भावेऽपि मूलक्षयाभावान्नानवस्था । अथाऽपि तदापत्तौ शक्तिपक्षेऽपि तस्यास्तुल्यत्वात् । वाच्यत्वपक्षोऽप्ययुक्त एवेति नेदमापादनं युक्तमित्यतो मूलाभिप्रायमाह **इदमुक्तं भवतीति** । अत्र 'लाक्षणिको





ही'त्यादीनाऽन्यथासिद्धिशङ्कानिरासः । 'गङ्गादिशब्देन ही'त्यादिनाऽन्वयव्यतिरेककथनम् । तथा चानन्यथासिद्धान्वयव्यतिरेकाभ्यां लक्ष्यार्थप्रतीतेः कारणत्वसमर्थनमिति द्रष्टव्यम् । **पूर्वपूर्वेति** । लक्षणाप्रयोजकप्रतीतिकारणत्वेन कल्प्यमानलक्षणायाः पूर्वत्वं प्रयोज्यायाश्चोत्तरत्वम्, तथा च पूर्वपूर्वलक्षणाऽसिद्धचोत्तरोत्तरलक्षणाया अप्यसिद्धया ब्रह्म शब्दगम्यमिति प्रामाणिकस्य हानिरिति प्रयोजनपरिक्षय इति वा, सर्वशब्दावाच्यं ब्रह्म लक्षणया शब्दगम्यमित्यस्य प्रामाणिकत्वे हि तद्बलात्तत्प्रयोजकतया लक्षणान्तरं कल्पनीयं स्यादिति कल्पकलक्षणायाः पूर्वत्वं कल्प्यायाश्चोत्तरत्वम् । तथा च कल्पकीभूतपूर्वपूर्वलक्षणाऽसिद्धौ कल्प्यभूतोत्तरलक्षणाया असिद्धिरिति कल्पकपरिक्षयो वा मूलक्षय इत्यर्थः । **सम्बन्धग्रहणायेति** । सम्बन्धज्ञानस्य सम्बन्धिज्ञानपूर्वकत्वादित्याशयः । **अभिमान्यधिकरण इति** । 'शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गतः' इत्यभिमान्यधिकरणे लोकतो गृहीतसङ्गतिकावयवार्थे संसर्गस्य यौगिकेन शब्देन समासेन वाऽपूर्वस्यैव प्रतीतेस्तत्र व्युत्पत्तेरनपेक्षणात् ब्रह्मणश्च संसृष्टावयवार्थरूपतया तत्प्रतीतिसम्भवस्य वक्ष्यमाणत्वादित्यर्थः । न चैवं मत्पक्षेऽपि लक्षणाप्रयोजकब्रह्मप्रतीत्युपपत्तिरिति वाच्यम् । त्वया ब्रह्मणः संसर्गरूपत्वस्य संसृष्टरूपत्वस्य वाऽनभ्युपगमेन तस्य वाक्यार्थरूपत्वाभावाद्वाक्यस्याखण्डार्थनिष्ठतायाश्च निरस्तत्वादित्यनुपदमेव वक्ष्यमाणत्वादिति भावः ।

**वा०र०— प्रसङ्गहेतुरिति** मूलम् । अत्र विपक्षे बाधकं च उत्तरत्रैव स्पष्टम् । इत्याशय इत्यनन्तरं प्रशिथिलमूलः । व्याप्तिरूपमूलशून्य इत्यर्थ इति ग्रन्थानन्तरं यथोक्तमितीत्यादि ग्रन्थः । वाक्यव्युत्क्रमो लेखकप्रयुक्तः । **इत्युक्तानुपपत्तीति** । इत्येवं प्रागुक्तलक्ष्यत्वानुपपत्तेर्यः परिहार इति योज्यम् । लक्ष्यत्वानुपपत्तिपरिहारसम्भवरूपहेतोर्व्याप्तिशून्यत्वेन समुच्चयः । प्रागपि प्रसङ्गस्य व्याप्तिशून्यत्वमित्येवोक्तावपि व्याप्तिशून्यत्वादप्रसङ्गत्वमित्यर्थस्याभिप्रेतत्वादप्रसङ्गत्व एवोभयसमुच्चयाभिधानं न दुष्टमिति ज्ञेयम् ।

**स०व्र०— प्रसङ्गहेतुरिति** । प्रसञ्जनहेतुरापादकमिति यावत् । वस्तुतस्तु प्रसङ्गसहितो हेतुः । तथाच प्रसङ्गस्याप्रयोजकत्वे हेतोरप्यप्रयोजकत्वमित्यर्थः । अन्यथा हेतुशब्दवैयर्थ्यापत्तेरिति द्रष्टव्यमित्याहुः । **अभिमान्यधिकरण इति** । 'शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गतः' इति वक्ष्यमाणत्वादित्यर्थः । यौगिकैः शब्दैर्वाक्यार्थमर्यादयाऽपूर्वार्थोपस्थितौ तत्रेतरपदशक्तिग्रहोऽस्मन्मते सम्भवति । नैवं त्वया वक्तुं शक्यते । बह्मणोऽखण्डस्यासंसर्गभेदरूपतया वाक्यार्थरूपत्वाभावादित्याशयः ।

**विट्ठल०**— ननु कथमत्र जिज्ञासाया अपर्यवसानं येनानवस्था । शब्दश्रवणमात्रेण अर्थप्रतीतौ जिज्ञासोदयानुपपत्तेर्न च वाच्यार्थस्यात्रानुपपन्ना धीरिति वाच्यम् । लक्ष्यार्थान्तरबोधस्य शब्दश्रवणेन सम्भवात् । नापि लक्ष्यार्थस्य प्रागनुपस्थितत्वार्त्कि तल्लक्ष्यमर्थान्तरमिति जिज्ञासाप्रवृत्तिरिति वाच्यम् । लाक्षणिकपदेनैव तद्बोधोपपत्तेः, प्रागुपस्थितेरनपेक्ष्यत्वादित्याद्याशङ्कानिरासपूर्वमनवस्थामुपपादयितुमाह **इदमुक्तं भवतीति** । **सत्याम्** इत्यतः परं लाक्षणिकः शब्दोऽर्थान्तरधियं जनयतीति ग्राह्यम् । एतदन्वयव्यतिरेकाभ्यां उपपादयति **गङ्गादिशब्देन हीति** । **न च तीरादिवदिति** । आगमैकवेद्यत्वाद्ब्रह्मण इति भावः । **शब्द एव प्रयोक्तव्य इति** । लक्ष्यत्वेनाभ्युपगत-





ब्रह्मबोधनायेति शेषः । **पूर्वपूर्वेति** । सर्वशब्दलक्ष्यत्वस्यैव अप्रामाणिकत्वेन प्राथमिकलक्षणाया एव असिद्ध्या तदुपपादनाय कल्प्यमानोत्तरोत्तरलक्षणापरम्पराया असिद्धेर्मूलभूतलक्षणायाः क्षतिरित्यर्थः । ननु यथा लक्ष्यत्वाङ्गीकारेऽनवस्था तथा वाच्यत्वपक्षेऽप्यनवस्थैव । तथाहि वाचको हि शब्दो वाच्यवाचकभावसम्बन्धग्रहणरूपव्युत्पत्तिसापेक्षयैव वाच्यार्थप्रत्यायकः । सम्बन्धज्ञानं च सम्बन्धिज्ञाननिबन्धनं तत्र शब्दस्य प्रत्यक्षत्वेऽपि प्रति सम्बन्धिब्रह्मरूपार्थस्य प्रत्यक्षाद्यवेद्यत्वात् तज्ज्ञानं शब्देनैवेति वाच्यम् । तस्यापि शब्दस्य व्युत्पत्तिसापेक्षतयैवार्थधीजनकत्वात् तद्व्युत्पत्त्यर्थं च तज्ज्ञानं शब्दान्तरेण तत्राप्येवमित्यनवस्थेत्याशयेन शङ्कते **वाच्यत्वेऽपि सङ्गतिग्रहणायेति** । **अभिमान्यधिकरण इति** । 'शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गतः' इत्यत्र वैदिकानां शब्दानां वाक्यतुल्यतया पृथक्सङ्गतिग्रहणापेक्षत्वात् इत्यादिसमाधानस्य वक्ष्यमाणत्वादिति भावः ।

**चषकः— अभिमान्यधिकरण इति** । 'शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गतः' इत्यनुव्याख्याव्याख्यावसरे यौगिकशब्दानां वाक्यतुल्यतया पृथक्सङ्गतिग्रहणानपेक्षत्वादित्यादिसमाहितीनामभिधास्यमानत्वादित्यर्थः । अद्वैतिनये तु ब्रह्मणोऽखण्डतया संसर्गसंसृष्टयान्यतरलक्षणवाक्यार्थरूपताराहित्येन नैवं सुवचमिति भावः । **युक्तोऽतिप्रसङ्ग इति** । अतिप्रसङ्गशब्देनाऽऽपत्तिरभिधीयते । आपत्तिवचनप्रसङ्गपदपर्यायत्वादतिप्रसङ्गपदस्य न 'अति' इत्यस्य वैयर्थ्यशङ्कावकाश इति स्थितम् ।

**॥ इति वाच्यत्वाभावेऽपि लक्ष्यत्वाङ्गीकारे अनवस्थितिः ॥**

* * *

**॥ अथ माधुर्यादिविशेषाश्च माधुर्यादिशब्दैरुदिता एव ॥**

**८७ सु०— नन्विक्षुक्षीरगुडादीनां विशेषास्तावद्विद्यन्ते, अनुभवसिद्धत्वात् । न च ते केनापि शब्देन वाच्याः, तद्वाचकशब्दाभावात् । तथाऽपि लक्ष्या दृश्यन्ते, अन्यथा तत्र वाग्व्यवहाराभावप्रसङ्गात् । अतोऽवाच्यत्वे लक्ष्यत्वं न स्यादिति प्रसङ्गः प्रशिथिलमूलः, यथोक्तम् 'इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् । भेदस्तथाऽपि नाख्यातुं सरस्वत्याऽपि शक्यते' इति । यथा (च) माधुर्यादिविशेषाणामवाच्यानामपि प्रतीततामात्रेण लक्ष्यत्वम् । तथा ब्रह्मणोऽवाच्यस्यापि स्वयंप्रकाशत्वेन प्रसिद्धस्य लक्ष्यत्वं सम्भवतीत्यत आह माधुर्यादीति ।**

**अनु०— माधुर्यादिविशेषाश्च तच्छब्दैरुदिताः सदा ॥**





**तच्छब्दैः** माधुर्यादिविशेषशब्दैः । **सदा** इत्यवधारणार्थे । **उदिता** वाच्या एवेति ।

ननु माधुर्य(ादि)विशेषशब्दः साधारणः । किमेतावता । न हि गोशब्दोऽनेकार्थ इति न कस्यापि वाचकः । तथा च लक्षकोऽपि न स्यात्, वाच्यार्थद्वारत्वाल्लक्षणायाः ।

ननु (च) वाचकत्वं पदधर्मः । माधुर्यादिविशेष इति च न पदं किन्तु वाक्यमेव । अनेकपदात्मकत्वात् । तथा च कथं तच्छब्दैरुदिता इति । मैवम् । ऐकपद्यमैकस्वर्यं च समासप्रयोजनमिति शाब्दैरङ्गीकृतत्वात् ।

अथवा तच्छब्दैः सूदशास्त्रादिप्रसिद्धैर्वाचकशब्दैरुदिता इति व्याख्येयम् । तथा चोक्तम् 'विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम् । गुडस्य पनसादीनां निर्हारीत्यभिधीयते ॥' इति । यथा च ध्वनिविशेषाणां मन्दव्युत्पत्तिभिरविदिता अपि श्रुतिस्वरजातिरागादिशब्दा वाचकाः सङ्गीतशास्त्रप्रसिद्धाः तथा माधुर्यादिविशेषाणामपि तत्तदधिकृतशास्त्रेषु प्रसिद्धा वाचकाः शब्दाः कथं न स्युः । ततश्च 'इक्षुक्षीरगुडादीनां' इति वचनमात्मनो व्युत्पत्त्यभावख्यापनार्थं शारदानिन्दया प्रत्यवायार्जनार्थं च । अतो न प्रशिथिलमूलोऽतिप्रसङ्ग इति ।

यदपि स्वप्रकाशतया सिद्धत्वात् ब्रह्मणो लक्ष्यत्वोपपत्तिरिति तदुपरिष्टान्निराकरिष्यते(ति) ।

**परि०**— द्वितीयप्रघट्टकैतरेयभाष्योक्तमाह **विशदमिति** । **तदुपरिष्टान्निराकरिष्यत इति** । 'विज्ञेयवाच्यलक्ष्यत्वपूर्व' इत्यादि व्याख्यावसरे ।

**गु०दी०**— **माधुर्यविशेषादिशब्दैः** इत्यत्र आदिशब्देन रसशब्दो गृह्यते । रसशब्देनापि तेषां वाच्यत्वादिति ज्ञेयम् ।

**यादु०**— पक्षादिप्रविभागोत्तरं क्रियमाणा व्यभिचारशङ्का, यथा विपक्षे हेतुः साध्यं विनाऽस्ति तथा पक्षेऽपि साध्यं विनैवास्त्विति पक्षेऽप्युपपादनीया । अन्यथा वैय्यर्थ्यात् । तथैव कथकसम्प्रदायाच्च । न चैवं प्रकृते सम्भवति माधुर्यादिविशेषाणां प्रतीतत्वेन लक्ष्यत्वसम्भवेऽपि ब्रह्मणः प्रतीत्यसम्भवेन लक्ष्यत्वासम्भवस्योक्तत्वादित्याशङ्कां परिहरन् पक्षेऽपि व्यभिचारशङ्कामुपपादयति **यथा चेत्यादिना** । **साधारण इति** । तथा च यथा घटशब्दः सर्वत्र नीलघटादौ प्रयुज्यमानो नैल्यादिविशिष्टं विशेषं लक्षणयैवोपस्थापयति तथा माधुर्यादि-





विशेषशब्दोऽपि सर्वविशेषेषु प्रयुज्यमानस्तत्तद्विशेषान् लक्षणयैवोपस्थापयत्यतो नोक्तव्यभिचारपरिहार इति भावः। अत्र साधारणत्वं किं घटादिशब्दवत्सामान्याकारमात्रवाचकत्वं किं वा गवादिशब्दवदनेकार्थत्वम्। नाद्यः असिद्धेः। माधुर्यादिविशेषशब्दस्य तत्तद्विशेषमात्रोपस्थापकत्वानुभवेन सर्वसाधारणसामान्याकारोपस्थापकत्वाभावात्। न द्वितीयः गवादिशब्देषु व्यभिचारादित्याह **किमेतावतेत्यादिना**। एतेन सर्वत्र प्रयोगमात्रसाधारण्यमित्यपि निरस्तम्। गवादिशब्देष्वेव व्यभिचारात्। **ऐकपद्यमिति**। तथा चानेकपदात्मकेऽपि समास एकपदत्वमप्यस्त्येवेति भावः। नन्विदं पारिभाषिकसमासे पदत्वं न वाचकत्वोपयोगि। वाक्यस्य वाचकतायाः केनाप्यनङ्गीकृतत्वादित्यस्वरसादाह **अथवेति**।

**वं०प०— अन्तरमिति**। यद्यपि महदन्तरं महान्भेदोऽस्ति तथाऽपि स भेद इति योज्यम्। इष्टापत्तिरिति चेत्तत्राह **तथा चेति**।

**आनन्दः—** नन्ववाच्यत्वे लक्ष्यत्वं न स्यादित्यापादनमयुक्तं इक्षुक्षीरादिमाधुर्यादौ सत्यप्यवाच्यत्वे लक्ष्यत्वस्यैव सत्त्वेन व्याप्तिशून्यत्वादित्याशयेन शङ्कते **नन्विति**। ननु ते न सन्त्येव प्रमाणाभावादित्यत आह **अनुभवेति**। **अन्यथेति**। लक्ष्यत्वस्याप्यभाव इत्यर्थः। वाग्व्यवहारस्य शक्तिलक्षणान्यतरसाध्यत्वादिति भावः। अवाच्यस्यापि लक्ष्यत्वे सम्मतिमाह **यथोक्तमिति**। ननु शब्दतः प्रतीतस्यैव लक्ष्यत्वं माधुर्यादेश्च शब्दतः प्रतीतेरभावाल्लक्ष्यत्वमेव न सम्भवति। अस्तु वा यथाकथञ्चित्तस्य लक्ष्यत्वं तथापि ब्रह्मणो न लक्ष्यत्वं तस्य केनापि प्रमाणेनाप्रतीतत्वात्। न तावत्प्रत्यक्षेण। अतीन्द्रियत्वात्। नाप्यनुमानं नेन्द्रियाणि नानुमानमिति श्रुतेः। नाप्यागमः। तस्यापि लक्षणया तत्र वृत्तौ अनवस्थायाः दुष्परिहरत्वादित्यत आह **यथा चेति**। **ननु माधुर्येति**। तथा च साधारणत्वान्नास्य वाचकत्वमित्याशयः। परिहरति **किमेतावतेति**। मास्तु तस्य वाचकत्वमित्यत आह **तथा चेति**। **ऐकपद्यमिति**। तथा च समासपदस्याप्येकपदत्वान्माधुर्यविशेषपदस्याप्येकपदत्वाद्वाचकत्वं सम्भवतीत्याशयः। ननु समासपदस्यैकपदत्वेऽपि न तस्य समुदायशक्तिः किन्तु प्रत्येकशक्तिरेव। लाघवात्। समुदायशक्तौ गौरवादित्यत आह **अथवेति**। सूदशास्त्रप्रसिद्धान् शब्दानुदाहरति **तथा चोक्तमिति**। विशदशब्देन क्षीरमाधुर्यं स्थिरशब्देनाज्यमाधुर्यं तीक्ष्णशब्देन गुडमाधुर्यं निर्हारिशब्देन पनसादिमाधुर्यमिति विवेकः। नन्वस्मदविदिता वाचकाः शब्दा न सन्त्येवेत्यत आह **तथा चेति**। ध्वनिविशेषाणां प्रत्येकं श्रुतिस्वररागादयः तद्वाचकाः शब्दा इत्यर्थः।

**श्रीनिधि०— शाब्दैरङ्गीकृतत्वादिति**। तथाच समासे सति एकपदत्वान्न काप्यनुपपत्तिरिति भावः। **तत्तदधिकृतशास्त्रेति**। सुधाद्यधिकारिकशास्त्रेत्यर्थः। **अतिप्रसङ्गः** = प्रसङ्गाबाधः।

**वा०चं०—** ननु माधुर्यादाववान्तरविशेषस्यैवाभावाद्भावे वा तस्य शब्दवाच्यत्वेऽप्यनुपपत्तेरभावाद्भावे वाऽलक्ष्यत्वस्यापि सम्भवेन तत्र व्यभिचारादिप्रसक्तेरभावादुत्तरभाष्यं व्यर्थमित्यतस्तत्प्रसक्तिं दर्शयति **नन्विति**।





**तद्वाचकशब्दाभावादिति** । माधुर्यादिविशेषशब्दस्य च साधारणत्वेन वाक्यत्वेन च अवाचकत्वादन्यस्य च अभावादित्याशयः । प्रशिथिलमूलो व्याप्तिरूपमूलशून्य इत्यर्थः । **यथोक्तमिति** । इक्ष्वादिमाधुर्यस्य यद्यपि महदन्तरं महान्विशेषो वर्ततेऽनुभवसिद्धत्वात् । तथाऽपि स भेदो विशेषः एवं रूप इति नाख्यातुं शक्यत इत्यर्थः । न केवलं माधुर्यादिविशेषे व्यभिचाराद्व्याप्तिशून्यत्वं प्रसङ्गस्य, किन्तु या चावाच्यस्य ब्रह्मणो लक्ष्यत्वानुपपत्तिस्त्वदभिमता साऽपि न । अवाच्यत्वेऽपि स्वप्रकाशतया लक्षणाप्रयोजकप्रतीत्युपपत्त्या ब्रह्मणो लक्ष्यत्वोपपत्तेः । न च अवाच्ये प्रतीतिमात्रेण न लक्ष्यत्वमिति वाच्यम् । माधुर्यादिविशेषवदेवोपपत्तेरित्युक्तानुपपत्तिपरिहारसम्भवाच्चायमप्रसङ्गः इत्याह **यथा चेति** । अत्र माधुर्यादिविशेषाणां वाच्यताया मूले प्रतिपादनेनोक्तोभयविधशङ्कापरिहारः सिद्ध्यतीत्याशयेन शङ्काग्रन्थे उभयनिवेश इति द्रष्टव्यम् । एतेन प्रकारान्तरेण प्रतीत्यनुपपत्तौ सत्यां वाच्यत्वस्याप्यभावस्यालक्ष्यत्वं प्रत्यापादकतयाऽभिमतत्वान्माधुर्यादिविशेषे प्रकारान्तरेण प्रतीतेः सत्त्वेन विशिष्टस्य तस्य न व्यभिचार इति शङ्काऽप्यपहस्तिता भवति । तर्हि ब्रह्मण्यपि प्रकारान्तरेण प्रतीत्युपपत्त्या विशिष्टस्य तस्यासिद्ध्यापत्तेरिति ।

शब्दार्थसम्बन्धस्य स्वाभाविकत्वात्सिद्धतया सदेति व्यर्थमित्यतस्तदर्थं दर्शयन्नन्वयं च दर्शयति **सदेतीति** । अवधारणलब्धमनुपपत्तिसमाधानं दर्शयितुमनुपपत्तिप्रकारं दर्शयति **नन्विति** । माधुर्यादिशब्दवन्माधुर्यादिविशेषशब्दस्य माधुर्यादिविशेषत्वेन रूपेण विशेषमात्रवाचकत्वेऽपि तत्तदवान्तरविशेषत्वाकारेण तद्वाचकत्वाभावात् तादृशवाचकविशेषाभावप्रसङ्गेनास्योदाहरणं युक्तम् । अन्यथा माधुर्यादिशब्द एव किं नोदाहृत इत्याशयः । माधुर्यत्वादिवन्न माधुर्यादिविशेषत्वमेकं सामान्यं येन माधुर्यादिशब्दतुल्यताऽस्य स्यात् । किन्तु गवादिशब्दवन्नानार्थ एवायं माधुर्यादिविशेषशब्दः । न चैकविशेषसमर्पकत्ववद्विशेषान्तरसमर्पकत्वस्यापि भावेन साधारण्यमभिमतं न त्वेकसामान्यावच्छिन्नवस्तुवाचकत्वमिति वाच्यम्, नानार्थगवादिशब्देऽपि सत्त्वेन तस्यावाचकत्वाप्रयोजकत्वात् । एवं च गवादिशब्दानां धेनुत्ववाक्त्वादिनानाप्रवृत्तिनिमित्तावच्छिन्नतत्तद्व्यक्तिविशेषवाचकत्ववन्माधुर्यादिविशेषशब्दस्याप्यनुभवसिद्धतत्तदवान्तरविशेषावच्छिन्नव्यक्तिविशेषवाचकत्वमेवेति नैतदुदाहरणस्यासङ्गतिरित्याह **किमेतावतेति** । **तथा चेति** । तादृशसामान्याभावेन तदवच्छिन्नवाचकत्वाभावाद्विशेषावच्छिन्नवाचकत्वस्याप्यभावेऽवाचकस्य लक्षकताऽपि न स्यादित्याशयः । नन्वस्यावाचकत्वं न साधारणत्वात्किं त्वपवादत्वात् । लक्षकता तु 'अर्धमन्तर्वेदि'(?) इत्यादौ दृष्टत्वाद्वाक्यरूपस्यापि तस्य युक्तेत्याशयेन शङ्कते **ननु चेति** । यद्वा । अवधारणनिवर्त्यमनुपपत्त्यन्तरं शङ्कते **नन्विति** । **ऐकपद्यमिति** । समर्थं समस्यत इत्युक्तम् । सामर्थ्यं च द्विविधम् । व्यपेक्षैकार्थीभावश्चेति । तत्कतरस्मिन्सामर्थ्ये समासो भवतीत्याशङ्क्योक्तमैकपद्यमिति । एकः सम्भिन्नस्वरूपः पांसूदकवदविभागापन्नोऽर्थः । पद्यते गम्यते येन तदेकपदं तस्य भाव ऐकपद्यम् । एकार्थीभाव इति यावत् । समासस्य समस्यमानस्य समाससंज्ञाया वा प्रयोजनं प्रयोजक इत्यर्थः । एकार्थीभावे समासः स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशात्परस्परसम्बन्धरूपायां व्यपेक्षायां तु वाक्यमिति भावः । ऐकपद्यमेकसुबन्तत्वं समाससंज्ञाप्रयोजनमित्यर्थ इति केचित् । तन्न । तस्य





प्रातिपदिकसंज्ञाप्रयोजनत्वात् । साऽपि समाससंज्ञयैव सम्पद्यत इति **चेन्न** । अर्थवत्प्रातिपदिकमित्येव तत्सिद्धेः । (अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दरूपं प्रातिपदिकसंज्ञं स्यात् । अर्थवदधातुः) प्रत्ययं प्रत्ययान्तं चेति । प्रत्ययस्यैव पर्युदासे कृत्तद्धितेति सूत्रेण कृत्तद्धितान्तस्य विधानं व्यर्थं स्यात् । न च तत्रापि तदन्तं न ग्राह्यमिति वाच्यम् । अर्थवदित्यनुवृत्ति-सामर्थ्यात् तदन्तग्रहात् । न चार्थवदित्यस्य पूर्वसूत्रे चरितार्थता । धातुप्रत्ययपर्युदासेनैव तल्लाभात् । तस्मात् प्रत्ययान्तं वर्जयित्वेत्युचितमेव । यदि तु प्रत्ययो न पर्युदस्येत तर्हि सात्पदाद्योरिति सूत्रे सादितिग्रहणं व्यर्थं स्यात् । अर्थवदिति किम् । धनं वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत् । अधातुरिति किम् । अहन् । लोपो मा भूत् । न च कार्यकालपक्षे प्रत्ययान्तत्वेन पर्युदासोऽस्त्विति वाच्यम् । प्रत्ययलक्षणेनोक्तपर्युदासाप्रवृत्तेर्माङि सम्बुद्ध्यो-रिति निषेधेन ज्ञापितत्वात् । कथमन्यथा राजेत्यादौ नलोपः स्यात् । अप्रत्ययः किम् । हरिषु । करोषि । अत्र सुप्सिपोर्मा भूत् । अप्रत्ययान्तः किम् । तत्रैव विभक्तिविशिष्टयोर्मा भूत्) । कृत्तद्धितेत्यत्र समासग्रहणं हि नियमार्थं न विध्यर्थमिति स्थितत्वात् । एकार्थीभाव एवैकपद्यम् । तच्च समासप्रयोजनमित्यपि न । एकार्थीभावस्य समासकरणत्वेन तत्प्रयोजनत्वाभावात् । ऐकस्वर्यमित्यपि प्रायिकम् । अन्वेतवै इत्यादौ तवैवान्तश्च युगपदिति द्वैस्वर्यविधानात् तस्मादेकार्थीभावे समासो व्यपेक्षायां वाक्यमित्येवार्थः । तथा चैकार्थत्वेन पदत्वस्य शाब्दैरुक्तत्वात् समासस्य वाक्यत्वाभावाद्वाचकत्वं युक्तमिति भावः । अनेकानुपपत्तिनिरासनिरपेक्षं पक्षान्तरमाह **अथवेति** । ननु कथमभिधानाद्यप्रसिद्धानां तेषां तद्वाचकतोक्तिरित्यतोऽसम्भावनां परिहरति **यथा चेति** । **तत्तदधिकृतेष्विति** । सूदादिशास्त्रेष्वित्यर्थः । यथा चेत्युक्तं दूषणं दृष्टान्ते वाच्यत्वोपपादनेन निरस्तमिति दार्ष्टान्तिके विशिष्य दूषणार्थमनुवदति **यदपीति** । **तदुपरिष्टादिति** । एतदधिकरणान्ते 'यदि तत्स्यादगोचरम्' इत्यादिना आचार्य एव निराकरिष्यतीत्यर्थः ।

**वा०र०— उभयनिवेश इति** । अन्यथापातप्रतीत्या व्यभिचारपरिहारपरत्वानुसारेण व्यभिचारमात्र-निवेशः स्यादिति भावः । एतेनेत्युक्तमेव दर्शयति **तर्हि ब्रह्मण्यपीति** । **असिद्ध्यापत्तेरितीति** शब्दस्य इत्यपहस्तिता भवतीति पूर्वेण सम्बन्धः । अर्धमन्तर्वेदीत्यादौ वाक्येऽपि लक्षणा दृष्टेति प्रमेयं जिज्ञासाधिकरण-टीकायां जिज्ञासाशब्दविचारावसरे स्पष्टम् । तथा यूपस्य वेदिरिति तृतीयसप्तमे अन्तर्वेदिबहिर्वेदिशब्दाभ्या-मन्तरालप्रदेशो लक्ष्यते । तत्रान्तराले मिनुयादित्यादेः प्रतिपादनात् वाक्येऽपि लक्षणासिद्धिरिति ज्ञातव्यम् । ऐकपद्यमैकस्वर्यं समासप्रयोजनमिति वाक्यं अव्ययीभावश्चेति सूत्रीयकौमुद्यां पठितं तच्छेष्यां व्याख्यातं प्रसादकृततद्व्याख्यानं च तत्रैव दूषितम् । तदनुसारेण व्याख्यानादिकं करोति **समर्थं समस्यत इत्युक्त-मित्यादिना** । सामर्थ्यविवरणमदृश्यत्वनये भविष्यति । काशिकायां तु 'स्वयं क्तेने'ति सूत्रे द्वितीयाद्यगततत्रेति-सूत्रे च 'ऐकपद्यमैकस्वर्यं च समासत्वाद्भवती'ति पठितम् । तन्मञ्जर्यप्यनुसृता । अधिकमव्ययं विभक्तीत्येत-त्सूत्रीयशेषी(?)स्थप्रतिपादनानुसारेण टीकायां प्रवर्तितमिति ज्ञेयम् । **सूदशास्त्रादीति** मूलम् । अनेन ते प्रसिद्धाश्च ते शब्दाश्च तच्छब्दा इति भाष्यं व्याख्यातं भवति ।





**स०व्र०— तदुपरिष्टान्निराकरिष्यत इति**। 'यदि तत्स्यादगोचरम्' इत्यादिनेति शेषः।

**विट्ठल०—** यद्यपि महदन्तरं महान् भेदो वर्तते। तथापि स भेदो नाख्यातुं शक्यते इति योज्यम्। **साधारणमिति**। तथा च साधारणेनानेन शब्देन कथम् इक्षुरसादिविशेषसिद्धिरतः तस्य लक्ष्यत्वमेवेति शङ्कितुरभिप्रायः। सामान्यवाचकस्यापि विशेषवाचकत्वमस्तीति समाधत्ते **किमेतावता इति**। बह्वर्थपरशब्दस्य तद्विशेषपरत्वाभावे बाधकमाह **न हीति**। स्वर्गेषु पशुयागाद्यनेकार्थस्य स्वर्गाद्यैकैकार्थलक्षकत्वमेव न वाचकत्वमित्यत आह **तथा चेति**। तदुपपादयति **वाच्यार्थद्वारत्वादिति**। प्रवाहवाचकस्यैव गङ्गापदस्य तद्वारा तत्सम्बन्धितीरलक्ष्यकत्वदर्शनात् कस्यापि वाचकत्वे गोपदस्य लक्ष्यकत्वमपि न स्यादिति भावः। **ऐकपद्यमिति**। तथा च माधुर्यविशेषादिशब्दानां समासत्वेऽप्येकपदत्वेन वाचकत्वाच्छब्दैरुदिता इत्येतद्युक्तमिति भावः। **उपरिष्टादिति**। विज्ञेयवाच्यलक्ष्यत्वेत्यस्य व्याख्यानावसरे अधिकरणान्त इत्यर्थः। वाक्यार्थ इति सर्वत्र वाक्ये वाक्यार्थो लक्षणया प्रतिपाद्य एवेति हि नोऽस्माकं स्थितिः सिद्धान्त इत्यर्थः।

**चषकः— प्रशिथिलमूल इति**। व्याप्यव्यापकभावानापन्नापाद्यापादकक इत्यर्थः। **ऐकपद्यमिति**। तथा च पाणिनीयैरनेकपदघटितसमास ऐकपद्यमप्यूरीकृतमिति भावः। पारिभाषिकपाणिनीयाद्यूरीकृतसामासिकैकपद्यस्य वाक्यस्य वाचकतायाः परीक्षकैरनङ्गीकृततया वाचकत्वौपयिकता नेत्यरुच्या कल्पान्तरमाश्रयते **अथवेति**। अनेकानुपपत्तिनिरासनिरपेक्षं पक्षान्तरमाह **अथवेति** इत्यप्यवतारितम्।

**॥ इति माधुर्यादिविशेषाश्च माधुर्यादिशब्दैरुदिता एव ॥**

* * *

**॥ अथ वाक्यार्थोऽपि वाक्यार्थशब्देनैवोदितः ॥**

**८८ सु०— नन्ववाच्योऽपि नदीतीरफलसंसर्गलक्षणो वाक्यार्थो लक्ष्यो नद्यादिपदैरुपलक्ष्यते। यथोक्तम् 'वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नः स्थितिः।' इति। तथा च व्याप्त्यभावादप्रयोजकोऽयं प्रसङ्गः। वाक्यार्थश्च ब्रह्माभ्युपेयते न पदार्थः। अतो लौकिकवाक्यार्थवदवाच्यमपि लक्ष्यं किं न स्यादित्यत आह वाक्यार्थोऽपीति।**

## अनु०— वाक्यार्थोऽपि हि वाक्यार्थशब्देनैवोदितो भवेत्।

**एवशब्दस्योदित इति (अनेन) सम्बन्धः। वाक्यार्थशब्दस्य वाक्यार्थावाचकत्वेऽन्यत्तद्वाच्यं वाच्यम्। न ह्यस्माभिर्लक्षकेनैव शब्देन वाच्यत्वमाशास्यते, किन्तु**





**केनचिच्छब्देन वाच्यमेव केनचिच्छब्देन लक्ष्यमिति भावः । अयं चाङ्गीकारवादो ज्ञेयः, अन्विताभिधानस्य समर्थितत्वात् । ब्रह्मणो वाक्यार्थत्वं तु संसर्गत्वस्य संसृष्टत्वस्य वाऽनङ्गीकारादयुक्तम्, वाक्यस्याखण्डार्थनिष्ठताया निरस्तत्वात् (इति) ।**

**परि०**— **वाक्यार्थ इति** । 'नदीतीरे पञ्चफलानि सन्ति' इति वाक्यार्थ इत्यर्थः । **अयं चेति** । 'नदीतीरे पञ्च फलानि सन्ति' इति वाक्यार्थो नद्यादिपदैर्लक्ष्यत इति वाद इत्यर्थः । **समर्थितत्वादिति** । 'शक्तिश्चैवान्विते स्वार्थे' इत्यादिना जिज्ञासाधिकरणे पदानामेव पदार्थेऽन्वयरूपवाक्यार्थे च शक्तेः प्रतिपादितत्वादित्यर्थः । वाक्यार्थश्च ब्रह्माभ्युपेयत इत्युक्तं निराह **ब्रह्मण इति** । **अनङ्गीकारादिति** । अखण्डत्वभङ्गभियेति भावः । ननु वाक्यार्थो न संसर्गरूपो न संसृष्टरूपश्च किन्त्वखण्ड एवातो न दोष इत्यत आह **वाक्यस्येति** । जन्मादिसूत्रे निरस्तत्वादिति भावः ।

**यादु०**— वाक्यादेव लक्षणया वाक्यार्थबोध इति वदतां मीमांसकैकदेशिनां मतमाश्रित्य तत्र व्यभिचारमाशङ्कते **नन्ववाच्योऽपीत्यादिना** । ननु नदीतीरफलसंसर्गलक्षणो वाक्यार्थः, वाक्यार्थपदवाच्योऽपि नद्यादिपदैर्न वाच्यः, किन्तु लक्ष्य एवातो न व्यभिचारपरिहार इत्यत आह **न ह्यस्माभिरिति** । **अन्विताभिधानस्येति** । तथा च शक्त्यैवान्वयबोधोपपत्तौ तदर्थं लक्षणाङ्गीकारो न युक्त इति भावः । **समर्थितत्वादिति** । 'शक्तिश्चैवान्विते स्वार्थे' इत्यत्रेति शेषः । ननु संसर्गादिरेव न वाक्यार्थः । प्रकृष्टादिवाक्येऽखण्डचन्द्रादिस्वरूपस्यापि वाक्यार्थत्वदर्शनात् । तथा प्रकृतेऽखण्डरूपतया ब्रह्मणोऽपि वाक्यार्थत्वमस्त्वित्यत आह **वाक्यस्याखण्डार्थनिष्ठताया इति** । **निरस्तत्वादिति** । द्वितीयाधिकरण इति शेषः ।

**वं०प०**— **अयं चेति** । इतरपदार्थसंसर्गरूपवाक्यार्थस्य पदलक्ष्यत्वमङ्गीकृत्य समाधिरङ्गीकारवाद इत्यर्थः ।

**आनन्दः**— अन्यत्रापि व्यभिचारं शङ्कते **नन्ववाच्य इति** । नो मते । ननु तर्हि ब्रह्मणः पदार्थत्वान्न लक्ष्यत्वमित्यत आह **वाक्यार्थश्चेति** । सत्यज्ञानादीति शेषः । नद्यादिफललक्ष्यस्य कथं न वाच्यत्वमित्यत आह **न हीति** । ननु वाक्यार्थोतद्यादिपदलक्ष्य इत्येतदयुक्तम् । अन्विते शक्त्यङ्गीकारेण वाक्यार्थस्यापि शक्यत्वादन्वयस्यैव न वाक्यार्थत्वादित्यत आह **अयं चेति** । ब्रह्मापि वाक्यार्थत्वाल्लक्ष्यमित्युक्तमित्यत आह **ब्रह्मण इति** । अन्यथा सखण्डत्वादिति भावः । ननु संसर्गो वा संसृष्टाः पदार्था एव वा वाक्यार्थ इति नाङ्गीक्रियते । किन्तु अखण्डत्वमेव तदर्थ इत्यत आह **वाक्यस्येति** । सत्यज्ञानादिकेप्येवमित्यत्रेत्यर्थः ।





**श्रीनिधि०— लौकिकवाक्यार्थवदिति** । नदीतीरफलसंसर्गादिवदित्यर्थः । ननु वाक्यार्थस्य वाक्यार्थं पदवाच्यत्वेऽपि लक्ष्यकपदवाच्यत्वं नास्त्येव । एवं च तदवाच्यस्यापि तल्लक्ष्यत्वं दृष्टमेवेत्यत आस्तां उन्माद इत्याह **न ह्यस्माभिरिति** ।

**वा०चं०—** भट्टवार्तिकसम्मतिमाह **यथोक्तमिति** । 'न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः' इति पूर्वार्धोक्तं पदानां वाक्यार्थबोधकत्वरूपं सामर्थ्यमुपपादयितुं लोकवेदयोर्वाक्यार्थस्य पदलक्ष्यत्वमुत्तरार्धेन अनेनोच्यते । न केवलमुत्तरमूलं वाक्यार्थे व्यभिचारशङ्कानिवर्तकं किन्तु वाक्यार्थन्यायप्राप्ताप्रयोजकत्व-शङ्कान्तरनिवर्तकं चेत्याशयेनाह **वाक्यार्थश्चेति** । एतेन वाक्यार्थस्य अवाच्यस्य लक्ष्यत्वेऽपि पदार्थभूतब्रह्मणो नावाच्यस्य लक्ष्यत्वम् । तथा च पदार्थत्वविशिष्टावाच्यत्वरूपापादकस्य न व्यभिचार इति शङ्काऽप्यपहस्तिता भवतीति द्रष्टव्यम् । ननु वाक्यार्थस्य वाक्यार्थशब्दवाच्यत्वं कुतः । तथात्वेऽपि वाक्यगतपदवाच्यत्वं तु नैव प्राप्तमित्ययुक्तमेतदित्यत एवकारसूचितं भावमाह **वाक्यार्थशब्दस्येति** । वाक्यार्थश्च ब्रह्माभ्युपेयत इति द्वितीयदूषणं दृष्टान्ते वाच्यत्वोक्त्या निरस्तमपि दार्ष्टान्तिके विशिष्यदूषणेन निराकरोति **ब्रह्मण इति** ।

**वा०र०— भट्टवार्तिकेति** । . . . . . . स्थलीयेति शेषः । उत्तरार्धमात्रस्यापेक्षितार्थसमर्पकत्वात् पूर्वार्धमुदाहृत्य योजयति **न विमुञ्चतीत्यादिना** । एतद्विशेषतो व्याख्येयमस्ति ।

**स०व्र०—** ननु न संसर्गादिरेव वाक्यार्थत्वम् । प्रकृष्टादिवाक्येऽखण्डचन्द्रादिस्वरूपस्यापि वाक्यार्थत्व-दर्शनात् । प्रकृते ब्रह्मणोऽप्यखण्डतयाऽस्तु वाक्यार्थत्वमित्यत आह **वाक्यस्याखण्डार्थताया इति** ।

**विठ्ठल०—** तथापि न वाक्यार्थस्य वाक्यवाच्यत्वमित्यत आह **नास्माभिरिति** । **अयं चेति** । नदीतीरे पञ्चफलसंसर्गरूपवाक्यार्थो नद्यादिपदैर्लक्ष्यत इति वादे इत्यर्थः । **अन्विताभिधानस्येति** । अन्योन्यान्विता-र्थानामेव संसर्गापरनामकपदार्थान्वयस्य वाक्यार्थत्वात् पदानाम् अन्वितार्थाभिधायकत्वस्योपपादितत्वा-दित्यर्थः । परेणाङ्गीकृतब्रह्मणो वाक्यार्थत्वं न च युक्तमित्याह **ब्रह्मेति** । ब्रह्मणो निर्विशेषत्वेन संसर्गसंसृष्टत्वयोः तत्रानङ्गीकारादिति भावः । ननु न संसर्गादिर्वाक्यार्थः । नदीतीरपञ्चफलासंसर्गव्यावृत्तिद्वारा लक्ष्यमाणाखण्डार्थ एवेत्यत आह **वाक्यस्य इति** ।

**चषकः—** ननु स्वबोध्यसम्बन्धोपलक्षणेत्यभिदधानानां मीमांसकानां मते गभीरायां नद्यां घोष इत्यादौ गभीरायां नद्यामित्यस्यैव गभीरनदीतीरे लक्षणोपगमात्प्रकृतेऽपि तद्दिशा सामञ्जस्यमित्याशङ्कते **नन्विति** । भट्टानां वार्तिकं प्रमाणयति **यथोक्तमिति** । 'न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः' इति पूर्वार्धाभिहितं,





पदानां वाक्यार्थबोधकत्वरूपसामर्थ्योपपादनाय लोकवेदयोर्वाक्यार्थस्य पदलक्ष्यत्वं, उत्तरार्धेन अनेनाभिधीयत इति हृदयम् । **समर्थितत्वादिति** । 'शक्तिश्चैवान्विते स्वार्थे' इत्यत्रेत्यादिः । तथा चान्वयोऽपि शक्य एवेति भावः । **निरस्तत्वादिति** । जन्मादिनय इत्यादिः । प्रकृष्टप्रकाशश्चन्द्र इत्यादावप्यखण्डार्थनिष्ठत्वं न सम्प्रतिपन्नमिति भावः ।

**॥ इति वाक्यार्थोऽपि वाक्यार्थशब्देनैवोदितः ॥**

* * *

**॥ अथ तस्मात् अवाच्यं न किमपि ॥**

८९ **सु०— एवं व्यभिचारं निरस्य सुस्था प्रसङ्गमूलभूता व्याप्तिरित्याह नावाच्यमिति ।**

## अनु०— नावाच्यं तेन किञ्चित्स्यात्

**लक्ष्यमिति शेषः ॥ अथवा ब्रह्मणोऽवाच्यत्वे तस्य वस्तुत्वमेव न स्यात् । यतोऽवाच्यं किञ्चिदपि नास्ति इति प्रसङ्गान्तरसूचनमिदम् ।**

**वं०प०— यतोऽवाच्यमिति** । यस्मात्कारणाद्यत्किञ्चिदवाच्यं तत्सर्वं नास्ति । अत्यन्तासदवस्त्विति यावत् । यथा शशविषाणमित्यर्थः ।

**आनन्दः**— ननु नावाच्यं तेनेति वाक्यमयुक्तम् । व्याप्त्युपपादनस्य पूर्ववाक्येनैव कृतत्वादित्यत आह **एवं व्यभिचारं निरस्येति** । व्यभिचारे परिहृते व्याप्तिः सुस्थेति सिद्धमेव । तत्किमर्थं पुनर्वचनमत्राह **अथवेति** ।

**वा०चं०**— एवं तेनेत्येतत्स्वारस्यानुरोधेन लक्ष्यमित्यध्याहृत्य मूलमुपसंहारपरतया व्याख्याय इदानीं किञ्चिच्छब्दस्वारस्यानुरोधाद्विशेषार्थलाभाच्च अतिप्रसङ्गान्तरसूचकतयाऽपि तद्व्याख्याति **अथवेति** ।

**विट्ठल०— लक्ष्यमिति शेष इति** । तथा चावाच्यं किञ्चिदपि लक्ष्यं न स्यादिति मूलयोजना । प्रसङ्गानां च इति लक्ष्यत्वं न स्यादित्येकः अनवस्थारूपोऽपरः वस्तुत्वमेव न स्यादिति तृतीयः । अतो बहुवचनं युक्तम् ।

**॥ इति तस्मात् अवाच्यं न किमपि ॥**

* * *





**।। अथ 'यतो वाचो निवर्तन्ते' इत्याद्यागमैर्वाच्यमेव कथमवाच्यं ब्रूयात् ।।**

**९० सु०— ननु 'यतो वाचो निवर्तन्ते' इत्याद्यागमविरोधात्कालात्ययापदिष्टमीक्षणीयत्वेन वाच्यत्वसाधनम् । प्रसङ्गानां च विपर्ययापर्यवसानमिति ।। स्यादेतदेवम्, यदि ब्रह्मावाच्यत्वं श्रुत्यर्थः स्यात्, न चैवम्, तथा व्याख्याने स्वक्रियाविरोधापत्तेरित्याह यत इति ।**

**अनु०— यत इत्यादिकैर्वदन् ।।**
**अवाच्यत्वं कथं ब्रूयान्मूकोऽहमितिवत्सुधीः ।**

**यत इत्यादिशब्दैर्ब्रह्मोक्त्वा (हि) तस्यावाच्यत्वं वाच्यम्, अन्यथा यस्यकस्यचिदवाच्यताऽऽपत्तेः । तथा च यत इत्यादिकैः (शब्दैः) पदैर्ब्रह्मैव वदन्कथं पुनस्तस्यावाच्यत्वं श्रुत्यर्थतया ब्रूयात् । मूकोऽहमितिवत्स्वक्रियाविरोधात् । सुधीरिति विपरीतलक्षणया परस्याकोविदत्वमाह ।**

**यादु०— प्रसङ्गानां चेति** । लक्ष्यत्वं न स्यादित्येकः प्रसङ्गः । अनवस्थारूपो द्वितीयः । वस्तुत्वमेव न स्यादिति तृतीयः । अतो बहुवचनमिति द्रष्टव्यम् ।

**आनन्दः— तथा व्याख्याने इति** । अवाच्यत्वपरतया व्याख्यान इत्यर्थः । ननु ब्रह्मणो वाच्यत्वमङ्गीकृत्य तन्निषेधे स्वक्रियाविरोधः स्यात् । न चैवं मया वाच्यत्वानङ्गीकारादित्यत आह **यत इत्यादीति** । विरुद्धभाषिणः सुधीशब्दप्रयोगो न युक्त इत्यत आह **सुधीरितीति** । मूर्खे योग्यशब्दवदिति भावः ।

**श्रीनिधि०— ब्रह्मैव वदन्निति** । वचनवृत्त्या प्रतिपादयन्नित्यर्थः ।

**वा०चं०—** ननु यत इत्यादिकैरित्युत्तरभाष्यमुक्तार्थोपपादनाभावाद्व्यर्थम् । न च परोक्तावाच्यत्वसाधकश्रुतिनिरासार्थत्वान्न तद्वैयर्थ्यमिति वाच्यम् । स्वपक्षसाधकानामद्याप्यसमाप्ततया तन्निरासानवसरात् 'अद्भुतत्वादवाच्यं तत्' इत्यादिनाऽर्थान्तरकथनेन निरसिष्यमाणत्वाच्च, वदन् ब्रूयादित्यादिना वादिदूषणस्यैव प्रतीयमानतया साधकनिरासादर्शनाच्चेत्यतोऽस्मदुक्तसाधकविघटनाय परोपन्यस्तश्रुतेस्तदभिमतार्थे दूषणोद्भावनेन तद्विघातकत्वाभावप्रतिपादनार्थत्वात् श्रुत्यर्थतया तथा व्याख्यातृदोषाभिधानमुखेन तस्य श्रुत्यर्थत्वाभावस्यैव प्रतिपादनान्न काऽप्यनुपपत्तिरित्याशयेन तद्वाक्यमवतारयति **नन्विति** । ननु यत इत्यादिशब्दैर्ब्रह्मण उक्ते-





रनावश्यकत्वान्न स्वक्रियाविरोध इत्यतो भाष्यकारेण वदन्निति सिद्धवदुक्त्या सूचितं तदनुक्तौ बाधकं वक्तुमाह **यत इत्यादिशब्दैरिति**। श्रुत्यर्थतयेत्युक्त्या श्रुत्यर्थत्वनिरासस्य भाष्यारूढतासूचनेनासङ्गतिः परिहृता भवति। दृष्टान्तोक्त्या स्पष्टलब्धदूषणप्रदर्शनं **स्वक्रियेति**। यद्यस्य दूषणपरता तर्हि सुधीरित्येतद्विरोध इत्यत आह **सुधीरिति**।

वा०र०— **अर्थान्तरेति**। तन्निरासेत्यतो बुद्ध्या विवेकेन तस्या इति वर्तते। **प्रतिपादनार्थत्वादिति**। उत्तरभाष्यवाक्यस्येति योज्यम्। **तथेति**। पराभिमतवाच्यत्वपरतयेत्यर्थः। **तस्येत्यस्य** अवाच्यत्वस्येत्यर्थः। **प्रतिपादनादिति**। तत्रेति शेषः। तस्य चोत्तरभाष्यवाक्य इत्यर्थः।

चषकः— **प्रसङ्गानां चेति**। लक्ष्यत्वाभावानवस्थावस्तुत्वाभावापाद्यकापत्तीनामित्यर्थः।

**॥ इति 'यतो वाचो निवर्तन्ते' इत्याद्यागमैर्वाच्यमेव कथमवाच्यं ब्रूयात्॥**

* * *

**॥ अथ लक्ष्यशब्देनापि तु वाच्यत्वमङ्गीकार्यमेव॥**

९१ **सु०— स्यादेवं स्वक्रियाविरोधो यदि यत इत्यादिशब्दैर्ब्रह्म वचनवृत्त्योक्त्वा तस्यावाच्यत्वमुच्यते (च्येत)। न त्वेवम्, किं नाम यत इत्यादिशब्दैर्लक्ष्यमेव, इत्यतः क्वास्ति स्वक्रियाविरोध इत्यत आह येनेति।**

## अनु०— येन लक्ष्यमिति प्रोक्तं लक्ष्यशब्देन सोऽवदत्॥

**ब्रह्म लक्ष्यमिति वदताऽपि लक्ष्यशब्दवाच्यत्वं तस्याङ्गीकर्तव्यम्, तथा च किं शब्दान्तरेणापराद्धम्। अथ लक्ष्यशब्देनापि लक्ष्यते न तूच्यत इति ब्रूयात् तदा किं तदित्यपेक्षायां शब्दान्तरं ब्रूयादित्यनवस्था स्यात्।**

**अथ यावत्पदजातं ब्रह्मणि प्रयुज्यते तत्सर्वमपि लक्षणयैवेति परिहारे कुतोऽनवस्थेति चेन्न, अनवबोधात्, न हि प्रश्नपरिहारक्रमनिमित्तेयमनवस्था येन सकृदेवोत्तरेण निवर्तेत किन्तु लक्षणायाः प्रतीतिपूर्वकत्वाच्छब्देन विना प्रत्यायकान्तराभावात्तत्रापि लक्षणाऽऽश्रयणे मूलक्षयात्।**





**अतः स्वक्रियाविरोधान्नेदं श्रुतिव्याख्यानमिति नानुमानादेः कश्चिद्दोषः।**

**अविरुद्धं तु व्याख्यानमुत्तरत्र करिष्यत इति।**

**परि०— उत्तरत्रेति**। 'अद्भुतत्वादवाच्यम्' इत्यत्रेत्यर्थः।

**गु०दी०— तदा किं तदित्यपेक्षायां** शब्दान्तरं ब्रूयादित्यनवस्था स्यादित्युपलक्षणम्। लक्ष्याशब्दादि-पदैरपि ब्रह्मणो लक्ष्यत्वे लक्ष्यत्वाशब्दत्वादिरूपमुख्यार्थस्यापि बाधो वाच्यः। तथा च लक्ष्यत्वाभावे वाच्यत्वमेव प्राप्तम्। अशब्दत्वाभावे च 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत' इति सुतरां सशब्दत्वमागतमिति त्वदुक्तश्रुतिरेव वाच्यत्वसाधिका स्यात्। तत्पदवाच्यत्वे तु तेनैव वाच्यत्वसिद्धिरिति 'उभयतः पाशारज्जुः' इत्यपि द्रष्टव्यम्।

**यादु०— उत्तरत्रेति**। 'अद्भुतत्वादवाच्यं तत्' इत्यत्र इत्यर्थः।

**वं०प०— तत्रापि** प्रत्यायकशब्दान्तरेऽपि पुनर्ब्रह्मणि लक्षणात्वाश्रयण इत्यर्थः। **मूलक्षयादिति**। एवं लक्षणापरम्पराश्रयणे तत्रैव कालपर्यवसानापत्त्या मूलभूताया ब्रह्मशब्दलक्षणायाः कर्तुमवकाशाभावेन मूलक्षय-करत्वादनवस्थादूषणमेवेत्यर्थः। परम्पराऽनङ्गीकारे मूलक्षयप्राप्त्या अनवस्थादूषणमित्यर्थ इत्यप्याहुः। ननु 'यतो वे'त्यादिश्रुतेर्मदीयव्याख्यानं स्वक्रियाविरुद्धं चेत् किं तर्ह्यविरुद्धं व्याख्यानमित्यत आह **अविरुद्धं त्विति**।

**आनन्दः—** नन्ववाच्यत्वस्य दूषितत्वाद्वाच्यत्वाविरोध्यर्थान्तराभावान्निरर्थकत्वेन श्रुत्यप्रामाण्यमित्यत आह **अविरुद्धमिति**।

**श्रीनिधि०— अनवबोधादिति**। भावस्येति शेषः। न हि प्रश्नपरिहारक्रमनिमित्तेति कतिभिः पदैः लक्ष्यम्। ब्रह्म अनेन लक्ष्यं वा अनेन लक्ष्यं वा अनेनं लक्ष्यं वेति प्रश्ने तत्परिहारे प्राप्तानित्यर्थः। **उत्तरत्रेति**। अद्भुतत्वादवाच्यं तत् अतर्क्यज्ञेयमेव चेत्यत्रेति भावः।

**वा०चं०—** यत्किञ्चिच्छब्दलक्ष्यत्वस्य स्वक्रियाविरोधाशामकत्वेन परेणावक्तव्यत्वाद्येन लक्ष्यमित्येतद्यत इत्यादि शब्दविषयमिति दर्शयंस्तेनोक्तदूषणपरिहारं च दर्शयंस्तन्निवर्तकतयोत्तरमूलमवतारयति **स्यादेवमिति**। एवं तर्ह्यन्यथा यस्यकस्यचिदवाच्यत्वापत्तेरिति बाधकमुक्तमेवेत्याशङ्कते **किं नामेति**। **यत इत्यादिशब्दैरिति**। शक्त्या ब्रह्मानुक्तावपि लक्षणया तदुक्तेर्नोक्तं बाधकमिति भावः। नन्वस्तु लक्ष्यशब्दवाच्यत्वं तथाऽपि यत इत्यादिशब्दावाच्यत्वान्न तदुपजीवनेन प्रवृत्तः स्वक्रियाविरोध इत्यतो लक्ष्यशब्दवाच्यत्वं वदतो भाष्यकारस्य न तावन्मात्रे तात्पर्यं येन स्वक्रियाविरोधो नोपपादितः स्यादपि तु लक्ष्यशब्दवाच्यत्वं वदतो भाष्यकारस्य न तावन्मात्रे तात्पर्यं येन स्वक्रियाविरोध इत्याशयेनाह **तथा चेति**। अत्र भाष्यकारेण लक्ष्यशब्दवाच्यत्वपक्षं





सिद्धवत्कृत्वोक्तं स्वक्रियाविरोधमुपपादयितुं पुनःपुनर्लक्षणायामपि स्यादनवस्थितिरि'ति भक्तिपादीयां 'किं तदि'त्यव्यवहितपूर्वां वाऽनुव्याख्यां मनसि निधाय लक्ष्यशब्दलक्ष्यत्वपक्षं दूषयितुमनुवदति **अथेति** । किं तदित्यनवस्थितिरित्याद्यनुव्याख्याऽभिप्रेतानवस्थाप्रकारं पूर्वदर्शितमपि स्पष्टं दर्शयितुं तदनवबोधनिमित्तक-भ्रान्तिप्रयुक्तपरकीयानवस्थापरिहारप्रकारं शङ्कते **अथेति** । एवं च लक्ष्यशब्दलक्षणापक्षस्यानवस्थादोषदुष्टतया तद्वाच्यत्वपक्षेऽभ्युपगमनीये समानन्यायतया यत इत्यादिशब्दवाच्यताप्रास्त्या स्वक्रियाविरोधसिद्धिरित्युप-संहरंस्तत्फलं दर्शयति **अत इति** । अर्थान्तराभावेन श्रुत्यप्रामाण्यापत्त्या स्वक्रियाविरोधः कथञ्चिदुभयसमाधेय इत्यत आह **अविरुद्धं त्विति** ।

**विठ्ठल०**— ननु किं लक्ष्यमित्युक्ते शब्दान्तरमुक्त्वा तेनापि शब्देन किं लक्ष्यम् इति पृष्टे पुनः शब्दान्तर-मुच्यत इत्येवं परम्परा नाश्रीयते । अतो नानवस्थेत्याशङ्क्य समाधत्ते **अथ यावदिति** । कथं तर्ह्यनवस्थेति शङ्कते **किन्तु इति** । परिहरति **लक्षणाया इति** । स्वरूपतो अवगतमेव तीरादिकं लक्ष्यं दृष्टं नानवगतस्वरूपं कूर्मरोमा-दीत्युक्तं न्यायेन सर्वत्र लक्षणाया लक्ष्यार्थप्रतीतिपूर्वकत्वात् प्रकृते लक्ष्यत्वेनाभ्युपगतब्रह्मणो लौकिकत्वेन प्रत्यक्षादिप्रत्यायकान्तराभावेन, शब्देनैव, तत्प्रतीतिरिति तस्मिन्नपि शब्दे लक्ष्यत्वाश्रयणे तत्रापि लक्ष्यार्थप्रतीतये शब्दान्तरं तत्रापि लक्षणाश्रयणेऽनवस्थया सर्वथा लक्ष्यार्थप्रतीत्ययोगेन मूलभूतलक्षणाया एवासिद्धेरिति भावः । **नेदं श्रुतिव्याख्यानमिति** । यतो वेत्यादिश्रुतेरुक्तव्याख्यानायोगेनाबाधकत्वान्न तद्विरोधेन लक्ष्यत्वाभाव-साधकानुमानस्योक्तप्रसङ्गानां च कालात्ययापदिष्टत्वं विपर्ययापर्यवसानं चेति भावः । **उत्तरत्र** = अद्भुतत्वा-दवाच्यं तदित्यत्रेत्यर्थः ।

**चषकः**— **उत्तरत्रेति** । 'अद्भुतत्वादवाच्यं तत्' इत्यत्र इत्यर्थः ।

**॥ इति लक्ष्यशब्देनापि तु वाच्यत्वमङ्गीकार्यमेव ॥**

* * *

**॥ अथ इतश्च ब्रह्मणि श्रुतानां सर्वशब्दानां लक्षणाश्रयणं न युक्तम् ॥**

**९२ सु०— इतश्च न ब्रह्मणि श्रुतानां वैदिकानां सर्वशब्दानां लक्षणाश्रयणं युक्तमित्याह एकस्यापीति ।**

**अनु०— एकस्यापि हि शब्दस्य गौणार्थस्वीकृतौ सताम् ।**
**महती जायते लज्जा यत्र तत्राखिला रवाः ॥**

**अमुख्यार्था इति वदन्यस्तन्मार्गानुवर्तिनाम्।**
**कथं न जायते लज्जा वक्तुं शाब्दत्वमात्मनः ॥**

यत्र वेदे **सतां** विदुषामेकस्यापि शब्दस्य मुख्यार्थपरित्यागेनामुख्यार्थस्वीकृतौ कृतायां (सत्यां) महती लज्जा जायते, तत्राखिला अपि शब्दा अमुख्यार्था इति वदन्यस्तस्यात्मनः शाब्दत्वं शब्दशक्तितात्पर्यज्ञत्वं वक्तुं कथं लज्जा न जायते । केभ्यस्तन्मार्गानुवर्तिनां शब्दशक्तितात्पर्यानुसारिणां विदुषां सकाशादिति योजना ॥ तस्य व्याख्यातुर्मार्गमनुवर्तमानानां (च) कथं न जायते लज्जेति वा । तथा सत्यात्मना-मिति बहुवचनान्तं पदमध्याहार्यम् ।

ननु न तावन्मुख्यार्थपरित्यागेनामुख्यार्थस्वीकार एव लज्जाहेतुः, तथा सति 'गङ्गायां घोषः', 'कुण्डपायिनामयने मासमग्निहोत्रं जुहोति' इत्यादावमुख्यार्थग्रहणाभाव-प्रसङ्गात्, किं नाम मुख्यार्थे सम्भवत्येवामुख्यार्थस्वीकारो दोषः । मुख्यार्थो हि शक्तिग्रहणवशात्प्रथमं बुद्ध्यारूढो भवति । विना च प्रथमातिक्रमे कारणं जघन्यप्रति-पत्तिस्वीकारे कथमनौचित्यं न भवेत् । यत्र तु मुख्यार्थे बाधकमस्ति तत्र तदपरित्याग एव लज्जाहेतुः । 'गङ्गायां घोषः', 'सिंहो देवदत्तः' इत्यत्र गङ्गादिशब्दस्य मुख्यार्थाङ्गी-कार(स्य) एव दोषः (दुष्टत्वदर्शनात्) । तत्कथमेतत् । सत्यमेवैतत् । प्रकृतेऽपि न मुख्यार्थस्वीकारे बाधकमस्तीत्याचार्यो मन्यते, बाधिकायाः श्रुतेर्निर्गुणत्वोपपत्तेश्च निरस्तत्वादिति ।

**परि०— कुण्डपायिनामयन इति** । कुण्डपायिनामयनं नाम कश्चित्सत्रयागः । तत्रैकमासं क्रियमाणकर्मविशेषस्याग्निहोत्रमिति नाम, अग्निहोत्रमिवाग्निहोत्रमिति गौणमित्युक्तं पूर्वतन्त्रे 'उक्तं क्रियाभिधानं तत् श्रुतावन्यत्र विधिप्रदेशः स्यात्' इति सप्तमाध्यायतृतीयपादीयाद्यनये । तथा च अग्निहोत्रपदेन मुख्यार्थनित्याग्निहोत्रत्यागेन गौणार्थग्रहणं तत्र न स्यादित्यर्थः। (**एवमेवेति**। निष्कारण-मेवेत्यर्थः।) दोष इत्युक्तं व्यनक्ति **मुख्यार्थो हीति**। **दुष्टत्वदर्शनादिति**। घोषानन्वयत्वरूपदुष्टत्वेत्यर्थः। **श्रुतेरिति**। 'यतो वाच' इत्यादिश्रुतेः 'यत इत्यादिकैर्वदन्' इत्यादिना निरस्तत्वात्। अवाच्यत्वसाधक-निर्गुणत्वरूपोपपत्तेश्च जन्मादिसूत्रे निरस्तत्वादित्यर्थः।





**गु०दी०—— कुण्डपायिनाम्** इत्यत्र कुण्डसम्बन्धिसोमपायिनामित्यङ्गीकाराल्लक्षणेत्यर्थः । **न मुख्यार्थ-स्वीकारे बाधकमसतीत्याचार्यो मन्यत** इत्युपलक्षणम् । कदाचित् क्वचित् गङ्गायां घोष इत्यादिप्रयोगे लज्जा-भावेऽपि सर्वाण्यपि वाक्यान्यप्येवं प्रयुञ्जतां तेषामपि कथं न लज्जा । सकलवैदिकपदमीमांस्यतयाऽङ्गीकृते ब्रह्मणि यत्किञ्चित्पदस्यागत्या लक्षणाङ्गीकारेऽपि सकलवैदिकपदानां लक्षणैवेत्यङ्गीकारः बहुतरभक्ष्यभोज्यादिबुभुक्षया-ऽऽगतस्य जलपानमात्रेण निवृत्तिवत्कथं न लज्जाहेतुः । किञ्च तथासति सत्यनिर्गुणनिर्विशेषादिपदानां मुख्यार्थ-बाधद्वारकलक्षणाङ्गीकारे स्वाभिलषितसत्यत्वनिर्गुणत्वादेरप्यसिद्ध्या च कथं न लज्जेत्यपि द्रष्टव्यम् ।

**यादु०—— कुण्डपायिनामयन इति** । कुण्डपायिनामयनाख्ये सत्रे 'मासमग्निहोत्रं जुहोति' इति श्रूयते । इदं नित्याग्निहोत्रात्कर्मान्तिरपरमेवेति तृतीये स्थितम् । तत्रैवान्या चिन्ता । किमग्निहोत्रशब्दो नित्याग्निहोत्र-धर्मानिहातिदिशेन्न वेति । तत्र यद्ययं गौणः स्यात्तदाऽग्निहोत्रवज्जुहोतीत्यतिदिशेद्धर्मान् । न स्वयं गौणः । जुहोतिसामानाधिकरण्यस्यात्रापि तुल्यत्वेन नामधेयत्वात् । अग्निदेवताविधानार्थत्वाद्वा । अतो नातिदिशेदिति प्राप्ते सिद्धान्तः—— न तावदत्राग्निर्देवता विधातुं शक्या । प्रकृतिविकारभावाभावेन चतुर्थीसमासासम्भवात् । तत्र सिद्धे कर्मभेदेऽनेकार्थत्वस्यान्याय्यत्वात्, एकत्राग्निहोत्रशब्दो मुख्यः अन्यत्र गौणोऽङ्गीकार्यः । नित्याग्निहोत्रे च नामप्रवृत्तिनिमित्तस्याग्निदेवतासम्बन्धस्य भावात्तत्रैव मुख्यता । अतः परशब्दः परत्र मुख्यसादृश्यमुपादाय प्रवर्तते । तत्सिद्ध्यर्थं नित्यधर्मानतिदिशेदिति । सप्तमेऽत्रत्याग्निहोत्रशब्दो गौण इति समर्थितम् । तदपि न ग्राह्यं स्यादित्यर्थः । आदिपदात् 'सोमेन यजेत' इत्यादौ मत्वर्थलक्षणाऽपि न ग्राह्या स्यादिति ग्राह्यम् । **निरस्तत्वादिति** । प्रथमाधिकरणे श्रुतेर्द्वितीयाधिकरणे निर्गुणत्वस्य निरस्तत्वादित्यर्थः ।

**वं०प०—— तस्य व्याख्यातुरिति** । इति वदन्यस्तस्य व्याख्यातुः सङ्करस्य मार्गमनुवर्तमानाना-मित्यर्थः । तन्मार्गानुवर्तिनामित्यस्य विशेषणस्यापेक्षितं विशेष्यपदमध्याहरति **तथा सतीति** । एवं व्याख्याने सतीत्यर्थः । तथा च तन्मार्गानुवर्तिनामात्मनां विवरणकारादीनां शाब्दत्वं वक्तुमित्यर्थः । अस्मिन्व्याख्याने आत्मन इति पदमुर्वरितम् । तस्येत्थं योजना । आत्मनश्चैवं व्याख्यातुः सङ्करस्यापि शाब्दत्वं वक्तुं कथं न लज्जा जायत इति । **तत्कथमेतदिति** । प्रकृते च ब्रह्मणः शब्दमुख्यार्थत्वग्रहणे 'यतो वाच' इति श्रुतेः 'लक्ष्यलक्षणयोर्भेद' इत्युक्तनिर्गुणत्वोपपत्तेश्च बाधिकायाः सत्त्वेन मुख्यार्थसम्भवाभावादमुख्यार्थस्वीकारो न दोषायेत्याशयः ।

**आनन्दः**—— नन्वेकस्यापीत्यनेनोपहासकरणमयुक्तम्, कस्यापि दोषस्यानुक्तेरित्यत आह **इतश्चेति** । **तथा सतीति** । आद्यपक्षे सकाशादित्यध्याहार्यम् । ननु लक्षणास्वीकारो वाऽनर्थहेतुः मुख्यार्थस्वीकारे बाधके सति तत्स्वीकारे वा । नाद्य इत्याह **ननु न तावदिति** । द्वितीय आह **किं नामेति** । **प्रकृतेऽपीति** । आचार्यो मन्यत इत्युक्त्या बाधकाभावो दर्शितः । अन्यथा बाधितार्थकथने तस्याचार्यत्वमेव न स्यादिति भावः ।

**वा०चं०**— उत्तरवाक्यतात्पर्यानवबोधान्न केवलं सर्वशब्दानां ब्रह्मणि लक्षणाश्रयणेऽनवस्थामात्रमनौचित्यं चेति तत्तात्पर्यमाह **इतश्चेति**। अप्रसक्ततयाऽवैदिकशब्दानां ब्रह्मणि लक्षणया प्रवृत्तेः परेणाप्यनङ्गीकारादखिला इत्यनुपपन्नमित्यतो यत्र तत्रेति यद्भाष्य उक्तं तत्तात्पर्यकथनं **वैदिकानामिति**। अनेन वैदिकशब्दलक्षणाऽऽश्रयणस्यातिजघन्यतां सूचयति। कर्मकाण्डगतानां ब्रह्मकाण्डेऽप्युपासनादिपराणां न परे ब्रह्मणि लक्षणाश्रितेत्यत उक्तं **ब्रह्मणि श्रुतानामिति**। अनेन वेदेऽखिला अपीत्यस्यापि सङ्कोचः सूचितो भवति। प्रकृतोपयोगितया सच्छब्दव्याख्यानं **विदुषामिति**। अमुख्यार्थस्य जघन्यप्रतिपत्तिकतया तत्स्वीकारस्य लज्जाहेतुतायाः प्रथमोपस्थितमुख्यार्थपरित्यागकारणाभावप्रयुक्ततया लज्जाहेतुताप्रयोजकत्वेन तस्याप्यत्र विवक्षणीयत्वे कारणाभावे (च) सति मुख्यार्थपरित्यागस्यापि लज्जाहेतुत्वमित्याशयेनोक्तम् **(अ)मुख्यार्थेति**। अत एवोत्तरत्र तथैवोपपादयिष्यतीति बोध्यम्। अत्र समानन्यायतयाऽमुख्यार्थ इत्युत्तरभाष्यानुरोधेन च गौणशब्दो लक्षणाऽऽदिसाधारण इत्याशयेनोक्तम् **अमुख्यार्थेति**। शाब्दत्वमित्यस्यापि प्रकृतोपयोगिताव्याख्यानं **शक्तीति**। विदुषामित्यनेन सतामित्यस्यात्राप्यनुवृत्तिं सूचयति। सकाशादिति षष्ठ्यर्थकथनम्। यच्छब्दप्रकृतस्यैव तच्छब्दपरामर्शे परामर्शस्वारस्यमित्याशयेनाह **तस्येति**। **तथा सतीति**। तथा च तस्यात्मनः शाब्दत्वं तेषां चात्मनां शाब्दत्वं वक्तुमिति योजना सूचिता भवति। यत इति श्रुतिनिरासानन्तरं भाष्यकारेणैतद्दूषणोक्त्या सूचितेन मुख्यार्थस्वीकारे बाधकाभावविषयकस्वाभिप्रायेण निवर्त्यां शङ्कां दर्शयन्नेव मुख्यार्थत्यागामुख्यार्थस्वीकारयोरनौचित्यहेतुत्वं शङ्कामुखेनैव दर्शयति **नन्विति**। सर्वत्रायमेव न्याय इति दर्शयितुं लौकिकवैदिकयोः क्रमेणोदाहरणकथनं **गङ्गायामित्यादि**। यद्वा लक्षणागौण्योः क्रमेणोदाहरणमेतत्। कुण्डपायिनामयनं नाम सत्रम्। अत एव 'उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्' इति। सप्तमे, सामानाधिकरण्यनिमित्तकत्वान्नामत्वस्य तस्य चोभयत्रापि भावादुभयत्रापि मुख्यनामत्वसम्भवान्न गौणत्वकल्पनयाऽतिदेशकत्वमिति पूर्वपक्ष्योभयनामत्वे शब्दस्यानेकादृष्टशक्तिकल्पनाप्रसङ्गेनावश्यभाविन्यन्यतमगौणत्वे, यत्र गुणाः सन्ति तत्र मुख्यत्वं, तद्गुणयोगादितरत्र गौणत्वम्, न हि निर्गुणे मुख्यस्यान्यत्र गौणता घटते। वाच्यगुणयोगेन हि वृत्तेर्गौणत्वं निर्गुणे तु वाच्ये कथं गौणत्वम्। तस्मान्नैमित्तिके मुख्योऽन्यत्र गौणोऽग्निहोत्रशब्दोऽतोऽग्निहोत्रवज्जुहोतीति वाक्यार्थ इत्यग्निहोत्रशब्दस्य मासाग्निहोत्रे नैयमिकाग्निहोत्रधर्मातिदेशेन गौणता प्रतिपादितेति। **तत्कथमेतदिति**। श्रुत्यादेः प्रकृते बाधकत्वादिति भावः। **निर्गुणत्वेति**। जन्माधिकरणे तस्या निरस्तत्वादिति भावः।

**वा०र०**— **तात्पर्यानवबोधादिति**। अनेन तात्पर्याप्रतीतिरूपं तत्कथननिमित्तमुक्तं भवति। **प्रकृतोपयोगितयेति**। निर्दोषत्वस्नानादिसत्कर्मित्वादेरर्थस्य प्रकृतानुपयोगादिति भावः। **जघन्यप्रतिपत्तिकतयेति**। अमुख्यार्थस्य जघन्यप्रतिपत्तिकतया तत्स्वीकारस्य प्राप्तायां लज्जाहेतुता तस्याः न तत्स्वीकारमात्रप्रयुक्तत्वं किन्तु प्रथमोपस्थितो यो मुख्योऽर्थस्तत्परित्यागे यत्कारणं तत्स्वीकारे बाधकरूपं तदभावप्रयुक्तत्वं च। ततश्चात्र





तत्स्वीकारस्य लज्जाहेतुत्वोपपादनाय कारणाभावस्यापि विवक्षणीयत्वम् । यदा च मुख्यार्थपरित्यागे कारणाभावः प्राप्तस्तदा मुख्यार्थपरित्यागस्याप्यमुख्यार्थस्वीकारवल्लज्जाहेतुत्वमेतद्भाष्ये सूचितमस्तीत्याशयेनोक्तमित्यर्थः । विवक्षणीयत्व इत्यस्य विवक्षणीयत्वादित्यर्थः । 'कारणाभावे च सती'ति चशब्दयुक्तः पाठः । यदा कारणाभाव-विवक्षा तदा लज्जाहेतुता प्रयोजकत्वेनाङ्गीकार्या । कारणाभावे विद्यमाने तु बाधकरूपे कारणे विद्यमाने त्विति यावत् । मुख्यार्थपरित्यागस्यापीति योजना । न तु कारणाभावे सति मुख्यार्थपरित्यागरूपविशिष्टस्य लज्जाहेतुत्वमत्र प्रतिपाद्यम् । मुख्यार्थत्यागस्य लज्जाहेतुत्वप्रतिपादनेन हि कारणे सत्येव मुख्यार्थस्त्याज्यः । न तु तदभावे । तथा च त्यागनिमित्तकारणस्याभावे त्यागोऽनुपपन्नः । सति चैवं तत्त्यागो लज्जाहेतुरित्येवममुख्यार्थस्वीकार-लज्जाहेतुत्वेनाङ्गीकर्तव्यकारणाभावेनैव मुख्यार्थपरित्यागस्यापि लज्जाहेतुत्वं प्राप्तमिति सूचनस्य भाष्यकारीयस्येह वर्णनेन केवलमुख्यार्थपरित्यागस्य लज्जाहेतुत्वेनाप्रकृततया विशिष्टस्य तद्धेतुत्वाभिधानवैयर्थ्यात् । केवलमुख्यार्थ-त्यागमात्रं लज्जाहेतुरिति तु न प्राप्नोति । अन्यार्थं तत्परित्यागकारणाभावस्वीकारादेव कारणाभावसाचिव्यस्य लब्धतया पृथगवक्तव्यत्वादिति ज्ञेयम् । हेतुत्वमनेन सूचितमित्याशयेनेति पाठः मूलकोशात्प्रतीयते । अनेन सूचयतीति प्राग्लिखितस्येत्याशयेनोक्तमित्यनेन सम्बन्धकरणाभिप्रायेऽपि सूचयतीत्यस्य सूचितमित्येवमवि-नाशितत्वेन(?)मित्याशयेनेति पूर्वमकारसद्भावेन च हेतुत्वमित्याशयेनेत्येव लेखकलिखनात् । उक्तमित्यनन्तरं मुख्यार्थेतीति प्रतीकोपादानात्प्रागकारः केनचिच्छोधितोऽस्ति । सोऽपि न परामर्शमूलः । मुख्यार्थपरित्यागेनेति मूलस्योपादानसिद्धेः । अस्मत्सुधापुस्तके एकस्यापि शब्दस्य मुख्यार्थेति पाठ आसीत्तत्राकारो नाशितोऽस्ति । तन्नाशप्रकारमपरामृश्यैवार्थं चानालोच्यैवाकारः शोधित इति ज्ञेयम् । अमुख्यार्थस्वीकारस्य लज्जाहेतुत्वोपपादकतया मुख्यार्थपरित्यागकारणाभावः स्वीकार्य इत्यादि प्रमेयं ननु न तावन्मुख्यार्थेत्याद्युत्तरमूल एव शङ्कामुखेन स्पष्टमिति तदनुसार्यस्मदाशयवर्णनेऽनास्था न कार्येत्याशयेनाह **अत एवोत्तरत्रेति** । **शाब्दत्वमित्यस्यापीति** । शब्दशास्त्रा-भिज्ञत्वादेरर्थस्य प्रकृतानुपयोगादिति भावः । **परामर्शस्वारस्यमिति** । अनेन पूर्वयोजनायां यत्तच्छब्दविषययोः भिन्नत्वमित्यस्वरसात्पक्षान्तरमाहेत्यवतारः सूचितो भवति । मूले **आत्मनामित्यध्याहार्यमिति** । नन्वात्मन इत्यस्यावृत्तिमाश्रित्य वचनविपरिणामेनाप्यात्मनामित्येतत्सिद्ध्यत्येव । अन्यथा वक्तुं शाब्दत्वमित्यादेरध्याहारा-श्रयणमपि कर्तव्यं स्यात् । ततश्च वचनविपरिणाममात्रे लाघवमिति चेन्न । अध्याहारपदस्यावृत्ते पदे वचनविपरिणाम इत्यत्रैव तात्पर्यमित्याहुः । टीकापि मूलानुसारेण नेया । **सर्वत्रेति** । लोके वेदे चेत्यर्थः । एवमवतारं कृत्वा अर्थाप्रतीतेर्व्याचष्टे **कुण्डेति** । कथमस्य गौणतोदाहरणत्वमित्यतः पूर्वमीमांसायां तथा निर्णीतमस्तीत्याह **अत एवेति** । अत एव सप्तमे गौणता प्रतिपादितेतीति वक्ष्यमाणेनान्वयः । एतश्च स्पष्टनीयमस्ति । कुण्डपायिना-मयने उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोतीत्यत्र नित्याग्निहोत्रानुवादेन मासाख्यगुणो न विधातुं शक्यः । नित्याग्निहोत्रे उपसदामेवाभावात् । अतो अग्निहोत्रसंज्ञकं कर्मान्तरमभिधीयत इति तरङ्गिणी० । . . . . . . द्वितीयस्य तृतीयपादे प्रकरणान्तरे प्रयोजनान्यत्वमित्येकादशोऽधिकरणे मासमग्निहोत्रमिति वाक्ये नैयायिकेत्यादि विचार आनन्दमयनय-चन्द्रिकाटीकायां कृतोऽस्ति ।





**स०व्र०— कुण्डपायिनामयन इति ।** कुण्डपायिनामयनाख्ये सत्रे 'मासमग्निहोत्रं जुहोति' इति श्रूयते, तत्राग्निहोत्रशब्दः नित्याग्निहोत्रपरः, उत कर्मान्तरपर इति सन्देहः । कर्मान्तरपक्षे द्रव्यदेवताकल्पनागौरवप्रसङ्गात् नित्याग्निहोत्रविधायक इति प्राप्ते अस्य नित्याग्निहोत्रप्रकरणाभावात् मासादिगुणकमिदं कर्मान्तरमेव विधीयते । तत्राग्निहोत्रशब्दो यद्यपि स्वाभिधेयनित्याग्निहोत्रपर इति वक्तुं शक्यते मासादिगुणकस्य कर्मविशेषस्य नित्याग्निहोत्रेऽप्यसम्भवात् । तथाप्यग्निहोत्रवज्जुहोतीति गौण्या वृत्त्या नित्याग्निहोत्रधर्मातिदेशपर इति सिद्धान्तितम् । अमुख्यार्थग्रहणस्य च लज्जाहेतुत्वे तदपि न स्यादित्यर्थः ।

**विठ्ठल०— कुण्डपायिनामिति ।** कुण्डपायि नाम सत्रयागः । तत्र मासमग्निहोत्रं जुहोतीत्यादि श्रूयते । तत्राग्निहोत्रशब्देन नित्याग्निहोत्रमनूद्य तस्य मासलक्षणगुणो विधीयते । मासमग्निहोत्रमिति सामानाधिकरण्येन निर्देशान्नामधेयत्वेन नित्याग्निहोत्रस्यैवात्र मुख्यत्वादिति प्राप्ते सिद्धान्तितं मासादिगुणविशिष्टकर्मविशेष एवात्र विधीयते । नित्याग्निहोत्रप्रकरणत्वाभावात् । अग्निहोत्रपदस्य नित्याग्निहोत्रपरत्वेऽपि लक्षणया नित्याग्निहोत्रसदृशकर्मविशेषाभिधायकत्वमेवेति । तथा चात्र मुख्यार्थग्रहणस्य लज्जाकरत्वे तदपि न स्यादित्यर्थः । दोष इत्युक्तं विशदमाह **मुख्यार्थो हीति ।**

**चषकः— कुण्डपायिनामयन इति ।** कुण्डपायिनामयनं नाम कश्चित्सत्रयागः । तत्रैकमासं क्रियमाणकर्मविशेषस्याग्निहोत्रमिति नाम । अग्निहोत्रमिवाग्निहोत्रमिति गौणमित्युक्तं पूर्वतन्त्रे । सप्तमाध्यायस्य तृतीयपादे 'क्रियाभिधानं तत् श्रुतावन्यत्र विधिप्रदेशः स्यात्' इत्याद्यनये । तथा चाग्निहोत्रपदेन मुख्यार्थनित्याग्निहोत्रत्यागेन गौणार्थग्रहणं तत्र स्यादित्यर्थः ।

**॥ इति इतश्च ब्रह्मणि श्रुतानां सर्वशब्दानां लक्षणाश्रयणं न युक्तम् ॥**
**॥ इति वाच्यत्वाभावे लक्ष्यत्वं क्वापि न दृष्टम् ॥**
**॥ इति ब्रह्मणोऽवाच्यत्वाभावः ॥**
**॥ इति 'ईक्षतेर्नाशब्दम्' इति सूत्रस्य स्वमतानुसारेण व्याख्यानम् ॥**

***

**॥ अथ 'गौणश्चेन्नात्मशब्दात्' - 'तन्निष्ठस्य मोक्षोपदेशात्' इति सूत्रयोः स्वमतानुसारेण व्याख्यानम् ॥**
**॥ तत्रादौ 'गौणश्चेन्नात्मशब्दात्' इति सूत्रस्य स्वमतानुसारेण व्याख्यानम् ॥**

९३ **सु०—** अत्राह । द्वे ब्रह्मणी । निर्गुणं सगुणं च । तत्र निर्गुणं नित्यशुद्धबुद्धमुक्तस्वभावं परिपूर्णम् । तदेव मायाशबलितत्वेनैश्वर्यादिधर्मवत्तया सगुणमुच्यते । मायायाश्चानिर्वाच्यतया तदवच्छिन्नस्य न तथाभावस्तात्त्विक इति न कूटस्थत्वहानिः । तत्र





सगुणमेव परात्परं पुरिशयं पुरुषमीक्षत इत्यादावीक्षणीयत्वेनोच्यते । ततश्चेक्षणीयत्वं वाच्यत्वेन विना नोपपद्यते चेत्सगुणं वाच्यमस्तु न निर्गुणम्, तस्येक्षणीयत्वे प्रमाणाभावात् । न ह्यन्यगतेन व्याप्येनान्यत्र व्यापकसिद्धिः, अतिप्रसङ्गात् । न च परात्परमित्यादीन्येव निर्गुणविषयाणि, ज्ञापकाभावात् । न च वाच्यं मा भूदनुमानेन निर्गुणस्य वाच्यत्वसिद्धिः, पक्षीकृते लिङ्गाभावात् । लिङ्गवति सिद्धसाधन(त्व)ात् । तथाऽपि 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति' इत्यादिश्रुतिबलाद्वाच्यत्वं निर्गुणस्य सेत्स्यतीति, मायाशबले गृहीतसङ्गतयस्सर्वे वेदा लक्षणया यत्पदमामनन्तीत्यर्थोपपत्तेः । न चावाच्यस्य लक्षणाऽनुपपत्तिर्दोषः, प्रसिद्धतामात्रेण लक्षणोपपत्तेः । सगुणप्रतीत्यैव च निर्गुणस्य तत्स्वभावभूतस्य सर्वात्मनः स्वतः सिद्धत्वात् । न च तदेवेक्षणीयत्वं, येन वाच्यत्वप्रसक्तिः । किन्तु प्रमेयत्वम् । न च स्वप्रकाशस्य प्रमेयत्वमिति ॥ तदेतदाशङ्क्य परिहरति सूत्रकारः **गौणश्चेन्नात्मशब्दादिति** ।

## ब्र०सू०— ॥ ॐ ॥ गौणश्चेन्नात्मशब्दात् ॥ ॐ ॥

" 'परात्परम्' इत्यादिश्रुतिषु गौण एवात्मेक्षणीयत्वेनोच्यते । अतस्स एव वाच्योऽस्तु न, निर्गुणः । तस्येक्षणीयत्वे प्रमाणाभावात् । परात्परमित्यादिश्रुतीनां च तत्परत्वे ज्ञापकाभावात् । किन्तु लक्ष्य एवासौ" इति चेन्न, आत्मशब्दात् । उपलक्षणमेतत्, ईक्षणीये वस्तुन्यात्मब्रह्मपुरुषादिशब्दश्रवणात्, तेषां च पूर्णाभिधायित्वेन निर्गुणज्ञापकत्वादिति ।

परि०— ईक्षणीयत्वहेतोर्व्यधिकरणासिद्धिनिरासकतया गौणश्चेदिति सूत्रमवतारयितुमाह **अत्राहेत्यादिना** । शुद्धेति जडामिश्रम् । बुद्धेति ज्ञानस्वभावः । तथाभावः सगुणभावः । मा भूद्वाच्यत्वसिद्धिः इत्येतद्व्यनक्ति **पक्षीकृत इति** । वाच्यत्वे युक्तेरिवागमस्यापि साधनत्वेनाभिमतत्वात्तमप्याशङ्क्य निराह पूर्ववादी **तथापीत्यादिना** । **सर्वात्मन इति** । सर्वजीवस्य अहमितिसाक्षिसिद्धत्वादित्यर्थः । **प्रमेयत्वं** प्रमाणजन्यवृत्तिविषयत्वम् ।

गु०दी०— **तस्येक्षणीयत्वे प्रमाणाभावात्** इति वदन् मोक्षसाधननिष्प्रकारकनिर्गुणापरोक्षज्ञानं कथमङ्गीकुर्यात् । अतो मन्दाशङ्केयमिति ज्ञातव्यम् ।





**यादु०**— तत्स्वभावभूतत्वोपपादनायैव सर्वात्मन इत्युक्तम् । **किन्तु प्रमेयत्वमिति** । प्रमाणजन्यज्ञानविषयत्वमित्यर्थः । **स्वप्रकाशस्येति** । परानपेक्षप्रकाशस्येत्यर्थः ।

**वं०प०**— ननु मायायाः सत्यत्वे तदवच्छिन्नस्य सगुणत्वं सत्यमेव स्यात् । तथा च कूटस्थत्वहानिरित्यत आह **मायायाश्चेति । न कूटस्थत्वहानिरिति** । न ह्यारोपितेन नीलिम्ना गगनस्य नीरूपत्वमपैतीति भावः । कुतो मा भूदित्यतस्तदुपपादयति **पक्षीकृत इति** । ईक्षणीयत्वस्य निर्गुणे स्वरूपासिद्धिरित्यर्थः । ननु तर्हि यत्रेक्षणीयत्वहेतुरस्ति सगुणे तस्यैव पक्षत्वमभिप्रेतमिति चेत्तत्राह **लिङ्गवतीति** । सगुणे वाच्यत्वस्य सिद्धत्वादित्यर्थः । **लक्षणोपपत्तेरिति** । तथा च शब्दशक्त्यैव प्रतीतत्वं नापेक्षितमित्याशयः । ननु निर्गुणस्य यथाकथञ्चिद्वा प्रसिद्धिः कथमस्तीत्यतस्तदुपपादयति **सगुणेति** । विशिष्टप्रतीतौ विशेष्यस्यापि प्रतीतत्वादिति भावः । ननु निर्गुणस्य स्वतःसिद्धत्वं तावत् त्वयैवोपपादितम् । स्वतःसिद्धत्वमेव चेक्षणीयत्वमिति निर्गुणस्येक्षणीयत्वं त्वयैवाङ्गीकृतमतः स्वतःसिद्धत्वरूपेक्षणीयत्वान्यथाऽनुपपत्त्या वाच्यत्वं प्रसक्तमेव । तथाच निर्गुणस्येक्षणीयत्वे प्रमाणाभावादित्युक्तमयुक्तमित्याशङ्क्य निषेधति **न च तदेवेति** । तथात्वे घटादावसाधारण्यापत्तेरिति भावः । **प्रमेयत्वमिति** । प्रमाणजन्यज्ञानविषयत्वमित्यर्थः । **स्वप्रकाशस्येति** । प्रमाणावेद्यस्य प्रमाणाजन्यज्ञानविषयत्वाख्यं प्रमेयत्वं व्याहतमिति भावः ।

**तत्परत्वे** मुख्यया वृत्त्या निर्गुणवाचकत्वे । श्रुतीनां निर्गुणवाचकत्वाभावे उपनिषदां ब्रह्मकाण्डत्वभङ्ग इत्याशयेन पृच्छति **किन्त्विति** । उत्तरयति **लक्ष्य एवासाविति** । निर्गुण इत्यर्थः ।

**आनन्दः**— नन्वत्र सगुणं पक्षीकृत्य तस्य वाच्यत्वं साध्यते उत निर्गुणम् । नाद्यः । सिद्धसाधनत्वात् । न द्वितीयः । आश्रयासिद्धेः स्वरूपासिद्धेश्चेति वक्तुं सगुणनिर्गुणविभागमाह **अत्राहेति** । तर्हि विकारित्वमापतितमित्यत आह **मायायाश्चेति । अतिप्रसङ्गादिति** । पर्वतीयधूमेन महानसीयवह्न्यनुमा स्यादित्यर्थः । ननु प्रसिद्धिर्नाम ज्ञानं तच्च शब्दातिरिक्तप्रमाणेनासम्भवाच्छब्दे न भवतीति वक्तव्यम् । तच्च पुनर्लक्षणयैव वक्तव्यम् । एवं चानवस्था स्यादित्यत आह **सगुणप्रतीत्यैवेति** । निर्गुणस्य स्वतःसिद्धत्वादित्यन्वयः । तथा च निर्गुणस्य स्वप्रकाशत्वात् स्वतःसिद्धत्वेनैव सिद्धिरिति नानवस्थेति भावः । ननु वेदान्तैर्निर्गुणस्य प्रतीयमानत्वात्कथं तस्य स्वत एव सिद्धिरित्यत उक्तं **सगुणप्रतीत्यैवेति** । एवकारः भिन्नक्रमः सगुणस्यैव प्रतीत्येति । तथा च वेदान्तादिना सगुणस्यैव प्रतीयमानत्वान्निर्गुणस्य चाप्रतीयमानत्वात्तस्य स्वतःसिद्धिरित्यर्थः । ननु निर्गुणस्यापि यदाकदाचित्सगुणस्वभावत्वे कथं स्वतःसिद्धिरित्यत आह **तत्स्वभावभूतस्येति** । गुणस्वरूपत्वे च परिच्छिन्नत्वं स्यात् । न परिच्छिन्नस्य तदुपपद्यत इत्याह **सर्वात्मन इति** । ब्रह्मणः प्रकाशत्वेनैव सिद्धौ सत्यादिपदलक्ष्यत्वमपि न स्यात् । इति पक्षान्तरं सगुणप्रतीत्या गुणविशिष्टप्रतीत्या निर्गुणस्य स्वतःसिद्धत्वात् सगुणप्रतिपादकव्यतिरिक्तस्य पृथङ्निर्गुणप्रतिपादकस्यानपेक्षणादित्यर्थः । गुणविशिष्टस्य नियोगिनो ज्ञानेनैवोपपत्तौ पृथक्शब्दप्रतिपाद्यत्वज्ञानस्यानुपयोगादिति । **न च स्वप्रकाशस्येति** । न च गुरुनये स्वप्रकाशस्यापि ज्ञानस्य





प्रमेयत्ववत्प्रकृतेऽपि किन्न स्यादिति वाच्यम् । अत्र हि प्रमाविषयत्वं प्रमेयत्वं, प्रमा च वृत्तिप्रतिफलितं चैतन्यं, न हि ब्रह्मणस्तदस्तीति भावः । न चैवं धर्मादेरपि चैतन्याविषयत्वेन स्वप्रकाशत्वं स्यादिति वाच्यम् । तस्यापि यथाकथञ्चित् ज्ञातत्वात(त?)त्त्वाभ्यां चैतन्यविषयत्वात् । न च तथाविधं चैतन्यविषयत्वं ब्रह्मण्यप्यस्तीति वाच्यम् । तथाप्यवेद्यत्वस्यैव स्वप्रकाशत्वादिति । न कश्चित् क्षुद्रोपद्रवः । अपूर्णत्वात् सूत्रं व्याचष्टे **परादिति** । तर्हि निर्गुणशब्दप्रतिपाद्यमेव किमिति पृच्छति **किं त्विति** । अस्त्वेवं तथा च वाक्यस्य निर्गुणेक्षणपरत्वं कुत इत्यत आह **तेषां चेति** ।

**श्रीनिधि०— मायाशबलितत्वेन** मायामिश्रितत्वेन । **अनिर्वाच्यतया इति** । मिथ्यात्वेनेत्यर्थः । तथा भावः । ऐश्वर्यादि धर्मवत्ता । **कूटस्थत्वहानिरिति** । निर्विकारत्वहानिः । निर्विशेषत्वहानिरिति यावत् । पक्षीकृते निर्विशेषलिङ्गाभावादीक्षणीयत्वाभावात् । **लिङ्गवति** सगुणे । तत्स्वभावभूतस्य सगुणे पारमार्थिकाकारस्येत्यर्थः । तदेव स्वतःसिद्धत्वमेव । **न च स्वप्रकाशस्येति** । स्वप्रकाशत्वस्य प्रमाणवेद्यत्वघटितत्वादिति भावः । **आत्मशब्दादिति** । यस्यानुवित्तः तरति शोकमात्मवित् इत्यादौ श्रवणादिति भावः ।

**वा०चं०—** आत्मब्रह्मादय इत्युत्तरानुव्याख्यानं गौणश्चेदिति तन्निष्ठस्येति सूत्रयोर्यथास्थितप्रतीयमानतात्पर्यकथनपरमिति भ्रान्तिनिरासाय भाष्यरीत्या प्रतीयमानतात्पर्यस्य स्फुटत्वात् तात्पर्यान्तरप्रतिपादकमेतदनुव्याख्यानमिति प्रतिपादयिष्यन् भाष्यरीत्या स्फुटप्रतीयमानतात्पर्यं कथयितुमुत्तरो ग्रन्थः ।

नन्वत्र सौत्रशङ्काग्रन्थे सगुणस्य दृश्यत्वं वाच्यत्वं च न निर्गुणस्येति शङ्कितुराशयः प्रतीयते । तत्र निर्गुणात्सगुणं भिन्नमभिन्नं वाऽभिमतम् । भिन्नत्वे 'सदैव गुणवत्त्वेऽस्य भिन्नं स्यान्निर्गुणं सदा' इत्युक्तरीत्या कैवल्यानुपपत्तिदोषः । 'एकधैव' इत्यादिश्रुतिविरोधश्च । अभिन्नत्वे कूटस्थत्वहानिरिति पूर्वोक्तदोषात्कथमेतच्छङ्कावकाशः । सगुणस्येक्षणवाच्यत्वाङ्गीकारे च सिद्धान्ते सगुणस्य विष्णोरेवेक्षणेन वाच्यत्वस्य सिषाधयिषितत्वात्कथं तद्विरोधित्वम् । पराभिमतनिर्गुणस्यासत्कल्पस्य तेन लक्ष्यत्वाभ्युपगमेऽपि न सिद्धान्तिनोऽनिष्टं किञ्चित् । परात्परमित्यादिश्रुतेर्निर्गुणविषयत्वस्यापि सम्भवेन गौणस्यैवेक्षणेन वाच्यत्वं न निर्गुणस्येति शङ्कितुमशक्यं च । तस्याः सगुणमात्रविषयकत्वे वाऽनुमानेन निर्गुणस्य वाच्यत्वासिद्धावपि सर्वे वेदा इत्यादिश्रुतिबलात् तत्सिद्धिः सम्भवेदेव । श्रुतेर्लक्षणाऽऽदिविषयत्वेन सावकाशत्वे वा वाच्ये प्रकारान्तरेण प्रतीत्यसम्भवेन लक्षणानुपपत्तिर्दोष एव । यथाकथञ्चित्प्रतीत्युपपादने च तत एवेक्षणीयत्वलाभाद्वाच्यत्वसाधनं सुकरमिति नायं सूत्रोक्ताक्षेपप्रकारः सदल इत्यतोऽस्मदभिमतस्य विष्णोरेव सत्त्वादिगुणशून्यतया निर्गुणत्वेन परेण व्यवह्रियमाणत्वात् तस्यैव मायासम्बन्धेन सगुणतया सगुणभेदेऽपि गुणानामनिर्वाच्यमायासम्बन्धप्रयुक्ततया कूटस्थत्वहानिकरत्वाभावात् । अभेदेऽपि व्यावहारिकभेदेन सगुणेक्षणेन निर्गुणस्य वाच्यत्वाप्राप्तेरीक्षणश्रुतेश्च निर्गुणज्ञापकाभावेन सगुणमात्रविषयत्वेनानुमानासम्भवाच्छ्रुतेश्च लक्षणादिविषयकत्वेनापि सावकाशत्वात्स्वप्रकाशतया प्रतीतेरप्युपपत्तेः । स्वप्रकाशत्वस्य चेक्षणीयत्वरूपत्वाभावात्सदल एव पूर्वपक्ष इति तदाशयमाह **अत्राहेति** ।





शुद्धमित्यादेर्मायाऽतीतं बोधस्वरूपं सत्त्वादिगुणसम्बन्धशून्यं सर्वशक्तिपरिपूर्णमित्यादिरर्थः । एवं गौणनिर्गुणस्वरूपां भूमिं सिद्धवत्कृत्येदानीं शङ्काप्रकारं विशदयति **तत्रेति** । ज्ञापकाभावादिति सिद्धान्तीयज्ञापकोक्तिव्यावर्त्यकथनम् । **तथाऽऽपीति** । अनेन पूर्वसूत्रे सर्वे वेदा इति श्रुत्याद्यपि वाच्यत्वसाधकतया सूत्राभिमतमीक्षणीयत्वरूपन्यायस्य तु तदुपोद्बलकतयोक्तिरत एव भाष्ये श्रुतिस्मृत्योरेतत्सूत्रव्याख्यानावसरे उदाहरणमिति सूचितं भवति । नन्ववाच्ये लक्षणानुपपत्तेरुक्तत्वान्न तथा श्रुतिसावकाशत्वव्युत्पादनं युक्तमित्याशङ्क्य निषेधति **न चेति** । ननु लोके सगुणस्यैव प्रसिद्धत्वात्कथमेतदित्यतः सगुणस्य लोकप्रसिद्धिमेव निर्गुणप्रसिद्धित्वेनोपपादयति **सगुणेति** । यद्वा पूर्वं ब्रह्मशब्दादिना प्रसिद्धिरुक्ताऽधुना सगुणस्य स्वप्रकाशप्रतीतिमेव च तत्प्रतीतित्वेनाह **सगुणेति** । सगुणप्रतीत्या कथं निर्गुणप्रतीतिरित्यत उक्तम् **तदिति** । तदपि कुत इत्यतो निर्गुणस्य सर्वात्मकत्वादित्याशयेनोक्तम् **सर्वेति** । **स्वत इति** । स्वप्रकाशतयेत्यर्थः । **किं त्विति** । वृत्तिप्रतिबिम्बितचैतन्यादिरूपफलव्याप्यत्वरूपप्रमेयत्वरूपत्वादीक्षणीयत्वस्येत्यर्थः । **स्वप्रकाशस्येति** । फलाव्याप्यस्येत्यर्थः । अनेन 'गौण आत्मा दृश्यो वाच्यश्च । न निर्गुण इति युक्तम्' इति भाष्याभिप्रायो वर्णितो भवति ।

उक्तमभिप्रायं सूत्रारूढं कर्तुमाह **परादिति** । अत इत्यनेन भाष्ये दृश्यो वाच्यश्चेत्यनयोर्हेतुहेतुमद्भावेन अन्वयो द्रष्टव्य इत्युक्तं भवति । गौणपदप्रयोगबललब्धार्थकथनं **न निर्गुण इति** । सिद्धान्तीयज्ञापकोक्तिबलेनोक्तप्रतिज्ञायां हेतुकथनं **तस्येत्यादि** । किन्तु लक्ष्य एवेति 'सर्वे वेदाः' इत्यादिश्रुत्याद्यन्यथासिद्धिसूचनम् । वक्ष्यमाणश्रुतहान्याद्युक्तिसौकर्यार्थं च । अत्र प्रायः पूर्वपक्षस्पष्टीकरणम् तात्पर्यान्तरकथनावसरे वक्ष्यमाणदूषणसौकर्यार्थं चेति द्रष्टव्यम् । अत्र सूत्रे परात्परमितीक्षतिधात्वनुगतिमद्वाक्ये विद्यमानपुरुषपदं विहाय तत्राविद्यमानस्याप्यात्मशब्दस्योपादानं, यस्मिन्कस्मिंश्चिदपि ज्ञानकर्मत्वबोधवाक्ये निर्गुणज्ञापकोक्तिमात्रेणेक्षणेन निर्गुणस्य वाच्यत्वसिद्धेर्न वाक्यविशेष एव तज्ज्ञापकं वक्तव्यमिति निर्बन्ध इति सूचयितुं, न तु परात्परमिति वाक्ये तदभावादित्याशयेनाह **उपलक्षणमिति** । अत एवोत्तरसूत्रनिवर्त्यशङ्काग्रन्थे दृश्ये वस्तुनि प्रयुज्यमानात्मादिशब्दस्य सगुणविषयत्वनियमाभ्युपगमः । अत एव च तत्र परिहारेऽपि यत्किञ्चिदीक्षणीयत्वबोधकवाक्यनिष्ठस्य तन्निष्ठस्य मोक्षोपदेशस्योक्तिरिति द्रष्टव्यम् ।

**वा०र०**— न निर्गुण इत्यत्र निर्गुणस्य वाच्यत्वाभावमात्रोक्त्या पूर्तेः किन्तु लक्ष्य एवेत्येतदधिकमित्यतस्तदुक्तिप्रयोजनमाह **किन्तु लक्ष्य एवेतीति** । इति इत्यनेनेत्यर्थः । यद्वा पूर्वोत्तरानुगुण्येन लक्ष्य एवेतीत्यस्य लक्ष्य एवेत्येतदित्यर्थः । प्रयोजनान्तरमाह **वक्ष्यमाणेति** । अत्र लक्ष्य एवेतीत्यस्य लक्ष्य एवेत्येतदित्यर्थकत्वादुक्तमिति शेषपूरणेन योजनीयम् । न केवलं लक्ष्य एवेत्येतदेव वक्ष्यमाणदूषणसौकर्यार्थं किन्तु अन्यदपीत्याह **अत्र प्राय इति** । अत्र पूर्वपक्षस्पष्टीकरणं गौणश्चेदिति पूर्वपक्षस्पष्टीकरणं न निर्गुण इत्यादिरूपं प्रायः वक्ष्यमाणेत्यादि योजना । चशब्देन तु केवलं गौणपदप्रयोगलब्धार्थकथनादिरूपम् । अपि तु वक्ष्यमाणदूषणसौकर्यार्थं च कृतमिति समुच्चयोऽभिप्रेत इति ज्ञातव्यम् ।

**स०व्र०**— **किन्तु प्रमेयत्वमिति** । प्रमाणजन्यज्ञानविषयत्वमित्यर्थः ।





**विठ्ठल०**— ईक्षणीयत्वहेतोरसिद्धिनिरासकतया गौणश्चेदिति सूत्रमवतारयितुमाह **अत्राह इति** । **शुद्धेति** । जडामिश्रेत्यर्थः । माभूद्वाच्यत्वसिद्धिरित्येतद्वचनक्ति **पक्षीकृत इति** । **निर्गुणे ईक्षणीयत्वलिङ्गाभावादिति** । लिङ्गवति सगुणे वाच्यत्वस्य सिद्धत्वादिति भावः । **प्रसिद्धिमात्रेण इति** । लक्षणायां लक्ष्यार्थप्रतीतिरेव प्रयोजिका प्रतीतिश्च अहमिति साक्षिणैव भविष्यतीति भावः । नन्वहमिति प्रतीतः सगुण एव तत्कथं लक्ष्यतयाऽभिमतस्य निर्गुणस्य प्रतीतत्वमित्यत आह **सगुणप्रतीत्यैव चेति** । सगुणप्रतीत्यैव निर्गुणस्य वाच्यार्थसम्बन्धितया कथं सिद्धिरित्यत उक्तम् **तत्स्वभावभूतस्य इति** । तस्य गुणविशिष्टाकारस्य स्वभावभूतस्य तत्त्वभूतस्याधिष्ठानभूतस्येति यावत् । अध्यस्तस्य गुणविशिष्टाकारस्य अधिष्ठानमेव हि तत्त्वम् । तथा च अध्यस्तगुणविशिष्टाकारप्रतीतिकारणस्येत्यर्थः । तत्स्वभावभूतत्वोपपादनायैव सर्वात्मनः सर्वाधिष्ठानस्येत्युक्तम् । तर्ह्यहमिति प्रतीतिविषयता तूपेक्षणीयत्वेनैव वाच्यत्वसिद्धिरित्याशङ्क्याह **न चेति** । **प्रमेयत्वमिति** । प्रमाणजन्यज्ञानविषयत्वमित्यर्थः ।

**॥ इति 'गौणश्चेन्नात्मशब्दात्' इति सूत्रस्य स्वमतानुसारेण व्याख्यानम् ॥**

* * *

**॥ ततः 'तन्निष्ठस्य मोक्षोपदेशात्' इति सूत्रस्य स्वमतानुसारेण व्याख्यानम् ॥**

**९४ सु०— "भवेदात्मादिशब्दः पूर्णार्थवाची, तथाऽपि यत्र दृश्ये वाच्ये (च) वस्तुनि प्रयुज्यते तत्र सगुणविषय एवेति नियमाङ्गीकारे को दोष" इत्याशङ्कापरिहारार्थं (अपरं) सूत्रम् तन्निष्ठस्य मोक्षोपदेशादिति ।**

## ब्र०सू०— ॥ ॐ ॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ ॐ ॥

**नायं नियमो युज्यते, 'यस्यानुवित्तः प्रतिबुद्ध आत्मा', 'तरति शोकमात्मवित्' इति(आदौ) दृश्यात्मनिष्ठस्य मोक्षोपदेशात् । न हि गौणात्मनिष्ठस्य मोक्ष उपपद्यत इति ।**

**आनन्दः**— ननु तन्निष्ठस्येतिसूत्रमनर्थकं बाधकपरिहारात्मकत्वाभावात् । न च बाधकपरिहारे आत्मशब्दस्वरूपमेकहेतुमुक्त्वा हेत्वन्तरमनेनोच्यते इति वाच्यम् । तथा सति चशब्दः स्यादित्यतस्तन्निवर्त्यां शङ्कां दर्शयति **भवेदात्मादिशब्द इति** ।

**॥ इति 'तन्निष्ठस्य मोक्षोपदेशात्' इति सूत्रस्य स्वमतानुसारेण व्याख्यानम् ॥**

* * *





॥ अथ गौणश्चेत्यादिसूत्रस्य स्फुटतात्पर्यतोऽधिकव्याख्यानम् ॥

९९ सु०— अत्र प्रथमसूत्रे परात्परमित्यादिषु वाक्येषु निर्गुणज्ञापकोक्त्या हेतुसिद्धिस्समर्थिता, ज्ञापकस्य चान्यथासिद्धिरुत्तरसूत्रे परिहृता, इत्येतावत्सूत्रद्वयतात्पर्यं स्फुटमवगम्यते । अधिकं विवक्षुराह **आत्मेति** ।

अनु०— आत्मब्रह्मादयः शब्दाः साक्षात्पूर्णाभिधायिनः ।
जन्मादिकारणं ब्रह्म लक्षितं च यदा तदा ॥
वन्ध्यापुत्रोपमं मायाशबलं वाच्यमित्यपि ।
कल्पयित्वा विना मानं लक्ष्यं शुद्धं वदन्पदैः ॥
आत्मशब्दोदितस्यैव ज्ञानं मुक्तावसाधनम् ।
आह श्रुतपरित्यागः स्याच्चास्याश्रुतकल्पना ॥
स्यात्सर्वत्र च

यो वादी तदेतदनिर्वाच्यमायाख्याज्ञानशबलं किञ्चिद्ब्रह्म कल्पयित्वा तदेव वैदिकैरशेषपदवाच्यमित्यपि कल्पयित्वा मायातीतं शुद्धं सर्वज्ञं सर्वशक्तिपरिपूर्णमस्मदभिमतं परं ब्रह्म पदैर्लक्ष्यमिति वदन्वदति, अस्य वादिनः श्रुतपरित्यागस्सर्वत्र सर्ववाक्येषु स्यात् । कथम् । वचनवृत्त्यैव प्रथमप्रतीतस्य शुद्धस्य ब्रह्मणो विना कारणेन परित्यागात् । कथं शुद्धस्य प्रतीतत्वम् । आत्मब्रह्मादिशब्दानां वेदे श्रवणात् । आत्मब्रह्मादिशब्दाश्च साक्षाद्वचनवृत्त्या पूर्णाभिधायिनो यदा यस्मात्तदा तस्मात् श्रुतपरित्याग इति ।

न केवलं श्रुतपरित्यागः किन्तु सर्वत्रापि वाक्येष्वश्रुतकल्पनं च स्यात् । कथम् । मायाशबलस्य ब्रह्मणो वन्ध्यापुत्रोपमत्वात् । तत्कथम् । **विना मानम्** । मानाभावात् । तदपि कथम् । श्रुतिष्वात्मब्रह्मादिशब्दश्रवणात्तेषां च पूर्णाभिधायित्वेन मायाशबलाविषयत्वात् ।





ननु युष्माभिरेव जन्मादिसूत्रे मायाशबलस्य लक्ष्यत्वेनाङ्गीकृतत्वात् कथं (तत्)वन्ध्यापुत्रोपममिति । मैवम् । प्रथमसूत्रे जिज्ञास्यतयोक्तस्य सर्वज्ञस्य सर्वशक्तेः परब्रह्मण एवास्माभिर्जगज्जन्मादिकारणत्वेन लक्षितत्वाङ्गीकारादित्याद्यसूत्रतात्पर्यम् । आत्मशब्दोदितस्येति द्वितीयस्य । आत्मादिशब्दः पूर्णार्थोऽपि दृश्ये श्रुतो गौणविषय इति नियमं यो ब्रवीति स तथाविधात्मशब्दोदितस्य ज्ञानं मुक्तावसाधनमेवाह, गौणात्मज्ञानस्य मोक्षसाधनत्वानुपपत्तेः । तथा चास्य श्रुतपरित्यागः स्यात् । दृश्यात्मज्ञानस्य मोक्षसाधनताया 'यस्यानुवित्तः' इत्यादौ श्रुतत्वादिति ।

न चैवमापादिते श्रुतपरित्यागाश्रुतकल्पने शक्याङ्गीकारे इत्याह **यत्रेति** ।

**अनु०— यत्रैकमपि लोको जुगुप्सते ।**

यत्र ययोर्मध्ये एकमपि प्रसक्तम् । किमुभयमिति शेषः ।

**परि०—** अधिकं श्रुतहान्यादिकं दोषं सूत्रार्थतया विवक्षुरित्यर्थः । मूलपदानि योजयति **यो वादीत्यादिना** । वदन्नित्यस्यार्थो **वदतीति** । **इत्याद्यसूत्रतात्पर्यमिति** । 'यो वादी' इत्यादिनोक्तं प्रमेयं 'गौणश्चेत्' इति सूत्रतात्पर्यमित्यर्थः । **द्वितीयस्येति** । 'तन्निष्ठस्य मोक्षोपदेशात्' इति सूत्रस्येत्यर्थः ।

**यादु०— अधिकमिति** । श्रुतहान्यश्रुतग्रहरूपमधिकं दोषं सूत्रार्थतया विवक्षुराहेत्यर्थः । **ननु युष्माभिरेवेति** । यद्यप्यस्माभिः सगुणं ब्रह्मैव जन्मादिसूत्रे लक्ष्यमित्यभिहितं न तु मायाशबलम् तथाऽपि स्वमते मायाशबलस्यैव सगुणत्वात् । सगुणस्य लक्ष्यत्वाङ्गीकारे भवद्भिरपि मायाशबलस्यैव तदङ्गीकृतमिति भ्रान्तस्येयमाशङ्केति ध्येयम् ।

**वं०प०— ज्ञापकोक्तेति** । आत्मशब्दादिरूपेत्यर्थः । **हेतुसिद्धिरिति** । ईक्षणीयत्वाख्यहेतुसिद्धिरित्यर्थः । **गौणात्मज्ञानस्येति** । गुणबद्धात्मज्ञानाद्गुणनिवृत्तिरूपमोक्षानुपपत्तिरित्यर्थः । ननु गौणज्ञानस्य मोक्षहेतुत्वं न श्रुतमेव । येन श्रुतहानिः स्यादित्यत आह **दृश्यात्मेति** । गौणात्मेत्यर्थः ।

**आनन्दः—** नन्वात्मेत्यादिभाष्ये आत्मादिशब्दानां पूर्णत्वाभिधानमयुक्तं, गौणेत्यादिसूत्रद्वयार्थकथनरूपत्वस्य तदुपयुक्तकथनरूपत्वस्य वा अभावाच्चेत्यत आह **अत्र प्रथमसूत्र इति** । हेतुत्वसम्पादके द्वये तत्र





गौणेतिसूत्र इत्यर्थः । **ज्ञापकोक्त्येति** । आत्मशब्दरूपज्ञापकोक्त्येत्यर्थः । **उत्तरसूत्रे** तन्निष्ठस्येतिसूत्रे । पदानां व्यवहितत्वेनान्वयाप्रतीतेरन्वयं दर्शयति । मायावादीत्यादिना मायाशबलं कल्पयित्वेत्ययुक्तम् । इच्छाविशिष्ट-ब्रह्मणः स्वेनापि स्वीकारादित्यत आह **अनिर्वाच्येति** । अभिधायित्वं हि एकैनैव प्रकारेण एवं च साक्षादिति विशेषणायोगात् इत्यत्राह **साक्षाद्वचनवृत्त्येति** । **इत्याद्यसूत्रतात्पर्यमिति** । यो वादीत्यारभ्य श्रुताश्रुतहान-कल्पनादिरूपं सर्वं ईक्षणीयत्वस्य हेतुत्वसाधकसूत्रद्वयमध्ये गौणेत्याद्यसूत्रतात्पर्यमित्यर्थः । **द्वितीयस्येति** । गौणेत्येतदपेक्षया द्वितीयस्य तन्निष्ठसूत्रस्येत्यर्थः । तद्विवृणोति **तस्मादिति** ।

**श्रीनिधि०— प्रथमप्रतीतस्य शुद्धस्येति** । अनवद्यस्येत्यर्थः । विना मानमित्येतन्नियामकपरतया व्याख्याति **विना कारणेनेति** । **मायाशबलाविषयत्वादिति** । तस्य मायावच्छिन्नस्य पूर्णत्वाभावादिति भावः । आत्मादिशब्दः पूर्णार्थवाचीत्यत्रापिशब्दः विरोधस्फोरणार्थः ।

**वा०चं०—** अधिकतात्पर्यकथनावसरे परोक्तसगुणवाच्यत्वनिर्गुणलक्ष्यत्वबाधकत्वेन श्रुतहान्य-श्रुतकल्पनाप्रसङ्गस्य प्रयोजनतया वक्ष्माणत्वात्तदसङ्कीर्णतायै ज्ञापकोक्त्या हेत्वसिद्धिपरिहारं ज्ञापकान्यथासिद्धि-परिहारं च प्रयोजनतया दर्शयति **अत्रेति** । अत्र श्रुतपरित्यागाश्रुतकल्पनोपपादकानां सङ्करेणोपपादनाद्विभज्य तदन्वयं दर्शयति **यो वादीत्यादिना** । वदन्नित्येतद्वलल्लब्धकथनं वादीति । लटः शतृशानचावप्रथमासमाना-धिकरण इत्यत्र (लटः शतृशानचावप्रथमासमानाधिकरणे । अप्रथमान्तेन सामानाधिकरण्ये सतीत्यर्थः । शबादि । पचन्तं चैत्रं पश्य । पचमानं चैत्रं पश्य ।) तदीयव्याख्यानरीत्या पर्युदासाश्रयणेन द्वितीयान्तादिसामानाधि-करण्याभिप्राये तस्य प्रकृतेऽभावाद्वदन्निति शत्रनुपपत्तिः । गीताभाष्यटीकोक्तरीत्या प्रसज्यप्रतिषेधाश्रयणेन प्रथमासामानाधिकरण्यनिषेधमात्राभिप्राये चास्येत्येतत्प्रतिसम्बन्धितया वदन्नित्यस्यानुवाद्यसमर्पकताद्योतनाय यो वादीत्यध्याहारस्यावश्यकत्वात् प्रथमासामानाधिकरण्येन शत्रनुपपत्तेरित्यतो लट्ग्रहानुवृत्तौ (लडिति । यद्यपि प्रथमान्तं प्रकृतं तथाऽपि षष्ठ्या विपरिणम्यत इति भावः ।) पुनर्लड्ग्रहणेन (पुनरिति । एवं हि पुनर्विधिः सम्पद्यते । स च प्रथमेनाप्राप्तेऽपि क्वचित्प्रवृत्त्यर्थ इति भावः । उपलक्षणमिदम् । अप्रथमान्तेन सामानाधिकरण्याभावे-ऽपीत्यर्थः । तेन कुर्वतोऽपत्यं कौर्वतः । कुर्वतो भक्तिः कुर्वद्भक्तिः । कुर्वाणभक्तिरिति प्रत्ययोत्तरपदयोरपि सिद्ध्यति । शानच् । आने मुक् । अङ्गस्वातो मुक् । पचमानः ।) क्वचित्प्रथमासमानाधिकरणेऽपि भवत्यतोऽस्ति ब्राह्मणः सन्ब्राह्मण इत्याद्युपपन्नमित्युक्तत्वात्प्रथमासमानाधिकरणे नानुपपत्तिरित्याशयेन यो वादीत्यध्याहृत्य तत्रैवानुवादसमाप्तिद्योतनाय वदन्निति व्याख्याति **वदतीति** । अनिर्वाच्येति विशेषणेन परोक्तकूटस्थत्वहानि-परिहारस्य मूलारूढत्वस्य प्रदर्शनम् । ब्रह्मेति ब्रह्मद्वैविध्यसूचनम् । वैदिकैरित्यश्रुतकल्पनोपपादकेनानुक्तोपा-लम्भनिरसनम् । असतो यत्किञ्चित्पदवाच्यत्वेऽपि न क्षतिरित्यशेषैरिति । पराभिमतशुद्धस्य निर्विशेष-त्वेनासत्कल्पत्वेन वेदेऽश्रुततया तस्य लक्ष्यत्वेऽपि न श्रुतहानिरिति शुद्धमित्यनेनाभिमतं स्वाभिमतं ब्रह्मेत्याह **शुद्धमित्यादिना** । श्रुतपरित्यागस्य वाक्यनिष्ठदूषणत्वादाह **सर्वत्रेति** । आत्मब्रह्मादय इत्यनुव्याख्यानोक्तहेतु-





बललब्धं श्रुतहानिप्रसङ्गे साक्षादुपपादकं दर्शयति **वचनवृत्त्यैवेति** । शुद्धस्य साक्षात्प्रकृतत्वोपपादकस्तदनुव्याख्याबललब्धस्य योग्यस्याध्याहार आत्मेति । तस्य हेतुत्वसमर्थनार्थतयाऽनुव्याख्यानोक्तं हेतुं योजयति **आत्मेति** । 'यदा तदेति हेत्वर्थे कालार्थे चापि भण्यत' इत्यभिधानानुसारेणोक्तं **यस्मात्तस्मादिति**।

मानाभावोपपादकत्वेनात्माप्यात्मब्रह्मादय इत्यनुव्याख्यानोक्तहेतुर्द्रष्टव्य इत्याशयेन श्रुतिष्वात्मशब्दाश्रवणे तेषां पूर्णत्वाभिधायकत्वोक्तिवैयर्थ्यात् तद्बललब्धं श्रुतिष्वात्मादिशब्दश्रवणस्य मानाभावं प्रति साक्षाद्धेतुत्वं पूर्ववदेवात्राप्यभिमतमित्याशयेनाह **श्रुतिष्विति** । पूर्णत्वाभिधायकत्वोक्तिफलकथनं **मायेति** । ब्रह्मशब्दप्रयोगसूचितयुक्तिकथनं **प्रथमेत्यादि** । आत्मशब्दोदितज्ञानस्य मया मुक्तसाधनताया अनुक्तेरनुक्तोपालम्भोऽयमित्यतोऽनुव्याख्यानेऽस्येत्येतद्बलात् तच्छब्दाध्याहारेण सूत्रनिवर्त्यनियमानङ्गीकर्तुस्तत्प्रतिसम्बन्धित्वमित्याशयेन योग्यप्रतिसम्बन्ध्याहारेण तदनुक्तिनिरासायाह **आत्मादिशब्दा इति** । तथाविध इत्यस्यात्मशब्दविशेषणत्वे दृश्ये श्रुत इति तदर्थः । आत्मशब्दोदितविशेषणत्वे तु दृश्य इति तदर्थः । एवकारसूचितहेतुकथनम् **गौणेति** । ननु मुक्त्यसाधनोक्तिमात्रं न दोष इत्यतः श्रुतपरित्यागमात्रं तत्फलतया प्रसज्य तदुपपादकतया सूत्रं योजयति **तथा चेत्यादिना**।

आपाद्यानिष्टत्वप्रदर्शनायोत्तरानुव्याख्यानमित्याह **न चैवमिति** । यत्रेत्यस्यैकपरामर्शकत्वे निर्धारणासम्भवादर्थान्तरानुपपत्तेश्चाह **तयोरिति** । आपादितत्वस्य मूलारूढतायै प्रसक्तमित्युक्तम् । यद्वा । श्रुतहान्यादेर्व्यभिचारादिवन्न स्वरूपेण दूषणत्वं किन्तु तर्करूपेणैवेति तत्प्रसञ्जनमेव दूषणमित्याशयेनेदमुक्तम् । उभयानिष्टत्वस्य मूलारूढतायै अपिशब्दबललब्धं योग्यमध्याहरति **किम्विति** ।

**वा०२०— अधिकतात्पर्येति**। आत्मब्रह्मादय इत्युत्तरानुव्याख्यान इति पूरणीयम्। **वदन्नित्येतद्बलेति**। अत एव वदन् वदति । अस्य वादिन इत्युत्तरमूलमिति भावः । **ज्ञापकान्यथासिद्धीति** । अन्यथा प्रकारान्तरेण सिद्धिरुपपत्तिरिति व्याख्येयम् । न तु वैयर्थ्यमेकासिद्धौ चेत्युक्ता व्यर्थविशेषणत्वादिरूपान्यथासिद्धिः । अत एवान्यथासिद्धिमानत इत्युपासनापादमूले प्रकारान्तरेण प्रत्यक्षादिलक्षणानां निरूपयितुमशक्यत्वादित्यर्थ इत्युक्तम्। विस्तृतं चैतत्पूर्वत्रास्माभिः । **तदीयव्याख्यानरीत्येति** । अस्य सूत्रस्य वैयाकरणसूत्रतया तच्छब्देन वैयाकरणसूत्रव्याख्यावतारः सूत्रोपन्यासेन सन्निधापिताः परामृश्यन्ते तेषां यद्व्याख्यानं तत्तदीयव्याख्यानमित्युच्यते। यद्वा तच्छब्देन सूत्रमेव गृह्यते । तथा च सूत्रसम्बन्धिनो ये सूत्रव्याख्यातारस्ते तदीया इत्युच्यते तेषां यद्व्याख्यानं तदनुसारेणेत्यर्थः । अथवा तत्सूत्रीयं यद्व्याख्यानं अन्यस्याप्रसक्तेस्तद्व्याख्यातृरचितं यद्व्याख्यानमिति योज्यम्। पक्षत्रयेऽपि गीताभाष्यटीकोक्तव्याख्यानव्यावृत्तिः सिद्ध्यतीति बोध्यम्। **पर्युदासाश्रयणेनेति** । देवदत्तः पचतीत्यादिषु प्रथमासामानाधिकरण्यसत्त्वेन तत्र पचन्निति शत्रादेशव्यावृत्त्यर्थं न प्रथमाऽप्रथमाद्वितीयादिस्तत्सामानाधिकरण्य इति पर्युदासाश्रयणेन सामानाधिकरण्यस्य पदधर्मतया द्वितीयान्तादिसामानाधिकरण्यलाभादिति भावः। न चैवं सन्ब्राह्मण इत्यत्र द्वितीयान्तादिसामानाधिकरण्याभावात् शत्रानुपपत्तिरिति वाच्यम् । लडिति वर्तमाने





पुनर्लड्ग्रहणसामर्थ्यलब्धद्वितीयाद्यन्तसामानाधिकरण्याभावेऽपीत्यर्थाश्रयणेन सन्ब्राह्मण इत्यादावपि तदुपपत्तेरिति द्रष्टव्यम् । **प्रसज्यप्रतिषेधाश्रयणेनेति** । देवदत्तः पचतीत्यादिषु शत्रभावाय प्रथमासामानाधिकरणेन भवतीति प्रसज्यप्रतिषेध एवास्तु । सन्ब्राह्मण इत्यादौ क्वचित्प्रथमासामानाधिकरण्येऽपि शतृप्रत्ययस्तु पुनर्लट्ग्रहण-सामर्थ्येनैव । तथा च स्मरन्पुरुषः कलेवरं त्यजतीति प्रथमासमानाधिकरणेऽपि पुनर्लट्ग्रहणसामर्थ्यादेव शतृप्रत्ययोपपत्तिरिति प्रतिपादनस्य गीताभाष्यटीकायामभिप्रेतत्वादिति भावः । अत्रत्यो विशेषविचारः गीताभाष्यटीकाव्याख्यानावसरे गुरुराजकृतस्तद्व्याख्यानावसरेऽस्माभिश्च कृतोऽवसेयः । **वदन्नित्येतदिति** । पूर्ववाक्ये यादृशतादृशस्य पुंसः ब्रह्मपदलक्ष्यमित्यादिवचनानुपपत्तेस्तद्बलात् तस्य वादितालाभ इत्युक्तमिदानीं अनुवादे यस्य कस्यचन ग्रहणानुपपत्तेर्वादिन एव लक्ष्यत्वादि वक्तृत्वेन ग्राह्यता तस्यैव श्रुतहानादिनिग्रहार्हत्वात् । तथा चानुवाद्यं यत् यो वादी लक्ष्यत्वादि वदतीति तत्समर्पणं वदन्नित्यत्र यो वादीत्यनयोरध्याहारो भावेन सम्भवतीति वदन्नित्यस्यानुवाद्यसमर्पकताद्योतनाय यो वादीत्यध्याहारस्यावश्यकत्वमित्याह **वदन्नित्यस्येति** । अस्येत्यस्य प्रतिसम्बन्धिभूतं वदन्नित्येतद्भवतीति अनुवाद्यसमर्पकताया इत्यनेन ज्ञापिता । वादीतीति तु लब्धार्थकथनमित्यभिप्रेत्य विशिष्टाध्याहार उक्त इत्यप्याहुः । वदन्नित्यस्यानुवाद्यसमर्पकतायाः कुत आवश्यक-त्वमित्यत उक्तम् **अस्येत्येतत्प्रतिसम्बन्धितयेति** । वदन् अस्य श्रुतपरित्यागादिरित्येव खलु सम्बन्धः । अस्येत्येतत्प्रतिसम्बन्ध्यन्तरानिरूपणात् । तथा च प्रतिसम्बन्धितया वदन्नस्येति यथाश्रुतसम्बन्धे विवक्षितार्था-प्रतीतेर्यो वदन्नस्येति यच्छब्दाध्याहारे तु तत्प्रतीतेरस्येत्येतत्प्रतिसम्बन्धित्वनिमित्तेन य इत्यस्य वादिन एव निग्रहार्हतया वादिन इत्यस्यापि अध्याहारे विवक्षितार्थपूर्तिर्भवतीति समुदायार्थः । **सामानाधिकरण्येनेति** । सामानाधिकरण्यस्य सत्त्वादित्यर्थः । सन्ब्राह्मण इत्यत्र लडादेशभूतशतृस्थानि प्रदर्शनायास्ति ब्राह्मण इत्युदाहृतम् । **इत्युक्तत्वादिति** । तत्तत्सूत्रव्याख्यातृभिर्गीताभाष्यटीकाकारैश्चेति शेषः । शत्रैवानुवादसमाप्तीति पाठः । शतृप्रत्ययेनैवेत्यर्थः । तत्रैवेति पाठे तु शत्रन्ते वदन्नित्यत्रैवेत्यर्थ इति बोध्यम् । अन्यथा शत्रन्तप्रयोगस्थले यत इत्यादिकैर्वदन् अवाच्यत्वं कथं ब्रूयादित्यादौ शत्रुतरक्रियापदान्तरप्रयोगस्य क्लृप्ततया वदन्नित्येतावन्मात्रोक्तौ किमित्याकाङ्क्षाया निवृत्त्यभावेन वाक्याभासत्वं स्यात् । वदतीति व्याख्याने तु नाकाङ्क्षानुवर्तत इति भावः । यो वादी वदतीति सम्बन्धप्रदर्शनाय वदन् वदतीत्यन्ते पठितमपि पूर्वमेव योजयित्वा अनिर्वाच्येत्यादिकं मध्ये पठितमाकाङ्क्षाक्रमेण योजयति **अनिर्वाच्येतीत्यादिना** । **असत इति** । मायाशबलस्य वन्ध्यापुत्रोपमत्वेनासत्वा-दसत इत्यनुवादः । क्षतिरितीत्यत्रेतिशब्दस्येत्यत इत्यर्थः । अशेषपदैरिति मूले उक्तावपि विशेषण एव भारेण बुद्ध्या विवेकं कृत्वा **अशेषैरिती**ति प्रतीकोपादानमिति ज्ञेयम् । **हानिरिती**त्यत्रेतिशब्दस्येत्यत इत्यर्थः । **स्वाभिमतमिति** । स्वाभिमतं ब्रह्मैव शुद्धमित्यनेनाभिमतम् । तस्य वेदे श्रुततया लक्ष्यत्वमात्राङ्गीकारे श्रुतहानि-रायातीति सूत्रयन्नाहेत्यर्थः । **वाक्यनिष्ठेति** । न्यूनाधिक्यवत्तस्य वाक्यनिष्ठदोषत्वमिति नार्थः । येन पुरुषदोषता अस्य वादिन इत्यनेनोक्ता विरुद्ध्येत । लोकजुगुप्सितमपीदमुभयं न दूषणं ममेत्याद्युत्तरग्रन्थविरोधो वा भवेत् । अपि तु सर्वत्रेत्यस्य सर्वस्थलेष्वित्यर्थात्स्थलत्वेन घटादयः पदार्था न ग्राह्याः । तदवच्छेदेन श्रुतपरित्यागाप्रसक्तेः । किन्तु वाक्येष्वेव श्रुतपरित्यागप्रसक्तिरस्तीति । तत्परित्यागे वाक्यस्यावच्छेदकत्वेन स वाक्यनिष्ठ इत्युपचर्यते ।





धूमस्याग्निना महानसे सामानाधिकरण्यं प्रमेयत्वस्य ह्रदे वह्निव्यभिचार इत्याद्युक्तावपि महानसाद्यवच्छेदेन सामानाधिकरण्यादेर्व्याख्येयत्ववत् सर्वत्रेति सप्तम्यनुसारेण वाक्यनिष्ठेत्युक्तावपि वाक्यस्यावच्छेदकत्व एव तात्पर्यादिति न दोषः । यद्वा पुरुषस्यैव न्यूनादिना निग्रहात्पुरुषदोषतोपपादनं वाक्यदोषत्वाश्रयणेनैव यथातथैव वाक्यदोषभूतश्रुतपरित्यागेन पुरुषनिग्रहान्मम दूषणमित्यादेरबाधकत्वाद्यथाश्रुत एव ग्रन्थ इति ज्ञेयम् । आहेत्यस्य सर्वत्रेत्येतद्वाक्यपरत्वेन व्याचष्ट इत्यर्थः । **ब्रह्मशब्दप्रयोगेति** । ब्रह्मलक्षितमित्यत्रत्यब्रह्मशब्दोपादानसूचिते- त्यर्थः । **युक्तिकथनमिति** । ब्रह्मशब्दप्रयोगे सति प्रथमसूत्रस्थब्रह्मणः प्रत्यभिज्ञानादेतद्युक्तेः सूचनमिति भावः । **उदितज्ञानस्येति** । उदितस्य यद् ज्ञानं तस्येति योज्यम् । **मयेति** । मायावादिनेति वाच्ये एतच्छङ्काया मायावादिमुखेनैवोत्थापने त्वया दृश्ये श्रुतस्य गौणविषयत्वनियममङ्गीकुर्वता तज्ज्ञानस्य मुक्त्यसाधनताया अङ्गीकृतत्वात् तामङ्गीकृत्य मयाऽनुक्तेरिति शङ्कनं स्वोक्ताज्ञानमूलमित्यधिकदोष आविष्कृतो भवतीति भावेन तन्मुखेन शङ्कोत्थापनमिति दर्शयितुं मयेत्युक्तमिति ज्ञेयम् । **अस्येत्येतद्बलादिति** । अनेनात्मशब्देत्यर्धशेषतया आहार्य श्रुतपरित्याग इत्युत्तरार्धगतं योज्यमित्याशयेन स तथाविधेत्यादि मूलं प्रवृत्तमिति सूचितम् । **सूत्र- निवर्त्येति** । तन्निष्ठस्येति सूत्रं हि दृश्ये श्रुत आत्मशब्दो गौणविषय इति नियमवादिनो नियमं निराकर्तुं प्रवृत्तमिति सूत्रनिवर्त्येत्युक्तम् । नियममङ्गीकर्तुरिति पाठः । तादृशं नियमं योऽङ्गीकरोति तस्येत्यर्थः । **नियमानङ्गीति** नञ् लेखकप्रयुक्तः । मूलकोशेऽभावादयुक्तत्वाच्चेति ज्ञेयम् । **तदनुक्तिनिरासायेति** । तदुक्ति- व्याप्यार्थाङ्गीकारे सति तदुक्तिरवर्जनीयेति तदनुक्तिरसिद्धेति निरासस्य मूले प्रतीतेरित्याशयः । **निर्धारणा- सम्भवादिति** । एकमित्यनेनोक्तैकस्य परामृष्टैकस्मादेकस्मिन्नेकमिति पृथक्करणासम्भवादित्यर्थः । **अर्थान्तरेति** । सप्तम्या निर्धारणातिरिक्ताधिकरणत्वविषयत्वादिरूपार्थान्तरेत्यर्थः।

**विठ्ठल०**— दुर्गमार्थत्वान्मूलवाक्यस्यादौ श्रुतपरित्यागमुपपादयितुं तदनुगुणादीनि नियोजयति **यो वादीति** । अत्र आत्मब्रह्मादिशब्दैः परकीयब्रह्मणोऽप्रमेयत्वेनाप्रामाणिकतया श्रुतत्वस्यैवाभावेन श्रुतपरित्यागा- योगादस्मदीयब्रह्मण एव आत्मादिशब्दे श्रुतस्य त्यागेन श्रुतपरित्याग इत्याशयेनोक्तं 'सर्वज्ञं सर्वशक्तिपरिपूर्ण- मस्मदभिमतं' इति वदन्नित्यनुवादेन वदतीति व्याख्यानम् । यो वादीत्यस्यानेनान्वयः । अश्रुतकल्पनमुप- पादयितुमवशिष्टपदानि योजयति **न केवलमिति** । स्वपरयोर्मत इत्यनेन कथं दोषद्वयस्योभयसम्मतिरुक्तेत्यत- स्तदुपपादयति **अस्माभिरिति**।

**९६ सु०— अथ लोकजुगुप्सितमपीदमुभयं न दूषणं ममेत्यभ्युपेयात्तत्राह नियमेनेति ।**

**अनु०— नियमेनोभयं स्याद्धि यस्य स्वपरयोर्मते ॥**
**अलंकृतः सदैवायं दुर्घटैरेव भूषणैः ।**





**अस्माभिरापाद्यते परेणाङ्गीक्रियते । न हि लोकजुगुप्सितं नामैकं प्रतिज्ञा-हान्यादिकमिव निग्रहस्थानमस्ति, लोकस्याव्यवस्थिततत्वात् । 'गतानुगतिको लोकः' इति वचनादिति मन्वानेनेति स्वपरयोः मते मतेन । यस्य नियमेनोभयमिदं स्यादयं दुर्घटैरङ्गीकारानर्हैर्भूषणैर्विपरीतलक्षणया दूषणैरलंकृतः स्यात् । यदि श्रुतमपि विशुद्धं ब्रह्म परित्यज्यते तर्हि सकलोऽपि वेदार्थस्त्यज्यतामविशेषात् । यदि चाश्रुतमपि माया-शबलं ब्रह्म कल्प्यते, तदा चैत्यवन्दनादेः स्वर्गसाधनत्वादेर(दिकम)पि कल्पनी(यं)यत्वं स्यात्, विशेषाभावादित्याशयः ।**

**परि०**— स्वपरयोर्मत इत्यनेन दोषद्वयस्योभयसम्मतिरुक्ता । तत्कथमित्यतोऽस्माभिरापाद्य-मानत्वादस्मत्सम्मतत्वं परेणाङ्गीक्रियमाणत्वात् परसम्मतत्वमिति भावेनाह **अस्माभिरिति** । अङ्गीकारे परस्य किं बीजमित्यत आह **न हीत्यादिना मन्वानेनेत्यन्तेन** । इति मन्वानेन अङ्गीक्रियते इति पूर्वेणान्वयः । उपपादितं मूलारूढं दर्शयति **इति स्वपरयोर्मतेनेति** ।

**यादु०**— स्वपरयोर्मत इत्येतदुपपादयति **अस्माभिरापाद्यत इत्यादिना** । जुगुप्सितं कथं परेणाङ्गीक्रियत इत्याशङ्कापरिहाराय पराभिप्रायमाह **न हीत्यादिना इति मन्वानेनेत्यन्तेन** । इति मन्वानेन परेणाङ्गीक्रियत इति सम्बन्धः ।

**आनन्दः**— ननु लोकजुगुप्सिताङ्गीकारे निग्रहस्थानं प्राप्यत इत्यत्राह **अस्माभिरिति** । सङ्कलितदूषणमाह **यदि श्रुतमपीति** ।

**श्रीनिधि०**— **मन्वानेनेति** । स्वपरयोर्मत इति मन्वानेन परेणाङ्गीक्रियत इति सम्बन्धः । **विशेषा-भावादित्याशय इति** । एवमापादिते श्रुतहान्यश्रुतकल्पने इति वक्तव्यम् । तथाच स्वव्याहतिरित्याशय इति भावः । एवं च किमतोऽन्यन्निग्रहस्थानं नाम ।

**वा०चं०**— ननु लोकजुगुप्सिताङ्गीकारप्रसक्तेरेवाभावात् तत्रानिष्टप्रतिपादकोत्तरवाक्यमसङ्गतमित्यत-स्तत्सङ्गमयति **अथेति** । ननु स्वमतेन श्रुतहान्यादिप्रसक्तेरेवाभावात्परं प्रति तदापादनेऽपि तन्मतेन तदप्रसक्तेः स्वपरयोर्मतेनेत्यनुपपन्नमित्यत आह **अस्माभिरिति** । अनेनापादनीयतयाऽस्मदभिमतत्वं स्वमतेनेत्यस्यार्थः । परेणाङ्गीक्रियमाणत्वं च परमतेनेत्यस्येत्याशयः । यद्वा । स्वशब्दस्य समभिव्याहृतपरत्वापादनीयतयाऽस्मदभि-मतत्वं परमतेनेत्यस्यार्थः । परेणाङ्गीक्रियमाणत्वं च स्वमतेनेत्यस्येति द्रष्टव्यम् । पराङ्गीकारमुपपादयति **न हीति** । अनेन शङ्काभिप्राय उक्तो भवति । दुर्घटस्योद्भावनाऽसम्भवादाह **अङ्गीकारानर्हैरिति** । दूषणापादनावसरे परं प्रति





भूषणापादनं न युक्तमित्यत आह **विपरीतेति** । श्रुतहान्यश्रुतकल्पनयोरङ्गीकारेऽयुक्तं स्यादिति दूषणान्तरस्यापादयितुमशक्यतया श्रुतहान्यश्रुतकल्पनयोरेव चापादनानुपपत्त्या कथमेतदित्यतः प्रकृतश्रुतविशेषहान्यादेरापादकत्वेन परं प्रत्यनिष्टश्रुतविशेषहान्यादेरापाद्यत्वेन विवक्षायां न कोऽपि दोष इत्याशयेनैतदनुव्याख्यानसूचितमतिप्रसङ्गमाह **यदीत्यादिना** । व्याप्त्युपपादनम् **अविशेषादिति** ।

**वा०र०— व्याप्त्युपपादनमिति** । विशेषव्याप्तौ दृष्टान्ताभावेन तथाविधव्याप्त्यनुपपत्तेः कथं तत्र व्याप्तिरिति शङ्कायां व्याप्तेरुपपादनं कृतमविशेषादित्यनेन । तेन हि विशेषव्याप्त्यभावेऽपि पदविशिष्टस्य यस्य यद्वत्वति तदविशिष्टस्यापरस्यापि तद्वतीत्येवंरूपाविशेषव्याप्तिरस्तीति प्रतिपादनाद्भवत्येव तदुपपादनमिति ज्ञेयम् ।

**स०व्र०—** स्वपरयोर्मत इत्येतदुपपादयति **अस्माभिरापाद्यत इति** । जुगुप्सितं परेणाङ्गीक्रियत इति सम्बन्धः ।

**विठ्ठल०—** जुगुप्सितमिदं दोषद्वयं कथम् अङ्गीकारार्हमित्यतो अङ्गीकर्तुः परस्य भावमाह **न हीत्यादिनेति** । **मन्वान इत्यन्तेन** । इति मन्वानेन परेणाङ्गीक्रियत इति सम्बन्धः । पदानि योजयति **मतेन इत्यादिना** । एतदङ्गीकारमात्रेण कथम् अनेकदोषप्राप्तिरित्यत आह **यदीति** । प्रत्यवायोऽनर्थः ।

**९७ सु०— न केवलं श्रौतस्य परमात्मनस्त्यागेऽतिप्रसङ्गमात्रम् । महाप्रत्यवायोऽप्यस्तीत्याह अन्धमिति ।**

**अनु०— अन्धन्तमो नित्यदुःखं तस्य स्याद्वसनद्वयम् ॥**

**अन्धयतीत्यन्धम् । अलंकृतस्य वसनाभ्यां भाव्यम् । 'वस्त्रहीनमलङ्कारं घृतहीनं तु भोजनम् । भावहीनं तु सल्लापं न प्रशंसन्ति पण्डिताः ॥' इति वचनात् । अतो वसनद्वयमिदं स्यादिति परिहासः । अत्र प्रमाणमाह अनन्दा इति ।**

**अनु०— अनन्दा नाम ते लोका अन्धेन तमसावृताः ।**
**तांस्ते प्रेत्याभिगच्छन्ति येऽविद्वांसो बुधो जनाः ॥**
**असुर्या नाम ते लोका अन्धेन तमसावृताः ।**





**तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥**
**इत्यादिश्रुतयो मानं शतशोऽत्र समन्ततः ।**

**न विद्यते नन्द आनन्दो येषु ते अनन्दाः । ते इति प्रसिद्धाः । बोधनाद्बुद्वेदस्तस्मादपि येऽविद्वांसो वेदेन मुख्यया वृत्त्या प्रतिपादितमपि परमात्मस्वरूपमपलपन्त इत्यर्थः । सुष्ठुरमणविरुद्धत्वादसुरप्राप्यत्वाच्च असुर्याः । आत्महनो वेदवाच्यपरमात्मत्यागिनः । अत्र उक्तार्थे । समन्ततः सर्वास्वपि शाखासु ।**

**परि०**— पञ्चम्यन्तत्वेन बुध इति पदं व्याचष्टे **बोधनादिति** । बोधजनकत्वादित्यर्थः । बुद्ध्यतेः क्विप् । श्रुतिगीतातात्पर्योक्तार्थमाह **सुष्ठु इति** ।

**यादु०**— **महाप्रत्यवाय इति** । यद्यपि मूले नित्यदुःखाविर्भावरूपं फलमेवोच्यते न प्रत्यवायः । तथाऽपि कार्योक्त्या कारणमप्युक्तप्रायमेवेत्यभिप्रेत्यैतदुक्तमित्यवगन्तव्यम् ।

**वं०प०**— **भाव्यमिति** । यथोक्तं सन्न्यायरत्नावल्यां 'वस्त्रहीनालङ्कारस्यानुचितत्वात्' इति । अनुचितत्वमेवोपपादयति **वस्त्रहीनमिति** । **वसनद्वयमिदमिति** । अन्धन्तमस्तत्रत्यं नित्यदुःखं चेत्युभयमुत्तरीयं प्रधानवस्त्रं च स्यादित्यर्थः । यथोक्तं तत्रैव 'अन्धन्तमो नित्यदुःखं चोत्तरीयप्रधानवस्त्रत्वेन स्वीकुर्यात्' इति ।

**आनन्दः**— ननु अन्धन्तम इत्यत्र तमोन्धत्वमुक्तं, तदयुक्तम् । तद्धि चक्षूरहितत्वम् । न चाचेतनस्य मनसः चक्षुःप्राप्तिरस्ति येन तन्निषेधो युक्तः स्यात् । तस्याचेतनधर्मत्वादित्यत आह **अन्धयतीत्यन्धमिति** । तथा च ज्ञानप्रतिबन्धकत्वेनान्धकारित्वादन्धमित्युक्त्वा श्रौतपरमात्मत्यागाङ्गीकारे महाप्रत्यवाय इत्यत्रेत्यर्थः । नन्वात्महन्तृत्वमयुक्तम् । आत्मनो नित्यत्वेन तद्धन्तृत्वासम्भवादित्यत आह **वेदवाच्येति** ।

**श्रीनिधि०**— **वसनद्वयमिति** । औत्तरीयं परिधानीयं चेति द्वयमित्यर्थः । **बोधनादिति** । बोधजननादित्यर्थः ।

**वा०चं०**— दूषणकथनावसरेऽन्धन्तम इत्यादि किमुच्यत इत्यतस्तत्तात्पर्यमाह **न केवलमिति** । प्रत्यवायोऽप्यस्तीत्याहेति मूलव्याख्यावसरे गीताभाष्यटीकोक्तरीत्या प्रत्यवायशब्दोऽनिष्टपरः । यद्वा । एतन्मूलानुसारेणागत्या तत्र तथा व्याख्यानेऽप्यनिष्टमिति वक्तुं शक्ये बलादेवंप्रयोगस्यानुचितत्वादत्रानिष्टोक्त्या प्रत्यवायस्तद्धेतुभूतो गम्यते । तस्य च महत्वान्महाप्रत्यवायलाभ इत्याशयो द्रष्टव्यः । अचेतनस्य तमसो-





ऽन्धत्वासम्भवादाह **अन्धयतीत्यन्धमिति** । वसनोक्तिं परिहासोपयोगितया सङ्गमयति **अलंकृतस्येति** । नित्यदुःखमित्यस्य तमोविशेषणत्वेऽपि तद्विशेषणबलात् तमोरूपस्थलस्य तत्रत्यदुःखस्य च पृथक्त्वविवक्षयैकस्य तमस एवोर्ध्वाधरभागविवक्षया वा द्वित्वं द्रष्टव्यम् । अलङ्कारवसनोक्तितात्पर्यमाह **परिहास इति** ।

'नित्यदुःखस्वरूपत्वादनन्दं तत्तमो मतम्' इति 'तेऽपि यान्ति तमो घोरं नित्योद्रिक्तासुखात्मकम्' इति च बृहद्भाष्यं मनसि निधायानन्दशब्दं व्याख्याति **न विद्यत इति** । एवं च नित्यदुःखस्वरूपत्वाद्युक्तिस्तत्तात्पर्यबललब्धेति भावः । यद्यपि नन्दविरुद्धदुःखमनन्दं तद्येषु तेऽनन्दा इत्यपि व्याख्याने तदुक्तिरर्थकथनमेव भवति । तथाऽपि प्रतिपत्तिगौरवापत्तिभयेनैवमुक्तम् । पूर्वं लोकविशेषस्याप्रकृतत्वे तच्छब्देन परामर्शासम्भवात् तमस्त्वस्यालाभाच्च त इति पुनः श्रुतत्वादपौनरुक्त्या च प्रसिद्ध्यर्थतया तच्छब्दं व्याख्याति **त इतीति** । यद्यपि 'बोधके विद्यमानेऽपि ये विदुर्न परं हरिम्' इति बोधनाज्ज्ञानवान् भुत्स्यात्तत्सकाशाच्च ये हरिम् ' इति च तद्भाष्ये भुच्छब्दं ज्ञानिपरमभिप्रेत्याविद्वांसो बुधो जना इति वाक्यं प्रकारान्तरेण व्याख्यातं तथाऽपि बोधकर्तरीव तत्करणेऽपि कर्तृत्वविवक्षया बोधक इति बोधयतीत्यादिशब्दानां बहुलं प्रयोगात् 'इत्यादिश्रुतयो मानं शतशोऽत्र' इत्येतदनुव्याख्यानस्वारस्यानुरोधाद्बृहद्भाष्योक्तसमानन्यायत्वाच्च प्रकृतोपयोगितया व्याख्याति **बोधनादित्यादिना** । असुर्यशब्दव्याख्यानरूपमीशावास्यभाष्यं प्रायोऽनुकरोति **सुष्ठ्विति** । सुष्ठु रमणं सुर्यं तद्विरुद्धमहादुःखवत्त्वादित्यर्थः । सुर्यविरुद्धमसुर्यं तद्येषु तेऽसुर्या इत्यर्थः । असुराणां प्राप्यत्वादित्यनेन सकलसुखराहित्यमुपलक्ष्यते । असुरैर्यायन्ते तेऽसुर्या इति । 'महादुःखैकहेतुत्वात्प्राप्यत्वादसुरैस्तथा । असुर्या नाम ते लोकास्तान्यान्ति विमुखा हरौ' इति तद्भाष्ये आत्महन इत्येतदर्थतयोक्तस्य हरौवैमुख्यस्यैवमपि सम्भवात् प्रकृतोपयोगितयाऽऽत्महन इत्येतद्व्याख्याति **आत्महन इति** । अत्रेत्यस्य समन्तत इत्यनेन सम्बन्धे आसु सर्वासु शाखास्विति भ्रान्तिनिरासायोक्तेऽर्थे प्रमाणत्वस्य मूलारूढतायै चाह **अत्रेति** । अनेकशाखास्थवाक्योदाहरणात् तदनुसारेण समन्तत इति व्याख्याति **समन्तत इति** ।

**वा०र०— अनिष्टपर इति** । तथा च अनिष्टहेतुरूपप्रसिद्धार्थत्यागेनोदाहृतटीकोक्तरीत्या प्रकृतेऽनिष्टपर इति प्रत्यवायोऽप्यस्तीत्यस्यानिष्टमप्यस्तीत्यर्थः । कार्य इति भावः । **एतन्मूलेति** । प्रत्यवायोऽप्यस्तीत्याहेत्युदाहृतगीताभाष्यरूपमूलानुसारेणेत्यर्थः । **तत्र तथेति** । तद्भाष्यटीकायामनिष्टार्थतयेत्यर्थः । **वक्तुं शक्य इति** । मूलकृता अनिष्टमप्यस्तीत्याहेति वक्तव्य इत्यर्थः । **बलादेवमिति** । अन्धन्तमो नित्यदुःखमित्यस्य प्रत्यवायाप्रतिपादकतया अनिष्टस्यैव प्रतिपादकतया च स्वायते प्रयोगे अन्यथाप्रयोगस्यानुचितत्वेनाभिप्रायान्तरमूलकत्वादिति भावः । अनुचितत्वादित्यनन्तरं तथा प्रयुञ्जानस्येति शेषः । **अत्रेति** । अन्धन्तम इत्यनुव्याख्यान इत्यर्थः । **आशयो द्रष्टव्य इति** । इत्याशयेनानिष्टोक्तिस्तद्धेतुप्रत्यवायोक्तित्वेन योजितेत्यर्थः । **तमोविशेषणत्वेऽपीति** । नित्यं दुःखं यस्मिन्निति नित्यदुःखपदस्य तद्विशेषणत्वम् । तथा च नित्यदुःखविशिष्टतमोरूपार्थस्यैकत्वेनैकवसनलाभेऽपि द्वितीयालाभ इत्याशयः । मुख्यद्वित्वालाभेऽपि वैवक्षिकं तदस्तीत्याह **तद्विशेषणेति** । तथा च





दुःखावच्छेदकस्थलं दुःखं चेति द्वयं वसनमित्युक्तं भवति । अस्तु वा दुःखविशिष्टं तम एकम् । तथापि तमस्येव दुःखविशिष्टे प्रदेशभेदेन भेदं विवक्षित्वा वसनद्वित्वोक्तिर्युक्तेत्याह **एकस्येति** । ननु न विद्यते नन्द आनन्दो येष्विति विग्रहाश्रयणे सुखराहित्यस्यैवार्थताप्राप्त्या नित्यदुःखस्वरूपत्वस्य नित्योद्रिक्तासुखात्मकत्वस्य वा तदर्थतया प्राप्त्यभावात् बृहद्भाष्ये तथार्थकथनमयुक्तम् । अनुभाष्येऽपि नित्यदुःखमिति स्वोक्तेरनन्दा इति प्रमाणवाक्यस्य च भिन्नार्थतया अत्र मानमित्युक्त्ययोग इत्यत आह **एवं च नित्येति** । न विद्यते नन्द इत्येव व्युत्पत्तावपि नित्यदुःखेत्यादिवचनमनन्दा इत्येतत्तात्पर्यबललब्धानुवादरूपम् । सुखराहित्यस्य दुःखाविनाभावेनान्धतमसा वृत्तत्वोक्त्या च तमोनित्यदुःखमित्याद्यर्थविवक्षाया ज्ञातुं शक्यत्वादित्यर्थः । नित्यदुःखस्वरूपत्वाद्युक्तेरर्थकथनत्वं यथा स्यात्तथा प्रकारस्यापि सत्त्वेन तदनाश्रयणेन भाष्योक्तेस्तात्पर्यबललब्धानुवादत्वाश्रयणं मूलकारीयं कुत इत्याशङ्क्य निषेधति **यद्यपि नन्देति** । **प्रतिपत्तीति** । श्रुतौ नन्दाभावोक्तौ न प्रतिपत्तिगौरवम् । नन्दविरुद्धमित्याद्याश्रयणे तु दुःखे नन्दपदोक्तानन्दविरोधप्रतिपत्तिपूर्वकं तत् दुःखस्य तेषु लोकेषु सत्त्वमित्येतावानर्थो अनन्दा इत्यनेनोच्यत इत्यङ्गीकारे तु तद्गौरवमित्यर्थः । **पूर्वं लोकेति** । लोकविशेषस्य पूर्वमकृतत्वे सति अप्रकृतत्वादिति यावत् । एतद्वाक्यं शिष्टं योज्यमस्ति । बुधो जना इति वाक्यमिति पाठः । **तेऽसुर्या इतीति** । इत्युपलक्ष्यत इति सम्बन्धः । **आसु सर्वास्विति** । अत्रेति योजितस्यास्विति व्याख्यानम् । **मूलारूढतायै चेति** । समन्तत इत्यनेनात्रत्यस्य सम्बन्धे तदर्थस्य मूलारूढता नायातीति भावः ।

**स०व्र०— महाप्रत्यवाय इति** । महाननर्थ इत्यर्थः ।

**॥ इति गौणश्चेत्यादिसूत्रस्य स्फुटतात्पर्यतोऽधिकव्याख्यानम् ॥**

**॥ इति 'गौणश्चेन्नात्मशब्दात्'-'तन्निष्ठस्य मोक्षोपदेशात्' इति सूत्रयोः स्वमतानुसारेण व्याख्यानम् ॥**

* * *

**॥ अथ 'हेयत्वावचनाच्च' इति सूत्रस्य स्वमतानुसारेण व्याख्यानम् ॥**

९८ **सु०—** दृश्ये वस्तुनि श्रुत आत्मशब्दो गौणपर इति नियमं हेत्वन्तरेणापाकुर्वत्सूत्रं पठित्वा सूत्रे साध्यनिर्देशाभावेन साकाङ्क्षं वाक्यं पूरयति हेयत्वेति ।

**ब्र०सू०— ॥ ॐ ॥ हेयत्वावचनाच्च ॥ ॐ ॥**

**अनु०— हेयत्वावचनाच्चैव नात्मा गौणः श्रुतौ श्रुतः ॥**

एवशब्दो नैवेति सम्बद्ध्यते । दृश्यत्वेनेति शेषः ।





**आनन्दः**— ननु हेयत्वेतिसूत्रं निर्गुणस्य वाच्यत्वसाधकहेतुदर्शनपरं वा बाधकपरिहारे प्राप्तबाधकपरिहारं चापेक्ष्योपदेशादिवद्गौणपरत्वाभाव एव हेत्वन्तरं वेति सन्दिह्यते । किं चेदं साकाङ्क्षमपूर्णं चेत्यत आह **दृश्य इति** ।

**वा०चं०**— उत्तरवाक्ये सूत्रव्याख्यानादर्शनात्तद्वैय्यर्थ्यमित्यतः सूत्रप्रतिपाद्यं प्रदर्शयन्नेवोत्तरवाक्यतात्पर्यमाह **दृश्य इति** । चशब्देन विरोधादेवकारं भिन्नक्रमतया व्याख्याति **एवशब्द इति** । श्रुतौ श्रुतस्य सर्वस्य आत्मनो गौणत्वेन मयाऽप्यनङ्गीकाराद्धेयत्वावचनेन गौणत्वाभावसाधने सिद्धसाधनतेत्यतः पराभिमतनियमाभावसाधनमेतदित्याशयेन सूत्रनिषेध्यनियमस्य मूलारूढतायै शेषं पूरयति **दृश्यत्वेनेति शेष इति** ।

**वा०र०**— **विरोधादिति** । चशब्दैवशब्दयोः समुच्चयावधारणार्थयोरर्थद्वयस्य परस्परविरोधेनैकत्रान्वयायोगादित्यर्थः । **सर्वस्यात्मन इति** । दृश्ये वाच्ये च श्रुतस्यैव तथात्वाभ्युपगमादिति भावः । **मयाऽपीति** । परेणापीत्यर्थः । अत एव पराभिमतेति उत्तरत्र व्यवहारः ।

**विठ्ठल०**— **दृश्यत्वेनेति शेष इति** । दृश्यत्वेन श्रुत आत्मा गौणो नैवेति मूलयोजना ।

९९　**सु०— एवं सूत्रस्वरूपं निर्धार्य व्याचष्टे तमेवेति ।**

**अनु०— तमेवैकं जानथान्या वाचो मुञ्चथ चेति ह ।**
**उक्त आत्मा कथं गौणो हेयपक्षे ह्यसौ श्रुतः ॥**

**दृश्य आत्मा गौण एवेति नियममङ्गीकुर्वाणेन 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ, अमृतस्यैष सेतुः' इति श्रुतोऽप्यात्मा गौणोऽङ्गीकरणीयः, तस्य तं जानथेति दृश्यत्वश्रवणात् । कथं चायं गौणोऽङ्गीकर्तुं शक्यः, यतोऽसौ गौणो मुमुक्षुणा हेयेषु 'अन्या वाचो विमुञ्चथ' इति श्रुतः, अस्य च हेयत्वावचनात्, प्रत्युत तमेवैकं जानथेत्युपादेयत्ववचनाच्च (इति) । चशब्दो वाक्यार्थद्वयसमुच्चयार्थः । हेत्याश्चर्ये ।**

**परि०**— **चशब्द इति** । मुञ्चथ चेति चशब्द इत्यर्थः । 'तमेवैकं जानथ' इति 'अन्या वाचो विमुञ्चथ' इति वाक्ययोः यावर्थौ, 'अस्य च हेयत्वावचनात्' इत्यादिनोक्तौ, तद्द्वयसमुच्चयार्थ इत्यर्थः । **आश्चर्य इति** । अगौणतया प्रतीतमपि गौणं वदतीत्याश्चर्य इत्यर्थः । एवं वक्तारो दुर्लभा इति भावः ।





**यादु०— उपादेयत्ववचनाच्चेति**। अनेनाहेयत्ववचनाच्चेति सूत्रयोजनोक्तिरिति द्रष्टव्यम्।

**वं०प०— सूत्रस्वरूपं निर्धार्येति**। साध्यभागपूरणेन सूत्रवाक्यं निराकाङ्क्षं कृत्वेत्यर्थः। **वाक्यार्थद्वयेति**। अस्य हेयत्वावचनात्। प्रत्युत तमेवैकमित्यहेयत्ववचनात् उपादेयत्ववचनादिति यावदित्येको वाक्यार्थः। 'अन्या वाच' इत्यन्येषां हेयत्ववचनादित्यपर इति वाक्यार्थद्वयेत्यर्थः।

**आनन्दः—** ननु शेषपूरणस्य हेयत्वेत्यनेनैव कृतत्वात्तमेव एकमित्यस्य न प्रयोजनमित्यत आह **एवं सूत्रस्वरूप इति**। **चशब्द इति**। चेति हेति इत्यत्र चशब्द इत्यर्थः। **वाक्यार्थेति**। तमेवैकमन्या वाच इति वाक्ययोर्यदर्थद्वयं निर्गुणस्य हेयत्वावचनं गौणस्य हेयत्ववचनम्। हेयत्ववचनं गौणस्य हेयत्ववचनं अहेयत्ववचनं चेत्येवंरूपं तत्समुच्चयार्थ इत्यर्थः।

**श्रीनिधि०— सूत्रस्वरूपं निर्धार्येति**। विवक्षिताध्याहारेणेति शेषः। **गौणस्य मुमुक्षुणा हेयेष्विति**। गौणस्य मुमुक्षुणा उपादेयत्वाभावस्य तवापि सिद्धत्वादिति भावः। **वाक्यार्थद्वयसमुच्चयार्थ इति**। **मुञ्चथ चेति हेत्यत्र** विद्यमानः वाक्यार्थद्वयं तु हेयत्वावचनादुपादेयत्ववचनद्वितीयम्।

**वा०चं०—** ननु तमेवैकमिति वाक्यश्रुतस्यात्मनो गौणत्वाभावेऽपि न ममानिष्टं किञ्चिदिति तत्साधनमनुपपन्नमित्यतो नियमभङ्गेन कथं नानिष्टमित्याशयेन सूत्रार्थभूतभाष्यं सङ्गमयितुं पीठमारचयति **दृश्य आत्मेति**। सौत्रहेयत्वावचनबललब्धमन्यहेयत्ववचनं भाष्यकारेण हेतुतया निर्दिष्टं प्रकृतसाध्ये हेतुत्वेन सङ्गमयन्नेवोदाहृतश्रुत्यंशे योग्यतया श्रुत इत्येतदन्विततया च दर्शयति **यत इति**। धर्मितया निर्दिष्टस्य श्रौतात्मनोऽसाविति परामर्श इति भ्रान्तिनिरासाय 'कथं गौण' इति निषेधप्रतियोगितया प्रकृतगौणस्यायं परामर्श इत्याह **असौ गौण इति**। 'अमृतस्यैष सेतुः' इति वाक्यशेषबलेन हेयत्वं घटयति **मुमुक्षुणेति**। पक्षशब्दः कोटिपर इत्याशयेन हेयेष्विति तात्पर्यकथनम्। गौणहेयत्ववचनमात्रं नैतस्य गुणत्वाभावसाधकमित्यतः साक्षात्सूत्रोक्तहेतुं सङ्गमयति **अस्य चेति**। अस्यापि यत्किञ्चिदन्यत्वादेतदेव हेयत्ववचनमिति तदवचनमसिद्धमित्यतः सूत्रे नञो भिन्नक्रमत्वेन सूचितं चशब्देन वा समुच्चितं 'तमेवैकम्' इति श्रुत्यंशोदाहरणेन भाष्यकारेण सूचितमुपादेयत्ववचनं च हेतुतया व्यापारयति **प्रत्युतेति**। भाष्ये चशब्दो न श्रुत्युक्तक्रियाद्वयसमुच्चयार्थो वैय्यर्थ्यापत्तेः किन्तु कथमयं गौणोऽङ्गीकर्तुं शक्य इति साध्ये समुच्चितयोर्हेतुत्वज्ञापनायेति 'अन्या वाचो विमुञ्चथ', 'तमेवैकं जानथ' इति वाक्यार्थभूतगौणहेयत्वदृश्यात्माहेयत्वयोः समुच्चयार्थ इत्याह **चशब्द इति**। **हेत्याश्चर्य इति**। उपादेयत्वेन श्रुतस्य दृश्यात्मनो हेयत्वेन श्रुतगौणत्वं वदन्नद्भुत इति भावः।

**वा०र०— कथं नानिष्टमित्याशयेनेति**। अनेन तमेवैकमिति वाक्यश्रुतस्यात्मन इत्युक्तशङ्कां निराकर्तुमङ्गीकुर्वाणेनेत्यन्तमुक्तमिति सूचितम्। अन्यहेयत्ववचनमिति पाठो मूलकोशे। अन्याहेयत्वेति नञ् लेखकप्रयुक्तः। **भाष्यकारेणेति**। अन्येषां हेयत्ववचनादिति हेतुतया निर्दिष्टमित्यर्थः। **धर्मितया निर्दिष्ट-**





**स्येति** । तमेवैकं जानथेत्यादि श्रुतिषूक्त आत्मा कथं गौण इति पूर्ववाक्येनात्मा गौणः श्रुतौ श्रुत इति तत्पूर्ववाक्यसमानार्थे श्रौत आत्मा धर्मितया गौणस्त्वात्मधर्मिकान्योन्याभावप्रतियोगितया निर्दिष्टो वर्तते । तयोर्मध्ये आत्मपरामर्श इति भ्रान्तिवारणाय गौणपरामर्शोऽयमित्याहेत्यर्थः । हेयेष्वसौ श्रुत इत्युक्तं हेयेषु श्रुतत्वं न गौणादात्मशब्दोदितस्य भेदसाधकम् । मुमुक्षारहितैर्हेयेषु श्रुतत्वे आत्मत्वस्यैव सम्भवादित्यतोऽत्र हेयत्वं न येनकेनचिद्धेयत्वे पर्यवसन्नम् । किन्तु मुमुक्षुणैव हेयत्वे । न च तत्प्रापकाभावः । अमृतस्यैष सेतुरित्युत्तरवाक्ये अमृतपदोदितमुक्ताश्रयत्वप्रतिपादनस्यैव पूर्वत्र मुमुक्षुहेयत्वप्रतिपादनमित्येतज्ज्ञापकत्वात् । तथा च येषु हेयेषु श्रुतत्वं तेषां हेयानां मुमुक्षारहितैरहेयत्वेऽपि मुमुक्षुणा हेयत्वस्यैव सत्त्वाद्युक्तं तेषु श्रुतत्वमुक्तभेदसाधकमित्याह **अमृतस्यैष सेतुरिति वाक्यशेषेति** । **हेयत्ववचनमात्रमिति** । आत्महेयत्ववचनविशिष्टगौणहेयत्ववचनस्यैवात्मनो गौणभेदसाधकत्वम् । तावतैव विरुद्धधर्माधिकरणत्वोपपादनलाभादित्याशयः । **साक्षादिति** । मुखत इत्यर्थः । हेतुं सङ्गमयतीत्यस्य हेतुं च सङ्गमयतीति चशब्दार्थान्तर्भविनार्थः । **यत्किञ्चिदिति** । अन्या वाचो विमुञ्चथेत्यनेन हि अन्यस्य हेयत्वमुच्यते । अन्यत्वं च तत्तदपेक्षया सर्वत्रेति श्रौतात्मनोऽपि यत्किञ्चिदन्यतया हेत्वर्थवचनविषयत्वं प्राप्यत इत्यात्मनो हेयत्ववचनमन्या वाच इत्येतदेवेति तदवचनमसिद्धमित्यर्थः । **भिन्नक्रमत्वेनेति** । योग्यतया अहेयत्वेति स्थानान्तरे सम्बन्धेनेत्यर्थः । सूचितमित्यादेर्विशेषणत्रयस्योपादेयत्ववचनरूपविशेष्येणान्वयः । **भाष्ये चशब्द इति** । मुञ्चथ चेत्यत्रत्यश्चशब्द इत्यर्थः । **वैयर्थ्येति** । अत्र वाक्यद्वयपरामर्शस्यैव सिद्धतया तद्गतक्रियाद्वयस्य भाष्यकृता स्वातन्त्र्येणाभिधानाभावेन तत्समुच्चयस्य व्यर्थत्वादित्यर्थः । **समुच्चितयोरिति** । समुच्चितयोरेव हेतुत्वमिति ज्ञापनायेत्यर्थः । अनेन मूलोक्तसमुच्चयार्थत्वप्रयोजनाभिधानेन किं तत्समुच्चयेनापीति शङ्का निराकृतेति ज्ञातव्यम् । आश्चर्यत्वान्वयः कुत्रेत्यप्रतीतेराह **उपादेयत्वेनेति** ।

**विठ्ठल०— चशब्द इति** । मुञ्चथ चेति चशब्दः । **तमेवैकं जानथेति** । अन्या वाचो विमुञ्चथेति वाक्ययोर्यावर्थौ तयोस्समुच्चयार्थ इत्यर्थः । **आश्चर्य इति** । गौणतया प्रतीतमपि गौणं वदन्ति अत एवं वक्तारो दुर्लभा इति भावः ।

**१०० सु०— ननु गौणानामपि ब्रह्मादिदेवतानामुपादेयत्वं वक्ष्यति अङ्गावबद्धास्स्वित्यादौ । अतोऽनैकान्तिकोऽयं हेतुरित्यत आह परिवारतयेति ।**

## अनु०— परिवारतया ग्राह्या अपि हेयाः प्रधानतः ।

**सत्यं विष्णुपरिवारतया ग्राह्या ब्रह्मादयः(ह्याः), तथाऽपि प्रधानत्वेन हेया एव । प्राधान्येन चोपादेयत्वमत्र हेतुत्वेन विवक्षितम्, अमृतस्यैष सेतुरिति वाक्यशेषात् । अतो न व्यभिचार इति ।**





**परि०— अङ्गेति**। 'अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्' इत्युपासनापादीयाधिकरणे अङ्गैरङ्गदेवैरवबद्धाः सम्बद्धा अङ्गदेवताभूतब्रह्मादिविषया इति यावत्। उपासनाः परिचर्यादयः कार्या इति वक्ष्यमाणत्वादिति भावः। **अनैकान्तिकेति**। निर्गुणव्यभिचारीत्यर्थः। प्रधानत इति भावप्रधानं मत्वाऽऽह **प्रधानत्वेनेति**।

**यादु०— ननु गौणानामपीति**। ननु गौणशब्देन मायाशबलस्य पूर्वमुक्तत्वादत्र जीवानां ग्रहणं कथमिति चेत्। उच्यते। यत्र दृश्यत्वादिकमुच्यते तत्र सर्वथा निर्गुणं न वाच्यम्। किन्तु मायाशबलं वा गुणबद्धा जीवा वा वाच्या इत्यभिप्रायः। पूर्वपक्षिणोऽतो न विरोध इति ज्ञातव्यम्। **अनैकान्तिको हेतुरिति**। निर्गुणत्वव्यभिचारीत्यर्थः। **अमृतस्यैष इति**। एष परमात्माऽमृतस्य मोक्षस्यार्थे सेतुर्मुख्याश्रयः। अतः प्राधान्येन स एव ज्ञेय इति तद्वाक्याभिप्रायः। अतोऽस्य प्रकृतसङ्गतिरिति ध्येयम्।

**आनन्दः**— एवं च तमेवमिति वाक्यप्रतिपाद्ये निर्गुण उपादेयत्वादित्यनुमानमुक्तं भवति। अत्र व्यभिचारं शङ्कते **नन्विति**।

**श्रीनिधि०**— गौणः श्रुत्युक्तेन उपादेयत्वादित्यस्य व्यभिचारमाशङ्क्य परिहरति **नन्विति**। **अत्र** श्रुतौ। **वाक्यशेषादिति**। प्राधान्येनोपादेयत्वम् अनन्यशेषतया उपादेयत्वम्। तच्च अमृतस्येति वाक्यशेषात् ज्ञायते। न ह्यन्य ह्येषतयोपादेयस्य मुक्ताश्रयत्वं अस्तीति भावः।

**वा०चं०**— परिवारतयेत्युत्तरवाक्याभिप्रायत्वेन भाष्याभिमतं यत्प्राधान्येनोपादेयत्वस्य हेतुत्वं तत्र प्राधान्यरूपहेतुविशेषणप्रयोजनं दर्शयन्नुत्तरवाक्यमवतारयति **नन्विति**। एवं च मायावाद्यभिमतस्यास्मदभिमतेश्वरजीवादिविलक्षणस्य शबलब्रह्मणो गौणस्येक्षणीयत्ववाच्यत्वयोः पराभिमतत्वे तस्याधिकतात्पर्यकथनदशायामनुभाष्यकारीया वन्ध्यापुत्रोपमत्वाद्युक्तिः, जीवादिरूपगौणात्मत्वाभिप्राये च हेयत्वाद्युक्तिरिति न पूर्वोत्तरविरोधः। भाष्ये तु गौणात्मनो वन्ध्यापुत्रोपमत्वाद्युक्तेरभावात् तदनुसारेण तत्त्वप्रकाशिकायां गौणश्चेदित्येतद्व्याख्यावसरे जीवाख्य इति विशिष्यैवोक्तिरिति द्रष्टव्यम्। प्रकृतोपयोगितयाऽन्वयं दर्शयति **सत्यमिति**। प्राधान्यविवक्षाज्ञापकत्वेन श्रौतज्ञापकमाह **अमृतस्येति**।

**वा०र०— विशेषणप्रयोजनमिति**। अनैकान्तिकत्वरूपं प्रयोजनम्। प्रयोजकम्। तद्दोषशङ्कायामेव तत्परिहाराय प्राधान्येनेति विशेषणप्रयोगस्यावसरात्। विशेषणव्यावर्त्यं दर्शयन्निति फलितोऽर्थः। ननु प्राक् सगुणस्य वन्ध्यापुत्रोपमत्वं गौणश्चेदित्यादिसूत्रीयाधिकतात्पर्यकथनदशायामुक्तम्। इह च हेयत्वावचनसूचितान्यहेयत्ववचनं गौणात्मपरित्यागे हेतुत्वेन भाष्यकृतोक्तम्। तथा च पूर्वोत्तरविरोध इत्यतस्तस्माच्छास्त्रेण जिज्ञास्यमस्मदीयमित्युत्तरानुभाष्यमूलानुसारेण तं परिहरति **एवं चेति**। **भाष्ये त्विति**। सूत्रभाष्ये त्वित्यर्थः।





**विठ्ठल०—** वस्तुतः पराभ्युपगतगौणात्मनो वन्ध्यापुत्रोपमत्वेन स्वरूपस्यैवाभावान्न हेयत्वमुपादेयत्वं वा, अन्येषां हेयत्ववचनादिति सूत्रकाराभिप्रेतसगुणास्तु ब्रह्मण एवेत्याशयेन शङ्कते **ननु इति**।

**॥ इति 'हेयत्वावचनाच्च' इति सूत्रस्य स्वमतानुसारेण व्याख्यानम् ॥**

* * *

**॥ अथ 'स्वाप्ययात्' इति सूत्रस्य स्वमतानुसारेण व्याख्यानम् ॥**

**१०१ सु०— एवमात्मशब्दस्य निर्गुणविषयत्वमुपपाद्य निर्गुणस्यैव वाच्यत्वं समर्थितम् । हेत्वन्तरेणास्यैवार्थस्योपपादकम् 'स्वाप्ययात्' इति सूत्रं व्याचष्टे पूर्णस्येति ।**

**ब्र०सू०— ॥ ॐ ॥ स्वाप्ययात् ॥ ॐ ॥**

**अनु०— पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥**
**इति स्वस्यैव पूर्णस्य पूर्णेऽप्यय उदाहृतः ।**

**पूर्णस्येत्यस्यां श्रुतौ तावत्कस्यचिन्महाप्रलये स्वस्य स्वस्मिन्नेवाप्ययो नान्यत्र लीनभाव उदाहृतः । स्वाप्ययशब्दश्च सौत्र उपलक्षणमात्रम्, पूर्णत्वमप्युदाहर्तव्यम् । ताभ्यामसौ निर्गुण इति ज्ञायते, श्रुत्युक्तत्वाच्च वाच्य इत्यतो निर्गुणस्य वाच्यत्वसिद्धिरिति ।**

**परि०—** ननु सौत्रस्वाप्ययहेतोः तदुपलक्षितपूर्णत्वहेतोश्च 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्युते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' इति श्रुत्युक्तो निर्गुण इति साध्येनैवान्वयेन वाच्यत्वरूपसाध्येनान्वयाभावात् कथमस्यैव वाच्यत्वस्यैवोपपादकं 'स्वाप्ययात्' इति सूत्रमिति पूर्वमवतारितमित्यतः परम्पराभिप्रायेणेति भावेन हेत्वन्तरमध्याहृत्याऽऽह **श्रुत्युक्तत्वाच्चेति** । एतेन हेत्वन्तरत्वे चशब्दः स्यादिति निरस्तम् । पूर्णमद इत्यादिश्रुत्युक्तत्वाच्चेति वाच्यत्वे हेतुत्वाशयेन हेत्वन्तरेणेति पूर्वोक्तिसम्भवात् । नन्वेवमीक्षणीयत्वादिति प्रधानहेतोर्हि श्रुत्येकजन्यज्ञानविषयत्वादित्यर्थस्याभिमतत्वात्तेनास्य हेतोरविशेषः । श्रुत्युक्तत्वादित्यस्य अपि श्रुतिजन्यज्ञानविषयत्वादित्यर्थकत्वादिति चेन्न । तत्र तु श्रुतिसामान्यजन्यज्ञानविषयत्वादात्मा वाच्य इत्यर्थस्य अत्र





स्वाप्ययपूर्णत्वरूपधर्मद्वयोपेतपूर्णमद इत्यादिश्रुतिविशेषजन्यज्ञानविषयत्वान्निर्गुण आत्मा वाच्य इत्यर्थस्याभिमतत्वेन सामान्यविशेषरूपतया पौनरुक्त्याभाव इति तात्पर्यात्। एवं श्रुतत्वाच्चेत्यत्रापि ध्येयम्।

**यादु०— उपपादकमिति**। वक्ष्यमाणरीत्या परम्परयोपपादकमित्यर्थः। **श्रुत्युक्तत्वाच्च इति**। अत्र वाच्यतासाधनाय 'श्रुत्युक्तत्वाच्च' इति सूत्रमध्याहार्यम्। 'पूर्णमदः पूर्णम्' इति श्रुत्युक्तत्वाच्च वाच्यो निर्गुण इति तदर्थः। अस्या अपि श्रुतेः सगुणपरता किं न स्यादिति शङ्कानिरासाय स्वाप्ययात् इति सूत्रम्। अत एव तत्र चशब्दाभाव इति सम्प्रदायः।

**आनन्दः—** ननु स्वाप्ययादित्यस्य वाच्यत्वसाधकपरत्वं वा बाधकपरिहारे हेत्वन्तरत्वं वा नोभयमपि तदापादकशब्दाभावादित्यत आह **एवमात्मशब्दस्येति**। तथा च श्रुत्युक्तत्वरूपवाच्यत्वसाधकहेतुपरत्वाभावात् चशब्दाभाव इति भावः।

**श्रीनिधि०— श्रुत्युक्तत्वाच्चेति**। स्वस्मिन् लीनत्वेन पूर्णत्वेन च श्रुत्युक्तत्वादित्यर्थः।

**वा०चं०—** पूर्वसूत्रवदुत्तरसूत्रस्यापीक्षणीयस्य गौणत्वनिरासकत्वमेव न तु प्रधानसाध्यहेतुसमर्पकत्वमिति भ्रान्तिं निरसितुं पूर्वसूत्रचतुष्टयस्यैकहेतुसमर्थनपरत्वमुत्तरस्य तु वाच्यत्वहेत्वन्तरसमर्पकत्वं च दर्शयन्नेव भाष्यमवतारयति **एवमिति**। अत्र, इति स्वस्यैव पूर्णस्य पूर्णेऽप्यय उदाहृत इत्यनुव्याख्यानानुसारेण पूर्णत्वविशिष्टस्य पूर्णत्वविशिष्टे लयस्य विशिष्टस्यैव निर्गुणत्वसाधकत्वं प्रतीयते। तच्च स्वस्य स्वस्मिन्नप्ययमात्रस्य तत्साधकत्वोपपादकभाष्येण पूर्णत्वमात्रस्य तत्साधकत्वोपपादकेन 'कथं मायाव्यवच्छिन्न' इत्युत्तरानुव्याख्यानेन विरुद्धमतोऽत्रापि स्वाप्ययमात्रस्यैव हेतुत्वमभिमतं पूर्णस्य पूर्ण इत्युक्तिस्तु सौत्रहेतोरुपलक्षणत्वज्ञापनाय न तु विशिष्टहेत्वभिप्रायेणेत्याशयेन भाष्यं व्याख्याति **पूर्णस्येत्यादिना**। सौत्रोपपादनस्य साक्षात्साध्यं परमसाध्यं च दर्शयन् प्रकृतोपयोगं दर्शयति **ताभ्यामित्यादिना**।

**वा०र०— प्रधानसाध्येति**। वाच्यत्वरूपप्रधानेत्यर्थः। **सूत्रचतुष्टयस्यैकेति**। यद्यप्याद्यं सूत्रं वाच्यत्वहेतुभूतेक्षणीयत्वसमर्पकं उत्तरसूत्रत्रयमेव च तद्धेतुसमर्थनरूपमिति चतुष्टयस्य तथात्वेनोक्तिरयुक्तेत्याभाति। तथापि प्रथमसूत्रेण हेतुसमर्पणाभावे तत्समर्थनानवकाशात्तत्समर्थनोपयोगितया तद्धेतुसमर्पकस्यापि परम्परया तत्समर्थनरूपत्वमित्याशयेन वा च्छत्रिन्यायेन हेतुसमर्पकत्वेऽपि तत्समर्थनरूपत्वविवक्षया वा तथात्वोक्तिर्युक्तेति ज्ञातव्यम्। एकहेतुपरत्वं तत्समर्थनपरत्वं चेति योजनया प्रथमस्य हेतुपरत्वं उत्तरत्र यस्य तत्समर्थनपरत्वमिति वा योज्यम्। **भाष्येणेति**। सूत्रभाष्येणेत्यर्थः। **अनुव्याख्यानेनेति**। अत्र भाष्येणेत्यनेन समुच्चयार्थमनुव्याख्यानेन चेति चशब्दयोजनया व्याख्येयम्। **सौत्रोपपादनस्येति**। स्वाप्ययादिति सूत्रे कृतस्य निर्गुणविषयतोपपादनस्येत्यर्थः। **साक्षात्साध्यमित्यादि**। निर्गुण इति ज्ञायत इत्यनेन साक्षात्साध्यं





दर्शितम् । श्रुत्युक्तत्वाच्च वाच्य इत्यनेन परमसाध्यं दर्शितम् । इत्यतो निर्गुणस्येत्यादिना वाच्यत्वसाधनस्य प्रकृतोपयोगो दर्शितो भवतीति क्रमेणैव योजना । अयं भावः । श्रुत्युक्तत्वाच्च निर्गुणो वाच्य इति बहिरेवोक्तेत्यादि ।

**स०व्र०— श्रुत्युक्तत्वाच्च वाच्य इति** । 'पूर्णमदः पूर्णमिदमि'ति श्रुत्युक्तत्वाच्चेत्यध्याहृतसूत्रं वाच्यतासाधनाय प्रवृत्तम् । अस्याः श्रुतेः सगुणपरतानिरासाय स्वाप्ययादिति सूत्रं प्रवृत्तम् । अत एव तत्र चशब्दाभाव इति द्रष्टव्यम् ।

**विठ्ठल०—** ननु सौत्रस्य स्वाप्ययस्य तदुपलक्षितपूर्णत्वस्य च हेतोः पूर्णमद इत्यादि श्रुत्युक्तं ब्रह्म निर्गुणमिति साध्येनैवान्वितत्वेन वाच्यत्वरूपप्रधानसाध्येनान्वयाभावात्कथमस्यैवार्थस्योपपादकं स्वाप्ययादिति सूत्रमित्युक्तमित्यतः परम्पराभिप्रायेणेति भावेन हेत्वन्तरमध्याहृत्याह **श्रुत्युक्तत्वाच्चेति** । अत एव हेत्वन्तरत्वेऽपि च शब्दाभावो न दोषायेति ज्ञेयम् । अत्र निर्गुणलिङ्गप्रतिपादनद्वारा श्रुत्युक्तत्वम् अभिप्रेतम् । श्रुतत्वाच्च इत्यन्तिमसूत्रे तु साक्षान्निर्गुणपदेनेति न गतार्थतेति ज्ञेयम् ।

**१०२ सु०— ननु स्वाप्ययः पूर्णत्वं च सगुणस्य किं न स्यात् । मैवम् । सगुणस्य स्वाप्ययानुपपत्तिस्तावद्भाष्य एवोक्ता । पूर्णत्वानुपपत्तिमाह कथमिति ।**

## अनु०— कथं मायाव्यवच्छिन्नः पूर्णो मुख्यतया भवेत् ॥

**व्याघातादिति भावः ।**

**परि०— भाष्य एवेति** । न हि गौण आत्मनि निर्दोषस्य लय इति भाष्य इत्यर्थः । व्याख्यातं च तद्भाष्यटीकायाम् । यद्ययं स्वाप्ययवान् गौणस्तर्हि स निर्गुणश्चोभौ प्रलये लयहीनौ तिष्ठत उतैकस्मिन्नन्यस्य लयो भवति । नाद्यः । इदं वा अग्रे नैव किञ्चनासीदित्यादिविरोधात् । द्वितीयेऽपि न तावद्गौणस्य निर्गुणे लयः । तस्य स्वाप्ययेनावस्थाऽभ्युपगतेः । तथा च निर्गुणस्य सगुणे लयो वाच्यः । स चाशक्यः । गौणात्मनि निर्दोषस्य सत्त्वादिगुणहीनस्य शुद्धस्य 'यत्प्रयन्ति' इत्यादिश्रुतिविरोधेन लयानुपपत्तेरिति ।

**वं०प०— स्वस्मिन्नेव** पूर्ण एव । **लीनभावो** लीनत्वम् । नान्यत्र लीनभावोऽन्यत्र लीनत्वाभाव इत्येवकारव्यावर्त्यप्रदर्शनम् । **भाष्य एवेति** । न हि गौणात्मनि निर्दोषस्य लय इति भाष्य इत्यर्थः । स्पष्टमेतत् तत्त्वप्रकाशिकायाम् । **व्याघातादिति** । सगुणस्य मायाऽवच्छिन्नत्वादेव न देशतः पूर्णत्वं व्याहतेः । अवच्छिन्नस्य





अनित्यत्वादेव न कालतः पूर्णत्वं व्याहतेः । अवच्छिन्नस्य अनित्यत्वादेव न कालतः पूर्णत्वं व्याघातात् । तादृशस्य गुणतोऽपि पूर्णत्वमनुभवादिविरुद्धमिति द्रष्टव्यम् । यथोक्तं सन्न्यायरत्नावल्याम् 'पूर्णमद' इत्यादिना आत्मशब्दार्थस्य ब्रह्मणो मूलरूपस्यावताररूपस्य च त्रिविधं श्रूयमाणं पूर्णत्वं मायाऽवच्छिन्नस्य प्रतिपाद्यत्वे व्याहतं स्यादिति ।

**आनन्दः**— व्यभिचारं शङ्कते **ननु स्वाप्यय इति** । **व्याघातादीति** । मायावच्छिन्नपूर्णत्वं च विरुद्ध-मित्यर्थः ।

**श्रीनिधि०— व्याघातादिति भाव इति** । अवच्छिन्न पूर्ण इत्यनयोः पदयोः परस्परविरुद्धार्थप्रतिपादक-त्वादित्यर्थः ।

**वा०चं०**— उत्तरानुव्याख्याने स्वाप्ययानुपपत्त्यव्युत्पादनं न स्वाप्ययस्याहेतुत्वान्नापि तस्य सगुणा-विषयत्वशङ्काऽनवकाशात्किन्तु भाष्ये स्वाप्ययानुपपत्तेः 'न हि गौण आत्मनि निर्दोषस्य लयः' इति प्रतिपादनादतो न तस्य हेतुत्वेऽपि तदनुपपत्त्यप्रतिपादनप्रयुक्तन्यूनतेत्याशयेनोत्तरवाक्यमवतारयति **नन्विति** ।

**वा०र०**— तत्रैवं शङ्कोदेति कुतोऽयं श्रुत्युक्तो निर्गुण ? इति । तत्रेदमुपतिष्ठते **स्वाप्ययादिति** । स्वाप्ययपूर्णत्वाभ्यामयं निर्गुण इति ज्ञायते । तदेवं स्वाप्ययस्य निर्गुणं पूर्णमिति श्रुतिविषय इति साक्षात्साध्यम् । तत्सिद्धं चैतच्छ्रुत्युक्तत्वाच्च निर्गुणं वाच्यमिति बहिरुक्तं परमसाध्यं च दर्शितम् । ततश्च निर्गुणस्य वाच्यत्वमिति प्रकृतप्रमेयसिद्धेरस्य प्रकृतोपयोगोऽपि दर्शितो भवतीति । एतेनैतदप्यपास्तम् । श्रुतत्वाच्चेत्यत्रापि निर्गुणस्य श्रुत्युक्तत्वाद्वाच्यत्वमित्यर्थप्रतिपादनादत्र बहिर्वक्तव्येन तस्य गतार्थतेति । अत्र हि निर्गुणत्वज्ञापकस्वाप्यय-पूर्णत्वाभ्यां पूर्णमद इत्यत्र निर्गुणस्यैव प्रतिपाद्यत्वमिति तच्छ्रुत्युक्तत्वाद्वाच्यत्वमित्येवोच्यते । श्रुतत्वाच्चेत्यत्र तु निर्गुणपदेन निर्गुणस्य श्रुतत्वादित्यर्थः प्रतिपाद्यते । अत एव निर्गुणपदपुरस्कारेणैव तत्र भाष्यादीति ज्ञेयम् । परमसाध्यप्रदर्शकत्वोक्त्येदमपि सूचितम् । श्रुतत्वाच्च निर्गुणो वाच्य इति विशिष्टस्यैव बहिर्वक्तव्यतया तत्त्वप्रकाशिकायामुक्तेर्विशिष्टं वाक्यमध्याहार्यम् । न तु अन्यथाख्यात्युक्तरीत्या श्रुत्युक्तत्वाच्चेत्येवंविधं सूत्र-मध्याहार्यमिति व्याख्यानमादरणीयम् । तत्त्वप्रकाशिकानुसारेण विशिष्टाध्याहारसिद्ध्या श्रुत्युक्तत्वाच्चेत्येतावन्मात्रा-ध्याहारोक्तेरयोगात् । अध्याहृतस्य सूत्रैकवाक्यत्वेनैव सूत्रान्तर्गतावपि पृथक्सूत्रान्तरत्वाभावेन सूत्रमध्याहार्य-मित्यस्यायोगश्च । अन्यथा यतो नारायणप्रसादमृतेन मोक्ष इत्यादेरपि पृथक्सूत्रस्याध्याहार इत्यापातादिति । एतच्च वाक्यार्थविनोदे गुरुचरणैरेवोक्तमिति ज्ञेयम् । **स्वाप्ययानुपपत्तीति** । सगुणविषयत्व इति शेषः । एव-मुत्तरत्रापि । **अहेतुत्वादिति** । निर्गुणविषयत्वे हेतुत्वाभावादिति नेत्यर्थः । प्रतिपादनादित्यनन्तरं स्वाप्ययानुपप-त्त्यव्युत्पादनमित्यनुवर्तते । **तदनुपपत्तीति** । सगुणस्य श्रुतिविषयत्वे तदनुपपत्तीत्यर्थः ।





**विठ्ठल०— भाष्ये इति**। न च गौणात्मनि निर्दोषस्य लयः इत्यत्रेत्यर्थः।

**॥ इति 'स्वाप्ययात्' इति सूत्रस्य स्वमतानुसारेण व्याख्यानम् ॥**

* * *

**॥ अथ 'गतिसामान्यात्' इति सूत्रस्य स्वमतानुसारेण व्याख्यानम् ॥**

**१०३ सु०— अत्र गतिसामान्यादिति सूत्रं न तावद्ब्रह्मणो वाच्यत्वसमर्थनार्थम् । किन्तु शास्त्रस्यानन्तत्वान्न सर्वशास्त्रप्रतिपाद्यत्वं ब्रह्मणो निश्चेतुं शक्यमित्याशङ्कितदोष-परिहारार्थमित्यतः प्रकरणशुद्ध्या व्याचिख्यासुस्तदुल्लङ्घितवान् । व्याख्यास्यति चैतदुत्तरत्र । सूत्रकारस्यापि प्रकरणसाङ्कर्यस्यैतदेव प्रयोजनम् यदाक्षेपद्वयसमाधानस्य पूर्वसूत्रस्थ-संशब्दार्थसमर्थनमेकमेव प्रयोजनमिति सूचनम् । तेन चावृत्त्या संशब्दस्यानेकार्थता-ज्ञापनम् । अन्यथैकेनार्थेन चरितार्थस्यार्थान्तरं न ज्ञायेत । तथा च न लक्षणद्वयस्य शास्त्रीयता स्यादिति ।**

**परि०— प्रकरणशुद्ध्येति** । वाच्यत्वप्रकरणमविच्छेदेन व्याचिख्यासुरित्यर्थः । पाठक्रम-मनुसृत्य गतिसूत्रव्याख्याने वाच्यतासमर्थनप्रकरणं विच्छिद्येतेति भावः । **उत्तरत्रेति** । उपासनापादे । **तेनेति** । सूचनेनेत्यर्थः । न ज्ञायेत चेत्तन्मा विज्ञायीत्यत आह **तथा चेति** । गुणपूर्णत्वलक्षणस्य जगत्कारणत्वलक्षणस्य चेत्यर्थः ।

**गु०दी०— प्रकरणशुद्ध्या व्याचिख्यासुः तदुल्लङ्घितवान्** इत्यत्र वाच्यत्वप्रतिपादनप्रकरणे तत्पराणि सूत्राणि व्याख्यातव्यानि, अन्यत्तु तदनन्तरमिति प्रकरणशुद्ध्या व्याचिख्यासुरित्यर्थः । ननु संशब्दोक्तवाच्यत्व-समर्थनार्थमिदमधिकरणम् । तर्हि षट्सूत्र्येवात्र निबन्धनीया । 'गतिसामान्यादि'सूत्रं तु संशब्दोक्तसकलवेदार्थ-समर्थनपरं चेत्पूर्वाधिकरणान्त एव रचनीयम् । अत्र किमर्थं रचनेति चेत्सत्यं संशब्दोक्तावश्यकवाच्यत्वसमर्थना-नन्तरं हि सकलवेदार्थत्वसमर्थनावसरः । वाच्यत्वस्यैवासिद्धौ सकलवेदार्थत्वस्य सुतरामसम्भवात् तदेवादौ समर्थनीयम् । तस्य च पूर्वाधिकरणेन सहैकाधिकरण्येन प्रतिपादने विलक्षणप्रमेयद्वयस्य ग्रहणे श्रोतॄणामायासः स्यात् । अधिकरणं चातिमहत् स्यात् । अतो भिन्नाधिकरणरचना आवश्यकी । तर्हि 'गतिसामान्यादि'ति सूत्रमेकार्थप्रतिपादकषट्सूत्र्याः उपर्येवावसरसङ्गत्या रचनीयम् । पञ्चसूत्र्याः उपरि 'श्रुतत्वादि'ति सूत्रस्याध-स्तात् कुतो रचनेति चेत्सत्यम् । 'तन्निष्ठस्य मोक्षोपदेशात्', 'हेयत्वावचनात्', 'स्वाप्ययादि'ति त्रिसूत्र्या 'श्रुतत्वादि'त्युत्तरसूत्रे च प्राप्तशङ्काया अपि निवारकत्वादिति ब्रूमः । तथाहि । शाखान्तरे गौणनिष्ठस्यापि मोक्षोपदेशो





हेयत्वावचने स्वाप्ययकथने च सूत्रत्रयोक्तहेतुत्रयस्यापि व्यभिचरितत्वान्न गौणात्मनिषेधे सामर्थ्यं स्यात् । 'श्रुतत्वादि'ति सूत्रे तु साक्षान्निर्गुणस्य श्रुतत्वाद्वाच्यत्वमित्युक्ते शाखान्तरे सगुणस्य श्रुतत्वे सोऽपि वाच्यः स्यात्। निर्गुणश्रुत्या निर्गुणस्य वाच्यत्वसाधने न काचिद्धानिः । शाखान्तरे निर्गुणस्याश्रुतत्वश्रवणेऽप्यस्यां श्रुतौ स्पष्टं श्रुतत्वसिद्ध्या तद्वाक्यमत्र योग्यतापराहतत्वाद्योग्यार्थान्तरे योजनीयं स्यात् । न तु स्पष्टदृष्टस्य बाधनायालम् । अश्रुतत्वश्रुतिर्हि 'पश्यन्तोऽपि न पश्यन्ति मेरो रूपं विपश्चित' इतिवदद्भुतत्वादिपरतयाऽपि व्याख्यातुं शक्या । निर्गुणत्वश्रुतिस्तु निर्गुणत्वाख्यमुख्यार्थस्य निर्गुणे सत्त्वेन निर्गुणान्तराभावेन वाच्यान्तराभावादस्याप्यवाच्यत्वे शब्दनैरर्थक्यप्रसङ्गेन नामुख्यवृत्त्या व्याख्यातुं शक्या । 'वागर्थाविव सम्पृक्तौ' इत्याद्यभियुक्तवचनबलात् शब्दस्य नैरर्थक्यं न बुद्धिमता वक्तुमुचितम् । 'एका क्रिया द्व्यर्थकरी प्रसिद्धा' इतिन्यायेनास्य त्रिसूत्र्यामुत्तरसूत्रे पूर्वाधिकरणसूत्रे चोपयोगित्वान्मध्ये रचना । किञ्च 'अधिकरणान्ते रचनायामवसरप्राप्तस्यान्ते निर्देश' इति न्यायेन पूर्वाधिकरणेनैव सङ्गतं न त्वत्रेति बुद्धिः स्यात् । सूत्रमध्ये सङ्कलय्य कथने तु देहलीदीपन्यायेन पूर्वसूत्रेषु उत्तरसूत्रे पूर्वाधिकरणसूत्रे च सङ्गतमेतत्सूत्रमिति बुद्धिमन्तो ज्ञास्यन्तीति सूत्रकारस्याभिप्रायः । भाष्यकारस्तु साक्षादेकार्थता षट्सूत्र्या एव । कथञ्चिदुपयोगस्तु औत्तरव्याख्यैव बोद्धुं शक्यत इत्युपेक्षितवान् ।

**यादु०— प्रकरणशुद्ध्येति** । वाच्यत्वप्रकरणविच्छेदेन व्याचिख्यासुरित्यर्थः । अन्यथा पाठक्रममनुसृत्य मध्ये 'गतिसामान्यात्' इति सूत्रव्याख्याने वाच्यत्वसमर्थनप्रकरणं विच्छिद्येतेति भावः । ननु तर्हि सूत्रव्याख्यानाभावान्न्यूनतेत्यत आह **व्याख्यास्यति चेति** । 'कथं समन्वयो ज्ञेयः स्वल्पशाखाविदां नृणाम्' इत्यादिनोपासनापादे व्याख्यास्यति चेत्यर्थः । सूत्रकारेणापि विष्णोरेवानन्तगुणत्वेन सर्वशाखाप्रतिपाद्यत्वमिति प्रतिपादयद्यत् 'गतिसामान्यात्' इति सूत्रं तत्किमर्थं वाच्यत्वसमर्थनप्रकरणमध्ये निवेशितमित्याशङ्कायामाह **सूत्रकारस्यापीति** । **आक्षेपद्वयसमाधानस्येति** । पूर्वपक्षिणा कृतं, ब्रह्मणो न वाच्यत्वं युक्तम्, न वा सर्वशास्त्रप्रतिपाद्यत्वमिति यदाक्षेपद्वयं तत्समाधानस्यास्मिन्नधिकरणे क्रियमाणस्येत्यर्थः । **अनेकार्थताज्ञापनमिति** । 'मुख्यार्थो भगवान्विष्णुः सर्वशास्त्रस्य नापर' इत्यनेनोक्तवाच्यत्वसर्वशास्त्रप्रतिपाद्यत्वरूपानेकार्थताज्ञापनार्थमित्यर्थः । **अन्यथेति** । प्रकारणसाङ्कर्याभाव इत्यर्थः । प्रकरणसाङ्कर्ये हि किमर्थमेवमुक्तमित्यूहोदयेनोक्तानेकार्थता ज्ञातुं शक्या नान्यथेति भावः । **लक्षणद्वयस्येति** । जगज्जन्मादिकारणत्वस्य समस्तगुणपूर्णत्वस्य चेत्यर्थः । यदि वाच्यत्वरूपोऽर्थो न ज्ञायेत तदा लक्षणयाऽपि सर्वशास्त्रप्रतिपाद्यत्वसम्भवेनोक्तलक्षणद्वयस्य न शास्त्रात्सिद्धिः । यदि वा सर्वशास्त्रप्रतिपाद्यत्वरूपमर्थान्तरं न ज्ञायेत तदाऽपि शाखान्तरेऽन्यस्यापि वाच्यत्वशङ्कयोक्तलक्षणद्वयस्य न शास्त्रादध्यवसाय इति भावः । इदमुपलक्षणम् । शाखान्तरे सत्त्वादिगुणयुक्तेऽप्यात्मशब्दो मुख्यतयोच्यतां तज्ज्ञानान्मोक्षादिश्चोच्यताम् । अतश्च नात्मशब्दादिना निर्गुणस्येक्षणमिति शङ्कानिरासकत्वाच्च गतिसामान्यस्य वाच्यत्वसाधकेक्षत्यधिकरणान्तर्गतिः । अत एव भाष्यकृता गतिसूत्रं 'न च कासुचिच्छाखास्वन्यथोच्यते' इति सामान्यपरतयैव व्याख्यातम् । सूत्रकृता च वाच्यत्वसाधकात् 'श्रुतत्वाच्च' इत्यस्मात्प्रागेव गतिसामान्यादित्येतन्निवेशितमिति चन्द्रिकोक्तप्रयोजनमपि द्रष्टव्यम् ।





**वं०प०— आवृत्त्येति**। 'मुख्यार्थो भगवान्विष्णुः सर्वशास्त्रस्य' इत्युक्तरीत्याऽऽवृत्त्येत्यर्थः। न ज्ञायतां को दोषः इत्यत आह **तथा चेति**।

**आनन्दः—** नन्वग्रे गतिसामान्यादितिसूत्रपरित्यागेन श्रुतत्वाच्चेतिसूत्रव्याख्यानमयुक्तमित्यत आह **अत्रेति**। **प्रकरणशुद्ध्येति**। वाच्यत्वप्रतिपाद्यत्वप्रतिपादकप्रकरणशुद्ध्येत्यर्थः। ननु गतिसूत्रस्य वाच्यत्वपरत्वाभावे वाच्यत्वप्रतिपादनप्रकरणे तत्प्रवेशो व्यर्थ इत्यत आह **सूत्रकारस्येति**। **तेन चेति**। प्रयोजनसूचनेन इत्यर्थः। **अन्यथेति**। संशब्दस्यानेकार्थत्वज्ञापनाभाव इत्यर्थः।

**श्रीनिधि०— प्रकरणशुद्ध्येति**। द्वयमिह समर्थनीयम्। वाच्यत्वं सर्ववेदवाच्यत्वं चेति। तत्र वाच्यत्वसमर्थनप्रकरणे विजातीयाप्रवेशेन व्याचिख्यासुरित्यर्थः। तर्हि सूत्रकारस्य कौशलं इत्याशङ्क्य परिहरति **सूत्रकारस्यापीति**। **लक्षणद्वयस्येति**। जन्मादिकारणत्वस्य अनन्तगुणपूर्णस्य चेत्यर्थः।

**वा०चं०—** पूर्वपक्षदशायामाक्षेपद्वयं कृतं यद्भवद्भिस्तदयुक्तमेतदधिकरणे द्वितीयाक्षेपपरिहारादर्शनात् इत्यतः तदाक्षेपपरिहारार्थकसूत्रस्य भाष्यकारेणात्राव्याख्यातत्वान्नानुपपत्तिरित्याशयेन तदुल्लङ्घने निमित्तं दर्शयति **अत्रेति**। शुद्धिरसाङ्कर्यम्। तर्हि न्यूनतेत्यत आह **व्याख्यास्यति चेति**। सूत्रकाराचातुरीं प्रयोजनसद्भावेन परिहरति **सूत्रेति**। **अनेकार्थताज्ञापनमिति**। उपक्रमादिनिष्ठसम्यक्त्वस्यैव शब्दनिष्ठमुख्यवृत्तिसाकल्ययोरपि तदर्थत्वज्ञापनमित्यर्थः। **एकार्थेनेति**। सम्यक्त्वरूपेणेत्यर्थः। **तथा चेति**। सम्यक्त्वज्ञापनमात्रेण जगत्कारणत्वस्य शास्त्रीयतासिद्धावप्यनन्तगुणपूर्णत्वस्य शास्त्रीयता मुख्यत्वसाकल्याज्ञापने न सिद्ध्येदित्यर्थः। यद्वा मुख्यार्थत्वसाकल्यरूपयोरनयोरेकार्थज्ञापनेऽपि न गुणपूर्णतासिद्धिरिति तदाशयेनायं ग्रन्थो योज्यः।

**वा०र०— आक्षेपद्वयमिति**। वाच्यत्वाक्षेपः साकल्याक्षेपश्चेत्याक्षेपद्वयमित्यर्थः। अत्र पक्षे संशब्दार्थत्रयमपि विवक्षणीयं प्राप्नोति। न च तद्युक्तम्। समन्वयाधिकरणेऽर्थत्रयस्याप्युक्तत्वेऽपि तत्र सम्यक्त्वरूपार्थपरित्यागेन मुख्यत्वसर्वत्वरूपार्थविवाक्षिप्य समाधीयेते इत्यतस्तदुभयार्थविवक्षयैवात्र भाष्य इति वक्तव्यम्। अत एव समन्वयसूत्रे संशब्दार्थभूतमुख्यत्वसाकल्ययोरिवानन्तगुणपूर्णत्वलक्षणोपपादकत्वमभिहितं मूले। तत्र च शास्त्रं प्रमाणीक्रियमाणं वचनवृत्त्या सर्वमेव च युक्तम्। लक्षणादिना वृत्तौ वाच्यार्थगुणालाभात्। वाच्ये तद्गुणप्रसङ्गाच्च। एवं कतिपयवाक्यैरनन्तगुणाप्रतिपादनादित्यादिना। आवृत्त्या संशब्दस्येति मूले तु सम्यक्त्वरूपार्थलाभं यथा श्रुतं समितिपदेनाश्रित्य मुख्यार्थत्वसर्वत्वरूपार्थलाभायैव आवृत्तिद्वयस्वीकारस्य समन्वयाधिकरणे स्पष्टतया तदावृत्त्यर्थकता। अनेकार्थेत्याप्यावृत्तिसाध्यानेकार्थमुख्यत्वसाकल्ययोरेव पर्यवसन्नमिति सिद्धवत्कृत्येति न सम्यक्त्वेऽपि प्राप्नोति। उक्तं च समन्वयसूत्रीयमूले। मुख्यार्थ इत्यावृत्त्या संशब्दस्यार्थान्तरं सर्वेत्यपि संशब्दस्यार्थान्तरमेवेति वचनवृत्त्या सर्वमेव शास्त्रं प्रमाणीकरणीयमिति व्युत्पादनशेषेऽपि अतः संशब्दस्यावृत्तिरुपपन्नेति च। तथा च तत्र संशब्दार्थः सम्यगित्यभिधाय मुख्यार्थ इत्यावृत्त्येत्यादिवचनात्तदनु-





सारेणात्रावृत्त्या संशब्दस्यानेकार्थतेत्यनेनावृत्तिकरणानन्तरं लब्धार्थद्वयस्यैव सङ्ग्रहसिद्ध्या यथाश्रुतलभ्यसम्यक्त्वस्याप्यनेकार्थनिवेशायोगादित्येवं पूर्वयोजनायामरुचिं मनसि निधायावृत्तिलभ्यार्थद्वयमात्रविषयतयाऽनेकार्थेत्यादि योजनीयमिति प्रकारान्तरमाह **यद्वा मुख्यार्थत्वेति** । **एकार्थज्ञापनेऽपीति** । मुख्यत्वरूपप्रथमार्थज्ञापनेऽपि सर्वत्वालाभे कतिपयवाक्यैरनन्तगुणाप्रतिपादनाद्वाक्यान्तरविषयस्य तद्गुणप्रसङ्गेन चानन्तगुणपूर्णताया न सिद्धिरित्यर्थः । यद्वा अन्यतरज्ञापनेऽपीत्यर्थात्साकल्यस्य ग्रहणेऽपि लक्षणादिना शब्दप्रवृत्तिविषयत्वे वाच्यार्थगुणालाभादिदोषादनन्तगुणपूर्णता न सिद्ध्यतीत्येवमेकैकार्थोपादानेन तदसिद्धिरुपपादनीया । अयं ग्रन्थ इत्यनेनैकार्थेनेत्यत्रोक्तयोरन्यतरार्थेनेति पूरणीयम् । न तु पूर्वयोजनायामिव सम्यक्त्वं ग्राह्यम् । तथा चेति वाक्येऽपि सम्यक्त्वं परित्यज्यैव मुख्यत्वसाकल्ययोरभावमादायैव लक्षणद्वयस्य शास्त्रीयतासिद्ध्ययोगो व्युत्पादनीय इति सूचयति । अनेनैव सम्यक्त्वज्ञापनमात्रेण जगत्कारणत्वेऽस्य शास्त्रीयतासिद्धावपीत्यादिना लक्षणद्वयमध्ये एकस्य शास्त्रीयतासिद्धिमङ्गीकृत्यापरस्य तत्सिद्ध्यभाव उच्यते । लक्षणद्वयस्येत्युक्तिर्द्वित्वावच्छिन्नविषयेत्येवमभिप्रायप्रदर्शनमपि अङ्गीकृत्यैव । वस्तुतस्तु मुख्यत्वाभावे लक्षणादिप्रसङ्गेन लक्षणस्यापि शास्त्रीयता न सिद्ध्येदित्येवं लक्षणद्वयस्यापि प्रत्येकं शास्त्रीयत्वाभाव एव विवक्षिततया व्याख्येय इत्यपि सूचितमिति ज्ञातव्यम् । यत्तु लक्षणद्वयस्येति वाक्यं व्याख्यायेदमुपलक्षणम् । शाखान्तरे सत्त्वादिगुणयुक्तेऽप्यात्मशब्दो मुख्यतयोच्यताम् । तज्ज्ञानान्मोक्षादिश्चोच्यतामतश्च नात्मशब्दादिना निर्गुणस्येक्षणमिति शङ्कानिरासकत्वाच्च गतिसामान्यस्य वा वाच्यत्वसाधक ईक्षत्यधिकरणान्तर्गतिः । अत एव भाष्यकृता गतिसूत्रं 'न च कासुचिच्छाखास्वन्यथोच्यत' इति सामान्यपरतयैव व्याख्यातम् । सूत्रकृता च वाच्यत्वसाधकाच्छ्रुतत्वाच्चेत्यस्मात्प्रागेव गतिसामान्यादित्येतन्निवेशितमिति चन्द्रिकोक्तप्रयोजनमपि द्रष्टव्यमिति सूत्रकारकृतप्रकरणसाङ्कर्यप्रयोजनान्तरमुपलक्षणयोक्तमन्यथाख्यातौ । तत्तु पामरजनान्प्रति स्वस्य ग्रन्थान्तरोपस्थितिरस्तीति भ्रान्तिजननायैव । न तु चन्द्रिकाग्रन्थसुधाग्रन्थयोरेकविषयत्वपरामर्शमूलकम् । तथा हि सुधायां हि गतिसामान्यादिति सूत्रस्य भाष्यकृता व्याख्यानाभावे निमित्तमेवमुक्तम् । तत्सूत्रस्य वाच्यत्वसमर्थनार्थत्वं नास्ति किन्तु संशब्दार्थसाकल्यसमर्थकत्वं प्रकरणशुद्ध्या च सूत्रव्याख्यानं भाष्यकारेणोपक्रान्तमस्तीति साकल्यसमर्थकस्य वाच्यत्वसमर्थकषट्सूत्र्यां निवेशितस्यापि तत्स्थाने व्याख्यानमकृत्वैवोत्तरत्र सूत्रं व्याख्यातमिति । तदनन्तरं च यदि गतिसूत्रं वाच्यत्वसमर्थनार्थं न भवतीत्युच्यते तर्हि तस्य भिन्नविषयस्य वाच्यत्वविषयप्रकरणान्तर्निवेशः सूत्रकृता कथं कृतः । तथा सति प्रकरणद्वयसाङ्कर्यं तेन कृतं स्यादित्याशङ्कायां सूत्रकृत्साङ्कर्यकरणप्रयोजनस्य सत्त्वान्न तद्दोषायेत्यभिप्रेत्य तत्प्रयोजनतया आक्षेपद्वयसमाधानस्य पूर्वसूत्रस्थसंशब्दार्थसमर्थनरूपमेकमेव प्रयोजनमिति सूचनं प्रतिपादितम् । ततस्तत्प्रयोजनान्यथानुपपत्त्या समन्वयसूत्रे संशब्दस्यावृत्त्याऽनेकार्थताज्ञापनमपि परमप्रयोजनं प्रतिपाद्य तदुपपाद्यतया लक्षणद्वयसिद्धिरिति चोक्तम् । तदेतत्प्रयोजनं चन्द्रिकोक्तप्रयोजनोपलक्षणतया वाच्यम् । न च तद्युक्तम् । चन्द्रिकायां सुधोक्तरीत्या संशब्दार्थसमर्थनरूपतयैकाधिकरणतामुक्त्वा तद्रूपपुरस्काराभावेऽधिकरणभेदापत्तिप्रकारं चोपदर्श्य तथापि नैवमेकाधिकरणता युक्ता । एकानन्दमयाधिकरणाक्षेपसमाधानपराणामप्यन्तस्थाकाशाद्यधिकरणानां भिन्नाधिकरणताया एवोपलब्ध्या प्रकृते वाच्यत्वहेतूपयुक्तप्रमेयप्रतिपादकत्वस्याभावे आक्षेपद्वय-





समाधानस्य परस्परासंस्पृष्टार्थप्रतिपादकस्यैकवाक्यत्वायोगेनैकाधिकरणत्वायोगादित्याशङ्कापरिहाराय गतिसूत्रस्य ब्रह्मकारणतादिरूपार्थान्तरेऽपि श्रुतीनां नान्योन्यं विरोध इति सूचकत्वेऽपि शाखान्तरे सत्त्वादिगुणयुक्तेऽप्यात्मशब्दो मुख्यतयोच्यताम् । तज्ज्ञानान्मोक्षादिश्चोच्यताम् । अतश्च नात्मशब्दादिना निर्गुणस्येक्षणमिति शङ्कानिरासकतया समन्वयहेतुवाच्यत्वहेतूपयुक्तप्रमेयप्रतिपादकत्वमप्यस्तीति अन्तस्थाद्यधिकरणवैषम्याद्युक्तमेतदधिकरणान्तर्गतत्वेन एकाधिकरणत्वमिति प्रतिपाद्यास्योक्तोपयोगो भाष्यसूत्रकारयोरपि सम्मतः । भाष्येन च कासुचिच्छाखास्वन्यथेति सामान्योक्तेरन्यत्र ब्रह्मकारणतातिरिक्तार्थो नोच्यत इत्यर्थवत् सत्त्वादिगुणयुक्ते आत्मशब्दो मुख्यतयाऽन्यत्र नोच्यत इत्याद्यर्थस्यापि कर्तव्यत्वमित्याशयात् । सूत्रकारेण चान्तेनिवेशनीयसूत्रस्य मध्येनिवेशेन प्रागुक्तवाच्यत्वोपयोगिप्रमेयप्रतिपादकत्वमप्यस्तीति सूचनादिति प्रतिपादितत्वेन तत्र वाच्यत्वसाधकताङ्गीकारेणाधिकरणान्तर्भावोपपादनस्याधिकस्य करणेन चन्द्रिकोक्तप्रयोजनस्य सुधोक्तप्रयोजनविरोधात् । मूले तत्प्रयोजनाङ्गीकारे यदि वाच्यत्वसमर्थनार्थं गतिसूत्रं न भवति तर्हि कुतः सूत्रकृता मध्ये निवेशितमिति सूत्रकारसाङ्कर्यशङ्कायां तत्साङ्कर्यप्रयोजनतया वाच्यत्वसमर्थनरूपत्वस्यापि सत्त्वादित्येवं वाच्यत्वसमर्थनरूपत्वोक्तौ वाच्यत्वसमर्थनत्वाभावेऽपि तत्समर्थनरूपत्वमस्तीति व्याहतभाषणप्राप्तेः । न च मुख्यतो वाच्यत्वसमर्थनार्थत्वाभावाश्रयणेन सुधाग्रन्थः अर्थान्तराभिप्रायस्याप्यङ्गीकारेण तु चन्द्रिकाप्रवृत्तिरिति न विरोध इति वाच्यम् । तथापि अमुख्यतो वाच्यत्वोपयोगेऽपि मुख्यतो वाच्यत्वसमर्थनार्थत्वाभावे कुतो मध्ये निवेश इति साङ्कर्यैकैमर्थ्यशङ्काया एवानुदयः । अमुख्यतो वाच्यत्वसाधकत्वस्याङ्गीकारेण तावतैव निवेशोपपत्तेर्वक्तुं शक्यत्वात् । तथा च संशब्दार्थसमर्थनरूपैकप्रयोजनसूचनरूपं प्रयोजनं न वक्तव्यम् । किञ्चित्प्रयोजनस्य परेणैवाङ्गीकारे साङ्कर्य प्रयोजनान्तरस्यावक्तव्यत्वात् । चन्द्रिकोक्तप्रयोजनं तु तेनैवाङ्गीकृतमिति न प्रकरणसाङ्कर्यशङ्कामुत्थाप्य तत्परिहाराय तदेव पृथग्वक्तव्यतया प्रसज्यत इति तदुपलक्षणावर्णनायोगः । अन्तस्थाद्यधिकरणवैषम्याय कथञ्चिद्वाच्यत्वसमर्थनोपयोगोऽस्तीति प्रतिपादनाय प्रवृत्तेन चन्द्रिकाकृता आनुषङ्गिकप्रयोजनाभिधानेनेह च प्रकरणसाङ्कर्यशङ्कापरिहाराय मुख्ये प्रयोजनेऽभिहिते तेनैव तत्प्रयोजनान्तरमपि सिद्ध्यतीत्येव वक्तव्यतया तदुपलक्षणस्यावक्तव्यत्वाच्च । न हि शाल्यर्थं कुल्यासु प्रणीतासु ताभ्यः पानीयं पान्थैः पिपासुभिः पीयत इत्येतावता तत्पानामपि प्रयोजनतया प्राप्नोति । कुल्या निर्मातुस्तदनुद्देशेन यदुद्दिश्य पुरुषा इत्येतत्प्रयोजनलक्षणाभावात् । तस्मादिदमुपलक्षणवचनमयुक्तमित्यलम् ।

**स०व्र०— प्रकरणशुद्ध्येति** । वाच्यत्वपराण्येव सूत्राणि व्याचिख्यासुरित्यर्थः । अन्यथा मध्ये पाठक्रममनुसृत्य गतिसामान्यादिति सूत्रव्याख्याने वाच्यत्वसमर्थनप्रकरणं परित्यक्तमिति प्रतीतिः स्यादिति भावः । ननु तर्हि तत्सूत्रव्याख्यानाभावान्न्यूनतेत्यत आह **व्याख्यास्यति चेति** । 'कथं समन्वयो ज्ञेयः स्वल्पशाखाविदां नृणामि'त्यादिना तृतीये व्याख्यास्यतीत्यर्थः । ननु सूत्रकारेणापि सर्वशाखाप्रतिपाद्यत्वसमर्थनपरं 'गतिसामान्यात्' इति सूत्रं वाच्यत्वसमर्थनप्रकरणमध्ये किमर्थं निवेशितमित्याशङ्कायामाह **सूत्रकारस्यापीति** । **आक्षेपद्वयसमाधानस्येति** । पूर्वपक्षिणा कृतं, ब्रह्मणो न वाच्यत्वं युक्तं, न वा सर्वशास्त्रप्रतिपाद्यत्वं युक्तमिति यदाक्षेपद्वयं





तत्समाधानस्यास्मिन्नधिकरणे क्रियमाणस्येत्यर्थः । **अनेकार्थताज्ञापनमिति** । 'मुख्यार्थो भगवान्विष्णुः सर्वशास्त्रस्य नापरः' इत्यनेन 'मुख्यवाच्यत्वसर्वशास्त्रप्रतिपाद्यत्वरूपानेकार्थता' इत्यर्थः । **अन्यथेति** । प्रकरण-साङ्कर्याभाव इत्यर्थः । प्रकरणसाङ्कर्ये हि किमर्थमेवमुक्तमित्यूहोदयेनोक्तानेकार्थता ज्ञायते नान्यथेति भावः । **लक्षणद्वयस्येति** । जगज्जन्मादिकारणत्वस्य समस्तगुणपूर्णत्वस्य चेत्यर्थः । यदि वाच्यत्वरूपमर्थान्तरं न ज्ञायेत तदा लक्षणया सर्वशास्त्रप्रतिपाद्यत्वसम्भवेन वाच्यार्थगुणालाभेनोक्तलक्षणद्वयस्य न शास्त्रात्सिद्धिः सम्भवति । यदि वा सर्वशास्त्रप्रतिपाद्यत्वरूपमर्थान्तरं न ज्ञायेत तदापि शाखान्तरेऽन्यस्यापि वाच्यत्वशङ्कयोक्तलक्षणद्वयस्य न शास्त्रादध्यवसायः सम्भवतीति भावः ।

**विठ्ठल०— प्रकरणशुद्ध्येति** । वाच्यत्वसाधकसूत्राण्येकीकृत्येत्यर्थः । अन्यथा गतिसूत्रस्याप्यत्रैव मध्ये व्याख्याने एतदपि वाच्यत्वसमर्थनमिति भ्रान्तिः स्यात् । अतोऽस्य गतिसामान्यसूत्रस्येह त्याग इति भावः । तर्हि तद्व्याख्यानाभावान्न्यूनतेत्यत आह **व्याख्यास्यति चेति** । उपासनापाद इत्यर्थः । ननु तर्हि सूत्रकारेणापि सर्वशास्त्रप्रतिपाद्यतासमर्थनपरं गतिसामान्यसूत्रं वाच्यत्वसाधनप्रकरणमध्ये किमिति निवेशितमित्यत आह **सूत्रकारस्यापीति** । न शास्त्रात्सिद्धिर्भवतीत्यर्थः । **आक्षेपद्वयेति** । ननु सर्वशास्त्रप्रतिपाद्यत्वं भगवतो मुख्य-वाच्यत्वं च संशब्दार्थतयाऽभिप्रेतं न तद्युक्तं, यतो वाचो इत्यादिना ब्रह्मणो वाच्यत्वाभावनिश्चयात् शाखान्तर-स्यापि प्रतिपाद्यतोपपत्तेश्चेत्येवं यदाक्षेपद्वयं तत्साधनस्यात्राधिकरणे क्रियमाणस्येत्यर्थः । **अनेकार्थतेति** । 'मुख्यार्थो भगवान् विष्णुः सर्वशास्त्रस्य नापरः' इत्यनेनोक्तवाच्यत्वं सर्वशास्त्रार्थत्वं चेत्यनेकार्थताज्ञापनं प्रयोजनमित्यर्थः । **अन्यथेति** । प्रकरणसाङ्कर्याकरणे ऐक्यार्थमात्रेण संशब्दस्य चरितार्थोपपत्तेः । नार्थान्तरं विज्ञायेत, प्रकरणसाङ्कर्ये कृते तु किमर्थमेवमुक्तमित्यूहोदयेनोक्तानेकार्थता ज्ञायत इति भावः । किं तज्ज्ञानि-नेत्यत आह **तथा चेति** । यदि संशब्दस्य मुख्यार्थकत्वं न ज्ञायेत तदा लक्षणया सर्वशास्त्रस्य ब्रह्मपरता-ऽसम्भवेन शब्दप्रवृत्तिनिमित्तधर्मानुपस्थित्या न जगज्जन्मादिकारणत्वलक्षणस्य तदनुषङ्गलब्धानन्तगुणत्वरूप-लक्षणस्य शास्त्रीयता स्यात् । यदि च सर्वशास्त्रार्थत्वरूपमर्थान्तरं न ज्ञायेत तदा प्रदेशान्तरे सिद्धि-र्भवतीत्यर्थः ।

**चषकः— प्रकरणशुद्ध्येति** । वाच्यत्वप्रकरणमविच्छेदेन व्याचिख्यासुरित्यर्थः । पाठक्रममनुरुन्धानो मध्ये गतिसामान्यादिति सूत्रं यदि व्याकुर्यात् तदा वाच्यत्वसमर्थनप्रकरणं विच्छिद्येतेति भावः । **व्याख्यास्यति चेति** । 'कथं समन्वयो ज्ञेयः स्वल्पशाखाविदां नृणाम्' इत्यादिना साधनलक्षणे उपासनाचरणे व्याकरिष्यति चेत्यर्थः ।

**॥ इति 'गतिसामान्यात्' इति सूत्रस्य स्वमतानुसारेण व्याख्यानम् ॥**

* * *





॥ अथ 'श्रुतत्वाच' इति सूत्रस्य स्वमतानुसारेण व्याख्यानम् ॥

१०४ सु०— उपपत्त्यन्तरेण निर्गुणस्य ब्रह्मणो वाच्यत्वमुपपादयितुं सूत्रम् **श्रुतत्वाच्चेति**।

**ब्र०सू०—　॥ ॐ ॥ श्रुतत्वाच्च ॥ ॐ ॥**

तस्यार्थः। 'एको देवः' इत्यस्यां श्रुतौ निर्गुणस्य ब्रह्मणः श्रुतत्वाच्चास्य वाच्यत्वमुपपन्नमिति।

अत्र श्रुतोऽपि सगुणः किं न स्यादित्यत आह **पदं चेति**।

**अनु०—　पदं च निर्गुण इति कथं गौणं वदिष्यति।**

अत्र हि वाक्ये केवलो निर्गुणश्चेति श्रूयते। निर्गुण इति च पदं कथं गौणं वदिष्यति। व्याहतत्वात्। अतो न सगुणोऽत्र श्रुत इति।

**वं०प०— श्रुतत्वाच्चेति**। निर्गुणपदेनैवेति शेषः।

**वा०चं०—** न पूर्ववत्सूत्रव्याख्यानपरमुत्तरभाष्यमपि तु तदुक्तहेतूपपादकमित्याशयेन सूत्रमवतार्य तदर्थं स्वयं दर्शयंस्तदुपपादकतया भाष्यमवतारयति **उपपत्त्यन्तरेणेति**। निर्गुणपदस्य गौणावाचकत्वेऽप्येतत् श्रुतिप्रतिपादितस्य गौणत्वं किं न स्यादित्यतो भाष्याभिमतं पीठमारचयति **अत्र हीति**। भाष्यं योजयति **निर्गुण इतीति**। सगुणस्य हीत्यादिना स्वयमेव व्याघातमुपपादयिष्यति।

**वा०र०— पूर्ववदिति**। पूर्णस्य पूर्णमित्यादि पूर्वभाष्यवदुत्तरभाष्यं न सूत्रव्याख्यानपरमिति योज्यम्। **तदुक्तेति**। सूत्रोक्तेत्यर्थः। **सूत्रं** उत्तरसूत्रम्। व्याघातः कथमिति शङ्कापरिहारायानुपदमेव तस्य मूलेऽभिधानान्न तदुपपादनमात्रावश्यकमित्याह **सगुणस्य हीत्यादिनेति**।

१०५ सु०— सत्यमस्यां श्रुतौ निर्गुणादिपदप्रतिपाद्यं निर्गुणं ब्रह्मेति, किन्तु लक्षणयैव, तथा च कथमनेन निर्गुणस्य वाच्यत्वसिद्धिः। न च वाच्यं निर्गुणशब्दे(पदे)न निर्गुणं चेल्लक्ष्यं तर्हि तद्वाच्यं वाच्यम्, वाच्यार्थद्वारत्वाल्लक्षणायाः। न च सगुणं निर्गुणपदवाच्यम्, व्याघातात्, सगुणस्य निर्गुणत्वं तथा सति स्यादिति। गुणाभावविशिष्टस्य

वाच्यत्वाङ्गीकारात् । निर्विकल्पकस्वरूपमात्रस्योपलक्ष्यत्वात् । एकमेव हि निर्विशेषं वस्तु परमसूक्ष्मं गुणाभावाद्युपाधिभिरीषत्स्थूलं जातम् । गुणाद्युपाधिभिस्तु स्थूलतरमित्यतो निर्गुणशब्दे(पदे)न गुणाभावविशिष्टवाच्यद्वारा स्वरूपमुपलक्ष्यमिति न कश्चिद्विरोधः।

एवं पूर्णादिपदानामपि लक्षणाप्रकारो द्रष्टव्य इत्याशङ्क्योक्तमेव परिहारं न विस्मरेत्याह **गुणाभावेति** ।

**अनु०— गुणाभावोपलक्ष्यं चेत्पदं तदपि वाचकम् ॥**

**निर्गुणपदेन गुणाभावविशिष्टवाच्यद्वारोपलक्ष्यं चेच्छुद्धं ब्रह्म मन्यस इत्यर्थः । अपि** तथाऽपि, **तत्पदं** लक्ष्यपदम् । ब्रह्मणो **वाचकं** अङ्गीकरणीयम् । तथा च वाच्यत्वमेवापतितमित्यर्थः।

**परि०**— उत्तरवाक्यमवतारयितुं शङ्कामुत्थापयति **सत्यमित्यादिना द्रष्टव्य इत्यन्तेन** । **न च वाच्यमिति** । अस्य, तथा सति स्यादिति न च वाच्यमित्यन्वयः।

**यादु०— निर्विकल्पकेति** । अभावरूपा अपि विशेषा यत्र प्रकारीभवितुं नार्हन्ति तादृशस्वरूपस्येत्यर्थः। नन्वेव ब्रह्मभेदेऽद्वैतहानिरित्यत आह **एकमेव हीत्यादिना** । **परमसूक्ष्ममिति** । केनापि प्रकारेण विशिष्टतया ज्ञातुमशक्यमित्यर्थः । निर्विकल्पकस्वरूपमिति यावत् । **ईषत्स्थूलमिति** । आदावभावरूपकतिपयधर्मविशिष्टतयाऽधिकारिबुद्ध्या विषयीक्रियत इत्यर्थः । **गुणादीति** । गुणक्रियाजात्यादिरूपैरपरैरपि विशिष्टतया ज्ञायत इत्यर्थः । एकमेव वस्त्वारोपितैरल्पैर्बहुभिर्वा विशेषैः क्रमेण विशिष्टतया ज्ञायत इत्येव न तु तत्र भेदोऽङ्गीक्रियतेऽतो नोक्तदोष इति भावः । एतेनानाद्यपरिच्छिन्ने ब्रह्मणि कथं स्थूलसूक्ष्मादिव्यवहारः, कथं वा जात इति व्यवहार इति निरस्तम् । तथा तथा ज्ञानजन्मन एव विवक्षितत्वात् ।

**वं०प०**— व्याघातमेवोपपादयति **सगुणस्येति** । **तथा सति** सगुणस्य निर्गुणपदवाच्यत्वे । **निर्विकल्पकस्वरूपस्येति** । विशेष्यांशभूतस्येत्यर्थः । **एकमिति** । पूर्णत्वादिविशिष्टवाचकेन पूर्णादिपदेन निर्विकल्पकस्वरूपं लक्ष्यमित्यङ्गीकारादित्यर्थः ।





**आनन्दः— सगुणस्येति** । यथा गङ्गाशब्दवाच्यस्य गङ्गात्वं तदवाच्यस्यागङ्गात्वं तथा प्रकृतेऽपि निर्गुणपदवाच्यस्यापि सगुणस्य निर्गुणत्वं तल्लक्ष्यस्य च सगुणत्वं स्यादित्यर्थः । ननु गुणाभावविशिष्टसगुणवत्स्थूलत्वात्कथं निर्गुणपदवाच्यत्वमत्राह **एकमेव हीति** ।

**श्रीनिधि०—** गुणभावविशिष्टस्य वाच्यत्वे निर्विकल्पकस्वरूपमात्रस्य लक्ष्यत्वे सगुणस्यैव वाच्यत्वमागतम् । उपहितस्यैव सगुणत्वात् तथा चोक्तदोषः तदवस्थ इत्यतः गुणाभावविशिष्टसगुणयोरुपाधिभेदात् । भेदेन न कोऽपि दोष इत्याशयेनाह **एकमेव हि निर्विशेषं वस्तु इत्यादिना** । एवञ्च गुणाभावाद्युपाधिभिः यत ईक्षणीयं तन्निर्गुणपदवाच्यम् । सगुणस्य तत्त्वे तस्यावच्छिन्नत्वेन अपूर्णत्वात् व्याघातः । अवच्छिन्नस्य पूर्णत्वं तथा सति स्यादित्याशङ्कायां द्वितीयभावविशिष्टं ईषत्स्थूलं पूर्णादिपदवाच्यं तद्वारा निर्विकल्पकस्वरूपमात्रं लक्ष्यमित्यादि प्रकार इत्यर्थः ।

**वा०चं०—** अत्रोत्तरवाक्ये गुणाभावस्यार्थस्योपलक्षकत्वासम्भवान्निर्गुणपदस्य प्रकृतस्योपलक्षकत्वमुच्यते । तच्च न गौणस्योपलक्ष्यत्वाभिप्रायेण तर्हि 'पदं तदपि वाचकम्' इति परिहारासङ्गतेः । नापि निर्गुणस्योपलक्ष्यत्वाभिप्रायेण निर्गुणस्यैतच्छ्रुतिप्रतिपाद्यत्वमनभ्युपगच्छतस्तदुक्तेर्वैय्यर्थ्यात् । अभ्युपगमे कथं तस्य प्रकृतोपयोगः । कथं च तदभ्युपगमः । अनेकानुपपत्तिग्रस्तत्वादित्यतस्तदभ्युपगमं परस्य, तत्फलं, निर्गुणोपलक्ष्यमिति वक्तव्ये गुणाभावग्रहणसूचितं तदनुपपत्तिपरिहारं च दर्शयंस्तच्छङ्कानिवृत्तये येन लक्ष्यमिति प्रोक्तमित्यादि परिहारस्मारकत्वेनोत्तरवाक्यमवतारयति **सत्यमित्यादिना** । **सगुणस्य हीति** । निर्गुणपदप्रवृत्तिनिमित्तस्य निर्गुणत्वस्य सगुणेऽसत्त्वे तत्पदवाच्यत्वानुपपत्तेरित्यर्थः । गुणाभावविशिष्टस्यापि वाच्यत्वे लक्ष्यस्वरूपालाभ इत्यत आह **निर्विकल्पकेति** । ननु द्वे ब्रह्मणी सगुणं निर्गुणं चेति वदता तृतीयं कथमुच्यते । किञ्च तद्गुणाभावविशिष्टं सगुणोपलक्ष्याभ्यां भिन्नमभिन्नं वा । अभिन्नं चेद्विरोधो वाच्यत्वलक्ष्यत्वव्यवस्थाऽनुपपत्तिश्च । भिन्नं चेदेकधैवेत्यादिश्रुतिविरोधः । तत्कथमेतदित्यत औपाधिकभेदाद्व्यवस्थोपपत्तिः स्वाभाविकतदभावाच्च न विरोध इत्याशयेनाह **एकमेव हीति** ।

पूर्णादिपदानामपि परिच्छेदाभावविशिष्टवाच्यद्वारा स्वरूपोपाधिलक्षकत्वाल्लक्षणया तेषां वाक्यानां निर्गुणपरत्वेऽपि न तैर्वाच्यत्वसिद्धिरिति पूर्वसूत्राभिप्रेतहेत्वाक्षेपोऽप्यत्राभिमत इत्याशयेनाह **एवमिति** । आदिपदेन स्वाप्ययात्मादिशब्दग्रहणम् । पदान्तरस्य वाचकत्वानुक्त्या समुच्चायकत्वासम्भवात्प्रकृतोपयोगितया तदर्थमाह **अपि तथाऽपीत्यादिना** । पूर्ववत्स्वक्रियाविरोधादेर्वक्तुमशक्यत्वात्फलतयाऽपसिद्धान्तमेवाह **तथा चेति** ।

**वा०र०— अत्रोत्तरवाक्य इति** । अत्रेत्यस्य निर्गुणपदस्य गौणवाचकत्वानुपपत्तावुक्तायां सत्यामित्यर्थः । उपलक्षकत्वमुच्यत इत्यस्य तदाशङ्क्यत इत्यर्थः । यद्वाऽत्रोत्तरेत्यस्योक्ताक्षेपपरोत्तरवाक्य इत्यर्थः । तथा चोच्यत

इति यथाश्रुतमेव । उच्यत इत्यनन्तरमिति वाच्यमिति पूरणीयम् । कुतस्तथा वाच्यमित्यतो यथा श्रुतेऽनुपपत्तिरभिहिता गुणाभावस्यार्थस्येति । पदस्येत्यादिना स्वपक्षसाधकमुक्तम् । यद्यप्युपलक्षकत्वमर्थभूतकाकादेर्गृहैकदेशत्वाभावेनेत्यादिकं अज्ञेयं ज्ञानलक्ष्यं च । लक्ष्यं सर्वैरपि विशेषणैरित्येतत्तत्त्वोद्योतटीकायामुक्तम् । तथापि वस्तुगत्या निर्गुणपदस्यैवोपलक्षकताऽत्रास्तीति भावेन तथोक्तिः । न गौणस्येति । तस्य पूर्वं प्रकृतत्वात्प्रसक्तिः । **परिहारेति** । वाच्यत्वापत्तिर्हि परिहारार्थः । गौणे च तदापत्तेरिष्टापादनत्वमिति भावः । **अनभ्युपगच्छत इति** । श्रुतः सगुण इति शङ्कायाः प्रकृतत्वादिति भावः । निर्गुणस्य तदङ्गीकारेणेदं शङ्कान्तरं तर्ह्यस्त्वित्यत आह **अभ्युपगम इति** । **प्रकृतेति** । निर्गुणस्य वाच्यत्वाभावानयनं प्रकृतम् । तत्र कथमुपलक्ष्यत्वोक्तेरुपयोग इत्यर्थः । अभ्युपगमं परकीयमङ्गीकृत्यैतदुक्तम् । वस्तुतः स एवायुक्त इत्याह **कथं चेति** । **अनेकेति** । तद्वाच्यं वाच्यमित्याद्यनुपपत्तीत्यर्थः । तदभ्युपगममित्यादि द्वितीया । तयोर्दर्शयन्निति सम्बन्धः । तदभ्युपगमादिनोपलक्ष्यत्वमाशङ्क्येति तात्पर्यम् । येन लक्ष्यमितीत्यनेनोक्तमेवेति मूलं विवृतम् । व्याघातोपपादनाय प्रवृत्तसगुणस्य हीति वाक्ये सगुणस्य निर्गुणपदवाच्यत्वेऽपि निर्गुणत्वरूपधर्मवत्त्वं कुतः प्राप्नोतीत्याशङ्कां वारयितुं नापेक्षितमर्थमाह **निर्गुणेति** । विशिष्टस्यापीति शङ्काबीजम् । यदि गुणाभावविशिष्टमवाच्यतयाङ्गीकारार्हमपि वाच्यमुच्यते तर्हि तदतिरिक्तस्यान्यस्याभावात्कस्य लक्ष्यत्वं वाच्यमित्यर्थः । द्वे ब्रह्मणी इति प्रक्रमाननुगुणं तृतीयं ब्रह्म कथमङ्गीकार्यमिति शङ्कैकमेव हीत्यादिनैव परिहृतेति वक्तुमाह **ननु द्वे ब्रह्मणी इति** । **विरोध इति** । सगुणत्वनिर्गुणत्वयोरेकत्र प्राप्ते विरोध इत्यर्थः । **अनुपपत्तिश्चेति** । एकत्रैव तयोः प्राप्तेरिति भावः । **एकधैवेत्यादीति** । ननु ब्रह्मद्वयाङ्गीकारेऽप्युक्तश्रुतिविरोधात्कथं तृतीयेऽयं पर्यनुयोग इति चेन्न । परेण मायावशादित्यादिना द्वितीये औपाधिकभेदस्य प्रतिपादनेन तदंशे शङ्काभावात् । तर्हीदानीं ब्रह्मत्रित्वोपपादनमसङ्गतमिति चेन्न । गुणाभावविशिष्टस्वरूपोपदर्शनार्थमेव ततोऽपि स्थूलत्वेन सगुणरूपत्वे द्वितीयस्य प्रतिपादनेन प्रागुक्तमात्रप्रतिपादनाभावादित्याशयात् । **पूर्वसूत्रेति** । प्रकरणशुद्ध्यङ्गीकारे स्वाप्ययादित्यस्यैव पूर्वसूत्रत्वप्राप्तेरेवमुक्तम् । अभिमत इत्यनेनातो नासङ्गतिः शङ्कनीयेति सूचयति **समुच्चायकत्वस्येति** । तदपीत्यपिशब्दस्येति शेषः । **अङ्गीकरणीयमिति** शेषोक्तिर्मूले । **तत्फलतयेति** । अङ्गीकारफलतयेत्यर्थः ।

**विठ्ठल०**— गुणाभावेत्येतन्मूलं सङ्गमयितुं शङ्कामुत्थापयति **सत्यमित्यादिना** । **तथा सतीति** । सगुणस्य निर्गुणपदवाच्यत्वे निर्गुणपदप्रवृत्तिनिमित्तं यद्गुणानधिकरणत्वं तदङ्गीकार्यमिति निर्गुणत्वमेव स्यादित्यर्थः । कुतो न वाच्यमित्यत आह **गुणाभावे इति** । नन्वेवं तर्हि ब्रह्म त्रैविध्यमायातम् इत्यतोऽस्त्वित्याह **एकमेव हीति** । **एवमिति** । पूर्णादिपदान्यप्यपूर्णत्वाभावविशिष्टवाचकत्वद्वारा निर्गुणलक्षकानि इति भावः ।





**१०६ सु०—** ननु लक्ष्यपदेनापि ब्रह्म लक्ष्यमेव न वाच्यमिति चेन्न, अनवस्थाया उक्तत्वात् । किञ्च निर्गुणपदलक्ष्यमित्यनेनापि लक्ष्यत्वे किमस्य वाच्यम् । न तावदन्यत्, तत्र निर्गुणपदस्यैवाश्रवणेन तल्लक्ष्यपदस्य दूरोत्सारितत्वात् । शुद्धं चेत्किं लक्षणया ॥

**॥ इति 'श्रुतत्वाच्च' इति सूत्रस्य स्वमतानुसारेण व्याख्यानम् ॥**

* * *

**॥ अथ ईक्षत्यधिकरणस्य स्वमतानुसार्यर्थोपसंहारः ॥**

किञ्चैवं यद्यद्ब्रह्मतया प्रतिपाद्यते तत्तद्ब्रह्मेति वदता साधु समर्थितो ब्रह्मवाद इत्याशयवानधिकरणार्थमुपसंहरति **अत इति** ।

**अनु०—** **अतोऽनवस्थितिमुखसर्वदोषमहास्पदम् ।**
**कथमेतन्मतं सद्भिराद्रियेत विचक्षणैः ॥**

**एतन्मतं** ब्रह्मणोऽवाच्यत्वमतम् । **अनादरणे च सिद्धं सर्वशास्त्रमुख्यार्थत्वं** ब्रह्मण इति शेषः ।

**परि०—** तदनादरणे किं भवतां फलमित्यत आह **अनादरणे च सिद्धमिति** ।

**यादु०—** **न तावदन्यदिति** । ईषत्स्थूलं स्थूलतरं नेत्यर्थः ।

**वं०प०—** अब्रह्म, शुद्धब्रह्म न भवति, किन्तु वचनवृत्त्या प्रतिपाद्यमन्यदेवेति वदतेत्यर्थः । ननु कथमनेनाधिकरणार्थोपसंहारः । ब्रह्मणः सर्वशास्त्रमुख्यार्थत्वमेव ह्यधिकरणार्थः । न हि स उपसंह्रियते । किन्त्ववाच्यत्वमतानादरणम् । न ह्येतदीक्षत्यधिकरणार्थ इत्यत आह **अनादरणे चेति** ।

**आनन्दः—** **तत्रेति** । अशुद्धान्यस्मिन्नित्यर्थः ।

**श्रीनिधि०—** **अनवस्थितिमुखेति** । मुखशब्दगृहीतदोषमाह **किञ्चेति** । **निर्गुणपदस्यैवाश्रवणेनेति** । सर्वथा अश्रवणेनेत्यर्थः । यथाकथञ्चित्तत्र निर्गुणपदप्रवृत्तौ तल्लक्ष्यत्वमादाय तल्लक्ष्यपदस्य तत्र प्रवृत्तिर्घटते । सार्वजनीने सगुणे सर्वथा निर्गुणपदाश्रवणे सति कथं तल्लक्ष्यत्वरूपविशेषः । येनास्य पदस्य सगुणं वाच्यं स्यान्न हि





घटे भावपदं प्रयुञ्जते । **कदापि** कुत्रापि । येन तत्र लक्षणमादाय घटाभावपटलक्ष्यपदवाच्यत्वं घटे स्यादिति भावः । **किञ्चैवमिति** । एको वेद इति श्रुतौ निर्गुणपदवाच्यतया प्रमितं निर्गुणं वेद इति ब्रह्मतया प्रतिपाद्यते । यस्यानुवित्तः, स एतस्मात् जीवघनादित्यादौ ईक्षणीयं ब्रह्मतया प्रतिपाद्यते तत्सर्वमुक्तप्रकारेण पूर्णं ब्रह्म न किन्त्ववच्छिनं सगुणमिति वदता 'साधु समर्थित' इत्यपहासः । विपरीतलक्षणया ब्रह्मापलाप एव कृत इत्यर्थः ।

**वा०चं०—** ननु प्रपञ्चकाभावात्कथमनवस्था, कथं च दूषणस्वरूपाप्रदर्शने सर्वेत्युक्तिमात्रेण तत्सिद्धिरित्यतः प्रसञ्जकं दर्शयन् सर्वशब्दस्य बहुत्वार्थकमभिप्रेत्य दूषणत्रयं दर्शयन्नुत्तरभाष्यमवतारयति **नन्विति** । अधिकरणार्थोपसंहारत्वस्य मूलारूढतायै सामान्यपदं विशेषपरतया व्याख्याति **एतन्मतमिति** । ननु तन्मतानादरणोपसंहारस्य नाधिकरणार्थोपसंहारत्वमत आह **अनादरणे चेति** ।

**विठ्ठल०— अनवस्थाया इति** । लक्ष्यपदेन ब्रह्मलक्ष्यमित्यत्र यदुत्तरं लक्ष्यपदं तेन वाच्यत्वमापतितम्, तेनापि तल्लक्ष्यं तदोक्तरीत्याऽनवस्थेत्यर्थः । किञ्च निर्गुणपदं लक्षणया निर्गुणपरमिति वदता निर्गुणपदलक्ष्यं ब्रह्मेत्युक्तं स्यात् । तत्र निर्गुणपदलक्ष्यमिति समस्तपदेनापि ब्रह्मणो वाच्यत्वस्य परेणानङ्गीकाराल्लक्ष्यत्वे वक्तव्ये तद्वाच्यं वाच्यं वाच्यार्थद्वारत्वाल्लक्षणायाः तद्वाच्यं च न तावन्निर्गुणादन्यत् । निर्गुणादन्यस्मिन् सगुणे निर्गुणपदस्य कुत्राप्यश्रवणेन निर्गुणपदलक्ष्यपदस्य सुतरामभावात् । निर्गुणपदस्य सगुणपरत्वे दृष्टे वृत्तिचिन्तावसरः स्यात् । यदि च सर्वशास्त्रार्थत्वरूपमर्थान्तरं न ज्ञायेत तदा प्रदेशान्तरेऽन्यस्य वाच्यत्वशङ्कयोक्तलक्षणद्वयस्य नापि निर्गुणं निर्गुणपदलक्ष्यमिति समस्तपदवाच्यं निर्गुणस्य केनापि पदेन वाच्यत्वानङ्गीकारात् । अङ्गीकारे च लक्षणाश्रयणानुपपत्तेः । अतो निर्गुणपदं न लक्षणया निर्गुणपरमिति तस्य वाच्यत्वमेव सिद्ध्यतीत्याशयेनाह **किञ्चेति** । अपि चैवं ब्रह्मणः सर्वशब्दावाच्यत्वे ब्रह्मपरतया प्रतीतानां ब्रह्मात्मादिशब्दानामन्यदेव वाच्यमित्यापन्नम् । तथा च यद्यत् ब्रह्मतया शास्त्रे प्रतिपाद्यते तत्तद्ब्रह्मेत्युक्तं स्यादिति न परस्य ब्रह्मवादित्वं किन्तु शून्यवादित्वमेव प्राप्तमित्याशयेनाह **किञ्चैवमिति** । अस्तु तदनादरणं ततश्च किमित्यत आह **अनादरणे चेति** ।

**॥ इति ईक्षत्यधिकरणस्य स्वमतानुसार्यर्थोपसंहारः ॥**

* * *

**॥ अथ एतदधिकरणीयस्य परेषां व्याख्यानस्य प्रत्याख्यानम् ॥**

**॥ तत्रादौ मायावाद्युक्तीनां निरासः ॥**

**॥ तत्राप्यादौ नैषां सूत्राणां साङ्ख्यनिराकरणार्थत्वम् ॥**

**१०७ सु०— एवमीक्षतेर्नाशब्दमित्यारभ्य श्रुतत्वाच्चेत्यन्तानि सूत्राणि स्वमतेन व्याख्याय परेषां व्याख्यानं प्रत्याख्याति न चेति ।**





## अनु०— न च साङ्ख्यनिराकृत्यै सूत्राण्येतान्यचीक्लृपत्। भगवान्

''सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिनाशकारणं ब्रह्म वेदान्तवेद्यमित्युक्तम् । तत्र साङ्ख्या मन्यन्ते 'यानि ब्रह्मणो जगत्कारणत्वप्रतिपादकतयाऽभ्युपगतानि', 'सदेव सोम्येदमग्र आसीत्' इत्येवमादीनि वाक्यानि तानि सर्वाणि त्रिगुणमचेतनं प्रधानमेव जगत्कारणं प्रतिपादयन्ति । कुतः । ब्रह्मणो ज्ञानक्रियाशक्तिरहितत्वात् । ज्ञानक्रियाकार्यदर्शनोन्नेय-सद्भावे हि ते । न च ज्ञानक्रिये चिदात्मनः स्तः, तस्यापरिणामित्वात्, एकत्वाच्च । त्रिगुणे तु प्रधाने परिणामिनि न तयोरसम्भवकरणमस्तीत्यतस्तदेव 'सदेव सोम्येदमग्रे' इत्यादौ 'जगत्कारणतया प्रतिपाद्यत इति' एवं प्राप्ते प्रतिविधीयते **ईक्षतेर्नाशब्दम् इति** । न साङ्ख्यपरिकल्पितमचेतनं प्रधानं जगतः कारणं शक्यं वेदान्तवाक्येष्वाश्रयितुम् । अशब्दं हि तत् । कथमशब्दत्वम् । ईक्षतेः । 'तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत' 'स ऐक्षत लोकाननुसृजा इति, स इमांल्लोकानसृजत', स ईक्षां चक्रे, स प्राणमसृजत' इतीक्षितृत्वश्रवणात्कारणस्य । न चाचेतनस्य प्रधानस्येक्षितृत्वं, सम्भवति ।

'नन्वयमीक्षतिर्गौणो व्याख्येयः, तत्तेज ऐक्षत ता आप ऐक्षन्तेति गौणप्रायपठित-त्वात् । यथा ह्यासन्नपतनं (न) कूलमालक्ष्य कूलं पिपतिषतीत्युपचारो दृष्टः, तथाऽऽसन्न-सर्गे प्रधानेऽप्यैक्षतेत्युपचारो भविष्यती'त्यतः परिहारं पठति **गौणश्चेन्नात्मशब्दात्** । अप्तेजसोरिवाचेतनेऽपि प्रधाने गौणोऽयमीक्षतिरित्यसत् । कुतः । आत्मशब्दात् । अनेन जीवेनात्मनेति । न हि जीवश्चेतनोऽचेतनस्य प्रधानस्यात्मा सम्भवति । स आत्मा तत्त्व-मसीति च । न हि चेतनस्य श्वेतकेतोरचेतनैक्यबोधनमुपपन्नम् ।

अथोच्येत । अचेतनेऽपि प्रधाने भवत्यात्मशब्दः, आत्मनः सर्वार्थकारित्वात् । यथा राज्ञः सर्वार्थकारिणि भृत्ये ममात्मा भद्रसेन इत्यात्मशब्ददर्शनादिति । तत्रोत्तरम् **तन्निष्ठस्य मोक्षोपदेशात्** । नैवमात्मशब्दालम्बनं प्रधानं कल्प्यम् । स आत्मा तत्त्वमसीति श्वेतकेतोस्तन्निष्ठामुपदिश्य तस्य तावदेव चिरमिति मोक्षोपदेशात् । न ह्यचेतननिष्ठस्य मोक्षो युक्तः ।

स्यादेतत् । ब्रह्मैव ज्ञीप्सितम् । तच्च न प्रथमं सूक्ष्मतया शक्यं श्वेतकेतुं ग्राहयितुमिति तत्सम्बद्धं प्रधानमेव स्थूलतयाऽऽत्मत्वेन ग्राह्यते । अरुन्धतीमिवातिसूक्ष्मां दर्शयितुं तत्सन्निहितां स्थूलतारकां दर्शय(ती)न्तीयमरुन्धतीति । अस्यां शङ्कायामुत्तरम् **हेयत्वावचनाच्च** । एवं सति स्थूलतारावन्नायमात्मेति हेयत्वं ब्रूयात् । न चैवमब्रवीत् । अतो नैषा कल्पना युक्ता ॥ चशब्द 'एकविज्ञानेन सर्वविज्ञान'प्रतिज्ञाविरोधं समुच्चिनोति ।

**स्वाप्ययात्** । सच्छब्दवाच्यं प्रस्तुत्य स्वम(स्वं ह्य)पीतो भवतीत्युच्यते । न ह्यचेतने चेतनस्याप्ययः सुप्तौ लये च सम्भवति । अतश्च न प्रधानं सच्छब्दवाच्यम् ।

**गतिसामान्यात्** । यदि च क्वचिदप्यचेतनं प्रधानं जगतः कारणमुच्येत वेदान्तेषु, तथा सति कथञ्चिदीक्षणादिकं कल्प्येत । न चैवम् । अतो वेदान्तोत्पाद्याया **गतेः** अवगतेरैकरूप्याच्च न प्रधानं जगत्कारणमिति ।

**श्रुतत्वाच्च** । स कारणं कारणाधिपाधिप इति साक्षात्सर्वज्ञस्येश्वरस्य जगत्कारणत्वं श्रूयते । अतश्च न प्रधानं जगत्कारणं वेदान्तवेद्यम् । ज्ञानक्रियाशक्ती त्वपरिणामिनोऽपीश्वरस्य सवितुरिव युज्येते ।

इत्येवं साङ्ख्यनिराकरणायैतानि सूत्राणि भगवान्त्सूत्रकारश्चकार ॥'' इति यन्मायावादिनो वदन्ति तन्नेत्यर्थः । कुतो नेति चेत् (न) । सूत्राक्षराणामनानुगुण्यात् ।

**परि०**— पराभिमताधिकरणशरीरमनुवदति **सर्वज्ञमित्यादिना** । **उक्तमिति** । पूर्वाधिकरणे उक्तमित्यर्थः । **ज्ञानक्रियाकार्येति** । ज्ञानक्रिययोर्यत्कार्यं तद्दर्शनानुमेयसत्ताके ज्ञानक्रिये इत्यर्थः । अपरिणामित्वाज्ज्ञानात्मना न परिणामः । एकत्वान्नानेकात्मना परिणाम इत्यर्थः । साध्याध्याहारेण सूत्रार्थमनुवदति **न साङ्ख्येति** । **अशब्दं हि तदिति** । शब्दाप्रतिपाद्यत्वादिति हेतुगर्भविशेषणमिति भावः । 'स ऐक्षत' इति श्रुत्यन्तरम् । 'स ईक्षां चक्रे' इत्यपि वाक्यान्तरम् । द्वितीयसूत्रमवतार्यार्थमनुवदति **ननु इत्यादिना उपपन्नमित्यन्तेन** । **गौणप्राये** गौणसन्निधौ । गौणत्वप्रकारं व्यनक्ति **यथा हीति** । 'अनेन जीवेनात्मनेति' इत्यस्य आत्मशब्दात् इति सूत्रांशेनान्वयः । **इति चेति** । आत्मशब्दादित्यन्वयः । तृतीयसूत्रमवतार्य तदर्थमाह **अथेत्यादि युक्त इत्यन्तेन** । यथा यजमानकार्यकारित्वाद्यजमानशब्दः प्रस्तरे 'यजमानः प्रस्तरः' इति प्रयुज्यते तथा आत्मनो जीवस्य ये सर्वे अर्थास्तत्कारित्वात्प्रधान-





स्यात्रात्मशब्दो युक्त इति भावेनाह **आत्मनः सर्वार्थकारित्वादिति**। चतुर्थसूत्रमवतार्य तदर्थमाह **स्यादेतदित्यादिना समुच्चिनोतीत्यन्तेन**। **ज्ञीप्सितं** ज्ञापयितुमिष्टम्। **ग्राह्यत इति**। श्वेतकेतुरिति शेषः। णिचि कर्मणि रूपम्। **एकविज्ञानेनेति**। 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इति वाक्येन एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञायते। तच्च ब्रह्मण एव प्रतिपाद्यत्वे सम्भवति। प्रधानस्य प्रतिपाद्यत्वे तु विरुद्ध्यत इत्यर्थः। पञ्चमसूत्रं पठित्वाऽर्थमाह **स्वाप्ययादिति**। षष्ठार्थमाह **गतीति**। सप्तमार्थमाह **श्रुतत्वाच्चेति**। **सवितुरिवेति**। प्रत्यहमपरिणामिनः सवितुर्यथा सर्वप्रकाशनादिशक्तिस्तथेत्यर्थः। **स्वसिद्धेनेति**। सूत्रकारसिद्धेनेत्यर्थः।

**गु०दी०— ज्ञानक्रियाशक्तिरहितत्वात्** इत्यत्र ज्ञानपदेन मानसं ज्ञानमुच्यते 'मनसा वा अग्रे सङ्कल्पयति अथ करोती'ति श्रुतेः कर्तुर्मानसं ज्ञानमेवापेक्षितमिति परस्याशयः। **सवितुरिव** इत्यत्र प्रकाशनशक्तिः क्रियाशक्तिश्च यथा दिने दिने परिणामरहितस्य सूर्यस्य तथेत्यर्थः।

**यादु०— जगत्कारणमिति** उपलक्षणम्। सर्वशक्ति सर्वज्ञं चेत्यपि द्रष्टव्यम्। **प्रतिपादयन्ति** इत्यतःपरं सर्वजननशक्तेरचेतने स्वविकारविषयायाः सार्वज्ञस्यापि तस्मिन्सर्वज्ञानकारणीभूतसत्त्वात्मके सम्भवादित्युपपादनं न ब्रह्मेति प्रतिज्ञा चाध्याहार्या। **ज्ञानक्रियेति**। सामान्ययोर्ज्ञानक्रियाशक्त्योरभावे तद्विशेषयोः सर्वजननज्ञानशक्त्योरभावोऽपि कैमुत्येनैव सिद्ध इति भावः। अतो नासङ्गतिः। उक्तं च भामत्याम् 'ज्ञानक्रियाशक्त्यभावाद्ब्रह्मणोऽपरिणामिनः। न सर्वशक्तिविज्ञाने प्रधाने त्वस्ति सम्भवः' इति। ज्ञानक्रियाशक्त्यभाव एव कुत इत्यत आह **ज्ञानक्रियेति**। **न च ज्ञानक्रिये इति**। कार्यभूत इति शेषः। अत्र क्रियाशब्देन प्रयत्नो ग्राह्यः। नन्वपरिणामिन्यपि ज्ञानगुणः प्रयत्नगुणश्च किं न स्यातामित्यत आह **एकत्वाच्चेति**। एकरूपत्वान्निर्गुणत्वादित्यर्थः। अथवा अपरिणामित्वं साधयत्यनेन। निरवयवत्वादिति यावत्। निरवयवत्वं च कृत्स्नप्रसक्त्यधिकरणपूर्वपक्षन्यायेन परिणामित्वबाधकमिति ध्येयम्। **आसन्नपतनमिति**। निश्चितपतनमित्यर्थः। तेन 'आशङ्कायामचेतनेषूपसङ्ख्यानमि'त्युक्तत्वात् कथमयमुपचार इति शङ्काऽनवकाशः। **आत्मा सम्भवतीति**। आत्मा हि नाम स्वरूपं नाचेतनप्रधानस्य चेतनो जीवः स्वरूपं भवितुमर्हतीत्यर्थः। विधान्तरेण हेतुं व्याचष्टे **स आत्मेति**। यः सदाख्यः प्रकृतोऽणिमा स आत्मा सर्वस्य निरुपचरितं रूपम्। हे श्वेतकेतो त्वं च तदेवात्मरूपमेवासीत्येवं चेतनस्य श्वेतकेतोरात्माभेदो बोध्यते। आत्मत्वेनोपदिष्टं च यदि प्रधानं स्यात्तर्हीदमनुपपन्नार्थकं स्यादित्यर्थः। कथमित्यत आह **न हि चेतनस्येति**। तथा च चेतनस्यात्मशब्दान्न तस्य प्रधानतेत्यर्थः। **आत्मत्वेन ग्राह्यत** इत्यनन्तरं श्वेतकेतुरिति शेषः। **चशब्द इति**। तथा चानुक्तसमुच्चायक इत्युक्तं भवति। अयमर्थः। सत्यपि हेयत्ववचने प्रतिज्ञाविरोधः प्रसज्येत। करणविज्ञानाद्धि सर्वं विज्ञातमिति प्रतिज्ञातम्। 'येनाश्रुतं श्रुतं भवति' इत्यारभ्य 'यथा सौम्यैकेन मृत्पिण्डेन' इत्यादिदृष्टान्तानभिधाय 'एवं सौम्य स आदेशो भवति' इति वाक्योपक्रमे श्रवणात्। न च सच्छब्दवाच्ये प्रधाने भोग्यवर्गकारणे हेयत्वेनाहेयत्वेन वा विज्ञाते भोक्तृवर्गो विज्ञातो भवति। अप्रधानविकारत्वा-





द्धोक्तृवर्गस्य । तस्मात्प्रधानस्यैवात्मतया ग्रहणे प्रतिज्ञाविरोध इति चशब्देनाह सूत्रकार इति । **स्वमपीत इति** । स्वशब्देनेहात्मोच्यते । यः प्रकृतः सच्छब्दवाच्यस्तमपीतो भवति । अपिगतो भवतीत्यर्थः । अपिपूर्वस्येतेर्लयार्थत्वप्रसिद्धेः । न चास्यानाद्यन्तस्य स्वाभाविको लयः सम्भवति किन्त्वौपाधिक एव । देहेन्द्रियमनोरूपस्थूलसूक्ष्मोपाध्यपगमो हि सुप्तिलययोर्जीवस्य भवति । तेनासौ तदा प्रलीन इवेति स्वमपीतो भवतीत्युच्यते । वस्तुतस्त्वैक्यमेवाप्यय इत्यत्राभिप्रेतम् । तच्च प्रधानग्रहणे न सम्भवतीत्याह **न ह्यचेतन इति** । **साक्षात्सर्वज्ञस्येति** । तदैक्षतेत्यत्रेक्षणमात्रं जगत्कारणस्य श्रुतं न तु सर्वविषयम् । तथाऽपि जगत्कारणसम्बन्धितया तदर्थात्सर्वविषयमवगतम् । श्वेताश्वतरोपनिषदि सर्वज्ञ ईश्वरो जगत्कारणमिति साक्षादुक्तमित्यर्थः । 'ज्ञः कालकालो गुणी सर्वविद्यः' इति प्रकृत्य सकारणमिति परामर्शात् । जगत्कारणस्य सर्वज्ञताऽत्र साक्षादुक्तेति द्रष्टव्यम् । तस्य सर्वेश्वरत्वमाह **कारणाधिपेति** । कारणानामधिपाः स्वामिनो जीवास्तेषामधिप इत्यर्थः । 'न तस्य कश्चिज्जनिता न चाधिपः' इति वाक्यशेषाद्धिरण्यगर्भादिव्यावृत्तिरित्यवगन्तव्यम् । ब्रह्मणो ज्ञानक्रियाशक्तिरहितत्वादिति पूर्वपक्ष्युक्तानुपपत्तिं परिहरति **ज्ञानक्रियाशक्ती त्विति** । ज्ञानक्रियारूपधर्मावित्यर्थः । कार्यत्वे हि तयोः परिणामापेक्षा । तौ च नित्यौ ब्रह्मस्वरूपभूतौ चातो न निर्गुणत्वविरोधोऽपीति भावः । नन्वेवमपि न ब्रह्मणः सार्वज्ञादिकं सम्भवति । प्रकृत्यर्थसम्भवेऽपि प्रत्ययार्थस्य कत्वस्यासम्भवात् । क्रियायां स्वतन्त्रकारकं खलु कर्ता । न च नित्यक्रियायाः कारकं सम्भवति । दूरे तद्विशेषः कर्ता । तथा च 'तदैक्षत', इदं सर्वमसृजत' इत्यादिस्वातन्त्र्यव्यपदेशानुपपत्तिरित्यत उक्तम् **सवितुरिवेति** । पूर्वं विद्यमानक्रियाश्रयस्यापि सवित्रादेर्यथा सविता प्रकाशते चैत्रः पश्यति स्वपिति ईक्षति करोतीत्यादिस्वातन्त्र्यव्यपदेशात् तत्तत्कर्तृत्वावभासस्तथा ब्रह्मणोऽपीति भावः । 'इदं च भाष्योक्तमापातत एव । ज्ञानस्वभावे तदाश्रयत्वस्यापि वास्तवस्यासम्भवात् वस्तुतस्तु ब्रह्मस्वभावभूतस्य नित्यस्यापरिच्छिन्नस्यापि ज्ञानादेस्तद्विषयोपाधिभेदेन कल्पितभेदस्यानित्यत्वं कर्तृत्वं चास्त्येव । अतस्तत्र स्वातन्त्र्यलक्षणं कर्तृत्वमुपपन्नम् । इदं च कूटस्थे उदासीनस्वभावे ब्रह्मणि न वास्तवं किन्त्वविद्याकल्पितमेव भासत' इति भामत्युक्तं समाधानं द्रष्टव्यम् ।

**वं०प०— उपचारेति** । ननु कथमयमुपचारः । पिपतिषतीति सन्नन्तो हिशब्दः । इच्छायां सन्नित्युक्तसतोऽसम्भवेऽप्याशङ्कायामचेतनेषूपसङ्ख्यानं श्वा मुमूर्षतीति यथेति सम्भावनायामिच्छारहितेष्वपि सनो विधानात् । श्वा मुमूर्षतीति लोकसम्भावनाविषयो जात इतिवदत्रापि कूलं पिपतिषतीति लोकसम्भावनाविषयो जात इति सम्भावनायां द्योत्यायां सनः सम्भवेनोपचारायोगादिति चेत् । सत्यम् । अत्रासन्नपतनमित्यस्य निश्चितपतनमित्यर्थः । तेनाशङ्कायामित्यस्य वार्तिकस्यात्राप्रसक्तिरेव । पतनस्य निश्चयेनात्र पतनाशङ्काया अभावेनैतद्वार्तिकस्यात्राप्रवृत्तेर्युक्तमुपचारत्वम् । **भविष्यतीति** । तथा च तदैक्षतेत्यस्य सर्गे आसन्ना जाता, कार्योन्मुखा जातेत्यर्थः । **सर्वार्थेति** । जीवस्याभीष्टसर्वपुत्रादिपदार्थाकारेण प्रधानस्यैव विकृतत्वात् । तथा च गौणोऽयमात्मशब्दः प्रधाने इति भावः । **ज्ञीप्सितम्** जीवाभिन्नत्वेन ज्ञापयितुमिष्टम् । **ग्राहयितुं** जीवाभिन्नत्वेनेति शेषः । **तत्सम्बद्धं** ब्रह्मसम्बद्धम् । **ऐकरूप्यात्** ब्रह्ममात्रविषयकत्वात् ।





**आनन्दः**— ननु साङ्ख्यान्निराकृत्य इत्यत्र सूत्राणां साङ्ख्यनिरसनपरत्वं निराक्रियते तदयुक्तम्, तन्निरासस्य अप्रसक्तत्वादित्यत आह **एवमीक्षतेरिति** । यद्वा स्वकृतसूत्रव्याख्यानदार्ढ्यार्थं परकृतव्याख्यां निराकरोति **एवमीक्षतेरिति** । **ज्ञानेति** । सर्वजननशक्तिसर्वविषयज्ञाने ब्रह्मणो न स्तः कृत्स्नस्य ज्ञानक्रियाशक्त्यभावात् । ज्ञानक्रिययोः शक्तिर्ज्ञानक्रियाशक्तिः, तयोरभावादित्यर्थः । यस्य हि किञ्चिन्मात्रज्ञानजननशक्तिः किञ्चिन्मात्र-ज्ञानशक्तिर्वा न सम्भवतीति कुतस्तस्य सर्वविषयजननशक्तिः सर्वविषयज्ञानं च भवतामिति भावः । कुतस्तद्राहित्यमित्यत आह **ज्ञानक्रियाकार्येति** । ज्ञानशक्तिक्रियाशक्त्योः ये ज्ञानक्रियारूपकार्ये तददर्शनेन उन्नेयः सद्भावो ययोस्ते तथोक्ते इत्यर्थः । **न च ज्ञानक्रियेति** । ज्ञानशक्तिक्रियाशक्त्योः कार्यभूते ज्ञानक्रिये इत्यर्थः । शक्तिद्वयाभावे हेतुमाह **अपरिणामित्वादिति** । तथा च ब्रह्मणोऽपरिणामित्वेन तत्र ज्ञानक्रियारूपकार्याभावे शक्त्योरप्यभाव इत्यर्थः । नन्वपरिणामिन्यपि ज्ञानगुणः प्रयत्नगुणश्च किं न स्यातामत आह **एकत्वाच्चेति** । रूपत्वान्निर्गुणत्वादित्यर्थः । अथवाऽपरिणामित्वं साधयति **एकत्वादिति** । निरवयवत्वादित्यर्थः । ननु ज्ञान-नित्यत्वे स्वातन्त्र्यव्यपदेशायोग इत्यत आह **ज्ञानेति** । **सवितुरिव युज्येते इति** । यथा प्रकाशात्मकस्यापि सवितुः प्रकाशयतीति कर्तृत्वव्यपदेशः । तथापि परिणामाभावेऽपि ज्ञानक्रियाशक्ती सम्भवत इत्यर्थः । ननु विषमो दृष्टान्तः प्रकाशसंयोगस्य तत्र विद्यमानत्वेन प्रकाशयतीति व्यपदेशसम्भवेऽपि प्रकृते कर्मसंयोगाभावा-ज्ज्ञानशक्तिर्न सम्भवतीति चेत् । न । प्रकाशसंयोगाभावेऽपि प्रकाशते सवितेति कर्तृव्यपदेशदर्शनेन प्रकृते ज्ञानकर्मणोरसतोरपि ब्रह्मणि तदैक्षतेति कर्तृव्यपदेशोपपत्तेर्न वैषम्यमिति । ननु सूत्रकार एतानि सूत्राणि नाची-क्लृपदिति निषेधो न युक्तः । अप्रसक्तत्वादित्यत आह **इति यन्मायावादिनो वदन्तीति** ।

**श्रीनिधि०**— **गौणप्राये पठितत्वादिति** । **प्राये** समीपे । गौणेक्षणवता सह पठिते श्रुतत्वादित्यर्थः । नन्वीक्षतिगौणश्चेत्प्रधाने गौणेक्षणस्य सर्वदा सम्भवात् सृष्टिकाले तदैक्षतेति विशिष्योक्तिरनुपपन्नेत्यत आह **यथा ह्यासन्नेति** । **सर्वार्थकारित्वादिति** । शरीरादिरूपेण सर्वसुखोपयोगित्वादित्यर्थः । **तन्निष्ठामुपदिश्येति** । तत् ज्ञानमुपदिश्येत्यर्थः । **अरुन्धतीमिवेति** । इवशब्दस्य दर्शयतीत्यतःपरमन्वयः । **एवं सतीति** । तत्र तु स्थूल-तारकां प्रदर्श्यानन्तरं नेयं अरुन्धतीति स्थूलतारकाया अरुन्धतीत्वेन हेयत्वं वदतीति भावः । **एकविज्ञानेनेति** । यदि प्रधानमेवात्मतया ग्राह्यते तर्हि प्रतिज्ञा यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतीति विरुणद्धि इदं व्याख्यानम् । न हि अचेतनविज्ञानेन सर्वं विज्ञातं सम्भवति । सर्वात्मकत्वाभावात्तस्येति भावः । **कथञ्चिदीक्षणादिकमिति** । गौण्येति भावः । **सूत्राक्षराणां** सूत्रपदानाम् ।

**वा०चं०**— ननु सूत्रव्याख्यानस्योपसंहारेण समापितत्वात्किं 'न च' इत्यादिनाऽप्रसक्तं सूत्राणां साङ्ख्यमतनिरासकत्वं निरस्यत इत्यतस्तात्पर्यमाह **एवमिति** । एतानीत्यस्यातीतसर्वसूत्रपरामर्शकत्वभ्रान्ति-निरासाय तत्परामृष्टव्यं दर्शयति **ईक्षतेरित्यादिना व्याख्यायेत्यन्तेन** । स्वमतेन सूत्रव्याख्यानाकरणप्रयुक्त-न्यूनताभावमपव्याख्याप्रत्याख्यानस्य स्वव्याख्यानदार्ढ्यार्थतां च सूचयति साङ्ख्यनिराकृत्यै इति मूले सामान्ये-





नोक्तत्वात्प्रकारादर्शने दूषणानां दुर्ज्ञेयत्वात् तं दर्शयति **सर्वज्ञमित्यादिना** । अपव्याख्याता पूर्वपक्षोपक्षेपायातीतसूत्रार्थमनुवदति **सर्वज्ञमिति** । पूर्वपक्षे ब्रह्मणि निराकार्ययोर्विशेषणयोर्ग्रहणमिति ध्येयम् । ननु श्रुतिसिद्धेऽस्मिन्प्रमेये का नामानुपपत्तिरित्यतः श्रुतिसिद्धत्वासिद्धिं पूर्ववाद्यभिमतां दर्शयति **तत्रेति** । तत्र तादृग्विशेषणविशिष्टतया ब्रह्मणो वेदान्तवेद्यत्वे । प्रधीयतेऽस्मिन् जगदिति प्रधानं ब्रह्मापि भवतीत्यतस्त्रिगुणमिति विशेषणम् । परिणामयोग्यताप्रतिपादनायाचेतनमिति । एवेति ब्रह्मप्रतिपादकताव्यवच्छेदाय । सर्वज्ञस्य सर्वशक्तेर्ब्रह्मणो जगत्कारणत्वसम्भवे कुतस्तदप्रतिपादकत्वमित्याशङ्कते **कुत इति** । यस्य हि किञ्चिन्मात्रजननशक्तिः किञ्चिन्मात्रज्ञानशक्तिर्वा न सम्भवति कुतस्तस्य सर्वविषयजननशक्तिः सर्वविषयकज्ञानं च भवेतामित्याशयेनाह **ब्रह्मण इति** । ज्ञानक्रिययोः शक्ती ताभ्यां रहितत्वादित्यर्थः । न तावद् ब्रह्मणो ज्ञानक्रियेऽनित्ये । तथा सति ब्रह्मणस्तदात्मना परिणामो वक्तव्यः । स चायुक्तः । ब्रह्मणश्चेतनत्वादित्याशयेन चिदात्मन इति हेतुगर्भविशेषणम् । तस्य ज्ञानक्रिययोरभावे हेतुत्वं घटयति **तस्येति** । चैतन्यरूपस्य तस्य परिणामो नोपपद्यत इत्यर्थः । ननु च ब्रह्मणो ज्ञानक्रिये नित्ये । न च ते प्रति सर्वज्ञो जानाति करोतीति ब्रह्मणः स्वातन्त्र्यानुपपत्तिः । सर्वज्ञ इत्यादिषु कर्त्रर्थप्रत्यययोर्ज्ञानाद्याश्रयत्वमात्रेणोपपद्यते । सविता प्रकाशते चैत्रः पश्यति करोतीत्यादौ धात्वर्थाश्रयत्वमात्रस्यापि तदभिधेयत्वदर्शनात् । तथा चापरिणामिनोऽपि ज्ञानगुणः प्रयत्नगुणश्च किं न स्यातामित्यत आह **एकत्वाच्चेति** । एकरूपत्वान्निर्गुणत्वादित्यर्थः । अथवैकत्वादित्यपरिणामित्वसाधनम् । निरवयवत्वादिति यावत् । तथाऽपि प्रधानं प्रतिपादयन्तीति कुत इत्यत आह **त्रिगुण इति** । सौत्र'न'शब्दं व्याचष्टे **न साङ्ख्येति** । तत्र सौत्रम् अशब्दमित्येतद्धेतुतया योजयति **अशब्दं हि तदिति** । सदेवेत्यत्र सच्छब्दस्यैव तच्छब्दत्वान्नाशब्दत्वमित्याशङ्कते **कथमिति** । सौत्रपदमवतार्य व्याकरोति **ईक्षतेरिति** । श्रुतोपादानस्य चेतनत्वार्थमाह **तदैक्षतेति** । तस्योपादानत्वार्थमाह **बहु स्यामिति** । ईक्षणफलमाह **तदिति** । एवमुत्तरत्रापि द्रष्टव्यम् । छन्दोगश्रुतिवत् श्रुत्यन्तरमपि प्रधानवादविरोधीत्याह **स ऐक्षतेत्यादिना** । ननु गौणमुख्ययोर्मुख्यस्यैव ग्राह्यत्वाकथं गौणग्रहणमित्यतो 'यत्प्राये श्रूयते यच्च तत्तादृगवगम्यते । भाक्तप्राये श्रुतमिदमतो भाक्तं प्रतीयते' इति भामत्युक्तां युक्तिमाह **तत्तेज इति** । **गौणप्राये** गौणप्रकरणे । उपचारनिमित्तप्रदर्शनपूर्वकमचेतने चेतनवदुपचारं दृष्टान्तेनोपपादयति **यथा हीति** । प्रत्यासन्नसर्ग इति कार्योन्मुखत्वरूपोपचारनिमित्तप्रदर्शनम् । अनेन पूर्वसृष्ट्यनुभूतेन जीवेन प्राणधृतिहेतुनाऽऽत्मना स्वरूपेणेत्यर्थः । अस्यां श्रुतौ सच्छब्दवाच्यपरदेवतायाः जीवात्मना तेज आदिदेवताः प्रविश्य नामरूपे व्याकरवाणीत्येवमीक्षणप्रकारः कथ्यते । तत्र जीवशब्दस्य चेतनार्थत्वादात्मशब्दस्य च स्वरूपार्थकत्वादचेतनस्य प्रधानस्य चेतनात्मत्वायोगान्न सच्छब्दं प्रधानमित्याशयेनाह **न हीति** । जीवशब्दार्थश्चेतन इति, अचेतनस्य प्रधानस्य चेतनः आत्मा चेतनात्मत्वमिति यावत्, न हि सम्भवतीत्यर्थः । स आत्मा तत्त्वमसीति तु श्रुतिः सदणिमानमात्मानमात्मशब्देनोपदिश्य चेतनं श्वेतकेतुं प्रति तत् सत् ते स्वरूपमिति तस्यात्मत्वेनोपदिशति । तच्च सतोऽचेतनत्वे नोपपद्यत इत्याह **न हीति** । चेतनस्य श्वेतकेतोरचेतनैक्यबोधनमचेतनस्यात्मत्वेनोपदेष्टुं न ह्युपपन्नमित्यर्थः । एवं च सति चेतनस्वरूपत्वबोधकात्मशब्दरूपनियामकविशेषेण तस्य मुख्येक्षितृत्वनिर्णयेन विषयाभावात् । तादृङ्नियामकविशेषे गौणेक्षित्रप्तेजः प्रायपाठोऽकिञ्चित्कर इति भावः । नन्वचेतनस्यापि प्रधानस्य श्वेतकेतो-





रात्मत्वेनोपदेशो नानुपपन्नः । आत्मशब्दस्यापि गौण्या वृत्त्या प्रवृत्तत्वादित्याशङ्कते **अथेति** । गुणयोगं दर्शयति **आत्मन इति** । प्रधानं ह्यात्मनो भोगापवर्गौ कुर्वदुपकरोतीति भावः । प्रयोजनाभावात्स्वायत्तन्यायविरोधपरिहाराय रूढिं दर्शयति **यथेति** । पूर्वसूत्रान्नञनुषङ्गेन योग्यतत्प्रतियोगिसमर्पणेन प्रतिज्ञां दर्शयति **नैवमिति** । तत्त्वमसीत्युक्तैक्यप्रमित्या सर्वबन्धनिवृत्त्या देहादिदृष्टचनुपपत्तिशङ्कायां भोगेन प्रारब्धनिवृत्तिपर्यन्तं प्रारब्धकर्मणा तद्दृष्टानुवृत्तिप्रतिपादकेन 'तस्य तावदेव चिरम्' इति वाक्येन श्वेतकेतोस्तदैक्यज्ञानस्य मोक्षसाधनतालाभादिति भावः । सतोऽचेतनत्वे च तदनुपपत्तिरित्याह **न हीति** । हेयत्वावचनादित्यस्य भामत्युक्तपरिचोदनां दर्शयति **स्यादेतदिति** । **चशब्द इति** । भोग्यवर्गोपादानत्वात्प्रधानस्य तज्ज्ञानेन भोग्यवर्गज्ञानादिसम्भवेऽपि भोक्तृ-वर्गानुपादानात् तज्ज्ञानासम्भवेन प्रतिज्ञाविरोध इत्यर्थः । स्वशब्देन प्रस्तुतः सच्छब्दवाच्य आत्मा परामृश्यते । अपिपूर्वस्येतेर्लयार्थत्वं च प्रभवाप्ययादित्यादिप्रयोगसिद्धम् । एवं च स्वपितीति जीवे प्रसिद्धस्य स्वपितीति नाम्नो निर्वचनार्थं प्रवृत्ते स्वं ह्यपीतो भवतीति वाक्ये स्वशब्दस्य स्वरूपार्थकत्वे सच्छब्दवाच्याचेतनस्य जीव-स्वरूपत्वानुपपत्तेः । स्वशब्दस्यात्मीयपरत्वेन प्रधानार्थकत्वे वाऽचेतने प्रधाने पुरुषस्य लय इत्युक्तं स्यात् तच्चायुक्तमित्याह **न हीति** । **यदि चेति** । वेदान्तेष्वपि यदि भिन्ना कारणावगतिरभविष्यत् क्वचिच्चेतनं ब्रह्म जगतः कारणमिति क्वचिच्चाचेतनं प्रधानमिति, क्वचिदन्यदेवेति, तर्हि प्रधानकारणवादानुरोधेनापीक्षणश्रवण-मकल्पयिष्यत् । न चैवम् । समानैव हि सर्ववेदान्तेषु कारणावगतिः । यथाऽग्नेर्ज्वलतः सर्वा विष्फुलिङ्गा विप्रतिष्ठेरन् । एवमेवास्मादात्मनः सर्वे प्राणा यथाऽऽयतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका इति सर्वे वेदान्ता आत्मकारणत्वमेव दर्शयन्तीति भावः । तस्य सर्वेश्वरत्वं वक्तुं श्रुतौ कारणाधिपाधिप इति विशेषणमुपात्तम् । कारणानामिन्द्रियाणामधिपा जीवास्तेषामधिप इति तदर्थः । तदैक्षतेतीक्षणमात्रं जगत्कारणस्य श्रुतं न तु सर्वविषयं जगत्कारणसम्बन्धितयाऽर्थात्सर्वविषयमवगतम् । श्वेताश्वतरोपनिषदि तु 'ज्ञः कालकालो गुणी सर्वविद्यः' इति प्रस्तुत्य स कारणमिति परामर्शात्, सर्वज्ञ ईश्वरो जगत्कारणमिति साक्षादुक्तमिति विशेषं सूचयति **साक्षात्सर्वज्ञस्येश्वरस्येति** । स्वतो नित्यस्यापि ज्ञानस्य तत्तदर्थावच्छिन्नस्य कार्यत्वात् तत्र स्वातन्त्र्यं प्रत्ययार्थो ब्रह्मणः सिद्ध्यति दाह्यप्रकाश्यसंयोगे सवितुर्दाहप्रकाशस्वातन्त्र्यवदित्याशयेन वाऽपरिणामिनोऽपि सवितुः प्रकाशाश्रयत्वमात्रेण प्रकाशयति प्रकाशत इत्यादिव्यपदेशवज्ज्ञाननित्यत्वेऽपि तदाश्रयत्वमात्रेण जानातीत्यादि-स्वातन्त्र्यव्यपदेशोपपत्तिरित्याशयेन वा पूर्ववाद्युक्तानुपपत्तिं परिहरति **ज्ञानेति** ।

अत्र 'न हि' इत्यादिना मूलेन परपक्षे सूत्राक्षरानानुगुण्यस्यापि प्रतिपादनादत्रापि 'एतानि' इति तत्सूचनात् तदर्थं सूत्राणां साङ्ख्यमतनिरासार्थत्वप्रकारमनूदितमेवंशब्दाध्याहारेण मूलेन सङ्गमयति **एवमिति** । अपव्याख्यान-निरासस्य मूलारूढतायै **यदित्यादि** । अस्य वाक्यस्य साङ्ख्यनिराकृत्यै न ह्येतानि सूत्राणि भगवानची-क्लृपदसङ्गतत्वादित्यपि तात्पर्यम् । एवं साङ्ख्यनिराकृत्यै 'न हि एतानि' इत्येतेषामेवं व्याख्याने च साङ्ख्यमतनिरासार्थता न सम्भवतीत्येतदर्थस्य सूत्राक्षरानानुगुण्येऽपि तात्पर्यम् । तत्र 'न हि' इत्याद्यव्यव-हितोत्तरवाक्यस्यासङ्गतिप्रतिपादकत्वानुपपत्त्या तत्प्रतिपादनस्य 'समन्वये प्रतिज्ञाते' इत्युत्तरवाक्ये स्पष्टत्वाच्च





सूत्राक्षरानानुगुण्यप्रतिपादनपरतया 'न हि' इति वाक्यं योजयितुं स्पष्टतया ज्ञातुं शक्यत्वान्मूलानुक्तां शङ्कापूर्वं तदनानुगुण्यप्रतिज्ञां दर्शयति **कुत इत्यादिना** ।

**वा०र०— अतीतेति** । एतच्छब्दस्य प्रकृतपरामर्शकतयातीतानामेवोपस्थितिरस्तीत्याशयेनातीतेत्येव उक्तम् । अन्यथोत्तरसूत्राणामपि ग्रहणप्रसङ्ग इति ज्ञेयम् । **प्रकारेति** । साङ्ख्यनिराकरणप्रकाराप्रदर्शन इत्यर्थः । **तं** प्रकारम् । प्रघट्टकसङ्गतिमभिधाय तत्तदेकदेशमवतारयतीत्यतः पुनः सर्वज्ञमित्येतदवतारितम् । **अनयोरिति** । सर्वज्ञं सर्वशक्तीत्यनयोरित्यर्थः । तत्प्रकारश्च यस्य हि किञ्चिदित्यादिनोत्तरत्र टीकायां स्पष्टः । **तथेति** । ज्ञानक्रियाशक्तीत्यर्थः । **अशब्दमिति** । आश्रयितुमित्यन्तार्थसमर्पकस्यान्यस्याभावात् । अशब्दमित्यस्य हेतुसमर्पकतया योजनादिति भावः । **तच्छब्दत्वादिति** । प्रधानवाचकशब्दत्वादित्यर्थः । **श्रुतोपादानस्येति** । श्रुतं यदुपादानं सदेवेत्यनेन निर्दिष्टं तस्य चेतनत्वसिद्ध्यर्थमीक्षणमुक्तमित्यर्थः । **उपादानत्वेति** । तत्सिद्ध्यर्थं बहुभावोक्तिरित्यर्थः । **उत्तरत्रेति** । सापेक्षतेत्याद्युत्तरवाक्येऽप्युपादानस्य चेतनत्वार्थमीक्षणोक्तिः उपादानत्वार्थं च लोकान्नुसृजा इत्युक्तिः । ईक्षणफलस्य स इमानित्यनेनोक्तिरिति । स ईक्षामिति तदुत्तरवाक्ये त्वीक्षणेन चेतनत्व-प्रतिपादनम् । ईक्षणफलं तु सप्राणमित्यनेनोक्तमिति विवेकः । **श्रुत्यन्तरमपीति** । श्रुतिरित्यर्थः । इतःपरं शाङ्करभाष्याद्यनुसारि मूलग्रन्थव्याख्यानं तत्तदनुसारेण कर्तव्यमस्ति । बोधनमित्यन्तोऽनुवादः । उपदेष्टुमित्यन्तं व्याख्यानम् । समर्पणेनेत्यत्र चशब्दोऽध्याहार्यः । तस्य तावदेवेति वाक्यस्य मोक्षपरत्वाप्रतीतेराह **तत्त्वमसी-त्युक्तेति** । **सत इति** । सच्छब्दवाच्यस्येत्यर्थः । **परिचोदनामिति** । व्यावर्त्यशङ्कामित्यर्थः । भोग्यवर्ग्येत्यादिना प्रतिज्ञाविरोधः सङ्कोचेन व्याख्येय इति भावः । न च साङ्ख्येति भाष्यस्य हि भगवान् सूत्रकारः साङ्ख्यं निराकृत्य एतानि सूत्राणि चकारेति नासङ्गतत्वादित्येवं स्पष्टार्थाश्रयणेनैतत्प्रतिज्ञासङ्गततया समन्वये प्रतिज्ञात इत्यादि ग्रन्थप्रवृत्त्युपपत्तावपि न ह्यशब्दत्वमित्येतद्दूषणासङ्गतिरित्याशङ्कापरिहारायोक्तभाष्यस्योक्तरूपस्पष्टार्थ इवात्रैवं शब्दा-ध्याहारेण प्रागनूदितप्रकारेण साङ्ख्यं निराकृत्य एतानि सूत्राणि चकारेति न । सूत्राक्षराणामनानुगुण्यादित्यप्यर्थो विवक्षितः । न ह्यशब्दत्वमित्यादिना तदनानुगुण्यप्रतिपादनानुसारेण तथार्थविवक्षायाः सुज्ञानत्वात् । ततो न तद्दूषणासङ्गतिरित्याशयं स्पष्टयन्नाह **अत्र न हीत्यादिनेति** । न ह्यशब्दत्वमित्यादिनेत्यर्थः । अपिपदोक्तसमन्वये प्रतिज्ञात इत्यादिनोक्तामसङ्गतिमपिपदेन समुच्चिनोति । प्रतिपादनादित्यस्योपपादनादित्यर्थः । साधकान्तरमाह **अत्राप्येतानीतीति** । एतानि ब्रह्मणो वाच्यत्वसमर्थनपराणीति काक्वा तत्सूचनादिति भावः । तदर्थं सूत्राक्षरानानु-गुण्यप्रतिज्ञात्वसिद्ध्यर्थमित्यर्थः । अस्तु वेत्यादिना करिष्यमाणा असङ्गतिदूषणकयोजनायां साङ्ख्यनिराकृत्यै एतानि सूत्राणि न चकारेत्येतावतैव पूर्तेरेवंशब्दो नावश्यकः । अत्र तु एवं निराकृत्यै सूत्राणीति नेत्यनुवादेनैव तन्निरासार्थता न सम्भवतीत्यर्थसूचनादेवं पदं सार्थकम् । एवं शब्दयोजनेऽपि भगवानुक्तरीत्या साङ्ख्यं निराकृत्य एतानि सूत्रणि न चकारेत्येवार्थप्रतीत्या परोक्तानुवादपूर्वकं तन्निरासप्रतिज्ञात्वालाभात्तल्लाभायेति यन्मायेत्यादिकं पूरितमित्याह **अपव्याख्यानेति** । **अत्रेति** । यदीत्यादीति प्रतीकोपादानपाठः । इतिशब्दाभावेऽपि वा यदित्यादिपूरणान्यथानुप-पत्त्येति शब्दोऽपि लभ्यत इत्याशयेन यदित्यादेरेव प्राधान्याश्रयणमिति विद्यमानोऽपीतिशब्दो नोपात्त इत्यप्याहुः ।





एवं न च साङ्ख्चेत्यस्य यथाश्रुतार्थत्वमात्रं न । किन्त्वेवंपदादिपूरणेन विशिष्टप्रतिज्ञापरत्वमित्युपपाद्य कुतो नेत्युक्ते दूषणस्यैकविधस्याभावेन वक्ष्यमाणदूषणानुसारेणैतद्वाक्येऽवान्तरप्रतिज्ञाद्वयमभिप्रेतम् । तत्र च योग्यतानुसारेण वक्ष्यमाणदूषणयोजना कार्येत्याह **अस्य वाक्यस्येत्यादिना** । असङ्गतत्वादित्यनेनोत्तरत्रोपपाद्यो योऽसङ्गतत्वरूपो हेतुः स तात्पर्यविषयतयोक्तः । **इत्यपीति** । न केवलं महाप्रतिज्ञापरत्वमपि त्वसङ्गतत्वादित्यन्तप्रागुक्तावान्तरप्रतिज्ञायामपि तात्पर्यमित्यर्थः । द्वितीयप्रतिज्ञाप्रदर्शनपरे एवमिति वाक्ये एवंशब्दस्यावृत्तिरभिप्रेता । तत्राद्यः समुच्चयार्थः । द्वितीयोऽध्याहृततयोक्त इति ज्ञेयम् । पूर्वोक्तमहाप्रतिज्ञाया वाऽवान्तरप्रतिज्ञाया वा समर्पणाय सम्पूर्णवाक्योपयोग इव एतदवान्तरप्रतिज्ञासमर्पणाय न तावदुपयोगोऽपि तु साङ्ख्चं निराकृत्यै न चैतानीत्येतावत एवोपयोगः इति दर्शयंस्तदर्थं च वदन्नेवात्राप्युत्तरत्रोपपाद्यमानतात्पर्यविषयीभूतं हेतुं चैतदर्थस्येत्यादिनोक्तवानिति विवेकः । उक्तावान्तरप्रतिज्ञयोर्यथाश्रुतत्वाध्याहारपूरणरूपविशेषसद्भावनिमित्तेन क्रमव्यत्यासेन प्रदर्शनम् । एवं प्रतिज्ञाद्वयाभिप्रेतहेतुं प्रदर्श्य तदुपपादनपरोत्तर नहीत्यादिग्रन्थेऽपि दूषणत्वव्यवस्थामाह **तत्रेति** । अवान्तरप्रतिज्ञाद्वयतात्पर्यविषयीभूतसूत्राक्षराननुगुण्यासङ्गतत्वरूपहेतुद्वयमध्य इत्यर्थः । अत्र प्रतिपादकत्वपदस्योपपादकत्वमर्थः । प्रतिपादनपदद्वयस्य चोपपादनमर्थ इति ज्ञेयम् । न हीत्यनेनोपपाद्य सूत्राक्षराननुगुण्यस्य भाष्यकारेणाप्रतिज्ञातत्वात् कथं तदुपपादनमित्यत उक्तं **स्पष्टतयेत्यादि** । अत्रानुक्तिर्मुखत एवाभिप्रेता । तात्पर्यविषयतयोक्तेः पूर्वमभिधानात् । शङ्का पूर्वा इति यन्मायावादिनो वदन्ति तन्नेति महाप्रतिज्ञायां कुतो नेतीति शङ्कापूर्वकमित्यर्थः । **तदननुगुण्येति** । महाप्रतिज्ञायामेव या सूत्राक्षराननुगुण्यहेतुकावान्तरप्रतिज्ञाभिप्रेता तत्रत्यसूत्राक्षराननुगुण्यहेतुमुपन्यस्यतीत्यर्थः । उत्तरभाष्ये तद्धेतोरुपपादनाभिप्रायेण प्रतिज्ञामित्युक्तम् । न तु सूत्राक्षराननुगुण्येऽपि कुत इत्याकाङ्क्षायां हेतूपदर्शनाभिप्रायेण प्रतिज्ञापदम् । तत्र कथमित्येवाकाङ्क्षायां तदुपपादनादिति ज्ञेयम् ।

**स०व्र०**— शक्तिराहित्यं कथं ज्ञातव्यमित्यत आह **ज्ञानक्रियाकार्यदर्शनेति** । ज्ञानक्रियालक्षणं यदुभयं शक्तिकार्यं तद्दर्शनेन शक्तिद्वयसद्भावोऽनुमेय इत्यर्थः । **तस्यापरिणामित्वादिति** । तथाच अपरिणामिन एकस्य च ब्रह्मणः कार्यवत्त्वमेव न, सुतरां तद्विशेषज्ञानक्रियावत्त्वमिति भावः । **एकत्वाच्चेति** । सत्त्वादेरनेकात्मकस्यैव कारणत्वोपलम्भादिति भावः । **त्रिगुणत्वेति** । अत एव अनेकात्मके इत्यपि द्रष्टव्यम् । **ज्ञानक्रियाशक्ती त्विति** । शक्त्योर्जन्यत्वे हि परिणामापेक्षा, इमे तु नित्ये इति भावः । ननु नित्यत्वे कथं 'इदं जानाति', 'इदं करोति' इत्यादिव्यपदेश इत्युक्तम् **सवितुरिवेति** । यथा प्रततोष्णप्रकाशेऽपि 'सविता इदं दहति', 'इदं प्रकाशयति' इति व्यपदेशस्तथेत्यर्थः । यथा पूर्वं विद्यमानक्रियाश्रयस्यापि सवितुः कादाचित्कविषयावच्छेदकमात्रेणोक्तो व्यवहारस्तथा प्रकृतेऽपीति भावः ।

**विठ्ठल०**— परकीयं व्याख्यानमनुवदति **सर्वज्ञ इत्यादिना** । तत्र सार्वज्ञं शास्त्रयोनिसूत्रोक्तम् । **वेदान्तवेद्यमिति** । चतुर्थसूत्राभिप्रायः । सार्वज्ञस्य द्वितीयसूत्रोक्तार्थसाधकत्वाभिप्रायेण प्रथमतस्तदुक्तिः ।





ज्ञानादिशक्तिराहित्यं कथमवगम्यत इत्यत उक्तं **ज्ञानक्रियाकार्येति** । ज्ञानरूपं क्रियारूपं च यदुभयशक्तिकार्यं तददर्शनानुमेयसत्ताके ते ज्ञानक्रियाशक्तीत्यर्थः । ज्ञानक्रियारूपकार्याभाव एव कुत इत्यत आह **अपरिणामित्वादिति** । परिणामिन एव कार्यवत्वम् अनेकस्यैव ह्यनेककार्यवत्वं तथा चापरिणामिन एकस्य ब्रह्मणो न ज्ञानक्रियारूपानेककार्यवत्वम् इति भावः । यद्वा एकत्वादित्यस्याखण्डत्वादित्यर्थः । न ह्यखण्डे ज्ञानादिविशेषः सम्भवतीति भावः । प्रधानस्य ज्ञानाद्युपादानत्वेन ते शक्ती सम्भवत इत्याह **त्रिगुणे त्विति** । गौणप्रायेति तेज आदीनां जडत्वेनेक्षणायोगात् तत्रेक्षतेर्गौणत्वं सिद्धं तत्प्रकरणे पठितस्य तदैक्षतेत्युक्ते क्षतेरपि गौणत्वं युक्तमिति भावः । तदुपपादयति **यथा हीति** । नन्वनेन जीवेनात्मना इत्यस्य अनेन जीवस्वरूपभूतेन प्रधानेनेत्यर्थकत्वान्नात्मशब्दविरोध इत्यत आह **न हीति** । आत्मा स्वरूपं, चेतनाचेतनयोरैक्यायोगादिति भावः । किञ्चात्रात्मशब्दस्य जीवैक्याभिप्रायेण प्रधानपरत्वे स आत्मेत्यत्रापि प्रधानैक्यमुपदिष्टमिति स्यात् । तच्चानुपपन्नम् । ततश्च चेतनाचेतनव्यवस्थानुपपत्त्या साङ्ख्यस्यापसिद्धान्तप्रसङ्गादित्याह **स आत्मा तत्त्वमसि इति चेति** । इति चात्मशब्दादिति सूत्रेणान्वयः । **तन्निष्ठामुपदिश्येति** । तदैक्यभावनामुदिश्यैक्यभावनावतो मोक्षोपदेशादिति भावः । **ईप्सितं** = ज्ञापयितुम् इष्टम् । **एकविज्ञानेनेति** । अत्र आत्मशब्दस्य ब्रह्मपरत्वे येनाश्रुतं श्रुतं भवतीत्यादिनोक्तम् । एकविज्ञानेन सर्वविज्ञानमुपपन्नं स्यात्, ब्रह्मणः सर्वात्मकत्वात्, प्रधानपरत्वे तु सर्वस्यापि प्रधानात्मकत्वाभावात् एकविज्ञानेन सर्वविज्ञातप्रतिज्ञाविरोध इत्यर्थः । **सच्छब्दवाच्यं प्रस्तुत्य इति** सदेव सौम्येत्युक्तं जगत्कारणं सच्छब्दवाच्यं सता सोम्य तदा सम्पन्नो भवतीति प्रस्ताव्य स्वशब्दोक्तं सत्सुप्तौ लये च जीवोऽपीतो भवतीति लयोऽभिधीयते । अचेतने चेतनस्य लयायोगान्न सदेवेत्युक्तं प्रधानमिति भावः । **अवगतेरैकरूप्याच्च इति** । तथा च गतेर्वेदान्तोत्पाद्यज्ञानस्य सामान्यादचेतनप्रधानस्य जगत्कारणताप्रतिपादकत्वाभावरूपैकरूप्यान्न प्रधानं जगत्कारणमिति गतिसामान्यसूत्रार्थ इति भावः । अपरिणामित्वेन ज्ञानक्रियाशक्तिविकलस्येश्वरस्य कथं जगत्कारणत्वमित्यत आह **ज्ञानक्रियाशक्ती त्विति** । प्रतिदिनं परिणामरहितस्यापि दिनकरस्य रूपादिज्ञानशक्तिः प्रकाशनशक्तिश्च यथा युज्यते तथा परिणामिनोऽपीश्वरस्य ते शक्ती युज्येते इति भावः ।

**चषकः**— इयता ग्रन्थसन्दर्भेण स्वमतेन सूत्रव्याख्यारूपानुव्याख्याग्रन्थं विशदीकृत्य परापव्याख्याप्रत्याख्यानरूपतद्ग्रन्थव्याचिकीर्षयाऽवतारयति **एवमीक्षतेरित्यादि** । **प्रतिपादयन्तीति** । सर्वजननशक्तेर्विकारविषयायाः अचेतने सर्वज्ञानहेतुभूतसर्वात्मके सार्वज्ञ्यस्य च सम्भवात्, ब्रह्मणि च चिद्रूपे सत्त्वाद्यनात्मके तयोरसम्भवादिति हृदयम् । **न च ज्ञानक्रिये इति** । सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावस्य विशेषधर्मावच्छिन्नप्रतियोगिताकाभावनियततया ज्ञानत्वक्रियात्वरूपसामान्यधर्मावच्छिन्नाभावे सर्वज्ञानत्वसर्वप्रयत्नत्वरूपविशेषधर्मावच्छिन्नाभावस्य कैमुत्यसिद्धत्वादिति भावः । अभिहितं चैतत् भामत्याम् 'ज्ञानक्रियाशक्त्यभावाद्ब्रह्मणोऽपरिणामिनः' इति । **सूत्राक्षराणामननुगुणत्वादिति** । तदभिहितार्थस्य सूत्राक्षरानुपूर्वीमहिमाधीनान्वयधीविषयत्वाभावादित्यर्थः ।





**१०८ सु०—** तथा हि । 'अशब्दं हि तदि'ति हेतूक्तमशब्दत्वं नाम शब्दागोचरत्वं वा शब्दावाच्यत्वं वा अवैदिकत्वं वा कारणतयाऽवैदिकत्वं वा । सर्वत्राप्यसिद्धिरित्याह न हीति ।

**अनु०—** **न ह्यशब्दत्वं प्रधानेऽङ्गीकरोत्यसौ ॥**

असौ साङ्ख्यः । स्वसिद्धेन हेतुनेदं निराकरणमिति चेन्न । यतोऽसौ सूत्रकारोऽशब्दत्वं प्रधाने नाङ्गीकरोति । उपपादयिष्यते चैतत् ।

(किञ्चाद्यपक्षे) किञ्चाद्ये प्रधानस्यासत्त्वमभिप्रेतमुत प्रमाणान्तरवेद्यत्वम् । आद्ये तदुपपादनायेक्षतेरुपन्यासोऽनुपपन्नः । अत एव नोत्तरः ॥ द्विती(यो)ये ब्रह्मण्यनैकान्तिकः ॥ तृतीयचतुर्थयोः साध्याविशिष्टत्वम् ।

किञ्चेक्षणेनैव नेति प्रतिज्ञातार्थसिद्धावशब्दं हि तदिति मध्ये हेत्वन्तरकल्पनं व्यर्थम् । ईक्षितृत्वं चेक्षणगुणयोगित्वम् । तद्ब्रह्मण्यपि गौणमेव निर्गुणत्ववादिनाऽङ्गीकरणीयम् । तथा च गौणश्चेदिति व्यर्थम् ।

किञ्चेक्षतेर्गौणत्वकल्पनस्य बाधकाभावमनुक्त्वाऽऽत्मशब्दादित्यसङ्गतम् । परेण प्रायपाठो बाधक उपन्यस्तस्तदविरोधाय वैषम्यमुच्यत इति चेन्न, तेजोऽबन्नानामपि देवतात्वेन प्रायपाठाविरोधात् ।

तन्निष्ठस्य मोक्षोपदेशादित्यत्र किं प्रधानैक्योपदेशानुपपत्तिर्वा विवक्षिता, तज्ज्ञस्य मोक्षानुपपत्तिर्वा । आद्ये ब्रह्मपक्षेऽपि समानो दोषः । न हि जीवस्यापि ब्रह्मैक्योपदेशो युक्त इत्युक्तमधस्तात् । द्वितीयस्त्वनुपपन्न एव, आत्मानात्मविवेकार्थमनात्मज्ञानस्य आवश्यकत्वात् ।

आत्मशब्दस्य गौणत्वे चोदिते बाधकाभाव एव वक्तव्यः ।

हेयत्वावचनादित्यस्य परिचोदनैवानुपपन्ना । न हि साङ्ख्योऽद्वैतज्ञानार्थं प्रधानोपदेशं मन्यते । हेयत्वावचनं चानैकान्तिकम् । अन्नमयप्राणमयादीनामब्रह्मत्वेऽपि हेयत्वा-





**वचना(च्च)त् । उत्तरोत्तरब्रह्मत्ववचनं तत्र ज्ञापकमिति चेत् (न), अत्रापि तथाविधज्ञापक-सौलभ्यात् ।**

**प्रतिज्ञाविरोधस्तु ब्रह्मवाद एव न प्रधानवादे, प्रधानस्य सर्वात्मकत्वाभ्युपगमात् । भोक्तृवर्गस्य न प्रधानात्मकत्वमस्तीति चेत् । सत्यम् । ब्रह्मणस्तु न किञ्चित् ।**

**एतेन स्वाप्ययोऽपि निरस्तः, एकीभावस्य ब्रह्मपक्षेऽप्यभावात्, परिष्वङ्गमात्रस्य प्रधानेऽपि सम्भवात् ।**

**ब्रह्मविषयं गतिसामान्यं परस्यासिद्धमेव । ईक्षणादिना तज्ज्ञापने (तत्साधने) प्रथमसूत्रेणैव गतार्थता ।**

**अत एव श्रुतत्वादित्यसिद्धम् । गतार्थं च गतिसामान्येनेत्येषा दिक् ।**

**परि०**— 'न ह्यशब्दम्' इत्येतदेव वाक्यं तन्निराकरणपरतयापि योजयति **यतोऽसाविति** । **उपपादयिष्यत इति** । चतुर्थपादे 'न शब्दवाच्यतैवात्र प्रधानस्य निषिध्यते' इत्यादिनेति भावः । **किञ्चाद्यपक्षे प्रधानस्येति** । शब्दागोचरत्वपक्ष इत्यर्थः । **तदुपपादनायेति** । असत्त्वोपपादनायेत्यर्थः । **अत एवेति** । प्रमाणान्तरवेद्यत्वोपपादनाय ईक्षत्युपन्यासस्य अयुक्तत्वादेवेत्यर्थः । **द्वितीय इति** । शब्दवाच्यत्वहेतुरित्यर्थः । तादृशस्यापि ब्रह्मणो वेदान्तेषु कारणतया प्रतिपाद्यत्वोपगमादनैकान्तिको हेतुरिति भावः । **तृतीयचतुर्थयोरिति** । अवैदिकत्वहेतोः कारणतयाऽवैदिकत्वहेतोश्च कारणतया वेदान्ताप्रतिपाद्यत्वरूपसाध्येन एकार्थत्वादिति भावः । **नेतीति** । प्रधानं न कारणतया वेदान्तवेद्यमिति प्रतिज्ञार्थसिद्धावित्यर्थः । शङ्कते **परेणेति** । **इदमिति** । आत्मशब्दादित्येतदित्यर्थः । 'तत्तेज ऐक्षत' इत्यादावात्मशब्दाभावादिति भावः । **देवतात्वेनेति** । अभिमानिनये तथा वक्ष्यमाणत्वादिति भावः । **अधस्तादिति** । 'यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेत्' इत्याद्यधिकरण इत्यर्थः । सौत्रो मोक्षोपदेशादिति हेतुश्चायुक्त इत्याहुः । **आत्मशब्दस्येति** । अथोच्येतेत्येतत्सूत्रावतारिकायामुक्तदिशा गौणत्वे शङ्कित इति भावः । **परिचोदनैवेति** । अवतारिकारूपाशङ्कैवायुक्तेत्यर्थः । पूर्वपक्षीभूतः साङ्ख्यो ह्येवं स्थूलारुन्धतीन्यायेनाशङ्कत इति वाच्यम् । न चैवं सम्भवतीत्याह **न हीति** । प्रधानं नात्मेति हेयत्ववचनात् प्रधानमेवात्मत्वेन सूक्ष्मब्रह्मज्ञानार्थमुच्यत इति नेति प्रागुक्तसूत्रार्थं च प्रत्याह **हेयत्वा-वचनं चेति** । **हेयत्वावचनादिति** । अन्नमयादि न ब्रह्मेत्येवंरूपवचनाभावादित्यर्थः । उपलक्षणं चैतत् ।





पुच्छरूपब्रह्मज्ञानार्थं ब्रह्मत्वेनोपदेशसत्त्वाच्चेति पूर्वोक्तसाध्याभावोऽपि ध्येयः । **उत्तरोत्तरेति** । अन्नमयस्याब्रह्मत्वे 'ये प्राणं ब्रह्मोपासते' इति प्राणमयस्य ब्रह्मत्ववचनं ज्ञापकम् । एवं प्राणमयस्य अब्रह्मत्वे मनोमयस्य ब्रह्मत्ववचनं ज्ञापकमित्येवं ज्ञेयम् । **अत्रापीति** । सदेव सोम्येत्यादिप्रकरणेऽपि सच्छब्दार्थस्य अब्रह्मत्वे भूय एव मा भवान् विज्ञापयतु इत्यादिप्रश्नप्रतिवचनपौनःपुन्यरूपज्ञापक-सौलभ्यादित्यर्थः । **प्रतिज्ञाविरोधस्त्विति** । हेयत्वावचनाच्चेति चशब्दसमुच्चितैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधस्त्वित्यर्थः । **न किञ्चिदिति** । भोग्यात्मत्वभोक्त्रात्मकत्वयोर्मध्य इत्यर्थः । जडैक्यस्य त्वयानङ्गीकाराद्भोक्त्रैक्यस्य च यजमानप्रस्तरत्वमित्यादिना अस्माभिर्निरस्तत्वादिति भावः । **एषा दिगिति** । अयं भावः । सिद्धान्ते किं प्रधानं सदेवेत्यादि वाक्यबोध्यं नेति निरस्य विशिष्टब्रह्मणः परिणामित्वमेतद्वाक्यबोध्यमित्युच्यते किं वा कर्तृत्वं बोध्यमिति, यद्वा शुद्धस्य भ्रमाधिष्ठानत्वं बोध्यमिति । नाद्यद्वितीयौ, विशिष्टे सदेवेत्यादिवाक्योक्तसत्त्वायोगात्, पूर्वसूत्रेऽखण्ड एव समन्वयस्य प्रतिज्ञातत्वेनात्राखण्डस्यैव वाच्यत्वाच्च । द्वितीये वैयधिकरण्यं च । न हि प्रधानं परिणामीति प्राप्ते ब्रह्मकर्तृत्वसिद्धान्तो युक्तः । अत एव न तृतीयः । प्रधानं परिणामीति प्राप्तेऽधिष्ठानं ब्रह्मेत्यस्य व्यधिकरणत्वादित्यादिरूपेण चन्द्रिकोक्तदिशा ध्येयः ।

**गु०दी०— तदुपपादनाय** इत्यत्र अशब्दत्वोपपादनायेत्यर्थः । शशविषाणवदसत्त्वेनैवाशब्दत्व-सम्भवादिति भावः । **अत्रापि तथाविधज्ञापकसौलभ्यात्** इत्यत्र ज्ञानाख्योत्तरस्य ब्रह्मत्वमहिम्ना सत्याख्य-स्याब्रह्मत्वेन हेयत्वानुमानसम्भवादिति भावः ।

**यादु०— उपपादयिष्यत इति** । 'सर्ववेदेतिहासेषु पुराणेषु च सङ्ग्रहात्' इत्यादिना चतुर्थपाद इति शेषः । **किञ्चाद्यपक्षे प्रधानस्येति** । आद्यपक्षस्य किं प्रधानासत्त्वे पर्यवसानमुत तस्य प्रमाणान्तरवेद्यत्वे इति विकल्पार्थः । **ईक्षतेरुपन्यास इति** । ईक्षतिना हि तत्समभिव्याहृतशब्दविशेषागोचरत्वमेव सिद्ध्यति । न च तावता प्रधानस्यासत्त्वमुपपादितं भवति । तदसमभिव्याहृतशब्दैस्तत्सत्त्वसिद्धिसम्भवादित्यर्थः । एवं प्रमाणा-न्तरवेद्यत्वोपपादनायापि नेक्षतेरुपन्यासो युक्तः । ईक्षतेः प्रधानस्य स्वासमभिव्याहृतशब्दप्रमाणकत्वमादाया-प्युपपन्नत्वेन तस्य शब्देतरप्रमाणवेद्यतोपपादनासामर्थ्यादित्याशयेनाह **अत एवेति** । **अनैकान्तिक इति** । जगत्कारणतया वेदान्तवेद्यत्वाभावरूपसाध्यस्यावाच्ये ब्रह्मण्यभावादिति भावः । **साध्याविशिष्टत्वमिति** । तृतीयपक्षे साध्यवत्सन्दिग्धत्वेन साध्यविशिष्टत्वमिति द्रष्टव्यम् । **व्यर्थमिति** । अत्र कश्चिदाह प्रकृत्यर्थस्येक्षणस्य प्रधाने गौणताशङ्कायां न प्रकृत्यर्थस्य गौणताङ्गीकारो युक्तः, ब्रह्मपक्षे प्रत्ययार्थस्य कर्तृत्वस्य गौणत्वेऽपि प्रकृत्यर्थस्येक्षणस्य मुख्यत्वात् । प्रकृतेः प्रथमश्रुतत्वनिरपेक्षत्वाभ्यां प्रबलत्वेन तदमुख्यताया जघन्यत्वादित्यत्र तात्पर्यात्तत्सूत्रं व्यर्थमित्याह । तत् स्वसिद्धान्तविस्मरणविजृम्भितमित्युपेक्षणीयमेव । त्वन्मते ब्रह्मणोऽवाच्यत्वेन





प्रकृतेरप्यमुख्यत्वादिति । **तदविरोधायेति** । तद्विरोधाभावायेत्यर्थः । दूषणान्तरमाह **आत्मशब्दस्येति** । **अद्वैतज्ञानार्थमिति** । यद्यपि ब्रह्मैव ज्ञीप्सितमित्युक्तत्वाद्ब्रह्मज्ञानार्थमित्येव वक्तव्यम् । तथाऽपि स आत्मा तत्त्वमसीतीहोपदिष्टं स्यादित्यादितद्भाष्यादद्वैतज्ञानार्थत्वस्यावगमादेवमुक्तमित्यवगन्तव्यम् । **उत्तरोत्तरेति** । 'प्राणो ब्रह्मेति व्यजानात्, मनो ब्रह्मेति व्यजानात्' इत्याद्युत्तरोत्तरवचनमित्यर्थः । **अत्रापि तथाविधेति** । अत्रापि चरमदृष्टान्तेऽभिहिते तद्वास्य विजज्ञाविति ब्रह्मज्ञानवचनमेव पूर्वोक्तस्याब्रह्मत्वज्ञापकं सुलभमित्यर्थः । **परस्येति** । साङ्ख्यस्येत्यर्थः । **अत एवेति** । ब्रह्मविषयगतिसामान्यस्य परं प्रत्यसिद्धत्वादेवेत्यर्थः । सकारणं कारणाधिपेत्यत्र च प्रधानमेव प्रतिपाद्यमिति परो वदिष्यतीति भावः । **गतार्थं चेति** । श्रुत्या ब्रह्मकारणत्वस्य गतिसामान्यादित्यत्र समर्थितत्वादिति भावः । दिगर्थस्तु चन्द्रिकायां द्रष्टव्यः ।

**वं०प०**— **शब्दागोचरत्वं** शब्दाप्रतिपाद्यत्वम् । **स्वसिद्धेन** सूत्रकारेणेदं निराकरणं स्वमतसिद्धेन हेतुना कृतमित्यर्थः । **बाधकाभावमिति** । ईक्षतेर्गौणत्वं न कल्प्यं मुख्यार्थे बाधकाभावादित्यनुक्त्वेत्यर्थः । शङ्कते **परेणेति** । **वैषम्यमिति** । आत्मशब्दबलेन सतश्चेतनत्वावगमेनेक्षतेर्मुख्यत्वमेवेति न गौणप्रायपाठविरोध इति भावः । **देवतात्वेनेति** । तथा च नन्वयमीक्षतिर्गौणो व्याख्येयः 'तत्तेज ऐक्षत', 'ता आप ऐक्षन्त' इति गौणप्रायपठितत्वादित्यस्यायुक्तत्वेन प्रायपाठविरोधस्यैवाभावेन गौणश्चेदिति व्यर्थमेवेत्याशयः । **बाधकाभाव एवेति** । न तु तन्निष्ठमोक्षोपदेश इत्यर्थः । चशब्दार्थं निरस्यति **प्रतिज्ञेति** । ब्रह्मविज्ञानेन न सर्वविज्ञानं सम्भवति । सर्वस्य ब्रह्मविकारत्वाभावेन ब्रह्मात्मकत्वाभावादिति भावः । **न किञ्चिदिति** । साङ्ख्यमते भोक्तृवर्गस्य प्रधानात्मकत्वाभावेऽपि भोग्यवर्गस्य तावदङ्गीकृतमेव । त्वन्मते तु भोक्तृवर्गस्य भोग्यवर्गस्य वा ब्रह्मविकारत्वासम्भवेन तदात्मकत्वं नैव सम्भवतीत्यर्थः । स्वाप्ययो नाम किमेकीभाव उत परिष्वङ्गमात्रमिति विकल्प्य क्रमेण दूषयति **एकीभावस्येत्यादिना** । **प्रधाने अपीति** । लिङ्गदेहपरिष्वङ्गसद्भावात्तस्यापि प्रधानत्वादिति भावः । असिद्धमन्यतरासिद्धम् । ईक्षतिकर्तृत्वेन गतिसामान्यं ज्ञाप्यत इत्यत आह **ईक्षणेति** । **प्रथमसूत्रेणैवेति** । ईक्षतेर्नाशब्दमिति सूत्रेणैव इत्यर्थः ।

**आनन्दः**— सर्वत्रापीत्यपिशब्देन ब्रह्मण्ये तेषां सत्त्वं समुच्चिनोति **एतदिति** । प्रधानस्याशब्दत्वानङ्गीकरणमित्यर्थः । **आद्येति** । शब्दागोचरत्वमित्याद्य इत्यर्थः । **अत एवेति** । ईक्षतेरुपन्यासानुपपत्तेरेवेत्यर्थः । प्रमाणान्तरवेद्यत्वमेव वक्तव्यमिति भावः । **बाधकाभावमनुक्त्वेति** । ईक्षतेर्गौणत्वकल्पनमयुक्तम्, मुख्ये बाधकाभावादिति बाधकाभावमनुक्त्वेत्यर्थः । **वैषम्यमुच्यत इति** । आत्मशब्दादितीदमुच्यत इत्यर्थः । **आत्मशब्दस्येति** । मोक्षोपदेशकथनमयुक्तमिति भावः । सदेवेतिवाक्यप्रतिपाद्यं ब्रह्म हेयत्वावचनादिति प्रयोगो वक्तव्यः । एवं चानैकान्तिकत्वं स्यादित्याह **हेयत्वेति** । ननु ज्ञापकान्तराभावे सति हेयत्वावचनं हेतुः । तत्र च ज्ञापकान्तरमस्तीति शङ्कते **उत्तरोत्तरेति** । **अत्रापि** तथाविधेऽपि । भूय एव मा भवान्विज्ञापयत्वित्यादिप्रश्नोत्तरवचनं पूर्वपूर्वस्याब्रह्मज्ञापकमस्तीत्यर्थः । **प्रतिज्ञाविरोधस्त्विति** । एकविज्ञानेन सर्वविज्ञानरूपप्रतिज्ञाविरोध इत्यर्थः । **अत एवेति** । गतिसामान्यासिद्धेरेवेत्यर्थः । **गतार्थं चेति** । श्रुत्यवगतत्वरूपश्रुतत्वस्य गतिसामान्येनैवोक्तत्वादित्यर्थः ।





**श्रीनिधि०— ईक्षतेरुपन्यासोऽनुपपन्न इति** । असत्त्वेनैव कारणतया शास्त्रप्रतिपाद्यत्वाभावे सिद्धे साधयितुं शक्यते । ईक्षत्युपन्यासोऽनुपपन्नः । असति हि धर्मद्वयमस्ति । **असत्त्वम्** ईक्षणराहित्यम् । लघुपरित्यागेन गुरुस्वीकारोऽनुपपन्न इति भावः । **अत एव नोत्तर इति** । साक्षात्साध्यविरोधिनं प्रमाणान्तरवेद्यत्वं विहाय साक्षादविरोध्युपन्यासोऽनुपपन्न इत्यर्थः । **साध्याविशिष्टत्वमिति** । अत्र चतुर्थे साक्षात्साध्येनैक्यम् । तृतीये तु साध्यवत्सन्दिग्धत्वेन आद्यपक्षेऽप्ययमेव प्रकारो द्रष्टव्यः । असत्त्वस्य साक्षात्साध्यविरोधित्वात् । एवं चात इति परामर्शो युज्यते । साध्यविशिष्टत्वं द्रष्टव्यम् । **प्रायपाठो बाधक उपन्यस्त इति** । मुख्यार्थग्रहणं इति शेषः । **प्रायपाठाविरोधादिति** । तथा च विचारकौशलमिति भावः । **न हि जीवस्यापीति** । न हीत्यस्य युक्त इत्यनेन सम्बन्धः । **आत्मानात्मविवेकार्थमिति** । तस्य च मोक्षहेतुत्वादिति भावः । **उत्तरोत्तरब्रह्मत्ववचनमिति** । यदि सर्वत्र ब्रह्मत्वमभिप्रेतं स्यात्तर्हि एते ब्रह्मेति वक्तव्यं स्यात् । उत्तरोत्तरं तद्वचनान्यथानुपपत्त्या पूर्वं पूर्वं ब्रह्मतया हेयमेवेति ज्ञायत इत्यर्थः । **तथाविधज्ञापकेति** । अत्रापि चेतनधर्मोपदेशादिना तस्य हेयत्वबोधसम्भवादिति भावः । **अत एव** गतिसामान्यसिद्धत्वादेव ।

**वा०चं०—** अशब्दत्वस्वरूपाज्ञाने मूलोक्तासिद्धेर्दुर्ज्ञानत्वात्कारणवाक्ये प्रधानप्रतिपादकशब्दाभावस्य पराभिमतत्वेऽपि दूषणभिया पक्षान्तरकक्षीकारस्यापि सम्भवेन तदभिप्रायस्य निश्चेतुमशक्यतया सामान्यशब्दत्वाच्चाशब्दत्वविकल्पपूर्वं तत्परिहारसमर्पकतया मूलं योजयति **तथा हीत्यादिना** । शब्दशब्दः सामान्यपरो वेदरूपविशेषपरो वा । आद्येऽपि प्रतिपादकत्वेन न विद्यते शब्दो यस्येति वा, वाचकत्वेन न विद्यते शब्दोऽस्येति वा; द्वितीयेऽपि सर्वथा वेदासिद्धत्वं वा कारणतया तदसिद्धत्वं वेति कल्पान्मनसि निधाय विकल्पयति **अशब्दं हीति** । समासोपसर्जनतया प्रकृतस्यापि साङ्ख्यस्य बुद्ध्या विवेकेन परामर्श इत्याह **असाविति** । **स्वसिद्धेनेति** । परं प्रति त्वशब्दत्वं साधयिष्यामीति भावेनैवेक्षतेरुपन्यास इति भावः । **यतोऽसाविति** । अत्र च सन्निहितपरामर्श उक्तानुपपत्त्यभावश्चेति भावः । ननु सूत्रकारेणैव 'महतः परमव्यक्तम्', 'अजामेकाम्' इत्यादिषु प्रधानपरत्वमाशङ्क्य तेषां तत्परत्वाभावस्य 'आनुमानिकम्' इत्याद्यधिकरणेषु व्युत्पादितत्वेन चतुर्थपादे तदशब्दत्वप्रतिपादनात्कथमेतदित्यतस्तदपव्याख्यानस्य 'न शब्दवाच्यतैवात्र' इत्यादि तदधिकरणानुव्याख्याने निरस्यतया नानुपपत्तिरित्याशयेनाह **उपपादयिष्यते चैतदिति** । नन्वयं तत्सूत्रव्याख्याकलह इत्यतोऽनुपपन्नस्याशब्दत्वस्य न सूत्रकाराङ्गीकारार्हतेत्याशयेन तदनुपपत्तिं दर्शयति **किञ्चेति** । यद्वा । चतुर्विधेऽप्याद्यस्य तदसाधकहेतूपन्यासेन सूत्रकारानभिमतत्वाद् द्वितीयादेश्च स्पष्टदूषणतया न सूत्रकाराङ्गीकारार्हतेत्याह **किञ्चेति** । शब्दागोचरत्वं निरुपाख्यत्वमित्याशयेनाद्यः । शब्दशब्दस्य प्रमाणविशेषार्थकत्वादेकविशेषनिषेधे तदितरविशेषाभ्यनुज्ञानमित्याशयेन द्वितीयः कल्पः । **आद्य इति** । ईक्षितृत्वरूपचेतनधर्मस्य यत्र कारणवाक्ये श्रवणं तत्कारणवाक्यस्य तेनाचेतनप्रधानपरत्वाभावसिद्धावपि यत्र तदश्रवणं तत्कारणवाक्येन वा वाक्यान्तरेण वा प्रमाणान्तरेण वा प्रधानसिद्धेरीक्षितृत्वस्यासिद्ध्याऽसत्त्वरूपसाध्यासाधकत्वात् तदुपन्यासोऽनुपपन्न इति प्रमाणाभावरूपतद्धेतूपन्यास एव कर्तव्य इति भावः । **अत एवेति** । प्रमाणान्तरवेद्यत्वरूपसाध्यसाधनाय तद्धेतो-





रेवोपन्यसनीयतयोक्तरीत्येक्षितृत्वस्य स्वश्रवणोपेतकारणवाक्यस्य प्रधानपरत्वाभावसाधकत्वेऽपि तदनुपेतकारणवाक्येन वाऽकारणवाक्येन वा प्रतिपाद्यत्वासाधकत्वेन शब्दातिरिक्तप्रमाणवेद्यत्वासाधकत्वादेवेत्यर्थः । **तृतीयचतुर्थयोरिति** । वेदासिद्धत्वरूपतृतीयस्य, कारणत्वेन वेदान्तावेद्यत्वरूपसाध्यापेक्षया सामान्यत्वेऽपि तस्य साध्यवत्सन्दिग्धत्वेन, चतुर्थस्य तु साध्यानतिभिन्नत्वेनाहेतुत्वमिति भावः । अत्राद्यद्वयनिराकरणं न ह्यङ्गीकरोतीत्यनेन तृतीयचतुर्थनिराकरणं तूभयविधमशब्दत्वं न ह्यङ्गीकरोति साङ्ख्यः किन्तु साध्यवत्सन्दिग्धं वा साध्यानतिभिन्नं वेति तात्पर्यकिणानेनैव वाक्येन सूचितमिति द्रष्टव्यम् । ननु साङ्ख्येनासिद्धावुद्भावितायां तत्साधकतया सूत्रे ईक्षत्युक्तेः कथमसिद्ध्युद्भावनमित्यतस्तर्हीक्षितृत्वेनैव प्रतिज्ञातार्थसाधनसम्भवेऽपि परम्पराश्रयणमचातुर्यावेदकमेवेत्याह **किञ्चेति** । कल्पनमित्यनेनास्मदुक्तरीत्या साध्यप्रतियोगिसमर्पणयोग्यस्य नञोऽन्वयसम्भवे प्रतियोग्यध्याहारेण हेतुविभक्तिशून्यस्य हेतुत्वेन कल्पनमप्रामाणिकमिति सूचयति । इदमपि दूषणमशब्दत्वस्यासिद्धिबोधकैतद्वाक्यसूचितमेवेति द्रष्टव्यम् । एतानि सूत्राणि साङ्ख्यमतनिरासाय नाचीक्लृपदिति प्रतिज्ञायैकस्मिन्सूत्रेऽनुपपत्तिं प्रदर्शयता भाष्यकारेणोपलक्षणतया सूत्रान्तरानुपपत्तेरप्यभिप्रेततया तां दर्शयति **ईक्षितृत्वं चेति** । गौणश्चेदितिसूत्रमीक्षितृत्वस्य गौणत्वनिरासेन मुख्यत्वप्रतिपादनाय प्रवृत्तं तत्तदा सार्थकं यदि सिद्धान्ते तस्य मुख्यत्वं स्यात् । न चैवमतो व्यर्थं तदिति भावः । नन्वीक्षितृत्वस्यावास्तवत्वेऽप्युपाध्यवच्छिन्ने ब्रह्मणि तन्मुख्यमेव । नैतावताऽचेतने प्रधाने तद्युक्तम् । चैतन्यसामानाधिकरण्येनैव तत्प्रतीत्याऽचेतनेऽवास्तवस्यापि तस्याभावात्तत्र गौणमिति कथं सूत्रवैयर्थ्यमिति चेन्न । तदवास्तवताया अद्याप्यसिद्धत्वात् । अन्यथा केवलचेतने तदप्रतीत्याऽचेतनावच्छिन्नचेतने तत्प्रतीतेर्वक्तव्यत्वे, नियामकाभावेन तस्या एव प्रतीतेश्चेतनावच्छिन्नाचेतननिष्ठतद्विषयकत्वोपपत्तेर्विपरीतगौणमुख्यभावस्याप्यापत्त्या गौणश्चेदिति सूत्रानुपपत्तिरेवेत्याशयात् । नन्वीक्षितृत्वस्य गौणत्वनिरासे न सूत्रस्य तात्पर्यमपि तु गौणेक्षणोपजीवनेन प्रधानपरत्वशङ्काया आत्मशब्देन तत्परत्वनिरासमात्र इति चेन्न । तथा सत्यप्रयोजकस्येक्षणस्य प्रथमसूत्र एवानुपन्यसनीयत्वम् । आत्मशब्दरूपपरिहारासङ्गतिं प्रायपाठं निरसितुमाह **किञ्चेति** । **वैषम्यमिति** । सति अप्तेजसोश्चेक्षितृत्वमुख्यतानिर्णायकचेतनात्मत्वार्थकात्मशब्दसदसद्भावरूपमित्यर्थः । **नेति** । देवताशब्दस्याप्यात्मशब्दवच्चेतनमात्रपरत्वादिति भावः । **तन्निष्ठस्येति** । यदि ह्यचेतनं सच्छब्दवाच्यं तदसीति ग्राहयेन्मुमुक्षुं चेतनं सन्तमचेतनोऽसीति तदा शास्त्रमप्रमाणं स्यादित्यादिनैतत्सूत्रार्थकथनदशायां प्रधानैक्यानुपपत्तेः परेण प्रतिपादनान्मोक्षोपदेशस्य च तदुपपादकाभ्युच्चययुक्तित्वेनाप्युपपत्तेराद्यस्य, द्वितीयकल्पस्य तु सूत्रानुरोधात्स्पष्टमेव प्रसक्तिरिति द्रष्टव्यम् । तथा च निष्ठाशब्द ऐक्यपरो वा स्थितिमात्रपरो वेति भावः । **तज्ज्ञस्येति** । प्रधानज्ञस्येत्यर्थः । **अधस्तादिति** । सत्यत्वात्तेनेत्यादिनेत्यर्थः । **तथाविधेति** । सदुत्त्यनन्तरं तन्मे विजानीहि भूय एव मा भगवो विज्ञापयत्वित्याद्युक्त्वा दृष्टान्तान्तराद्युक्तिरूपज्ञापकस्यात्रापि सम्भवात् । तस्यान्यथासिद्धौ चान्नमयादिष्वप्यन्यथासिद्धिसम्भवादिति भावः । अत एव तथाविधेत्युक्तम् । अप्ययशब्दार्थो लयोऽपि ध्वंसरूपस्य तस्यासम्भवादेकीभावो वा परिष्वङ्गमात्रं वेति विकल्पं मनसि निधायाह **एकीभावस्येति** । **दिगिति** । ब्रह्मकारणत्वप्रतिपादकवाक्यमात्रोदाहरणेऽपि सर्ववेदान्तोत्पाद्यावगतेरेकरूपत्वावेदकवाक्यस्यास्माभिरिव त्वयाऽनुदाहरणादुदाहृतवाक्यस्थात्मशब्दस्य प्रधानेऽपि सावकाशत्वा-





त्सर्वज्ञकारणतायाः श्रुतत्वेऽपि मुख्यसार्वज्ञस्य ब्रह्मण्यप्यभावादारोपितस्य च प्रधानेऽपि भावाच्चन्द्रिकोक्त-दूषणान्तरस्यापि सम्भवाच्च नेदं व्याख्यानं युक्तमित्यर्थः ।

**वा०र०**— अत्राशब्दत्वस्य यथाश्रुतस्यैव निराकरणसम्भवे कुतस्तदर्थगवेषणम् । गवेषणेऽपि वा प्रधानप्रतिपादकशब्दाभावस्य पराभिप्रेतत्वेन तन्मात्रस्यैव दूष्यतया विकल्पानुपपत्तिरेवेत्यतस्तदर्थज्ञानपक्षे-ऽनुपपत्तिं वदन् पराभिमतार्थावधारणानुपपत्त्या विकल्पावश्यकत्वं चोपपादयति **अशब्दत्वेत्यादिना** । **समासोपसर्जनस्येति** । उक्तं च 'जीवेशभेददृष्ट्यैव समुदायैकता कुत' इति अत एव चोपमेत्यधिकरणी-यानुव्याख्यानमूले । समासे गुणभूतेनापि बुद्ध्या विविक्तेन भेदशब्देनैवकारसम्बन्ध इतीति ज्ञेयम् । तर्हि परीत्याऽसिद्धिः स्यादित्यत आह **परं प्रतीति** । **सन्निहितेति** । उत्तरार्ध एव भगवच्छब्देन सूत्रकारप्रतिपादनादिति भावः । **उक्तेति** । समासे गुणभूतत्वेन प्रकृतस्य स्वातन्त्र्येणोपस्थित्यभावात्परामर्शानुपपत्तिरित्यनुपपत्तिरित्यर्थः । यद्यपि प्रागुक्तयोजनायामेवं स्वारस्याभावः प्राप्नोतीति सूचनं न युक्तम् । व्याख्यानद्वयस्यापि सम्मतः । तथापि वस्तुगत्येतद्योजनान्तरे कुसृष्टिर्नेत्येवं वैषम्यमात्रप्रतिपादने तात्पर्यमिति न दोषः । **तदुपव्याख्यानस्येति** । महतः परमव्यक्तमित्यादिप्रतिपादनादित्यन्ताशङ्कारूपपरापव्याख्यानस्येत्यर्थः । व्याख्याकलहो हि साम्ये सति वाच्यः । अयं चार्थोऽस्मदर्थ इव न सूत्रकाराभिमतोऽनुपपन्नत्वादित्याह **अनुपपन्नस्येति** । अशब्दत्वसामान्यानुपपत्ति-कथनपरतया योजनायामाद्ये द्वितीयास्त्वित्यादेरसङ्गतिरित्यतो विकल्पितपक्षेषु विशेषाश्रयणेनैव दूषणाभिधान-परतयैव किं चेत्यादिग्रन्थं योजयति **यद्वेति** । पूर्ववाक्यात् । नन्वयं तत्सूत्रव्याख्याकलह इत्यत इत्यनुवर्तते **तदसाधकेति** । ईक्षणीयत्वस्य शब्दागोचरत्वसाधकं चेक्षितृत्वरूपेत्यादिनोत्तरटीकायां स्पष्टम् । **सूत्रकारा-ङ्गीकारेति** । ततश्च वैषम्यान्न कलहेपर्यवसन्नोक्तिर्युक्तेति भावः । अथवा पूर्ववाक्यादित्यत इत्येतस्य नानुवृत्तिः । किन्तु पूर्वमुपपादयिष्यते इत्येतच्छेषत्वेन योजना । इदानीं तु प्राग्विकल्पितपक्षचतुष्टयस्यासिद्धिरूपसाधारण-दूषणकथनपरतया योजनां कृत्वा प्रत्येकदूषणकथनपरत्वेनापि भाष्यं योजयतीति विवेकः । भाष्ये द्वितीयादिदूषणा-भावात्कथं चतुष्टयनिरासकत्वमित्येतदुक्तं **स्पष्टेति** । दुर्गमत्वादुपन्यासानुपपत्तिमुपपादयति **ईक्षितृत्वेति** । एवमत एवेत्येतदपि दुर्गमत्वात् प्रमाणान्तरेत्यादिना विवरिष्यति **प्रधानपरत्वाभावेति** । प्रधानपरत्वाभावसिद्ध्या तत्कारण-वाक्येन प्रधानासिद्धेरीक्षितत्वेन सिद्धावपीति योज्यम् । एवं यत्र तदश्रवणमित्यनन्तरं तत्कारणवाक्यादीनां तेनाचेतनप्रधानपरत्वासिद्धेति पूरणीयम् । उभयत्रोभयपूर्णाभिप्रायेणैवैकैकत्रैकदेशकीर्तनात् । अश्रवणं चाबोध-पर्यवसन्नमिति प्रमाणान्तरसाधारण्योपपत्तिः । ईक्षतेरिति मूले नान्यस्योपन्यासोऽभ्यनुज्ञातोऽतस्तदन्यद्दर्शयति **प्रमाणाभावरूपेति** । अत एवेत्यतिदेशो न प्रागुक्ततत्कारणवाक्येन वेत्युक्तत्रितयविषयः । अपि तु प्रमाणान्तर-वेद्यत्वमित्यनेनोक्तशब्दातिरिक्तप्रमाणवेद्यत्वसाधकत्वेन प्राप्ते ये ईक्षतिश्रवणोपेतवाक्यातिरिक्ततदनुपेतकारण-वाक्याकारणवाक्यागम्यत्वे तन्मात्रविषयप्रमाणान्तरावेद्यत्वस्य विरोधेन तदसाधकत्वादिति सङ्कोचाश्रयणेन व्याख्याति **प्रमाणान्तरेति** । **साधकत्वेऽपीति** । साधकतया तद्वाक्याप्रतिपाद्यत्वसाधकत्वेऽपीत्यर्थः । साध्या-वैशिष्ट्यमवैदिकत्वे मुख्यं नेत्यत उपपादयति **वेदासिद्धत्वेति** । एवमशब्दत्वस्य चतुर्धा विकल्प्य निराकरणं मूलान्न प्रतीयत इत्यतस्तत्प्रतीतिमुपपादयति **अत्राद्येति** । **तत्साधकतयेति** । अत एव कथमशब्दत्वमीक्षतेरिति





प्रागुपवर्णितमिति भावः । **तर्हीति** । कारणस्येक्षितृत्वश्रवणादित्युक्तश्रौततेक्षितृत्वेनैव प्रधानस्य कारणत्वेन वेदान्तावेद्यत्वरूपप्रतिज्ञातार्थसाधने सम्भवत्यपीक्षतिकर्तृत्वेन प्रधानस्याशब्दत्वं तेन च कारणतया वेदान्तावेद्यत्वमिति यत्परम्पराश्रयणं तदचातुर्यविदकमेवेत्याहेत्यर्थः । **साध्यप्रतियोगीति** । साध्यभूतो योऽशब्दत्वाभावस्तत्प्रतियोगिभूतं यदशब्दत्वं तत्समर्पणयोग्यस्य शब्दमित्यस्य इत्यर्थः । **तत्प्रतियोगीति** । साध्यप्रतियोगीत्यर्थः । **हेतुत्वेन** । लिङ्गवचनत्वेन । अयं भावः । अत्राह नञा केनचि-दन्वितेन साध्यं किञ्चित्समर्पणीयम् । तद्धि त्वद्रीत्या कारणत्वेन वेदान्तवेद्यत्वाभावो वाऽशब्दत्वाभावो वा मद्रीत्या प्राप्नोति । तत्र त्वत्पक्षे साध्यभूताभावप्रतियोगिसमर्पकस्यात्राश्रवणेन तदध्याहारः कर्तव्यः । तथाऽशब्दमित्यस्य हेतुविभक्तिशून्यस्य हेतुसमर्पकत्वं चाश्रयणीयमिति कल्पना प्राप्ता । अस्मत्पक्षे तु नाशब्दमित्यत्र नञर्थाभावप्रतियोगिसमर्पणमशब्द इत्यनेनेत्यङ्गीकारान्न तदध्याहारः । अशब्दत्वस्य हेतुत्वेनानङ्गीकारान्न तत्कल्पनापि । एवं च परपक्षे तत्कल्पनमप्रामाणिकमिति सूचनाय कल्पनमित्युक्तमिति । एतद्दूषणस्योद्भाष्यत्वशङ्कावारणायाह **इदमपीति** । ईक्षितृत्वं चेत्याद्युत्तरग्रन्थोक्तदूषणानां नहीत्येतद्भाष्योक्तत्वाभावात् अभिधानायोग इत्यतो भाष्यकाराभिप्रायव्याप्तत्वात् तदभिधानं न दोषायेत्याह **एतानीति** । **सिद्धान्त इति** । तदभिमते ब्रह्मण्यपि तस्य मुख्यत्वस्य तेनानङ्गीकारादिति भावः । ....अनुसारेण गौण इति सूत्रसार्थक्यमाशङ्क्य दूषयति **नन्वीक्षितृत्वस्येत्यादिना** । तत्र कथं गौण इति सूत्रवैयर्थ्यमिति पाठः । तत्रेत्यस्य तथा सतीत्यर्थः । तथा चेति यावदित्याहुः । वस्तुतस्तु तत्रेत्यस्य सिद्धान्त इति प्रकृतत्वात् सिद्धान्त इत्यर्थः । गौण इति कथं सूत्रवैयर्थ्यमिति क्वाचित्कपाठो लेखकागतः । **अनुपन्यसनीयत्वादिति** । उपन्यासानुपपत्तेरित्यर्थः । **आत्मशब्दरूपेति** । प्रायपाठं निरसितुमात्मशब्दरूपपरिहारासङ्गतिमिति सम्बन्धः । अप्तेजसोः प्राये पठितत्वादीक्षतिर्गौण इति गौणत्वसाधकत्वेन प्रायपाठे शङ्किते तत्परिहारायात्मशब्दोपन्यासाद्गौणत्वसाधकप्रायपाठं निरसितुमात्मशब्दरूपो यः परिहारस्तस्यासङ्गतिमाहेत्यर्थः । अनेन प्रायपाठरूपबाधके गौणत्वसाधकतया परेणोक्ते तद्बाधकस्याभाव एव वक्तव्यः । तमनुक्तात्मशब्दादिति परिहारस्त्वसङ्गत इति परिहारपदपूरणेन व्याख्यानं कृतं भवति । अथोक्तासङ्गतिपरिहारमाशङ्कते **परेणेति** मूलम् । तत्रेदं वैषम्यमित्यस्यार्थाप्रतीतेर्व्याचष्टे **सतीति** । अत्र चेतनार्थकात्मशब्देति पाठः । मध्येत्येतदधिकम् । ईक्षितृत्वस्य या मुख्यता तन्निर्णायको यश्चेतनार्थकात्मशब्दस्तस्य सति सद्भावोऽप्तेजसोश्चासद्भाव इत्येवं सदसद्भावरूपमित्यर्थः । प्रायपाठरूपबाधके परेणोक्ते स एव नास्तीति परिहाराभावेऽप्यात्मशब्दादित्युक्तात्मशब्दरूपः परिहारो युज्यते । तेन परिहारेण प्रायपाठरूपबाधकस्य सत्यपि प्रायपाठे तद्विरोधो नास्ति । आत्मशब्दसद्भावस्थले ईक्षितृत्वस्य मुख्यत्वेऽपि तदभावस्थले तस्य गौणत्वोपपत्तेरिति वैषम्यप्रतिपादनलाभेन तत्परिहारस्य सङ्गतत्वादिति मूलं व्याख्यातं द्रष्टव्यम् । उपदेशानुपपत्तिर्वेति मूले किं वेति मिलितं पक्षान्तरत्वद्योतकम् । एकीभावादिरूपत्वे हेतुर्ध्वंसरूपस्येति । **तस्य** लयस्य । **अस्माभिरिवेति** । एको देवः सर्वभूतेष्वित्यस्यास्मत्पक्षे उदाहरणादिति भावः । सावकाशत्वात् । स्वरूपार्थकत्वेनापि तदुपपत्तेरिति भावः । **चन्द्रिकोक्तेति** । तत्र किं विशिष्टस्य परिणामित्वमित्यादि चन्द्रिकाग्रन्थोक्तदूषणेषु यावन्त्यत्रोक्तानि तदतिरिक्तदूषणेत्यर्थः ।





**स०व्र०— उपपादयिष्यते चैतदिति** । चतुर्थपाद इति शेषः । **अत्रापि तथाविधज्ञापकसौलभ्यादिति** । अत्रापि मृद्दृष्टान्तेऽभिहिते 'तद्धास्य विज्ञौ' इति ब्रह्मज्ञानवचनेन पूर्वोक्तस्याब्रह्मत्वमिति वक्तुं शक्यमिति भावः । यद्वा सदेव सौम्येत्यादिना प्रतिपादितस्याब्रह्मत्वे 'कथं नु भगवः स आदेशो भवति' इति पुनः प्रश्नकरणमेव ज्ञापकं वक्तुं शक्यमिति भावः । **प्रतिज्ञाविरोध इति** । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोध इत्यर्थः । तदेव दर्शयति **एकीभावस्येति** । **ब्रह्मविषयमिति** । प्रधानं कारणवाक्याप्रतिपाद्यं वेदान्तोत्पाद्यगतेर्ब्रह्मविषयत्वादित्यभिप्रेतत्वेन तत्र वेदान्तोत्पाद्यमतेर्ब्रह्मविषयत्वं परस्यासिद्धं कारणवाक्योत्पाद्यमतिविषयत्वस्य परेण प्रधान एवाङ्गीकारादिति भावः । ननु कारणवाक्येषु ईक्षणादेः श्रवणात् तस्य प्रधाने असम्भवेन तदुत्पाद्यगतिविषयत्वस्यापि ब्रह्मण्येवाङ्गीकर्तव्यत्वेन सर्ववेदान्तोत्पाद्यगतिविषयत्वस्य ब्रह्मण्येव सत्त्वेन नासिद्धिरित्याशङ्क्याह **ईक्षणादिनेति** । **अत एवेति** । ब्रह्मविषयगतिसामान्यस्य परं प्रत्यसिद्धत्वादेवेत्यर्थः । सकारणं कारणाधिपाधिपेत्यत्रापि प्रधानमेव प्रतिपाद्यमिति परो वदिष्यतीति भावः । **गतार्थं चेति** । श्रुत्यवष्टम्भेन ब्रह्मकारणत्वस्य गतिसामान्यादित्यत्रैव समर्थितत्वादिति भावः ।

**विठ्ठल०— स्वसिद्धेनेत्यत्र** सूत्रकारस्य स्वमतरीत्येत्यर्थः । **उपपादयिष्यत इति** । 'न शब्दवाच्यतैवात्र प्रधानस्य निषिध्यत इति चतुर्थपाद इत्यर्थः । शब्दागोचरत्वं द्वेधा सङ्घटते कूर्मरोमादिवदसत्त्वेन वा प्रत्यक्षानुमानवेद्यत्वेन वेति विकल्पयति **किञ्चेति** । **ईक्षतेरुपन्यास इति** । न हि तेनासत्त्वं सिद्ध्यतीति भावः । **अत एवेति** । ईक्षतिकर्तृत्वस्य प्रमाणान्तरवेद्यत्वासाधकत्वेन तदुपन्यासस्यानुपपन्नत्वादेवेत्यर्थः । **द्वितीय इति** । शब्दावाच्यस्यापि ब्रह्मणो जगत्कारणतया वेदान्तवेद्यत्वस्वीकारात् तत्र विद्यमानः शब्दावाच्यत्वहेतुरनैकान्तिक इति भावः । **तृतीयेति** । तृतीयविकल्पे परेण प्रधानस्य वेदप्रतिपाद्यतोक्तेरवैदिकत्वहेतोस्साध्यवत् सन्दिग्धत्वेन साध्याविशिष्टत्वम् । **कारणतयाऽवैदिकत्वमिति** । चतुर्थकल्पे तु प्रधानं जगत्कारणतया न सदेवेत्यादिवेदप्रतिपाद्यमिति साध्येनावैशिष्ट्यं स्फुटमेवेति । किञ्च ऐक्षत इति जगत्कारणस्येक्षणकर्तृत्वश्रवणान्नाचेतनं प्रधानं कारणतया वेदवेद्यमित्येव प्रतिज्ञार्थसिद्धेरित्यर्थः । **गौणश्चेदिति व्यर्थमिति** । गौणत्वनिरासेन मुख्येक्षितृत्वस्यासाधनात् इति भावः । **वैषम्यमिति** । तत्तेज ऐक्षतेत्यादावात्मशब्दाभावेन जडत्वरूपबाधकवशेनेक्षणं गौणं प्रकृते आत्मशब्दबलाच्चेतनत्वनिश्चयेन मुख्येक्षणमेवेतीदं वैषम्यमित्यर्थः । **देवतात्वेन इति** । इमास्तिस्रो देवता इति तत्रैव तेजोबन्नानां देवतात्वोक्तेरिति भावः । प्रधाननिष्ठस्य मोक्षोपदेशानुपपत्तिर्द्वेधा घटते । मोक्षसद्भावेऽपि चेतनस्य प्रधानैक्यासम्भवेन वा, ऐक्यसम्भवेऽपि अनात्मप्रधानज्ञानस्य मोक्षाहेतुत्वेन वेति भावेन विकल्प्य दूषयति **तन्निष्ठस्य इति** । **अधस्तादिति** । 'ब्रह्मत्वमपि जीवस्य न प्रत्यक्षविरोधतः' इत्यत्रेत्यर्थः । आवश्यकत्वादितःपरं विवेकस्य च मोक्षसाधनत्वान्न मोक्षानुपपत्तिरिति शेषः । बाधकाभाव एव वक्तव्य इत्यतःपरं मोक्षोपदेशात् इत्यसङ्गतमिति शेषः । **परिचोदना** व्यावृत्त्याशङ्का । कुतोऽनुपपन्नेत्यत आह **न हीति** । न हि साङ्ख्यो ब्रह्माङ्गीकरोति तेन तद्बोधनाय स्थूलारुन्धतीन्यायेन प्रधानोपदेशः सङ्गतः स्यादिति भावः । **हेयत्वावचनं चेति** । सदेवेत्यादौ जगत्कारणं ब्रह्मैव हेयत्वावचनादित्युक्ते ब्रह्मत्वरूपसाध्यरहितेष्वन्नमयादिषु हेतोः





सत्त्वेनानैकान्तिकमित्यर्थः । नन्वन्नमयस्याब्रह्मत्वे उत्तरोक्तप्राणमयस्य ये प्राणं ब्रह्मेति ब्रह्मत्ववचनं ज्ञापकं तस्याब्रह्मत्वे तदुत्तरस्य मनोमयस्य ब्रह्मत्ववचनमित्येवं पूर्वपूर्वस्य हेयतायामुत्तरोत्तरब्रह्मत्ववचनं ज्ञापकं तथा च हेतोरेवागमनान्न व्यभिचार इति भावेन शङ्कते **उत्तरोत्तर इति** । **अत्रापीति** । तत्त्वमसीत्यत्रापि चरमदृष्टान्तेऽभिहिते तद्धास्यविजिज्ञाविति चरमोक्तस्य ब्रह्मत्वावबोधोक्त्या पूर्वमष्टसु दृष्टान्तेषु पूर्वोक्तानामब्रह्मत्वज्ञापकमस्तीति हेतुर्न वर्तते इत्यसिद्धिरिति भावः । **प्रतिज्ञाविरोध इति** । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोध इत्यर्थः । ननु प्रधानस्य भोग्यभूतजडसर्वात्मकत्वेऽपि न भोक्तृचेतनात्मकत्वम् अतस्सर्वात्मकत्वमसिद्धमिति शङ्कते **भोक्तृवर्गस्येति** । **ब्रह्मणस्तु न किञ्चिदिति** । भोक्तृतदितरवर्गयोरुभयोरपि ब्रह्मात्मकत्वाभावादिति भावः । स्वाप्ययादित्यत्रोक्तं स्वाप्ययः किमेकीभावः किं वा सम्बन्धविशेषादिरिति विकल्पं मनसि निधाय क्रमेण निराह **एकीभावस्येति** । साङ्ख्येन ब्रह्मण एवानङ्गीकारेण तस्य कारणतया वेदवेद्यत्वं सुतरामसिद्धमित्यर्थः । ईक्षणकर्तृत्वेन ब्रह्मणो वेदप्रतिपाद्यत्वं साध्यत इत्याशङ्क्य तर्ह्यस्यार्थस्य प्रथमसूत्रेणैवोक्तत्वात्तेन गतार्थं गतिसामान्यसूत्रमित्याह **ईक्षणादिनेति** । **अत एवेति** । ब्रह्मविषये सर्ववेदोत्पाद्यगतिसामान्यस्य साङ्ख्यमते असिद्धत्वादेव सकारणमित्यत्र प्रधानस्यैव प्रतिपाद्यतोरीकरणाच्छ्रुतत्वादित्यसिद्धमित्यर्थः । किञ्च श्रुत्यवष्टम्भेन ब्रह्मकारणत्वस्य गतिसामान्यादित्यत्रैव प्राप्तत्वेन तेन गतार्थं चान्तिमसूत्रं स्यात् । अपि च प्रधानस्य कारणतां निषिध्य ब्रह्मण एवात्र कारणतासाधने अविकारिणस्तस्य घटादिवत् परिणामितया ज्ञानेच्छादिविकलत्वेन कुलालादिवन्निमित्तत्वेन च कारणत्वानुपपत्तेः सगुणस्य वन्ध्यापुत्रोपमत्वाच्च प्रपञ्चारोपाधिष्ठानतावादस्याप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्च प्रधानोपादानतावादाविरोधाच्चासमञ्जसं परकीयव्याख्यानमित्याशयेनोपसंहरति **गतार्थं च गतिसामान्येनेत्येषा दिगिति**।

**चषकः— शब्दागोचरत्वं** शब्दवृत्तिशक्तिलक्षणाऽन्यतरवृत्त्यनिरूपकत्वम् । **शब्दावाच्यत्वम्** शब्दशक्त्यविषयत्वम् । **अवैदिकत्वम्** वेदगतपदजनितान्वयबोधाविषयत्वम् । **कारणतया अवैदिकत्वम्** वेदगतपदजनिता कारणत्वप्रकारिका या अन्वयधीस्तदविषयत्वम् ।

**॥ इति मायावायुक्तिनिरासे 'नैषां सूत्राणां साङ्ख्यनिराकरणार्थत्वम्' ॥**

* * *

**॥ अथ मायावायुक्तिनिरासे**
**'साङ्ख्यनिराकरणापेक्षया शब्दगोचरताया एव प्रथमप्रतिपाद्यत्वम्' ॥**

**१०९ सु०— अस्तु वा यथाकथञ्चित्सूत्रगमनिका, तथाऽपि प्रकृतसङ्गतिपर्यालोचनयाऽत्र वाच्यत्वसमर्थनमेवोपपन्नं न साङ्ख्यनिराकरणमित्याह समन्वय इति ।**





**अनु०— समन्वये प्रतिज्ञाते शब्दगोचरतैव हि।**
**प्रथमप्रतिपाद्या स्यात्**

तत्तु समन्वयादिति समस्तस्यापि शास्त्रस्य ब्रह्मणि समन्वये प्रतिज्ञाते सति, यद्यपि मुख्यया वृत्त्या शब्दगोचरता साङ्ख्यनिराकरणं चेत्युभयमपि प्रतिपाद्यं भवति, उभयाभावेऽपि समन्वयानुपपत्तेः, तथाऽपि शब्दगोचरतैव प्रथमप्रतिपाद्या स्यात्, हि यस्मात्, तस्मात्सैवात्र प्रतिपाद्यते न साङ्ख्यनिराकरणम् । तत्पुनः 'ईक्षतिकर्मव्यपदेशात्स' इत्यादौ करिष्यत इति।

कुतश्शब्दवाच्यतायाः प्रथमप्रतिपाद्यत्वमित्यत आह **तदभाव** इति ।

**अनु०— तदभावे कुतोऽन्वयः ॥**

अवाच्यत्वे हि ब्रह्मणि शब्दसम्बन्ध एवानुपपन्नः, जगत्कारणत्वादिवाक्य-विचारस्तु दूरे । साङ्ख्यनिराकरणाभावे तु सृष्ट्यादिवाक्यानामेव समन्वयानुपपत्तिः । अतः प्रथमं वाच्यत्वसमर्थनेन समन्वयसम्भावनायां सत्यां वाक्यविशेषनिष्ठस्य विचारस्य पश्चादवसर इति ।

**वं०प०—** **गमनिका** व्याख्या।

**आनन्दः—** तर्हि साङ्ख्यनिराकरणं किं न क्रियत एवेत्यत आह **तत्पुनरिति**।

**श्रीनिधि०—** **सूत्रगमनिका** सूत्रव्याख्या । **उभयाभावेऽपि समन्वयानुपपत्तेरिति** । संशब्दस्य मुख्यार्थकत्वात् साकल्यार्थकत्वाच्च साङ्ख्यानिराकरणे साकल्यं न सिद्ध्येदिति भावः ।

**वा०चं०—** ननु समन्वये प्रतिज्ञात इत्यादिना 'न ह्यशब्दत्वम्' इत्यादिवत्सूत्राक्षरानानुगुण्याप्रतिपादनात् तस्य प्रकृतासङ्गतिः । 'न च साङ्ख्यनिराकृत्यै' इत्यंशसूचितपराभिमताधिकरणप्रयोजननिरासोपपादनस्य असङ्गतिप्रतिपादनेन क्रियमाणत्वासङ्गतिरिति वाच्यम् । तदुक्तार्थस्याक्षरानानुगुण्येनार्थत्वाभावे सिद्धे तदर्थक-त्वोपजीवनप्रवृत्तासङ्गत्युद्भावनस्यानुचितत्वादित्यतः सूत्राणां तदर्थकत्वाभ्युपगमे नासङ्गत्युक्तिरित्याशयेनोत्तर-वाक्यमवतारयति **अस्तु वेति** । ननु शब्दगोचरताया अधिकरणसङ्गतिकथनावसरोक्तरीत्या समन्वयोपयोगेन





प्रतिपाद्यत्वेऽपि साङ्ख्यमतनिरासस्य प्रतिपाद्यत्वे न नियामकम् । आनन्दमयोऽभ्यासादित्यादौ तत्प्रतिपादनानुपलब्धेश्चेति प्रथमग्रहणानुपपत्तिरित्यतस्तदुपपादयति **तत्त्विति** । हिशब्दलब्धं योग्यं मूलाभिमतं साध्यं दर्शयति **सैवेति** ।

विशेषविचारोपयुक्तसामान्यसम्भावकत्वरूपां मूलाभिप्रेतां शब्दवाच्यत्वप्रतिपादनस्य प्राथमिकत्वे युक्तिं वक्तुं मूले कण्ठत उक्तमसम्भावनाप्रकारमुपपादयति **अवाच्यत्वे हीति** । कुत इत्येतद्बललब्धकथनमेवेति । अस्त्ववाच्यत्वे शब्दसम्बन्धानुपपत्तिः किं तावता साङ्ख्यमतनिराकरणस्य प्राप्तमित्यतोऽनवसरग्रस्तत्वमित्याशयेनाह **जगदिति** । वाक्यविशेषसम्बन्धविचार इति यावत् । नन्वस्तु जगत्कारणत्वादिवाक्यविचारस्य दूरत्वं साङ्ख्यनिराकरणस्यानवसरग्रस्तत्वं कथमित्यतस्तस्य विशेषविचारार्थत्वादित्याह **साङ्ख्येति** ।

**वा०र०**— न च साङ्ख्येत्येतद्व्याख्यानमूलव्याख्यावसरे भाष्यतात्पर्यत्वेनासङ्गतेरप्युक्तत्वात्तदभिधानं न दोषायेति शङ्कते **न चेति** । **तदर्थकत्वेति** । सूत्राक्षरार्थाननुगुणत्वेनार्थत्वं तस्य न सम्भवतीत्येवमर्थत्वाभावरूपेण निर्णीतो यः परोक्तोऽर्थस्तदर्थकत्वेत्यर्थः । **सङ्गतिकथनेति** । वचनवृत्त्यैव सकलशास्त्रप्रतिपाद्यब्रह्मेत्युक्तमित्यादिनेति शेषः । प्रतिपाद्यत्व इति सप्तमी । **प्रथमग्रहणेति** । उभयोः प्रतिपाद्यत्वप्रसक्ताववेतरनिरासाय प्रथमपदस्य वाच्यत्वादित्याशयः । **विशेषविचारेति** । विचारोपयुक्ताया सामान्यसम्भावना तद्धेतुत्वरूपामित्यर्थः ।

**विठ्ठल०**— ननु साङ्ख्यमतनिराकरणस्यापि समन्वयप्रतिज्ञासङ्गतत्वेन तदकरणे न्यूनता स्यादित्यतः प्रथमप्राप्तत्वाभावादत्र तदकरणं तृतीयपादे तन्निराकरणं क्रियत इति न्यूनतेत्याशयेनाह **तत्पुनः इति** । **वाक्यविशेषनिष्ठस्येति** । सदेव सोम्येत्यादि वाक्यविशेषे प्रधानमेव कारणतयोच्यत इत्याशङ्कायां तत्परिहारस्य पश्चादवसर इति भावः । लक्षणावादेऽपि समीचीनान्वयो युज्यत इति शङ्कते **सत्यं समीचीनोऽन्वय इति** ।

**११० सु०— ननु वाच्यत्वाभावेऽपि लक्षणया वृत्त्या समन्वयो भविष्यतीत्यवाच्यत्वाक्षेपं निर्दलतयोपेक्ष्य सूत्रकारेणादौ साङ्ख्यमतं निराकृतमित्यङ्गीकारे कथमसङ्गतिरित्यत आह कथं चेति ।**

## अनु०— कथं च लक्षणावादी ब्रूयाद्ब्रह्मसमन्वयम् ।

**स्यादेवम् । यदि सूत्रकारः शब्दानां ब्रह्मणि लक्षणामभिप्रेयात् । न चैतदस्ति । यदि सूत्रकारो ब्रह्मणि शब्दानां लक्षणामभिप्रैति तदा कथं समन्वयं ब्रूयात् । किन्त्वन्वयमात्रं ब्रूयात् । समन्वयं चाब्रवीत् । तेन ज्ञायते न लक्षणा सूत्रकारस्याभिप्रेता किं नाम मुख्यवृत्तिरेवेति ।**





**वा०चं०**— ननु समन्वयोक्त्या लक्षणापक्षनिरासस्य. न प्रकृतसङ्गतिः । साङ्ख्यनिरासे सूत्रकारस्यानवसरस्यापरिहारादित्यत उत्तरवाक्यं प्रकृतेन सङ्गमयति **नन्विति** । लक्षणावादिनं मायावादिनं प्रत्युक्तदूषणेन कथमुक्तशङ्कापरिहार इत्यतो वादशब्दस्याभिप्रायार्थकत्वं लक्षणावादिशब्दस्य सूत्रकारपरत्वं यदीत्यध्याहारेण तस्यानुवाद्यसमर्पकत्वं कथमित्यादेस्तु विधेयसमर्पकत्वम् एवं चोक्तशङ्कापरिहारसिद्धिरित्याशयेन मूलाभिप्रेतं फलं कथयन्नेव मूलं योजयति **स्यादेवमित्यादिना** ।

**आनन्दः**— ननु तदभावे कुतोऽन्वय इत्युक्तमयुक्तं, वाच्यत्वाभावेऽपि लक्षणया समन्वयोपपत्तेरिति शङ्कते **ननु वाच्यत्वेति** । ननु कारिकायां लक्षणावादीत्ययुक्तं, सूत्रकारेण लक्षणाया अनुक्तत्वात् । न चात्र लक्षणावादी मायावाद्येवेति वाच्यम् । तर्हि तस्य समन्वयप्रवर्तकत्वाभावेन लक्षणावादी ब्रूयादित्यस्यायोगादित्यत आह **स्यादेवमिति** । एवं च सूत्रकारो लक्षणाभिप्रायवान्न समन्वयप्रवक्तृत्वादित्यनुमानमुक्तम् ।

**वा०र०**— **समन्वयोक्त्येति** । कथं च लक्षणावादीत्युत्तरभाष्य इति पूरणीयम् । उत्तरत्र क्रियमाणनिरासस्य न प्रकृतसङ्गतिरित्यर्थः । **अनवसरस्येति** । प्रथमतस्तदनवसरात्प्रकारान्तरेणावसराप्राप्तेरिति भावः । **प्रकृतेनेति** । शब्दगोचरतैव प्रथमप्रतिपाद्येत्युक्ताक्षेपरूपेण सङ्गमयतीत्यर्थः । अभिप्रायत्वार्थकमित्यादिस्थलचतुष्टये आश्रीयत इति शेषः । यद्वा विधेयसमर्पकत्वमित्यनन्तरमेवेत्याश्रीयत इति शेषः । तेनैवं चेत्युपपन्नम् ।

**१११ सु०— समन्वयं ब्रुवता कथं मुख्यवृत्तिरभिप्रेतेति ज्ञायत इत्यत आह योऽसाविति ।**

## अनु०— योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वयः ॥

**समीचीनो (हि) अन्वयः समन्वयः । स च शब्दस्य वाच्यार्थ एव घटते, तत्रैव साक्षाच्छक्तिमत्त्वात् । लक्ष्यार्थे तु वाच्यार्थद्वारेणान्वयो न समीचीनः । अतः समन्वयशब्दं प्रयुञ्जानेन सूत्रकृता वाच्यवाचकभाव एव प्रतिज्ञात इति ज्ञायते । स चावाच्यत्वशङ्कानिरासमन्तरेण सर्वथाऽप्यसम्भावितः स्यादिति वाच्यत्वसमर्थनमेव प्राथमिकमिति ।**

**आनन्दः**— अत्राप्रयोजकत्वं शङ्कते **समन्वयमिति** । ननु गङ्गामुख्यपदार्थे तीरे गङ्गापदसमन्वयवत् प्रकृतेऽपि किं न स्यादित्यत आह **समीचीनो हीति** । तत्र मुख्यार्थे बाधकसत्त्वेऽपि न प्रकृते तदित्याशयः ।

**श्रीनिधि०**— **साक्षाच्छक्तिमत्वादिति** । अव्ययप्रधानेन सम्बन्धवत्वादित्यर्थः ।





**वा०चं०**— योऽसावित्युत्तरवाक्यं न वस्तुस्थितिकथनार्थं प्रवृत्तं येनासङ्गतं स्यात्किन्तूक्तहेतुसाध्ययोर्हेतुहेतुमद्भावोपपादनार्थमित्याशयेनाह **समन्वयमिति**।

**॥ इति मायावाद्युक्तिनिरासे**
**'साङ्ख्यनिराकरणापेक्षया शब्दगोचरताया एव प्रथमप्रतिपाद्यत्वम्' ॥**

* * *

**॥ अथ मायावाद्युक्तिनिरासे 'प्रतिज्ञातः समन्वयो न लक्षणया निर्गुणे, अपि तु वचनवृत्त्या सगुण एव' ॥**
**॥ तत्र 'निर्गुणे ब्रह्मणि शास्त्रसमन्वयस्य निराकरणम्' ॥**
**॥ तत्रादौ 'निर्गुणे शास्त्रसमन्वयानुपपत्तिः' ॥**

**११२ सु०— इदं चाभ्युपगम्योक्तम् लक्षणावादेऽन्वय एव नोपपद्यते। कुतः समन्वयः। अवाच्ये लक्षणासम्भवस्योक्तत्वादिति।**

सत्यम्। 'समीचीनोऽन्वयः समन्वयः। समीचीनता तु तात्पर्यवत्ता। सा च लाक्षणिकेऽप्यर्थे शब्दानां सम्भवतीति न समन्वयसिद्ध्यर्थं वाच्यत्वं समर्थनीयमि'ति चेन्न, संशब्दस्यार्थान्तरं व्याख्यायापि जघन्यवृत्त्या लक्षणया समन्वयाश्रयणनिर्बन्धे कारणाभावात्॥ नन्वस्ति कारणम्। तत्तु समन्वयादिति निर्गुणे हि ब्रह्मणि समन्वयः सूत्रकृता प्रतिज्ञातः। न च तत्र शब्दानां वचनवृत्तिः सम्भवति। तस्या द्रव्यादिसम्बन्धनिबन्धनत्वात्। निर्गुणे च तदभावात्। अतो ज्ञायते लक्षणाऽऽश्रिता सूत्रकृतेति। एवं च सति संशब्दस्याप्युक्त एवार्थो निश्चीयत इति।

स्यादप्येवं यदि निर्गुणे समन्वयः प्रतिज्ञातः स्यात्। न चैवम्। तथा हि किमत्र निर्गुणस्य प्रकृतत्वात्तदिति तत्परामर्शोऽङ्गीक्रियते, उत सगुणस्य प्रकृतत्वेऽपि तत्परामर्शासम्भवेन जहदजहल्लक्षणया निर्गुणपरामर्शोऽभ्युपेयते॥ आद्यं दूषयति **जन्मादीति**।

**अनु०— जन्मादिकारणे साक्षादाह देवः समन्वयम्।**
**उक्तं तदेव जिज्ञास्यं क्वावकाशोऽत्र निर्गुणे॥**





**अत्र** 'तत्तु समन्वयादि'ति सूत्रे । **निर्गुणे** समन्वयस्य **अवकाशः** प्रसङ्गः **क्व** अस्ति नास्तीत्यर्थः । कुतः । यतः **अत्र** त्रिसूत्र्यामतीतायाम् । **निर्गुणे** विषयसप्तमीयम् । निर्गुणस्य **अवकाशः** (प्रसङ्गः) **क्व** अस्ति । न क्वापीत्यर्थः । कथम् । लक्षणसूत्रे जन्मादिकारणत्वेन लक्षिते हि ब्रह्मणि शास्त्रं प्रमाणमभिधाय तस्य समन्वयमाह सूत्रकारः । न च तन्निर्गुणं, जन्मादिकारणत्वगुणयोगात् । 'ननु जन्मादिकारणत्वं तटस्थमेव सत् ब्रह्म लक्षयतीति ब्रूमः, अतो लक्षणसूत्रे प्रकृतं निर्गुणमेवे'त्यत उक्तं **साक्षाज्जन्मादिकारण इति** । उपपादितं चैतत् तत्रैव ।

'मा भूल्लक्षणसूत्रे निर्गुणस्य प्रकृतत्वम् । प्रथमसूत्रे जिज्ञास्यतयोक्तं निर्गुणमेव । न हि तस्य कश्चिद्धर्मः श्रूयते ।' इति न वाच्यम् । यतस्तदेव, जन्मादिसूत्रे जन्मादिकारणत्वेन लिलक्षयिषितमेव, जिज्ञास्यमुक्तम् । न ह्यन्यज्जिज्ञास्यतया प्रतिज्ञायान्यस्य लक्षणमुच्यते, अनुपयोगादिति ॥

**परि०**— उक्तमवाच्ये लक्षणाऽसम्भवमनालोच्य शङ्कते **सत्यं समीचीनोऽन्वय इति** । अत्रेत्यनूद्यार्थमाह **अत्र तत्तु समन्वयादिति सूत्र इति** । क्वावकाशोऽत्रेत्येतदेव वाक्यं प्रकारान्तरेण योजयति **यतोऽत्रेति** । **तदेव** इत्यनुवादः **जन्मादि** इत्यादि व्याख्या ।

**यादु०**— उक्तमवाच्ये लक्षणाऽसम्भवमनालोच्य शङ्कते **सत्यमित्यादिना** ।

**आनन्दः**— **इदं चेति** । लक्षणापक्षे समन्वयाङ्गीकरणमित्यर्थः । अर्थान्तरतात्पर्यवत्तारूपम् । अत्रेत्यस्यावृत्तिं आद्ये समन्वयेत्यस्याध्याहारं निर्गुण इत्यस्य विषयसप्तमीत्वं चाभिप्रेत्य द्वेधा व्याख्याति **अत्रेत्यादि** ।

**वा०चं०**— प्रस्तुतत्वादभिप्रेत इत्येव वक्तव्ये प्रतिज्ञात इत्युक्तिरवाच्यत्वशङ्काप्रसञ्जकसूचनाय । समन्वयशब्दरूपविशेषोक्त्यनुपपत्त्युक्त्याऽन्वयसामान्यमभ्यनुज्ञातम् । तच्च वस्तुगतिमनुरुद्ध्येति भ्रान्तिं निवारयति **इदं चेति** । ननु निर्गुणे समन्वयस्याप्रतिज्ञातत्वादिना निरसनं कथञ्चित्समन्वयसूत्रे कर्तव्यमपि कथमसङ्गतमत्रोत्तरवाक्येन क्रियत इत्यत संशब्दस्यार्थान्तरं प्रकल्प्य लक्षणापक्षेऽपि समन्वयशब्दोपपत्त्या वाच्यत्वस्यासमर्थनीयत्वे परेण शङ्किते कारणाभावेन संशब्दार्थान्तरकल्पनया लक्षणाश्रयणाऽऽयोगेऽस्माभिरुक्ते तत्कारणत्वेन निर्गुणे समन्वयप्रतिज्ञाने परेण शङ्किते तन्निरासान्न प्रकृतासङ्गतिरित्याशयेनोत्तरवाक्यमवतारयति **सत्यमिति** । अत्र तत्तु समन्वयादिति निर्गुणे समन्वयप्रतिज्ञोपपादनाय प्रकृतत्वान्निर्गुणस्य तदिति परामर्शविषयत्वं वदन्तं प्रति हि जन्मादिकारण इत्युत्तरवाक्ये निर्गुणस्याप्रकृतत्वे व्युत्पादिते न हि तेनैव सगुणस्य प्रकृतत्वेऽपि तत्परित्यागेन





निर्गुणस्य तदिति परामर्शविषयत्वमिति वक्तुं शक्यते येन बाधकाभावेन प्रकृतसगुणपरित्यागानौचित्यप्रतिपादकमुत्तरवाक्यं तं प्रत्येव सङ्गच्छेतेत्याशयेन निर्गुणे समन्वयप्रतिज्ञानरूपसामान्योक्तेरुभयथाऽपि सम्भवाद्विकल्प्य तत्तत्कल्पनिरासपरत्वेन पूर्वोत्तरवाक्ये योजयति **तथा हीत्यादिना** । तदिति निर्गुणस्य परामर्शाभावस्य तत्प्रयोजकस्य पूर्वत्र तदप्रकृतत्वस्य च मूलारूढतायै मूलस्थप्रतिज्ञाभागमावृत्त्या द्वेधा योजयति **अत्रेत्यादिना** । **प्रसङ्गः** प्रतिज्ञातता । तदिति निर्गुणपरामर्शाभावेन तत्समन्वयस्य प्रतिज्ञातता नेत्यर्थः । एतदन्तभविन त्रिसूत्रीत्वभ्रान्तिनिरासायातीतायामिति । **प्रसङ्गः** प्रसक्तिः । उपस्थितिरिति यावत् । सूत्रत्रये नैकत्रापीत्यभिव्याप्तौ क्वापीत्यपिः । सूत्रेऽप्रकृतत्वं मूलारूढं कर्तुं जन्मादिकारण इत्यस्य सूत्रव्यापारप्रदर्शकत्वं दर्शयति **लक्षणसूत्र इति** । क्वापीत्युक्तिलब्धं तृतीयसूत्रव्यापारं दर्शयति **शास्त्रमिति** । **तस्येति** । शास्त्रस्येत्यर्थः । जन्मादिकारण इत्येतदर्थपरमपीत्यभिप्रेत्य तन्निर्गुणत्वाभावहेतुसमर्पकतयाऽपि योजयति **जन्मादीति** । साक्षादित्यस्यान्येनान्वये प्रकृतानुपयोगादभिमतान्वयं प्रदर्शयितुं तद्व्यावर्त्यमाह **नन्विति** । उक्तं तदेव जिज्ञास्यमिति विशिष्योक्तिप्रयोजकतया शङ्कायां बीजविशेषं दर्शयति **न हीति** । एतच्छङ्कानिवर्तकहेतोर्मूलसूचितत्वलाभाय तदेवेति परामर्शविषयं दर्शयति **जन्मादीति** ।

**वा०र०— शङ्काप्रसञ्जकेति** । तथा प्रतिज्ञाभावेऽवाच्यत्वशङ्का नोदेति तत्सत्त्व एव च सोदेतीति वाच्यत्वसमर्थनोपयोग्यवाच्यत्वशङ्काप्रसञ्जकतया वाच्यवाचकभावः प्रतिज्ञात इत्युक्तिरित्यर्थः । **अन्वयसामान्यमिति** । अन्वयसामान्योपपत्तिरभ्युपगतेत्यर्थः । अन्यथा सम्पदानर्थक्यापत्तेरिति भावः । **कथमिति** । अत्राधिकरणे । असङ्गतमुत्तरवाक्येन कथं क्रियत इत्यर्थः । अनेनोक्तनिरसनार्थकमुत्तरानुव्याख्यानमत्रासङ्गतमिति शङ्का दर्शिता भवति । तन्निरासान्न प्रकृतासङ्गतिरिति पाठः । प्रकृते ईक्षत्यधिकरणे सङ्गत्यभावो नेत्यर्थः । **अत्रेति** । अत्र भाष्यग्रन्थे तत्तु समन्वयादित्यत्र निर्गुणे समन्वयः प्रतिज्ञायत इत्येतदुपपादनाय जन्मादिसूत्रेषु निर्गुणस्य प्रकृतत्वात्तदिति परामर्शविषयत्वोपपत्तिरिति वदन्तं प्रतीत्यर्थः । व्युत्पाद्यतां किं तावतेत्यतस्तद्व्युत्पादनस्य सङ्गतत्वेऽपि कथं चासम्भवस्तस्येति तदुत्तरवाक्ये क्रियमाणं प्रकृतपरित्यागानौचित्यप्रतिपादनमसङ्गतमित्याह **न हि तेनैवेति** । भवेत्कथं चेत्युत्तरवाक्यसङ्गतिः । यदि निर्गुणस्य प्रकृतत्वात्तदिति परामर्शविषयत्वमिति वदता पूर्वपक्षिणैव सगुणप्रकृतत्वादिकं वक्तुं शक्यं स्यात् । न चैवम् । विरोधेन तथा च नानुपपत्तेः । तथा च उत्तरवाक्यस्य पूर्वशङ्कितारं प्रत्यवतारायोग इत्यर्थः । उत्तरवाक्यमित्यत्र तदिति पूरणीयम् । तदुत्तरं जन्मादीत्येतदपेक्षयोत्तरं कथं चासम्भवस्तस्येति वाक्यमित्यर्थः । अनेन द्वितीयं दूषयतीत्यन्तग्रन्थे विकल्पेन प्रवृत्तिनिमित्तभूतोत्तरग्रन्थासङ्गतिशङ्का दर्शिता । **इत्याशयेनेति** । इत्याशङ्कां मनसि निधायेत्यर्थः । तच्छङ्कानिरासार्थमिति शेषः । **विकल्प्येति** । विकल्पनेन पक्षान्तरप्रसक्तिमुपपाद्येत्यर्थः । **तदितीति** । तदित्यनेनेत्यर्थः । एवमुत्तरोत्तरवाक्येऽपि निर्गुणस्य यः परामर्शस्तदभावस्येति योज्यम् । मूलारूढताया इत्युत्तरेण सम्बन्धः । **प्रतिज्ञाभागम्** । क्वावकाशोऽस्ति निर्गुण इति प्रतिज्ञाभागम् । नास्तीत्यत्र हेतुतया द्वितीययोजनागतनिर्गुणस्य प्रागप्रकृतत्वोक्तिलब्धे तदित्यनेन निर्गुणपरामर्शाभावसामान्यं हेतुतयोक्तं **तदितीति** । **एतदिति** । ईक्षतिसूत्रान्त-





भविनेत्यर्थः । एतद्योजनानुकूलतया प्रसङ्गपदं प्रकारान्तरेण व्याचष्टे **प्रसङ्गः प्रसक्तिरिति** । अभिव्याप्तिप्रकारं दर्शयन्नेव तदर्थकतयापि पदसार्थक्यं दर्शयति **सूत्रत्रय इति** । **इत्येतदिति** । द्वितीयान्तमेतत् । **अर्थपरमपीति** । जन्मादिकारणभूत इत्येवं जन्मादिकारणरूपार्थपरमपीत्यर्थः । न केवलं जन्मादिकारणत्वेन लक्षित इत्येवं सूत्रव्यापारप्रदर्शनपरमित्यर्थः । तदिति जन्मादिसूत्रे लक्षितस्य यो निर्गुणत्वाभावस्तत्र हेत्विति योज्यम् । यद्वेत्येतदिति प्रथमान्तमेव । तदिति द्वितीयान्तम् । निर्गुणत्वेत्येतत्तु प्रकृतस्य यन्निर्गुणत्वमिति योज्यम् । तत्पदावृत्तिरित्यप्याहुः । **शङ्कायामिति** । प्रथमसूत्रे जिज्ञास्यतयोक्तं निर्गुणमेवेत्येतच्छङ्कायामित्यर्थः ।

**विठ्ठल०— तस्याः द्रव्यादीति** । ब्रह्मणि वचनवृत्तेः प्रवृत्तिनिमित्तसापेक्षत्वेन प्रवृत्तिनिमित्तस्य च दण्डी श्यामः पाचक इत्यादाविव द्रव्यगुणकर्मादियोगनिमित्तकत्वादिति भावः । उक्तोऽर्थो लक्ष्यार्थत्वम् । **यतस्तदेवे**त्यत्र तदेवेति मूलपदानुवादः जन्मादीति व्याख्यानम् । जन्मादिसूत्रे लक्षणवत्तया प्रतिपादयिषितस्यैवाद्यसूत्रे जिज्ञास्यतयोक्तिरित्येतत्कुत इत्यत आह **न ह्यन्यदिति** ।

**॥ अथ 'निर्गुणे शास्त्रसमन्वयानुपपत्ति' दर्शने**
**'सगुणस्य प्रकृतत्वेऽपि तत्परामर्शस्यासम्भवो नोपपद्यते' ॥**

**११३ सु०— द्वितीयं दूषयति कथं चेति ।**

## अनु०— कथं चासम्भवस्तस्य मुख्यार्थस्य निराकृतौ ।

**तस्य अनुक्रान्तायां त्रिसूत्र्यां प्रकृतस्य, मुख्यार्थस्य वाच्यस्य, समन्वयविषयतया, त्यागे, असम्भवः, कथम्, न कथञ्चिदित्यर्थः ।**

**अतो निर्गुणसमन्वयस्याप्रतिज्ञातत्वान्न लक्षणाऽऽश्रयणमत्र युक्तम् । किन्तु प्रथमप्राप्तया मुख्यवृत्त्यैवेति । तदर्थ एव संशब्दोऽपीति ।**

**परि०— द्वितीयमिति** । सगुणस्य प्रकृतत्वेऽपि इत्यादिनोक्तपक्षमित्यर्थः ।

**वं०प०—** निराकृतावित्यस्य व्याख्यानं **समन्वयविषयतया त्याग इति** ।

**श्रीनिधि०— लक्षणाश्रयणमत्र युक्तमिति** । अत्र वाच्यत्वाभावेन समन्वयमात्रे उपलक्षणाश्रयत्वेन वाच्यत्वाक्षेपं नियोपेक्षे(?)त्युक्तमित्यर्थः । **किन्तु प्रथमप्राप्तेत्यादि** । मुख्यवृत्त्यैव समन्वयसमर्थनं कर्तव्यमिति शेषः ।

**वा०चं०**— प्रकृतस्यापि सगुणस्य परित्याग इति द्वितीयपक्षस्य मूलारूढतायै तस्येत्यादिकं तदनुगुणतया व्याख्याति **तस्येत्यादिना**।

**वा०र०**— **द्वितीयपक्षस्य मूलारूढताया इति**। कथमित्यंशव्यतिरिक्तेनासम्भव इत्यादि पादेन मूले पराभिमतपक्षानुवादं कृत्वा कथं चेत्यनेन तद्दूषणं क्रियत इति हि स्थितिः। ततश्चासम्भव इत्यादि मूलारूढता चैतस्येत्यादिकमित्यर्थः। अत एवासम्भवपदस्यान्ते सम्बन्धमाश्रित्य तस्येत्यादिकमित्येवोक्तमिति ज्ञेयम्।

**चषकः**— **त्रिसूत्र्यामिति**। द्विगोरिति ङीप्।

**॥ इति 'निर्गुणे शास्त्रसमन्वयानुपपत्ति' दर्शने**
**'सगुणस्य प्रकृतत्वेऽपि तत्परामर्शस्यासम्भवो नोपपद्यते' ॥**

* * *

**॥ अथ 'निर्गुणे शास्त्रसमन्वयानुपपत्ति' दर्शने**
**'निर्गुणस्य परामर्शे क्रियमाणे लक्षणाया अप्यसम्भवः' ॥**
**॥ तत्रादौ निर्गुणस्य अप्रमेयत्वम् ॥**

**११४ सु०— किञ्च 'निर्गुणं चेदत्र तच्छब्देन परामृश्यते, तदा तत्र लक्षणाऽपि न सम्भवतीति व्यर्थं समन्वयसूत्रमापन्नमि'ति वक्तुं निर्गुणस्याप्रमेयत्वं तावत्साधयति मानेनेति।**

## अनु०— मानेन केन विज्ञेयमवाच्याज्ञेयनिर्गुणम् ॥

**निर्गुणं** वस्तु, **केन मानेन विज्ञेयम्** न केनापि। कुतः, अज्ञेयत्वात्। ज्ञेयमेव हि प्रमेयं दृष्टं घटादि ॥ शब्दप्रमाणाविषयत्वेऽवाच्यत्वं हेतुः, वाच्यस्यैव तद्विषयत्वदर्शनात्। ज्ञेयत्वाद्य(सत्त्वा)ङ्गीकारे च निर्गुणत्वव्याघातात्।

**वं०प०**— **अज्ञेयत्वादिति**। ज्ञेयत्वं सामान्यं प्रमाणज्ञेयत्वं विशेषः। सामान्याभावेन च विशेषाभावः साध्यत इत्यदोषः। **ज्ञेयमेव हीति**। अज्ञेयत्वान्न प्रमाणगम्यमित्यत्र व्यतिरेकव्याप्तौ वह्निमत्त्वादेव धूमवत्त्वमितिवद्व्याप्यव्यापकभावो द्रष्टव्यः। हेत्वन्तरमाह **शब्देति**।





**आनन्दः**— ननूत्तरकारिकायां ब्रह्मणोऽमेयत्वकथनमयुक्तं, निर्गुणस्याप्रकृतत्वापादनस्यैव सङ्गतत्वेन तस्यासङ्गतत्वादित्यत आह **किञ्चेति** । केनेत्यस्य प्रश्नार्थत्ववारणायाह **केन मानेनेति** । अवाच्याज्ञेयत्वे हेतुत्वेन व्याख्याति **कुत इत्यादि** । **तद्विषयत्वेति** । शुद्धविषयत्वेत्यर्थः ।

**वा०चं०**— तच्छब्देन निर्गुणपरामर्शे सम्भावितपक्षद्वयस्य निरस्ततया वक्तव्यान्तराभावादुत्तरवाक्य-वैयर्थ्यमित्यतो वक्ष्यमाणदूषणान्तरसाधकहेतुसमर्थनपरतया न वैयर्थमित्याशयेन तद्योजति **किञ्चेति** । यद्यप्यमेयं चेदित्युत्तरवाक्येऽमेयत्वमेव हेतुत्वेनोच्यते तथाऽप्यज्ञेयत्वेनात्र तत्साधनादमेयत्वस्याज्ञेयत्वमात्रत्वे तेन तत्साधनानुपपत्तेर्मनिनेत्यत्रोक्तत्वाच्चाप्रमेयत्वमेव तत्राभिमतमित्याशयेनाप्रमेयत्वमित्युक्तम् । यद्यप्यवाच्या-ज्ञेयनिर्गुणवस्तुनि प्रमाणाभावप्रतिपादनपरत्वमस्य वाक्यस्य भाति । तथाऽपि निर्गुणस्येवावाच्याज्ञेययोरव्यव-धानेनाप्रकृतत्वादव्यवहितनिरासपरत्वस्यैव श्लिष्टत्वादुत्तरवाक्ये चामेयत्वस्यैवापादकत्वे नोपादानाद्विज्ञेयवाच्य-लक्ष्यत्वपूर्वेत्युत्तरवाक्ये निर्गुणासत्त्वस्य प्रमाणाभावेनोपपादयिष्यमाणत्वाच्चेदमप्रमेयसाधकपरतया व्याख्यातम् । यद्यपि चावाच्यादिहेतुप्राये निर्गुणं पठितम् । तथाऽपि बुद्ध्या विवेकेन साध्यधर्मिसमर्पकम् । तद्धेतुप्रायपाठस्तु निर्विशेषत्वरूपनिर्गुणत्वस्य हेतुभूताज्ञेयत्वाद्युपपादकत्वस्यापि भावात्; इत्याशयेनाह **निर्गुणमिति** । ज्ञेयत्वस्य सामान्यतया प्रमेयत्वरूपविशेषव्यापकत्वाद्युक्तं व्यापकनिवृत्त्या व्याप्यनिवृत्तिसाधनमित्याशयेनाह **ज्ञेयमेव हीति** । शब्दप्रमाणविषयत्वस्यैव पराभिमततया विशेषहेतुना तदभावसाधनमित्याशयेनावाच्यत्वं तत्र हेतुत्वेन योजयति **शब्देति** । **वाच्यस्यैवेति** । अवाच्ये लक्षणाया असम्भवस्योपपादितत्वादिति भावः । निर्गुणस्य हेतुप्राय-पाठसूचितमर्थं **ज्ञेयत्वादीति** ।

**वा०र०**— **दूषणान्तरेति** । निर्गुणस्यामेयत्वे तत्र लक्षणाया अप्ययोग इत्यादिरूपं पदमेवं चेत्यादिना वक्ष्यमाणं दूषणं तत्साधको यो प्रमेयत्वहेतुस्तत्समर्थनेत्यर्थः । **उच्यत इति** । तथा च प्रमेयत्वमिति व्यवहारो न युक्त इति भावः । **तत्साधनात्** । अमेयत्वसाधनस्याभिप्रेतत्वादित्यर्थः । **अमेयत्वस्येति** । उत्तरवाक्योक्ता-मेयत्वस्य साध्यभूतस्य हेतूकृता ज्ञेयत्वमात्रत्वे हेतुसाध्ययोरभेदापत्त्या तेन तत्साधनानुपपत्तेरित्यर्थः । **मानेने-त्यत्रेति** । अत्र मानेनेति हेतुसमर्थनपरवाक्ये मानेनेत्यधिकस्योक्तत्वाच्चेत्यर्थः । **तत्रेति** । अमेयं चेत्युत्तरवाक्य इत्यर्थः । अवाच्याज्ञेयनिर्गुणमित्येतद्भाष्ये समस्तपदप्रयोगे सति निर्गुणं वस्त्वित्यादिविवेकेनाकाङ्क्षाक्रमेण योजने निमित्ताभावः । निर्गुणत्वांश इवावाच्यत्वाज्ञेयत्वयोरपि अवाच्यं वस्तु केन मानेनाज्ञेयं वस्तु केन मानेनेत्यादि योजनासम्भवात् । तथा निर्गुणं केन मानेनेत्यनेन निर्गुणे प्रमाणाभाव इत्यस्य प्रतीत्या निर्गुणं केन मानेन ज्ञातव्यं न केनापि ततश्चाप्रमेयमित्येवमप्रमेयत्वप्रतिपादनपरत्वेनापि योजनस्याकर्तव्यत्वमित्याशङ्कते **यद्यप्य-वाच्येत्यादि** । अत्रैवं योजना । ज्ञेयं निर्गुणं केन प्रमाणेनेत्यनेन निर्गुणस्येवावाच्याज्ञेययोरपि निरासप्रतीते-





स्त्रितयनिरासपरत्वमस्य वाक्यस्य भाति । तथा निर्गुणमात्रनिराकरणपरत्वेन योजनायामपि निर्गुणे प्रमाणाभावप्रतिपादनमात्रपरत्वमस्य भाति । न तु निर्गुणं प्रमेयं न भवतीत्यर्थपरत्वमपीति । उक्तशङ्काद्वयपरत्वादेव तथापीत्युत्तरवाक्ये प्रत्येकं उक्तशङ्कयोर्निरासः क्रियत इति ज्ञेयम् । **तथापीति** । आद्ययोजनानुसारि शङ्काया निराकरणमवाच्येत्यादिकं श्लिष्टत्वादित्यन्तम् । अप्रकृतत्वात् निर्गुणत्वस्य च तथा प्रकृतत्वादित्यपि बोध्यम् । श्लिष्टत्वादित्युपलक्षणम् । वाच्यत्वाज्ञेयत्वयोः पराङ्गीकारं मूलीकृत्य तदवष्टम्भेनैव निर्गुणत्वनिराकरणस्येह कर्तव्यतया प्राप्तत्वेनावाच्यत्वादिनिरासस्य प्रकृतनिर्गुणत्वनिरासविरोधित्वाच्चेत्यपि ज्ञेयम् । उक्तद्वितीययोजनानुसारिशङ्काया निराकरणं **उत्तरवाक्ये चेति** । **उपादानादिति** । ततश्च तस्यैवेतद्वाक्ये समर्थनमुचितम् । न तु प्रमाणाभावस्येति न प्रमाणाभावप्रतिपादनपरत्वमस्याङ्गीकर्तुं शक्यमिति भावः । न केवलं प्रमाणाभावप्रतिपादनपरत्वमुत्तरवाक्येऽप्रमेयत्वस्यापादकत्वेन उपादानयुक्त्यैवानुपपन्नमपि तु प्रमाणाभावप्रतिपादनफलतया निर्गुणासत्त्वस्यैवेह प्रतिपाद्यत्वाङ्गीकारे किञ्चिद्व्यवहितोत्तरवाक्ये विज्ञेयेत्यादिरूपे निर्गुणासत्त्वफलकप्रमाणाभावप्रतिपादनादत्रापि तत्परत्वाङ्गीकारे पौनरुक्त्यापत्त्याऽस्य वाक्यस्य निर्गुणे प्रमाणाभावपरत्वेन योजना न कार्येत्याह **विज्ञेयवाच्येत्यादि** । इदमित्यनन्तरं 'निर्गुणे प्रमाणाभावपरत्वेनेदं न व्याख्यातम् । किन्तु' इत्युपस्कर्तव्यम् । अवाच्यादीत्यादिपदेनाज्ञेयपरिग्रहः । **पठितमिति** । तथा च निर्गुणमित्यस्य साध्यधर्मिसमर्पकत्वाङ्गीकारे प्रायपाठविरोध इति भावः । **उपपादकत्वस्यापीति** । ज्ञेयत्वाद्यङ्गीकार इत्युत्तरमूलोक्तरीत्योपपादकत्वं ज्ञेयम् । तथा च प्रायपाठोऽन्यथासिद्ध इत्युक्तं भवति । **ज्ञेयत्वस्य सामान्यतयेति** । यद्यपि प्रमेयत्वस्यापि केवलान्वयित्वेन ज्ञेयत्वसमानाश्रयतया सामान्यत्वमेवेत्याभाति । तथापि सत्यासत्यविषययोः प्रमाभ्रमविषयत्वाभ्यां सत्यत्वासत्यत्वव्यवस्थाया सर्वसम्मतत्वात् धर्म्यंशे प्रमात्वस्य विपर्ययेऽपि सत्त्वेऽपि प्रकारांशे तदभाव इत्युक्तिबलेनैव सर्वांशे प्रमारूपज्ञाने प्रमात्वस्य मुख्यत्वप्राप्त्या चासाधारण्येन व्यपदेशमाश्रित्य विशेषतया प्रमेयत्वाङ्गीकारो युक्त इति ज्ञेयम् । **विशेषहेतुनेति** । विशेषहेतुनापीत्यर्थः । अपिपदसहितपाठस्तु स्वरस एव । अज्ञेयत्वस्यापि हेतुत्वाभिप्रायेणैव मूले चशब्दप्रयोगात् ।

**विठ्ठल०— ज्ञेयमेव हीति** । ज्ञानसामान्यविषयमेव प्रमारूपज्ञानविशेषविषयं दृष्टमित्यर्थः । आगमागम्यत्वोपपादनाय अवाच्यत्वोक्तिरित्याह **शब्द इति** । उपलक्षणमेतत् । रूपादेर्लिङ्गसम्बन्धस्य च निर्गुणेऽसम्भवात् प्रत्यक्षानुमानागम्यत्वमिति च ग्राह्यम् । अज्ञेयत्वं तु मानमात्रागम्यत्वे सामान्यहेतुरिति ध्येयम् । अज्ञेयत्वहेत्वसिद्धिं परिहरति **अज्ञेयत्वेति** ।

**॥ इति निर्गुणस्य अप्रमेयत्वम् ॥**

* * *





**॥ ततश्च अप्रमेये च लक्षणाया असम्भवः ॥**

११५ **सु०—** अस्त्वप्रमेयमेव निर्गुणं ब्रह्म; ततः किमित्यत आह **अमेयं चेदिति**।

**अनु०— अमेयं चेन्न शास्त्रस्य तत्र वृत्तिः कथञ्चन।**

निर्गुणं ब्रह्म **अमेयं चेत्** अङ्गीकृतम्, तर्ह्यमेयत्त्वात्, तत्र शास्त्रस्य कथंचन लक्षणयाऽपि वृत्तिः न सम्भवति, इति समन्वयसूत्रं व्यर्थमेव प्राप्तम् ।

लक्षणा हि लक्ष्यार्थप्रमितिपूर्विका दृष्टा । न हि तीरं स्वरूपतो गङ्गासम्बन्धित्वेन च प्रमाणतोऽप्रतिपन्नं गङ्गाशब्देन ज्ञाप्यते । लाक्षणिकोऽपि हि शब्दो लक्ष्यप्रमोत्पादाय प्रयुज्यते, अन्यथा प्रयोजनान्तराभावेन वैयर्थ्यप्रसङ्गात् । तथा चाप्रमेये हेतुफलयो-रसम्भवात् कथं लक्षणासम्भवः ।

ननु प्रसिद्धिरेव लक्षणाहेतुर्न प्रमाणप्रसिद्धिः, विशेषणवैयर्थ्यात् । तथा च स्वतःसिद्धे कथं लक्षणा न सम्भवतीति ॥ एवं तर्हि सुतरां लक्षणा नोपपद्यत इति वक्ष्यति।

ननु लाक्षणिकाः शब्दा लक्ष्यप्रमामनुत्पादयन्तोऽपि विपरीताकारव्यावर्तनेन(एव) प्रयोजनवन्तो भविष्यन्तीति । न । निराकृतत्वादिति ।

**परि०— हेतुफलयोरिति**। लक्ष्यवस्तुनः स्वरूपेण मुख्यार्थसम्बन्धित्वेन चोपस्थितिरूपहेतोः लक्ष्यार्थप्रमितिरूपफलस्य चासम्भवादित्यर्थः । **वक्ष्यतीति** । 'यदि तत्स्यादगोचरम्' इत्यादिग्रन्थेनेति भावः । अवेद्यत्वेऽपि लक्षणाफलमाशङ्कते **ननु लाक्षणिका इति** । शङ्कां निराह **नेति** । तत्र हेतुमाह **निराकृतत्वादिति**। सत्यज्ञानादिकेऽप्येवं न व्यावृत्त्या प्रयोजनमित्यादिना जन्मादिसूत्र इति भावः।

**गु०दी०— प्रमाणतोऽप्रतिपन्न** इत्यत्र अप्रतिपन्नश्शिष्यादिः ज्ञाप्यते गुर्वादिनेति शेषः।

**यादु०— एवं तर्हि सुतरामिति** । स्वतःसिद्धिर्नाम प्रमाणान्तरव्यावृत्तिरेव परस्याभिप्रेता । तस्यां च सत्यां सुतरां लक्षणा नोपपद्यते । लक्ष्यज्ञानरूपप्रागुक्तकारणाभावात् । लक्षणया शब्दबोध्यत्वाङ्गीकारे च शब्दलक्षणप्रमाणावेद्यत्वापातेन फलासम्भवाच्चेत्यभिप्रायः । **वक्ष्यतीति** । यदि तत्स्यादगोचरमित्यत्रेति शेषः ।





अवेद्यत्वेऽपि लक्षणफलमाशङ्कते **ननु लाक्षणिका इति** । **निराकृतत्वादिति** । सत्यज्ञानादिकेऽप्येवं न व्यावृत्त्या प्रयोजनमित्यत्रेति शेषः ।

**वं०प०— स्वरूपात्** इतरपदार्थानन्वितत्वेन । अप्रमेये लक्षणायां लक्ष्यार्थप्रमितिरूपहेत्वभावमुपपाद्य फलाभावमुपपादयति **लाक्षणिको हीति** । **लक्ष्यप्रमोत्पादायेति** । लक्ष्ये तीरादौ घोषादितीरपदार्थान्वितत्व-प्रमोत्पादायेत्यर्थः । तेन लक्ष्यार्थप्रमितेरेकस्या एव कारणत्वं फलत्वं च विरुद्धमिति कथमेतदिति चोद्यानवकाशः । **लक्षणेति** । सत्यादिपदानां लक्षणायाः सम्भवादित्यर्थः । **भविष्यन्तीति** । तथा च नात्र प्रकृते फलासम्भव इत्याशयः ।

**आनन्दः—** सूत्रवैयर्थ्यं प्रतिज्ञाय शास्त्रवैयर्थ्यकथनमयुक्तमित्यत आह **निर्गुणमिति** । अमेयत्वेऽपि लक्षणा कुतो नेत्यत्राह **लक्षणा हीति** । **हेतुफलयोरिति** । लक्ष्यार्थप्रमितिलक्ष्यप्रमारूपहेतुफलयोरित्यर्थः ।

**श्रीनिधि०— हेतुफलयोरिति** । हेतुलक्ष्यार्थप्रमितिः । हेतुसम्भवं शङ्कते **नन्विति** । **नोपपद्यत इति वक्ष्यतीति** । न अस्मत् शास्त्रगन्तु तत्र लाक्षणिका इति (?) । **निराकृतत्वादितीति** । न व्यावृत्त्या प्रयोजनं व्यावृत्तस्य विशेषत्व इत्यत्रेति भावः ।

**वा०चं०—** कथञ्चनेत्यस्य शक्त्या लक्षणया वेति व्याख्यानस्य शक्तेः परानभिमतिपराहततया अश्लिष्टत्वात्कथमपि त्वदभिमता या लक्षणा तयाऽऽपीति व्याख्यानं कृतम् । आपाद्यस्यानिष्टत्वाय प्रकृतोप-योगिसमन्वयसूत्रवैयर्थ्यरूपतत्फलं प्रदर्शितम् । अप्रमेयत्वस्य लक्षणाऽनुपपत्तिप्रयोजकत्वं कारणफलयो-रसम्भवेनोपपादयति **लक्षणा हीति** । परोक्तरीत्या कारणफलसम्भवस्य वक्ष्यमाणरीत्योक्तरीत्या च सुनिरस्य-त्वाभिप्रायेण मूलकारेणानिरस्तम् । तत्सम्भवं स्वयमाशङ्क्योक्तवक्ष्यमाणरीतिमेव तन्निरासकतया सूचयति **नन्वित्यादिना** । अमेयत्वमुपपाद्य लक्षणानुपपत्तिरिदानीमभिधेया । स्वप्रकाशत्वेऽपि स्वेनैव प्रकाशान्तरा-विषयत्वेन शब्दाविषयत्वस्य परेणैवोक्ततया तद्विशेषलक्षणादिविचारो दूरोत्सारित इत्याशयेन सुतरामित्युक्तम् । **वक्ष्यतीति** । 'यदि तत्स्यादगोचरम्' इति स्वप्रकाशत्वे शास्त्राविषयत्वप्रतिपादनेनेत्यर्थः । विपरीताकार-व्यावृत्तेरब्रह्मतया ब्रह्मधर्मत्वस्याप्यभावे मुमुक्षुजिज्ञास्यतया तस्याः प्रयोजनत्वासम्भवस्य 'न व्यावृत्त्या प्रयोजनम्' इत्यादिना निराकृतत्वादित्याह **नेति** ।

**वा०र०— अश्लिष्टत्वादिति** । ततश्च सम्भावितत्वान्निराकरणमित्यसदित्युक्तं भवति । **कारणफल-सम्भवस्येति** । कारणसम्भवस्य यदि तत्स्यादगोचरमिति वक्ष्यमाणरीत्या फलसम्भवस्य न व्यावृत्त्या प्रयोजन-मित्युक्तरीत्येति योज्यम् ।





**स०व्र०**— अर्णवशब्दस्य नित्यपुल्लिङ्गत्वात्कथं गुणार्णवमिति युज्यत इति शङ्कायामस्य पचाद्यचाद्यजन्तत्वात्त्रिलिङ्गत्वोपपत्तेरित्याह **अर्णव इवाचरतीत्यादिना** । 'सर्वप्रातिपदिकेभ्यः क्विबाचारे' इति वचनादर्णवशब्दादाचारार्थे क्विपि कृते तस्य सनाद्यन्ता धातव' इति धातुसंज्ञायां 'नन्दिग्रहिपचादिभ्य इत्यनेन पचादित्वेन कर्तर्यच्प्रत्यये कृते चार्णव इवाचरतीत्यर्थकोऽर्णवशब्दस्त्रिलिङ्ग इत्यर्थः । अत एव अर्णव इवाचरतीत्यर्णवशब्द इत्यन्वयो द्रष्टव्यः । अन्यथा क्विपि आचारमात्रार्थेनाचरतीत्याचारकर्तृत्वप्रदर्शनायोगादिति द्रष्टव्यम् ।

**विठ्ठल०**— अमेये लक्षणानुपपत्तिं द्वेधोपपादयति **लक्षणा हीत्यादिना** । **हेतुफलयोः इति** । लक्ष्यस्य वस्तुनः स्वरूपेण मुख्यार्थसम्बन्धित्वेन चोपस्थितिरूपहेतोर्लक्ष्यप्रमितिरूपफलस्य चासम्भवादित्यर्थः । **एवं तर्हीति** । निर्गुणस्य स्वप्रकाशत्वेन स्वतःसिद्धत्वङ्गीकारे स्वप्रकाशस्य प्रकाशान्तरावेद्यत्वेन तस्य शास्त्रजन्यप्रकाशविषयत्वाभावेन शास्त्रविषयत्वस्यैवाभावात् शास्त्रीयशब्दानां निर्गुणे लक्षणा सुतरां नोपपद्यते इति । **स्वतःसिद्ध इति** । स्वप्रकाशतया सिद्ध इत्यर्थः । **वक्ष्यतीति** । यदि तत्स्यादगोचरमित्यत्र अवेद्यतया न तत्र लक्षणोपपद्यत इति वक्ष्यतीत्यर्थः । हेयत्वादिकमित्यादिशब्देन अप्रामाणिकत्वादिग्रहणम् ।

**चषकः**— **हेतुफलयोरिति** । लक्ष्यार्थप्रमितिपूर्वकलक्षणायाः हेतुभूतायाः फलीभूताया लक्ष्यप्रमायाश्चाभावेनेत्यर्थः ।

**॥ इति अप्रमेये च लक्षणाया असम्भवः ॥**
**॥ इति 'निर्गुणे शास्त्रसमन्वयानुपपत्ति' दर्शने**
**'निर्गुणस्य परामर्शे क्रियमाणे लक्षणाया अप्यसम्भवः' ॥**

* * *

**॥ अथ मायावायुक्तिनिरासे 'निर्गुणे समन्वयं निराकृत्य व्यतिरेकमुखेनोपसंहारः' ॥**
**॥ उपसंहारे उक्तार्थे विरोधपरिहारः ॥**
**॥ अर्णवपदस्य त्रिलिङ्गत्वप्रदर्शनम् ॥**
**॥ एकमेवाद्वितीयम् इति श्रुत्यर्थविरोधस्य परिहारश्च ॥**

**११६ सु०**— निर्गुणे समन्वयं निराकृत्य व्यतिरेकमुखेनोपसंहरति **तस्मादिति** ।

**अनु०— तस्माच्छास्त्रेण जिज्ञास्यमस्मदीयं गुणार्णवम् ॥**
**वासुदेवाख्यमद्वन्द्वं परं ब्रह्माखिलोत्तमम् ।**





**यतो निर्गुणे समन्वयो नोपपन्नः, तस्मादस्मदीयं सगुणमेव परं ब्रह्म शास्त्रेण जिज्ञास्यमङ्गीकरणीयम् ।**

**ननु पूर्वं विष्णोर्जिज्ञास्यत्वमुक्तम् । इदानीं तु सगुणस्य ब्रह्मण इति विरोध इत्यत उक्तम् वासुदेवाख्यमिति ॥ तथाऽपि प्राक् सगुणस्य हेयत्वादिकमभिहितम्, इदानीं तु जिज्ञास्यत्वमिति कुतो न विरोध इत्यत उक्तम् गुणार्णवमिति । ''पूर्वमनिर्वचनीयाविद्यावच्छिन्नस्य सगुणस्याप्रामाणिकत्वम्, प्राकृतसत्त्वादिगुणबद्धस्य हेयत्वादिकं चाभिहितम् । इदानीं तु ज्ञानानन्दाद्यनन्तगुणार्णवत्वेन सगुणं परब्रह्मोपादेयमुच्यते'' इति को विरोधः ।**

**अर्णव इवाचरतीति क्विपि कृतेऽर्णवतेः पचाद्यचि कृतेऽर्णवशब्दः त्रिलिङ्गः साधुः ।**

**नन्वेकमेवाद्वितीयमिति ब्रह्मणो निर्गुणत्वमभिधीयते, अतः कथं गुणार्णवत्वमित्यत उक्तम् अद्वन्द्वमखिलोत्तममिति । अद्वन्द्वम् असमम् । समाधिकराहित्यं श्रुत्यर्थ इत्यर्थः ।**

**परि०— इति क्विपि कृत इति** । 'उपमानादाचार' इति प्रकरणे 'सर्वप्रातिपदिकेभ्यः क्विबित्येके', इति वार्तिकेनेति भावः । क्विपि कृते सनाद्यन्ता धातव इति धातुसंज्ञायां तिपि कृते अर्णवतीति रूपम् । तस्य षष्ठीनिर्देशोऽर्णवतेरिति । क्विबन्तार्णवशब्दात् 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यच' इति सूत्रेण अच्प्रत्यये पररूपे अर्णवेति रूपमिति भावः ।

**यादु०— परंब्रह्मेति** । न तु मायाशबलमित्यर्थः । नन्वर्णवशब्दस्याभियुक्तप्रयोगेषु नित्यपुल्लिङ्गतादर्शनात्कथं गुणार्णवमिति प्रयोग इत्याशङ्कायामाह **अर्णव इवेति** । सर्वप्रातिपदिकेभ्यः क्विब्वाचार इति वचनादर्णवशब्दादाचारार्थे क्विपि कृते तस्य सनाद्यन्ता धातव इति धातुसंज्ञायां 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यच' इत्यनेन पचादित्वेन कर्तर्यच्प्रत्ययो द्रष्टव्यः । अन्यथा क्विप आचारमात्रार्थत्वेनाचरतीत्याचारकर्तृत्वप्रदर्शनायोगादिति द्रष्टव्यम् । एवं च यः समुद्रपर्यायोऽर्णवशब्दः स एव नित्यपुल्लिङ्गः प्रकृतस्तु न तथेति भावः । त्रिलिङ्ग इति स्वरूपकथनार्थम् । वस्तुतस्त्वनियतलिङ्ग इत्यर्थः ।

**आनन्दः—** ननु गौणश्चेदित्यत्र सगुणस्य हेयत्वमुक्तम् । अत्र तु तस्यैव जिज्ञास्यत्वमुच्यते इति विरोध इत्यत आह **पूर्वमिति** । नन्वर्णवशब्दस्य नित्यपुल्लिङ्गत्वात्कथं नपुंसकलिङ्गं ब्रह्मशब्देन सामानाधिकरण्यमित्यत्राह **अर्णव इवेति** । अर्णव इवाचरति अर्णवति ततः क्विपि सर्वस्य लोपे नन्दिग्रहीति सूत्रेण पचाद्यचि अर्णवशब्दो न न इति त्रिलिङ्गत्वान्नपुंसकलिङ्गत्वमुपपन्नमित्यर्थः ।





**श्रीनिधि०— अर्णव इवाचरतीति**। अत्र क्विपि कर्तरि पचाद्यचि इवाचरतीत्युक्तिसु प्रत्ययद्वयार्थानुसारेणेति विवेकः। अजन्तस्य नियतलिङ्गत्वाननुशासनादिति भावः। समाधिकराहित्यम्। **श्रुत्यर्थ इति**। अद्वन्द्व अखिलोत्तममिति चाद्वितीयमित्यस्यार्थः इति भावः।

**वा०चं०—** नन्वप्रतिज्ञातोपसंहारो न युक्त इत्यत आह **निर्गुण इति**। उपसंहारस्य व्यतिरेकमुखत्वं मूलारूढं दर्शयितुमस्मदीयमित्यनूद्य सगुणमेवेत्युक्तम्। उक्तहेतोर्जिज्ञास्ये कारकत्वाभावादङ्गीकरणीयमित्युक्तम्। अस्मदभिमतपरब्रह्मत्वोक्त्यैव वासुदेवाख्यत्वगुणार्णवत्वसिद्ध्या तद्विशेषणवैयर्थ्यमित्यत उक्तविरोधपरिहारं तत्प्रयोजनतया दर्शयति **नन्वित्यादिना**। गुणार्णवमिति ज्ञानानन्दाद्यनन्तगुणवत्त्वोक्त्योभयव्यावृत्तिलाभ इत्याशयेनाह **इदानीमिति**। पुमानित्यधिकारे देवासुरात्मस्वर्गगिरिसमुद्रनखकेशीति लिङ्गानुशासनसूत्रे समुद्रनाम्नां पुल्लिङ्गत्वविधानादर्णवशब्दस्य पुल्लिङ्गत्वाद् गुणार्णवमित्यनुपपन्नमित्यतः 'सर्वप्रातिपदिकेभ्यः क्विब्वाचारे' इत्यर्णवप्रातिपदिकादाचारक्विप्यर्णवतीति कर्त्रर्थे पचाद्यचि च निष्पन्नस्यार्णवशब्दस्य यौगिकत्वेन विशेष्यनिघ्नत्वाद्ब्रह्मशब्दविशेषणतया नपुंसकोपपत्तिरित्याह **अर्णव इति**। शीतोष्णादिराहित्यस्याद्वन्द्वपदार्थत्वेऽल्पार्थत्वम्। अद्वितीयपदव्याख्यानत्वानुपपत्तिश्च। 'अतः समो द्वितीयः स्यादद्वितीयोऽसमत्वत' इत्यद्वितीयपदस्य समराहित्यार्थकतया तद्भाष्यव्याख्यानं मनसि निधायाह **अद्वन्द्वमसममिति**। उक्तशङ्कापरिहारस्य मूलारूढतायै अद्वितीयपदव्याख्यानरूपपदोपादानेन मूलसूचितमर्थमाह **समेति**। यद्यप्यसमत्वमद्वितीयशब्दार्थत्वेनोक्त्वा 'साधिकः कुत एव स्यादित्याह परमश्रुतिरि'त्यधिकराहित्यस्य कैमुत्यलब्धत्वं तद्भाष्य एवोक्तम्। तथाऽपि समनिषेधादद्वितीयपदबललब्धत्वाददद्वितीयपदार्थतयाऽधिकराहित्योक्तिरिति द्रष्टव्यम्। अनेनैवाभिप्रायेण पृथगधिकरणे एतच्छ्रुतिव्याख्यानावसरेऽद्वितीयं समाधिकरहितमिति वक्ष्यतीति ध्येयम्।

**वा०र०— उक्तविरोधेति**। विष्णुजिज्ञास्यत्वादिना विरोधेत्यर्थः। इत्यत इत्यनन्तरं तद्विशेषणद्वयं तत्तदाशङ्कानिवर्तकतयाऽवतार्य तदभिप्रायं वदन्निति शेषः। इदानीं तु ज्ञानानन्दादीति वाक्येऽविद्यावच्छिन्नसत्त्वादि गुणबद्धाभ्यां निर्गुणे व्यावृत्तिं प्रतिपादयितुं गुणार्णवत्वेन सगुणमित्याद्युक्तम्। तदुभयसमर्पकं गुणार्णवपदमेवेत्याह **गुणार्णवमितीति**। **क्विपीति**। क्विबन्तत्वेन सनाद्यन्ता धातव इति धातुत्वे चेति बोध्यम्। **पदोपादानेनेति**। असममित्यर्थकाद्वन्द्वमित्यन्तेनाद्वितीयमित्येतदनूद्याखिलोत्तममिति तद्व्याख्यानरूपपदोपादानेनानुव्याख्यानसूचितमित्यर्थः। अत एव 'ज्ञानानन्दाद्यभिन्नत्वादेकः सर्वोत्तमत्वतः। अद्वितीयो महाविष्णुः पूर्णत्वात्पुरुषः स्मृत' इति स्मृतौ सर्वोत्तमत्वमद्वितीयशब्दप्रवृत्तिनिमित्ततयोक्तमिति भावः। नन्वद्वितीयमित्यस्य समाधिकराहित्यमर्थतयोक्तम्। तत्कथमद्वितीयपदाल्लब्धम्। समे द्वितीयशब्दः स्यादिति स्मृत्यनुसारेण समराहित्यस्यार्थतया प्राप्तावप्यधिकराहित्यस्य तथात्वेनाप्राप्तेरित्यतस्तल्लाभप्रकारं वक्तुमाह **यद्यपीति**। अनेन 'साधिकः कुत एव स्यादिति' छन्दोगभाष्येऽधिकराहित्यस्य कैमुत्यलब्धतया कीर्तनात्तदत्राद्वितीयपदार्थतया तत्कथनायोग इति शङ्का च निरस्ता भवति। कैमुत्योक्तावपि तत्राद्वितीयपदबलादेव तल्लाभस्य स्वीकारे-

ऽधिकराहित्यस्य तत्पदार्थत्वमेवेति विवक्षित्वा तदर्थत्वेन तस्य कथनमत्रोपपन्नमित्यर्थः । अत्रोक्तप्रकार-मन्यत्राप्यतिदिशति **अनेनैवेति** ।

**विठ्ठल०— गुणबद्धस्य इति** । विरिञ्चादेरित्यर्थः । **अर्णव इवेति** । सर्वप्रातिपदिकेभ्यः क्विप्‌चाचारे इति वचनादर्णवशब्दादाचारार्थे क्विपो लोपे सनाद्यन्ता धातव इति धातुसंज्ञायां नन्दिग्रहि पचादिभ्यो ल्यणिन्यच इति पचादित्वेन कर्तर्यचिप्रत्यये अर्णव इवाचरतीत्यर्थको अर्णवशब्दस्त्रीलिङ्ग इत्यर्थः । एवं च समुद्रपर्यायार्णव-शब्द एव नित्यपुल्लिङ्गः प्रकृतस्तु न तथेति भावः । **श्रुत्यर्थ इति** । एकमित्यस्याखिलोत्तममित्यर्थः । अद्वितीय-मित्यस्य असमत्वमर्थ इत्यर्थः ।

**चषकः**— ननु लिङ्गानुशासने अथ पुमानित्यधिकृत्य देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुज-कण्ठखड्गशरपङ्काभिधानानीति समुद्रपर्यायाणां नित्यपुल्लिङ्गतायाः विहिततयार्णवशब्दस्य क्लीबता कथं सङ्गच्छत इत्यत आह **अर्णव इति** । 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्य' इति कात्यायनवचनादर्णवशब्दादाचारक्विबन्तात् 'सनाद्यन्ता' इति धातुत्वे पचादित्वात् 'नन्दिग्रहि' इति विहितकर्तृसाधनाच्प्रत्यये निष्पन्नोऽर्णवशब्दोऽनियतलिङ्ग इति क्लीबता सङ्गच्छत इति भावः ।

**॥ इति मायावाद्युक्तिनिरासे 'निर्गुणे समन्वयं निराकृत्य व्यतिरेकमुखेनोपसंहारः' ॥**

**॥ इति उपसंहारे उक्तार्थे विरोधपरिहारः ॥**

**॥ इति अर्णवपदस्य त्रिलिङ्गत्वप्रदर्शनम् ॥**

**॥ इति एकमेवाद्वितीयम् इति श्रुत्यर्थविरोधस्य परिहारः ॥**

**॥ इति 'निर्गुणे शास्त्रसमन्वयानुपपत्तिः' ॥**

* * *

**॥ अथ मायावाद्युक्तिनिरासे, निर्गुणे ब्रह्मणि शास्त्रसमन्वयनिराकरणे**
**'निर्गुणे ब्रह्मणि सत्त्वस्यैवानुपपत्तिः' ॥**

**११७ सु०**— न केवलं निर्गुणे शास्त्रसमन्वयो नोपपद्यते, किन्तु तस्य सत्त्वमेवानुपपन्न-मित्याह **विज्ञेयेति** ।

अनु०— विज्ञेयवाच्यलक्ष्यत्वपूर्वाशेषविशेषतः ॥
निर्गतं मनसो वाचो यदि तत्स्यादगोचरम् ।
अस्तु तन्मा वदेद्वादी न चास्मच्छास्त्रगं तु तत् ॥





द्वन्द्वात्परस्त्वप्रत्ययः प्रत्येकमभिसम्बद्ध्यते। पूर्वपदेन रूपादीनां ग्रहणम्।

'तन्निर्गुणं ब्रह्म नास्त्येवे'ति बहिरेव प्रतिज्ञा द्रष्टव्या। कुतः। मनसो वाचश्चागोचरं यतः। उपलक्षणमेतत् सर्वप्रमाणागोचरत्वाच्छशविषाणवदिति द्रष्टव्यम्।

गवां ज्ञानानां चरो वृत्तिरस्मिन्निति गोचरम्। विषय इति यावत्। तेन नपुंसकोपपत्तिः।

सर्वप्रमाणाविषयत्वं कुत इत्यत उक्तं विज्ञेयत्वपूर्वविशेषेभ्यो निर्गतमिति। विज्ञेयत्वाभावान्न कस्यापि प्रमाणस्य विषयः। वाच्यत्वलक्ष्यत्वसदृशगुणयोगित्वाभावाच्च न शाब्दत्वम्। रूपाद्यभावाच्च न प्रत्यक्षत्वम्। लिङ्गसम्बन्धाभावाच्च नानुमेयत्वमिति।

**॥ तत्र च अप्रमेयस्यापि निर्गुणस्य स्वप्रकाशतया साधनेऽपि शास्त्राविषयत्वम् ॥**

ननु प्रमाणागोचरस्यापि निर्गुणस्य स्वप्रकाशतया सिद्धिर्भविष्यतीत्यत आह **यदीति**।

एवमपि **यदि** स्वप्रकाशतया **तत्** ब्रह्म **स्यात्** तर्हि **अस्तु**। किन्तु समन्वयविषयतया न वक्तव्यम्। यतः **अस्मच्छास्त्रगं** वेदादिविषयो **न** भवति, तद्विषयत्वे स्वप्रकाशत्वहानिप्रसङ्गात्।

प्रकाशान्तरव्यावृत्तिर्हि स्वप्रकाशशब्देनाभिप्रेता मायावादिना। तदिदमेकं सन्धित्सतोऽन्यच्च्यवत इत्यायातम्, यद्ब्रह्मास्तित्वमभिलषतः शास्त्राविषयत्वमापतितम्।

वादीति परिहासः।

माशब्दोऽयं न माङ्। अतो लिङा सम्बन्धः।

**परि०**— तदित्यनुवादः निर्गुणं ब्रह्मेति व्याख्या। नास्त्येवेति शेषोक्तिः। निर्गतमिति तदित्यस्य विशेषणमिति भावः। 'गोचरा इन्द्रियार्थाश्चे'त्यमरोक्त्या गोचरशब्दस्य नित्यपुंलिङ्गत्वाद्यधिकरणबहुव्रीहिमाश्रित्य विशेष्यनिघ्नतामाह **गवामिति**। 'यदि तत्स्यात्' इति पदत्रयार्थं सोपस्करमाह **एवमपीति**। मा वदेदित्यस्यार्थो न च वक्तव्यमिति। अस्मच्छास्त्रगमित्यनुवादः। वेदेत्यादि

व्याख्या । ननु 'माङि लुङ्' इति पाणिन्युक्ते; 'मा वादीत्' इति वाच्यमित्यत आह **माशब्दोऽयमिति** । 'अमानोनाः प्रतिषेधे' इति निषेधार्थो माशब्द इत्यर्थः ।

**गु०दी०— अतो लिङा सम्बन्ध** इत्यत्र 'माङि लुङि'ति माङ्योगे लुङो विधानेन लिङाद्यविधानादिति भावः ।

**यादु०—** ननु गोचरशब्दस्य गोचरसञ्चरेति पुंसि निपातितत्वेन कथमगोचरमिति नपुंसकतेत्यत आह **गवां ज्ञानानामिति** । तथा च नायं गोचरशब्दस्तत्सूत्रनिपातितः किन्तु बहुव्रीहिरूपोऽन्य एव । तस्य विशेष्यनिघ्नत्वान्नपुंसकतोपपत्तिरिति भावः । उपलक्षणं चैतत् । चरश्चरणमस्यास्तीति मत्वर्थीयाच्प्रत्ययान्तत्वेन 'त्रयी न श्रुतिगोचरा' इति प्रयोगेण च विशेष्यलिङ्गतोपपत्तिरित्यपि द्रष्टव्यम् । ननु मा वदेदिति कथम् । 'माङि लुङ्' इति माङ्योगे माकादीदिति लुङा भाव्यमित्यत आह **माशब्द इति** ।

**वं०प०—** ननु माङि लुङिति माङ्योगे लुङो विधानात् मा वादीदिति लुङा भाव्यम् । मा वदेदिति विधिलिङ् कथमित्यत आह **माशब्दोऽयमिति** । अमानोनाः प्रतिषेध इति सूत्रोक्तः प्रतिषेधार्थकमाशब्दोऽयं न माङ् । अतो लिङुपपत्तिरित्यर्थः ।

**आनन्दः—** ननु गोचरशब्दस्य नित्यपुल्लिङ्गत्वान्नपुंसकलिङ्गनिर्देशोऽनुपपन्नमित्यत आह **गवामिति** । ननु माङि लुङिति सूत्रेण माङो योगे लिङो विधानात् कथं मा वदेदित्यत्र तद्योगे लिङ्प्रयोग इत्यत आह **माशब्द इति** ।

**श्रीनिधि०— तेन नपुंसक उपपत्तिरिति** । बहुव्रीहेर्विशेष्यनिघ्नत्वादिति भावः । **प्रकाशान्तरव्यावृत्तिर्हीति** । अवेद्यत्वे सत्यपरोक्षव्यवहारयोगत्वं स्वप्रकाशत्वमिति । तल्लक्षणत्वादिति भावः । अस्ति चेत्कथं न वक्तव्यमित्यतोऽभिप्रायमाह **किन्त्विति** । पराभ्युपेतस्वप्रकाशत्वहानिमेव शास्त्रविषयत्वप्रयोजकतयाऽऽह **तद्विषयत्व इति** । नन्वेतावताऽपि प्रतिज्ञातासत्त्वपरित्यागो दोष इत्यतो वैकल्पिकतयैव प्रतिज्ञाततया न दोष इत्याह **तदिदमिति** । 'अमानोनाः प्रतिषेधे' इति गणपठितनिषेधार्थकमाशब्दत्वेनास्य माङ्त्वाभावात्सर्वलकारापवादकलुङो न प्रसक्तिरित्याह **माशब्द इति** ।

**वा०चं०—** उपसंहारानन्तरं पुनस्तदुपपादनानुपपत्तिरित्यत उत्तरग्रन्थस्य विषयान्तरं दर्शयति **न केवलमिति** । तत्पुरुषादावेकैकपदार्थप्राधान्यात्तत्पर'त्व'प्रत्ययस्य प्रत्येकपदार्थसम्बन्धासम्भवेऽपि द्वन्द्वे सर्वपदार्थानां समप्राधान्यात्तत्पर'त्व'प्रत्ययस्य प्रत्येकसम्बन्धेन विवक्षितार्थसिद्धिरित्याशयेनाह **द्वन्द्वादिति** । अनेन, त्वप्रत्ययान्तेन द्वन्द्व इति भ्रान्तिरपि निरस्ता भवति । लक्ष्यत्ववाच्यत्वग्रहणेन शब्दरूपप्रमाणविशेषविषयत्वासम्भवसिद्धेः प्रमाणान्तराविषयत्वे हेतुसमर्पकाणां रूपस्पर्शादीनां लिङ्गसम्बन्धस्य च पूर्वपदाल्लाभ इत्याशयेनाह **पूर्वपदेनेति** ।





निर्गुणविषय एवासत्त्वरूपानुपपत्तिः प्रदर्श्यत इति प्रकृतसाम्बन्धप्रदर्शनार्थं प्रयुक्त तच्छब्दं धर्मिसमर्पकतया व्याख्याति **तन्निर्गुणमिति** । ननु नोक्ताभिप्रायो मूलात्प्रतीयत इत्यतो यदि तत्स्यादित्युत्तरवाक्यबललब्ध-प्रतिज्ञाऽध्याहारं दर्शयति **नास्त्येवेति** । योग्यतया मनस इत्यादि तद्धेतुतया योजयति **मनस इति** । करणान्तरगोचरत्वसम्भवात्करणविशेषागोचरत्वस्य नासत्त्वसाधकत्वमित्यत आह **उपलक्षणमिति** । गोचर-सञ्चरेति गोचरशब्दस्य घान्ततया निपातनाद्धान्तश्चेति लिङ्गानुशासने तस्य पुल्लिङ्गत्वविधानान्नपुंसकानुपपत्ति-रित्यतोऽधिकरणे धान्तत्वेऽपि बहुव्रीहिसमासस्य विशेष्यनिघ्नत्वान्नानुपपत्तिरित्याह **गवामिति** । विज्ञेयत्वाभावस्य प्रमाणसामान्याविषयत्वे हेतुत्वमवाच्यत्वादीनां तत्तद्विशेषाविषयत्व इति सामान्यतो विशेषतश्च सर्वप्रमाणा-विषयत्वसिद्धिरित्याशयेन विविच्य योजयति **विज्ञेयत्वाभावादिति** । प्रमाणाधीनसिद्धिकत्वात्प्रमेयस्य सर्वप्रमाणाविषयत्वेनासत्त्वे उपपादिते प्रसञ्जकाभावेन तत्प्रसक्तेरेवाभावात् 'यदि तत्स्यात् इति' शङ्का निर्दला । अत एव तदभ्युपगमेन परिहारोऽप्यतीव निर्दल इत्यतस्तत्प्रसञ्जकं दर्शयन्नुत्तरवाक्यमवतारयति **नन्विति** ।

**वा०र०— विषयान्तरमिति** । उपपादनरूपविषयातिरिक्तविषयमित्यर्थः । **त्वत्प्रत्ययान्तेनेति** । तादृश-लक्ष्यपदेनेत्यर्थः । **रूपस्पर्शादीनामिति** । गुणानामिति शेषः । प्रत्यक्षत्वप्रयोजकतया स्पर्शमहत्वपरिमाणरूप-गुणानामिव गौणीप्रयोजकसदृशगुणवत्त्वघटकगुणानामपि ग्रहणं व्याख्येयम् । तेन शब्दप्रमाणाविषयत्वे वाच्यत्व-लक्ष्यत्वाभावयोरिव सदृशगुणयोगित्वाभावस्याप्युपलक्षणया टीकायामप्यभिमतस्य सिद्धिः । अत **एवोत्तरमूले** सदृशगुणयोगित्वाभावाच्च न शाब्दत्वमिति प्रतिपादनमिति ज्ञेयम् । **निर्गुणविषय एवेति** । निर्गुणरूपो यो विषयस्तत्रैवासत्त्वरूपानुपपत्तिप्रसक्तिसत्त्वादस्य निर्गुणमात्रविषयकत्वम् । न तु विषयान्तरम् । तथा च प्राक् प्रकृतनिर्गुणविचार एवायमिति प्रदर्शनार्थं यदि तत्स्यादिति भाष्ये तदित्युक्तम् । तमेतं तच्छब्दविज्ञेयत्वादि-धर्मराहित्यप्रतिपादनानुसारेण धर्मिभूतनिर्गुणसमर्पकतया व्याख्यातीत्यर्थः । उक्ताभिप्राय .......... । **सर्वथा** न युक्तमिति सूचयति **प्रतिज्ञातेति** । परकीयप्रसञ्जकाशङ्कायां तदुत्तरतया दूषणान्तरवचने प्रागुक्तासत्त्वरूपदूषणं तर्हि युक्तमेव किमित्यत इत्यर्थः । **सर्वलकारेति** । माङ् योगे सर्वलकारापवादेन माङि लुङिति सूत्रेण लुङो विधानादित्याशयः।

**स०व्र०—** ननु गोचरशब्दस्य गोचरसञ्चरेति पुंसि निपातित्वेन कथमगोचरमिति नपुंसकतेत्यत आह **गवां ज्ञानानामिति** । तथा च नायं गोचरशब्दस्तत्सूत्रनिपातितः किन्तु बहुव्रीहिरूपोऽन्य एव । **तस्य च** विशेष्यनिघ्नत्वान्नपुंसकतोपपत्तिरिति भावः । ननु मा वदेदिति कथं, माङि लुङिति माङ्योगे मा वादीति लुङा भाव्यमित्यत आह **माशब्दोऽयं न माङिति** ।

**विठ्ठल०— तन्निर्गुणम्** इत्यत्र तत् इति अनुवादः निर्गुणम् इति व्याख्या । नास्त्येवेति दोषोक्तिः । ननु गोचरशब्दस्य गोचरसञ्चरेत्यादिना पुंसि निपातितत्वात् कथं नपुंसकतेत्यत आह **गवामिति** । तथा च नायं गोचरशब्दः पुंसि निपातितः किं तु बहुव्रीहिरूपेण यौगिकोऽन्य एव तथा च विशेष्यनिघ्नत्वान्नपुंसकत्वोपपत्तिरिति





भावः । **यदि स्वप्रकाशतया इति** । यदीत्यतःपरं स्वप्रकाशतयेति शेषः । तत् इत्यनुवादेन ब्रह्मेति व्याख्यानम् । यदीति पदानुसारेण तर्हीति गृहीतमस्त्विति मूलपदसम्बन्धः अस्तु स्वप्रकाशम् इत्यर्थः । एवं सति न सत्त्वानुपपत्तिरिति शङ्कते **किन्त्विति** । मूलगत'तु'शब्दार्थोऽयं तत्परिहारकत्वेन मा वदेत् इत्येतद्व्याख्याति **समन्वयविषयतयेति** । वेदविषयत्वाभावः कुत इत्यत आह **तद्विषयत्व इति** । **प्रकाशान्तरेति** । अवेद्यत्वं स्वप्रकाशत्वमित्युक्तेरिति भावः । **अस्तित्वमभिलषित इति** । स्वप्रकाशतयाऽस्तित्वग्रहणे अवेद्यत्वेन शास्त्रसमन्वयविषयत्वाभावः । समन्वयविषयत्वे निर्गुणसमन्वयायोगेन सगुणत्वे स्वप्रकाशत्वानुपपत्तिरिति भावः । ननु **मा वदेत्** इति कथम् । 'माङि लुङ्' इति माङ्योगे लुङ्विधानात् मा वादीः इति लुङा भवितव्यमिति । अत आह **'मा'शब्द इति** । 'अमानोनाः प्रतिषेधे' इति निषेधार्थ 'मा'शब्द इत्यर्थः ।

**चषकः**— ननु गोचरसञ्चर इति घान्ततया निपातितगोचरशब्दस्य लिङ्गानुशासने 'अथ पुमान्' इत्यधिकृत्य घान्तश्चेत्यनेन पुंसि संज्ञायां घः प्रायेणेत्यनेन च नित्यपुलिङ्गताया विहिततया न प्रकृते क्लीबनिर्देशः सङ्गच्छत इत्यत आह **गवां ज्ञानानामिति** । तथा चाधिकरणसाधनघञन्तस्य बहुव्रीहिभिन्नस्य निपातिततया अतादृशस्य बहुव्रीहिरूपप्रकृतस्य विशेष्यनिघ्नतया क्लीबतोपपद्यत इति भावः । एवं च गोचरशब्दस्य मत्वर्थीयाजन्तताश्रयणेन 'त्रयी न श्रुतिगोचरा' इति प्रयुक्त्या च विशेष्यनिघ्नतोपपादनीया । प्रपञ्चितं चैतच्चन्द्रिकाभावदीधितावीक्षतिनयेऽस्माभिः । ननु माङ् समभिव्याहारे 'माङि लुङ्' इति सर्वलकारापवादभूतलुङा भवितव्यतया कथं लङं निरदिक्षदित्यत आह **माशब्द इति** । 'अमानोनाः प्रतिषेध' इति वचनादिति भावः ।

**॥ इति अप्रमेयस्यापि निर्गुणस्य स्वप्रकाशतया साधनेऽपि शास्त्राविषयत्वम् ॥**

* * *

**॥ अथ 'निर्गुणे ब्रह्मणि सत्त्वस्यैवानुपपत्ति'दर्शने**
**'मायावाद्युक्तस्वप्रकाशत्वशास्त्रविषयत्वयोः अविरोधाभावः' ॥**

**११८ सु०— "आह, 'स्वप्रकाशस्यापि ब्रह्मणो न शास्त्राविषयत्वं विरुद्धम् । वचनजन्यस्फुरणाश्रयतया तत्कर्मतया वा वचनविषयत्वाभावेन स्वप्रकाशत्वम्, वचनजन्यवृत्तिव्याप्यतया तद्विषयत्वं चेति व्यवस्थोपपत्तेरि'ति । तदसत् । स्फुरणं हि ज्ञातता वा ज्ञानं वा । नाद्यः । स्वरूपस्यैव निराकरिष्यमाणत्वात् । द्वितीयेऽपि ज्ञानाश्रयतया विषयत्वं न क्वचिदिति कर्मत्वमेवाश्रयणीयम् । ज्ञानकर्मत्वं च ज्ञानविषयताऽतिरिक्तं नास्ति । ततश्च वचनजन्यज्ञानाविषयत्वमुक्तं स्यात् । वृत्तिरिति च ज्ञानं तदतिरिक्तं वोच्यते । न तावत्तदतिरिक्तं प्रमाणाभावात् । आद्ये तु व्याप्यत्वं न विषयत्वातिरिक्तं**





निरूपयितुं शक्यमिति वचनजन्यज्ञानविषयत्वमेवोक्तं स्यात् । तथा च व्याघातप्रसङ्गेन नैकमपि सिद्ध्यती''त्याशयवानाह **अवाच्यमिति** ।

**अनु०— अवाच्यं वाच्यमित्युक्त्वा किमित्युन्मत्तवन्मृषा ।**
**अस्मच्छास्त्रस्य चौर्याय यतते स्वोक्तिदूषकः ॥**

**अवाच्यं** वचनजन्यज्ञानाविषयः, **इत्युक्त्वा**, पुनश्च, **वाच्यं** वचनजन्यज्ञानविषयो भवति, इत्युन्मत्तवत्, **स्वोक्तिदूषकः** व्याहतभाषी । किमिति **मृषा** वृथैव **अस्मच्छास्त्रस्य** वेदस्य **चौर्याय** निर्गुणविषयतया योजयितुं, यतते । न हि व्याहतभाषिणः किञ्चित्सिद्ध्यति, उन्मत्तवच्चोरवच्चेति ।

**परि०—** परकीयचोद्यमनुवदति **आहेति** । इत्याहेति वक्ष्यमाणेतिपदेनान्वयः । वचनविषयत्वं हि त्रेधा । वचनजन्यस्फुरणाश्रयतया वा वचनजन्यस्फुरणकर्मत्वेन वा वचनजन्यवृत्तिव्याप्यतया वा । आद्यद्वयस्याभावेन स्वप्रकाशत्वस्य सम्भवात् । अन्त्ये शास्त्रविषयत्वसम्भवान्न कोऽपि दोष इत्यर्थः । **निराकरिष्यमाणत्वादिति** । युक्तिपादे 'न परिच्छेदकार्ये च प्रमाणमिति च प्रमा' इत्यत्र । 'न च प्रमाणतोऽन्या स्यात्प्रमितिर्नाम कुत्रचित्' इत्यादिना भक्तिपादे च । **ज्ञानाश्रयतयेति** । ज्ञानाश्रयत्वेन हेतुनेत्यर्थः । **व्याघातेति** । वचनजन्यज्ञानाविषयतया स्वप्रकाशत्वं वचनजन्यज्ञानविषयतया च वचनविषयत्वमित्यस्य व्याहतत्वेन स्वप्रकाशत्वशास्त्रविषयत्वयोरन्यतरदपि न सिद्ध्यतीत्यर्थः ।

**यादु०— निराकरिष्यमाणत्वादिति** । 'न च प्रमाणतोऽन्या स्यात्प्रमितिर्नाम कुत्रचित्' इत्यादिना भक्तिपाद इति शेषः । **न क्वचिदिति** । तथा च घटादेरपि स्वप्रकाशतापत्तिरिति भावः । यतो वा इमानि भूतानि जायन्त इत्यादौ सर्वत्रेत्यन्वयः । सर्वत्रेत्यस्योपक्रमादावित्यर्थः । ततश्चोक्तशङ्कानिरासो लभ्यत इति ज्ञेयम् ।

**वं०प०— विषयत्वाभावेनेति** । आश्रयकर्मणोरुभयोरपि विषयत्वेन व्यवहारादिति भावः । **न क्वचिदिति** । वचनजन्यज्ञानाश्रयत्वाभावेन वचनविषयत्वाभावरूपं स्वप्रकाशत्वं घटादावप्यस्तीत्यतिव्याप्तिरित्यर्थः । **कर्मत्वमिति** । द्वितीयः पक्ष इत्यर्थः । **नैकमपीति** । 'वचनविषयत्वाभावरूपस्वप्रकाशत्व'-'वचनजन्यवृत्तिव्याप्यत्वेन वचनविषयत्व'योरुभयोर्मध्य इति शेषः ।

**आनन्दः—** स्वप्रकाशत्वशास्त्रविषयत्वयोरविरोधं शङ्कते **आहेति** । **तथा चेति** । वचनविषयत्वाभावः स्वप्रकाशत्वं वचनवृत्तिविषयत्वं द्वेधा स्फुरणाश्रयत्वेन वा तत्कर्मत्वेन वेति भावः ।





**श्रीनिधि०— ज्ञानकार्यत्वमेवाश्रयणीयमिति** । एवं च स्फुरणाश्रयतया विषयत्ववचनजन्यवृत्तिव्याप्यत्वयोरभेदाभावान्न व्याहतिरिति वक्तुं शक्यत इत्यर्थः । **उन्मत्तवच्चोरवच्चेतीति** । चोरोऽपि भयेन व्याकुलान्तःकरणः पूर्वोत्तरविस्मरणाद्याहतं ब्रवीतीति भावः ।

**वा०चं०—** ननु स्पष्टव्याघातप्रसङ्गेनावाच्यं वाच्यमित्युक्तेरसम्भावितत्वात्तदुक्तेः प्रकृतोपयोगाभावेन परेणावक्तव्यत्वाच्च तदुक्त्युपजीविदूषणपरोत्तरमूलमनुपपन्नमित्यतः स्वप्रकाशस्यापि शास्त्रविशेषत्वोपपादकतया व्यवस्थाविशेषे परेणोपन्यस्ते तत्पर्यवसानगत्याऽवाच्यं वाच्यमिति परोक्तिलाभात्तदुपजीवनेन व्याघातप्रतिपादकमुत्तरवाक्यं नासङ्गतमित्याशयेनाह **आहेति** । 'न च प्रमाणतोऽन्या स्यात्प्रमितिर्नाम कुत्रचित् इति' भक्तिपादे ज्ञाततास्वरूपस्य निरस्यतया तदाश्रयत्वतत्कर्मत्वादिसदसद्भावविचारो दूरोत्सारित इत्याह **स्वरूपस्यैवेति** । घटादिज्ञानाश्रयत्वेन तद्विषयत्वव्यवहाराभावात् तत्कर्मणि च तथा व्यवहारादिति भावः । ज्ञानकर्मत्वं न तावज्ज्ञानजन्यातिशययोगित्वम् । व्यवहारादिरूपातिशयस्य ब्रह्मण्यपि सत्त्वात् । ज्ञाततारूपस्य वा पराभिमतप्रतिबिम्बितचैतन्यादिरूपफलस्य वा तस्याप्रामाणिकत्वेन घटादावप्यसत्त्वात् । एतेन परसमवेतक्रियाफलशालित्वं तदित्यपि निरस्तम् । अतो न विषयत्वातिरिक्तं कर्मत्वमित्याह **ज्ञानकर्मत्वमिति** । घटादिप्रकाशकज्ञानस्यैवानुभवसिद्धत्वेन तस्य चोक्तरीत्या त्वदभिमतफलरूपत्वासम्भवेन वृत्तिरूपताया एव वक्तव्यत्वेन न ज्ञानातिरिक्ता वृत्तिरित्याशयेनाह **न तावदिति** । दूषणस्वरूपं तत्फलं च दर्शयति **तथा चेति** । अवाच्यं वाच्यमित्युक्त्वा स्वोक्तिदूषक इत्यनेनावाच्यं वाच्यमित्युक्तेर्वचनान्तरेण व्याघात इति प्रतीयते । तच्चानुपपन्नम् । वचनान्तराभावात् । एतदुक्तेरेव व्याघातस्य वक्तव्यत्वाच्चेत्यतो यथायोग्यमन्वयं दर्शयन्वाक्यं व्याख्याति **अवाच्यमिति** । मदुक्तमसदिति स्वोक्तिदूषकत्वाभावात्तदभिप्रायतया व्याहतिं मूलारूढां करोति **स्वोक्तीति** । 'न चास्मच्छास्त्रगं तु तत्' इत्युक्तसिद्धेर्व्याहत्युक्तिफलत्वं दर्शयितुमस्मच्छास्त्रस्येत्यादेस्तदभिप्रायमाह **किमितीत्यादिना** । तथा योजयितुं परकीययत्नस्य सत्यत्वेन मृषात्वासम्भवात् 'भित्त्वा मृषाश्रुः' इतीत्यादिवन्मृषाशब्दो वैयर्थ्यार्थक इत्याह **मृषैव वृथैवेति** । उक्तयोर्व्याहतभाषणशास्त्रविषयत्वासिद्ध्योः सामान्यमुखेन हेतुहेतुमद्भावमुपपादयति **न हीति** । चौर्यायेत्युक्त्याऽपि चोरस्योन्मत्तवद् दृष्टान्तत्वमेवाभिमतमित्याशयेनाह **चोरवच्चेति** ।

**वा०र०— तदुक्त्युपजीवीति** । तदुक्त्यभावे तद्दूषणस्यानवकाशादिति भावः । **इत्याशयेनाहेति** । इत्याशयेनोत्तरमूलं सङ्गमयितुमाशङ्कत इत्यर्थः । **तत्कर्मत्वादीति** । आदिपदेन व्यवस्थोपपादकवचनजन्यवृत्तिव्याप्यत्वपरिग्रहः । सदसद्भावेत्यस्य तदाश्रयत्वतत्कर्मत्वयोरसद्भावे वृत्तिव्याप्यत्वस्य सद्भाव इति योजना । अल्पाच्तरतया पूर्वं सद्भावोक्तिः । **व्यवहाराभावादिति** । अन्तःकरणे न्यायादिरीत्या देवदत्तादौ वेति शेषः । तत्त्वोद्योतटीकाद्यनुसारेणाह **ज्ञानकर्मत्वं न तावदित्यादि** । पराभिमतेति प्रतिबिम्बतेत्यस्य वृत्तिप्रतिबिम्बितेत्यर्थः । वृत्तिपदोपेतपाठस्तु स्वरस एव । वृत्तिप्रतिबिम्बितचैतन्याभिव्यक्तविषयाधिष्ठानचैतन्यस्यादिपदेन ग्रहणम् ।





**इत्युक्तसिद्धेरिति** । इत्यनेनोक्तं यत्परकीयब्रह्मणो वेदादिशास्त्रविषयत्वं तस्य सिद्धेरित्यर्थः । जन्माद्यस्येति भागवताद्यपद्यगतमपेतिपदसम्बन्धि किन्तु मृषा वृथैव । भित्वा मृषाश्रुरितिवदित्येतत्तात्पर्यं मनसि निधायाह **भित्वा मृषाश्रुरित्यादिवदिति** । 'स जातकोपः स्फुरिताधरारुणं सन्दश्य दद्भिर्दधिमण्डभाजनम् । भित्वा मृषाश्रुर्दृषदश्मना रहो जघास हैय्यङ्गवमन्तरङ्गत' इति पूर्वोत्तरभागाभ्यां सहितोऽयं श्लोको दशमस्य पूर्वार्धे दशमेऽध्याये । तत्र हि श्रीकृष्णेन दधिमथनकालीनस्वकर्तृकस्तनपानस्यापूतविव चुल्यां स्थापितदुग्धस्य तापविशेषनिमित्तकोत्सेके तद्वारणाय चुल्याः सकाशात् दुग्धोत्तारणार्थं गन्तुं यशोदया स्वाङ्कादुत्तारणे कृते सति जातकोपेनाधरोष्ठदन्तैः सन्दश्य दृषदश्माना पिष्टादिकरणायाधोभागस्थितोपलोपरि सङ्घृष्यमाणपाषाणेन दधिम(?)-स्तुपात्रं भित्वा स्वयं मृषाश्रुर्नेत्रजलाभावेऽपि तत्कारणाश्रुयोक्तो जात इत्यादि प्रमेयमिति ज्ञेयम् । यद्यपि हैयंगवीनं संज्ञायामिति सूत्रेण यो गोदोहस्य हियंगुरादेशो विकारार्थे खञ्‌ च दुह्यत इति दोहः क्षीरं ह्योर्गोदोहस्य विकारः हैयंगवीनमिति रूपं प्राप्नोति । तथापि तद्धिता इति बहुवचनबलादण्यंत्रिवा(?) हैयङ्गवमिति साध्विति ज्ञेयम् । **उन्मत्तवदिति** मूलम् । यदप्युन्मत्तचोरयोरपि सिद्ध्यति किञ्चित्तद्बलवदनिष्टानुबन्धीति न तत्सिद्धिः पुरुषार्थ इति भावः ।

**विठ्ठल०— निराकरिष्यमाणत्वादिति** । न परिच्छेदकार्यैव प्रमाणमित्यत्र ज्ञाततास्वरूपस्यैव निराकरिष्यमाणत्वादित्यर्थः । **व्याघात इति** । वचनजन्यज्ञानाविषयतया स्वप्रकाशत्वं वचनजन्यज्ञानविषयतया वचनविषयत्वमित्यस्य व्याहतत्वेन स्वप्रकाशत्वशास्त्रविषयत्वयोरन्यतरदपि न सिद्ध्यतीत्यर्थः । वृथेत्येतद्द्वयं (?) जयितुं उन्मत्तवच्चौर्यायि(?)तदभिप्रायमाह **न हीति** । अन्यथा विषयाभावेनेति लक्षणया निर्गुणविषयत्वाभावे उपक्रमादिविरोधेन सगुणविषयत्वस्य वक्तुमशक्यतया प्रतिपाद्याभावेनेत्यर्थः ।

**११९ सु०— "स्यादेतत् । श्रुतिसूत्रयोस्तावदेकार्थत्वं युक्तम्, अन्यथा करणेति-कर्तव्यताभावानुपपत्तेः । श्रुतयश्चोपक्रमादिवशात् नित्यशुद्धबुद्धमद्वितीयं निर्गुणमेव प्रति-पादयन्त्यो निरवकाशाः प्रतीयन्ते । ततस्तन्मीमांसाऽपि तद्विषयैव । तथा चान्यथा-ऽनुपपत्तेर्यथाकथञ्चित् श्रुतिसूत्रयोर्निर्गुणविषयत्वमुपपादनीयम्, अन्यथा विषयाभावेना-प्रामाण्यापत्तेः" इत्यत आह जन्मादीति ।**

अनु०— जन्मादिकारणं यत्तत्साक्षान्नारायणाभिधम् ।
वदन्ति श्रुतयो ब्रह्म शास्त्रं चैतत्तदर्थतः ॥
प्रवृत्तमस्त्ववाच्यं ते मैवं ब्रूयाः कथञ्चन ।





**न श्रुतिसूत्रयोर्निर्विषयत्वापत्तिभयेनावाच्यस्यापि तद्विषयत्वं कल्प्यम्, सगुण-विषयत्वेन सविषयत्वोपपत्तेः । न चोपक्रमादिवैगुण्यम्, 'यतो वा इमानि भूतानि जायन्ते' इत्यादौ साक्षाज्जन्मादिकारणत्वेन, 'नारायणं महाज्ञेयमि'ति नारायणादिशब्दोदितगुण-वत्तया च सर्वत्र सगुणस्यैव प्रतीतेरिति भावः ।**

**यादु०**— सर्वत्रोपक्रमादौ सगुणस्यैव प्रतीतिः कुत इत्यत उक्तम् **नारायणं महाज्ञेयमित्यादि** । अनेन श्रौतनारायणादिशब्दार्थसमाख्यैव गुणप्रतीतिसाधिकेत्युक्तं भवति । ननु यतो वेत्यादौ सर्वत्र प्रतीतस्य सगुणस्य कथं नारायणशब्दोदितगुणवत्त्वमित्यत उक्तम् **साक्षाज्जन्मादिकारणत्वेनेति** । तथा च नराणामिदं जन्मादि नारं दातृतया तदाश्रयत्वान्नारायण इति व्युत्पत्त्योपक्रमादौ सर्वत्र श्रुता ये गुणास्ते सर्वेऽपि नारायण-शब्दोदिता एवेति युक्ता समाख्येति भावः ।

**वं०प०**— **अन्यथेति** । निर्गुणविषयत्वानङ्गीकार इत्यर्थः । **विषयेति** । श्रुतेरुपक्रमादिविरोधेन निर्गुणविषयकत्वायोगे मीमांसाया अपि तद्विषयकत्वायोगेनेत्यर्थः । **अप्रामाण्येति** । श्रुतिसूत्रयोरिति वर्तते । मूले 'अवाच्यं ते मैवं ब्रूया' इत्यत्र तेऽवाच्यमित्यन्वयः । ते त्वदीयं यदवाच्यं ब्रह्म तच्छास्त्रविषयं मैवं ब्रूया इति योजना । तत्रावाच्यं ते मैवं ब्रूया इत्यस्य तात्पर्यम्, अवाच्यस्यापि तद्विषयत्वं न कल्प्यमिति ।

**वा०चं०**— ननूत्तरवाक्ये श्रुत्यादिविषयत्वं वाच्यस्याङ्गीकृत्यावाच्यस्यावक्तव्यत्वमसङ्गतं किमि-त्युच्यते। निर्गुणस्यैव शास्त्रविषयतया मुख्यतः परेण प्रसञ्जिततयाऽवाच्यस्य तथाऽप्रस्तुतत्वात्। श्रुतिसूत्रयोः पृथक्कारे च न किञ्चित्कारणम् । जन्मादिकारणं नारायणाभिधमिति विशेषणयोश्च न किञ्चित्प्रयोजनम् । न च सगुणस्य श्रुत्यादिविषयत्वमुपपाद्य तद्बलेन मीमांसाशास्त्रस्यापि तद्विषयत्वमभिप्रेत्य निर्गुणस्य तद्विषयत्वाभाव-स्योत्तरवाक्ये प्रतिपादनान्न कोऽपि दोष इति वाच्यम् । निर्गुणे श्रुतिशास्त्रविषयत्वाभावस्य निपुणतरं प्रति-पादितत्वेन पुनस्तद्विषयकत्वपक्षस्योज्जीवनासम्भवेन तत एव सगुणविषयकत्वे बाधकलेशस्याभावेन तद्विष-यकत्वनिर्गुणविषयकत्वाभावयोरत्राप्रतिपादनीयत्वादुक्तसौत्रतच्छब्दपरार्शानुपपत्तेरपरिहारे सूत्रस्य तद्विषयत्वशङ्का-ऽप्रसराच्च । श्रुतेर्निर्गुणविषयत्वे वा कुतः सूत्रस्य तद्विषयकत्वमतोऽनुपपन्नमेवोत्तरवाक्यमित्यतः सगुणस्यैव प्रतीत्यभिप्रायकेण विशेषणद्वयेनोपक्रमादिवैगुण्यरूपसगुणविषयकत्वबाधकपरिहारप्रतीतेः । ततश्चोपक्रमादेः श्रुत्यादिनिर्गुणविषयकत्वसाधकतया पराभिप्रायसूचनात्सिद्धान्ते श्रुत्यादिनैकार्थ्यमङ्गीकृत्य सूत्राणां सगुणविषयतां व्युत्पादयता परस्याप्यैकार्थ्याङ्गीकारेणैव सूत्राणां निर्गुणविषयत्वस्याभिमततायाः सूचनादुपक्रमादिबलेनैव चास्मदुक्तानुपपत्तेः कथञ्चित्परिहार्यत्वस्यापि सूचनाद्विषयान्तरसद्भावकथनेन च विषयाभावेनाप्रामाण्यापत्ति-रूपबाधकस्यापि सूचनान्मूलनिवर्त्याशङ्का सदलैवेत्याशयेनाह **स्यादेतदिति** । **श्रुतिसूत्रयोरिति** । अनयो-र्निर्गुणविषयत्वोपपादनप्रकारवैलक्षण्येऽपि फलस्यैकविधत्वाभिप्रायेण भावकथनावसरे तस्यैव कथनमेतदिति ज्ञेयम् ।





**वा०र०—** उत्तरवाक्यव्यावर्त्यशङ्काया निर्दलत्वेनानुत्थानात्तत्परिहारपरोत्तरवाक्यमसङ्गतमिति शङ्कामुत्थाप्य तस्याः सदलत्वं स्यादेतदित्यादि मूलतात्पर्यकथनेन दर्शयन्नाह **ननूत्तरवाक्य इत्यादिना** । श्रुत्यादीत्यादिपदेन शास्त्रपरिग्रहः । **तथेति** । शास्त्रविषयतयेत्यर्थः । **पृथक्कार इति** । श्रुतयो ब्रह्मशास्त्रं चेति पृथग्ग्रहण इत्यर्थः । न च सगुणस्येति वाक्ये श्रुतिविषयत्वमुपपाद्येति पाठः । श्रुत्यादीत्यादिपदं तु लेखकागतम् । मूलकोशेत्यादीत्येतदुपरि तिकारस्य लेखं कृत्वापि पांक्तत्यादीत्यस्याविनाशनात् । **तद्विषयत्वेति** । शास्त्रविषयत्वेत्यर्थः । तद्विषयकत्वपक्षस्येत्यत्र तच्छब्देन निर्गुणपरामर्शः । तद्विषयकत्वनिर्गुणेत्यत्र तच्छब्देन सगुणपरामर्शः । **उक्तसौत्रेति** । उक्ताया सौत्रतच्छब्देन निर्गुणपरामर्शस्यानुपपत्तिस्तस्या इत्यर्थः । **कुत इति** । नियामकाप्रतीतेरिति भावः । **अत इति** । उत्तरवाक्यव्यावर्त्यशङ्काया निर्दलत्वाज्जन्मादिकारणमित्यादिविशेषणद्वयस्य प्रयोजनाप्रतीत्या चेत्यर्थः । उपक्रमादेः श्रुतिनिर्गुणेति पाठः । श्रुत्यादीति लेखक० । **ततश्चेति** । तृतीयान्तात्तसिः **तेन चेति** । बाधकपरिहारेण चेत्यर्थः । श्रुत्यैकार्थ्यमङ्गीकृत्येति पाठः । इत्यादिनेति लेखकागतम् । **अभिमतताया इति** । अभिमततायाश्चेत्यर्थः । चशब्दयुक्तपाठस्तु स्वरस एव । **इत्याशयेनाहेति** । इत्याशयेनोत्तरमूलव्यावर्त्या श्रुतिसूत्रयोरैकार्थ्यमाश्रित्योपक्रमादिबलेन श्रुतेर्निर्गुणविषयत्वमुपपाद्य तन्मीमांसारूपसूत्रस्यापि तद्विषयत्वमङ्गीकार्यमित्यादिरूपेणाशङ्कामुत्थाप्य तन्निवर्तकतयोत्तरमूलमवतारयतीत्यर्थः । न श्रुतिसूत्रयोरिति भावकथनपरग्रन्थे निर्विषयत्वापत्तिभयेनेत्यादिनैकप्रकारेण द्वयोर्निर्गुणविषयत्वानुवादोऽनुपपन्न इत्यतस्तमुपपादयति **अनयोरिति** । **प्रकारेति** । उपक्रमादिबलेन श्रुतेर्निर्गुणविषयता । सूत्राणां च श्रुतीतिकर्तव्यतात्वेन समानविषयकत्वयुक्त्या निर्गुणविषयकत्वेवेति प्रकारवैलक्षण्येऽपीत्यर्थः । **फलस्येति** । अन्यथा विषयाभावेनाप्रामाण्यापत्तेरित्यनेन निर्विषयत्वापत्तिभयादुभयोरपि निर्गुणविषयत्वमिति शङ्काफलस्यैकविधत्वमस्तीत्यभिप्रेत्य तन्मात्रपुरस्कारेण भावकथनप्रवृत्तिरित्यर्थः ।

**विट्ठल०—** यत्साक्षाज्जन्मादिकारणं नारायणाभिधं ब्रह्म तन्मुख्यया वृत्त्या श्रुतयः प्रतिपादयन्तु एतच्च ब्रह्ममीमांसाशास्त्रं तदर्थतः वेदार्थभूतब्रह्मनिर्णयाय प्रवृत्तमस्तु तथाप्यवाच्यं ते तव ब्रह्म अवाच्यतया त्वदभ्युपगतं निर्गुणं ब्रह्म वेदप्रतिपाद्यमिति त्वं नैव ब्रूया इति योजनां सूचयन्नुक्तशङ्कापरिहारायाभिप्रायमाह **न श्रुतिसूत्रयोरिति** । उक्तं चन्द्रिकायाम् अवाच्यं चेद्ब्रह्म वाच्यमिति मास्मब्रूयाः असकृद्वचनं तात्पर्यार्थमिति ।

**१२० सु०— "सर्वप्रमाणाविषयस्य शास्त्रविषयत्वाङ्गीकारे यो व्याघात उक्तो नासौ सूक्ष्मेक्षिकामाश्रित्य, येन सूक्ष्मेक्षिकायामविद्यमानमपि दूषणं स्फुरतीति शङ्क्येत । यथाऽऽह 'न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः । दोषो ह्यविद्यमानोऽपि तत्पराणां प्रदृश्यते ॥' इति । किन्तु स्थूलदृष्टिभिरप्ययं व्याघातः सुज्ञानः" इत्याशयवानाह सर्वशब्दैरिति ।**

**अनु०— सर्वशब्दैरवाच्यं तदुक्त्वा तद्विषयं पुनः ॥**
**शास्त्रं वदन्तमुन्मत्तं कथं लोको न वारयेत् ।**

**उन्मत्तं व्याहतभाषिणम् ।**

**श्रीनिधि०— न चात्रातीव कर्तव्यमिति** । विचारणमिति शेषः ।

**वा०चं०—** उत्तरवाक्यस्याव्यवहितैतद्वाक्येन साक्षात्सङ्गत्यदर्शनादवाच्यं पूर्ववाक्यपौनरुक्त्याच्चानुपपत्तिरित्यतो लोकपदप्रयोगलब्धतदभिप्रायोक्त्या पौनरुक्त्यं परिहरति **सर्वेति** । नन्वेवंवादिनस्तथा व्यवहाराभावान्नोन्मत्तत्वम्, पूर्ववाक्ये तदुपमत्वोक्तिविरोधश्चेत्याशङ्कानिरासाय व्याघातस्य स्थूलदृष्टिविषयताया मूलारूढतालाभाय चोन्मत्तपदं लुप्तोपममभिप्रेत्य व्याख्याति **उन्मत्तमिति** ।

**वा०र०— पूर्ववाक्येति** । पूर्ववाक्येन सर्वशब्दैरित्युत्तरवाक्यस्य पौनरुक्त्याच्चेत्यर्थः । **लोकपदेति** । न सूक्ष्मेक्षिका । किन्तु स्थूलदृष्टिभिरपीत्याद्यभिप्रायस्य लोकपदलब्धत्वादित्याशयः । **तथा व्यवहारेति** । उन्मत्तत्वप्रयोजकव्यवहारेत्यर्थः । व्यवहारश्चाभिलपनमभ्यवहारश्चेति । द्विरूपो विवक्षितः । तथा चोन्मत्तो यथा प्रमाणबाधित्वं व्यवहरति निषिद्धं च भक्षयति । तथास्य मायावादिनो व्यवहारद्वयाभावादित्युक्तं भवति । उपलक्षणं चैतत् । उन्मादकार्यविचित्रचेष्टाभावाच्चेति ज्ञेयम् । कथञ्चिदुन्मत्तत्वाङ्गीकारेणोन्मत्तवदिति पूर्ववाक्ये उन्मत्तोपमत्वोक्तिरयुक्तेत्याह **पूर्ववाक्य इति** । **निरासायेति** । उन्मत्तपदं लुप्तोपममित्युत्तरेण सम्बन्धः । **लुप्तोपममिति** ।

**विठ्ठल०— सूक्ष्मेक्षिकाम्** इत्यस्य दोषैकदृष्टिमित्यर्थः ।

**॥ इति 'निर्गुणे ब्रह्मणि सत्त्वस्यैवानुपपत्ति' दर्शने**
**'मायावाद्युक्तस्वप्रकाशत्वशास्त्रविषयत्वयोः अविरोधाभावः' ॥**

* * *

**॥ अथ मायावाद्युक्तीनां निरासे 'निर्गुणे ब्रह्मणि समन्वयनिराकरणस्य उपसंहारः' ॥**

**१२१ सु०— निर्गुणे ब्रह्मणि समन्वयनिराकरणमुपसंहरति मा वद इति ।**

**अनु०— मा वदो मा विजानीहि त्यजास्मच्छास्त्रचोरताम् ॥**





**यतो वक्तुं ज्ञातुं च न शक्यं तस्माच्छास्त्रस्य तद्विषयत्वाग्रहोऽपि त्याज्य इति भावः ॥ मा वद इति । स्मशब्दोऽत्राध्याहार्यः । तेन च लङुपपत्तिः । मा विजानीहीति माशब्दोऽयम् ।**

**अतो निर्गुणे समन्वयस्याप्रतिज्ञातत्वाद्वचनवृत्त्यैव समन्वयोऽयमिति वाच्यत्वसमर्थनमेव प्रथमसङ्गतं न साङ्ख्यनिराकरणमिति सिद्धम् ।**

**परि०**— 'मा वदो मा विजानीहि' इत्यनयोस्तात्पर्यमाह **वक्तुं ज्ञातुं च न शक्यमिति** । तेन लङुपपत्तिरिति । ' स्मोत्तरे लङ्च' इति सूत्रेण स्मोत्तरमाङ्योगे लङो विधानादिति भावः । 'ननु माङि लुङ्' इति लुङा भाव्यमित्यत आह **माशब्दोऽयमिति** ।

**यादु०**— ननु मा वद इति कथम् । न च पूर्ववन्माशब्दोऽयमित्युपपत्तिः । लङर्थस्यातीतत्वस्य प्रकृतेऽनन्वयादतो माङ्योगे सर्वलकारापवादकेन लुङा भाव्यमित्यत आह **मा वद इति** । **स्मशब्द इति** । तथा च स्मोत्तरे लङ्चेत्युक्तत्वेन लङुपपत्तिः । तस्यापि सर्वलकारापवादकत्वमस्तीति तदर्थस्य प्रकृतेऽन्वयोऽपि सम्भवति । यतस्त्वं न वदसि न जानासीति लङर्थतया व्याख्यानादिति भावः । अत एव तत्तात्पर्यमुक्तम् यतो वक्तुं ज्ञातुं च न शक्यमिति । माशब्दोऽयमित्यस्यापि मा वद इत्यत्रेव शङ्का द्रष्टव्या ।

**वं०प०**— ननु माङि लुङिति माङ्योगे विधानान्मा वादीदिति लुङा भाव्यम् । मा वद इति कथं लङ्प्रयोगो मा वद इत्यवादीत्यत आह **मा वद इति** । **स्मशब्द इति** । मा वद इत्यनन्तरं स्मशब्दोऽध्याहार्य इत्यर्थः । तथा च स्मोत्तरे लङ् चेति सूत्रेण माङ्योगेऽपि स्मशब्दस्योत्तरत्र सद्भावे लङ्विधानाददोष इति भावः । यद्यप्यत्र माशब्दोऽयं न माङिति पूर्वोक्तमेव समाधानं शक्यते वक्तुम् । तथापि सति तस्मिन्निदं समाधानान्तरमित्यवगन्तव्यम् । ननु माङ्योगे लुङो विधानात् मा विजानीहीति कथं लोट्प्रयोग इत्यत आह **मा विजानीहीति माशब्दोऽयमिति** । न माङित्यर्थः ।

**आनन्दः**— ननु मा वद इत्यत्र लङ् नोपपद्यते माङि लुङिति तद्योगो लुङ्विधानादित्यत आह **मा वद इति** । तथा च स्मोत्तरे लङ् चेति सूत्रानुसाराल्लङोपपत्तिः । माङि लोट्विधानाभावान्मा विजानीहीत्ययुक्तं, अत आह **मा विजानीहीति** ।

**श्रीनिधि०**— **स्मशब्दोऽत्राध्याहार्य इति** । माशब्दोऽयमित्यनुक्त्वा एवं कथनेनेदं प्रयोजनं सूचयति । मा विजानीहीति लोट् प्रयोगः । तत्समानार्थत्वमस्य यथा स्यादिति । स्मोत्तरे ङि चेत्यनेन सर्वलकारार्थे लङो विधानादिति भावः ।





**वा०चं०**— उत्तरवाक्ये उपसंहारज्ञापकाभावेन शास्त्रस्य निर्गुणविषयत्वाभावस्योक्तस्यैवोक्तिरिति प्रतीतेस्तस्मादित्यध्याहारेण निर्गुणविषयकत्वाभावरूपावान्तरप्रमेयनिरासोपसंहारत्वं तस्येत्याह **निर्गुण इति** । मा वद इत्यादेरर्थं वदन् तस्य त्यजेत्याद्यभिप्रेतार्थहेतुत्वं तस्मादित्यध्याहारेणाह **यत इति** । माङ् योगे सर्वलकारापवादत्वाल्लुङोऽत्र लङनुपपत्तिः । माशब्दत्वे च लङर्थातीतत्वस्यात्रान्वयानुपपत्तिरित्यत आह **मा वद इतीति** । मा विजानीहीत्यत्रार्थानुपपत्तेरभावान्माशब्दमङ्गीकृत्य लोटमुपपादयति **मा विजानीहीति** । समन्वये प्रतिज्ञात इत्युक्तासङ्गतिरूपपरमप्रमेयनिरासोपसंहाराभावात् तदुपसंहारानुक्तिप्रयुक्तन्यूनतापरिहाराय असङ्गतिरूपपरमप्रमेयोपसंहारस्यैतद्वाक्याभिप्रेततामभिप्रेत्याह **अत इति** ।

**वा०र०**— अनेनोन्मत्तवद्विद्यमानमित्युपमाया निमित्तधर्मः कथितो व्याहतभाषिणमित्यनेनेति सूचयति **अवान्तरप्रमेयेति** । अतो निर्गुणसमन्वयस्येत्युत्तरमूलस्थोपसंहारव्यावृत्त्यर्थमवान्तरपदम् । **अध्याहारेणाहेति** । अवतारतात्पर्यकथनावसरे तस्मादित्यध्याहारेणेत्युक्तमेव स्थलविशेषसम्बद्धतया प्रदर्शितमिति न पुनरुक्तिदोषः । **माङ्योग इति** । लुङः सर्वलकारापवादकत्वादत्र लङपवादेन लुङ एव प्राप्त्या मा वादीरित्येव प्रयोगप्रसङ्गः । न च मा वदेदिति प्रयोगोपपादनाय प्रतिषेधार्थकमाशब्दत्वस्वीकारवत् प्रकृतेऽपि तत्स्वीकारान्न दोष इति वाच्यम् । तत्र वदेदित्युक्तविध्यादिरूपप्रवर्तनपदाभिहितप्रवृत्त्यनुकूलव्यापारविशिष्टकर्तृरूपार्थस्य सत्त्वेन लिङुपपत्तावपि प्रकृते विजानीहीति समभिव्याहारेण वद इत्यस्य वदेति लोडर्थकताया एव विवक्षाप्रतीत्या लङर्थस्यातीतत्वस्यात्र विवक्षिततया तदन्वयानुपपत्तिः । अतीतरात्री तुरीययाममारभ्यागामिरात्रिप्रथमयामान्तषट्प्रहरात्मक कालरूपाद्यतनरहितलङो विधानेन तस्यातीतरूपार्थकतायाः प्रसिद्धेरित्याशङ्कार्थः । **मा वद इतीति** । तथा च माशब्दे स्मोत्तरे सति स्मोत्तरे लङ् वेति सर्वलकारापवादेन लङ्लुङोर्विधानात् प्रकृते स्मोत्तरे माङ्योगे लोडपवादो लङित्यर्थः । न माङ्योग इत्यनेन लुङि परतोऽडागमनिषेधादडभावश्चेति ज्ञेयम् । तथा च त्वं निर्गुणं ब्रह्म न वद न विजानीहि अस्मच्छास्त्रचोरतां च त्यजेत्युक्ते हेतुमद्भावेन योजनाया अभिप्रेतत्वाद्यतस्त्वया वक्तुं ज्ञातुं च न शक्यं तस्माच्छास्त्रस्येति मूले तात्पर्यकथनं कृतम् । कञ्चनाहं विद्वानिति मन्यमानं प्रति एतद्वाक्यार्थं सम्यक् जानीहि अस्मान्प्रति उपदिश चेत्युक्ते स्वस्य तदुभयासामर्थ्ये तेनैवावेदिते सति च तं प्रत्युच्यते त्वं वाक्यार्थमासम्यक् जानीहि मोपदिश च । विद्वत्वाभिमानं च त्यजेति । तथोक्ते च त्वया वाक्यार्थः सम्यक् ज्ञातुमुपदेष्टुं च न शक्यो यतोऽतस्त्वयापि विद्वत्वाभिमानोऽपि त्याज्य इति तात्पर्यप्रतीतेर्दृष्टत्वात् । एतेनैव न वदसि न जानासीति लडर्थतया व्याख्यानादिति भाव इति यदुपतीयं निरस्तम् । लङर्थत्यागेऽपि विजानीहीति लोटोऽर्थस्य त्यागाभावेन लङ्स्थलेन वदसीति लटा व्याख्यानप्रसक्तावपि विजानीहीति लोटि जानासीति लटा व्याख्यानायोगात् । विजानीहीति निरपवादलोट्दर्शनेन लङोपि लोडपवादत्वाश्रयणस्यैव व्याख्याततया न वदसीत्यर्थस्याप्ययोगाच्च । तस्मादुक्त एवाभिप्राय इति ज्ञेयम् । **अर्थानुपपत्तेरभावादिति** । लुङ्परिहाराय माशब्दत्वाश्रयणे कर्तव्ये माशब्दाङ्गीकारेऽपि लङर्थातीतत्वस्य पूर्वत्रानुपपत्तिवदत्र लोडर्थविध्यादेरनुपपत्त्यभावादित्यर्थः । **अभिप्रेत्याहेति** । स्वयं तदुपसंहारं दर्शयतीत्यर्थः । भाष्ये तदप्रदर्शनं सर्वथा नेति वक्तुमुक्तमेतद्वाक्याभिप्रेततामभिप्रेत्येति ।





**स०व्र०—** ननु मा वद इति कथम्। माङ्योगे लुङा भाव्यमित्यत आह **मा वद इति**। **स्मशब्द इति**। तथाच स्मोत्तरे लङित्युक्तत्वेन लङुपपत्तिरिति भावः। **माशब्दोऽयमिति**। अत्रापि मा वद इत्यत्रेव शङ्का द्रष्टव्या।

**विठ्ठल०— स्मशब्दोऽध्याहार्य इति**। तथा च स्मोत्तरे लङ् चेति स्मोत्तरमाङ्योगे लङो विधानान्मा वद इति लङुपपत्तिरिति भावः। मा विजानीहीत्यत्र माशब्दोऽयं न माङ्, अतो लुङभावो न दोषायेत्याह **मा विजानीहीति माशब्दोऽयमिति**।

**॥ इति मायावाद्युक्तीनां निरासे 'निर्गुणे ब्रह्मणि समन्वयनिराकरणस्य उपसंहारः' ॥**

**॥ इति मायावाद्युक्तिनिरासे, निर्गुणे ब्रह्मणि शास्त्रसमन्वयनिराकरणे, 'निर्गुणे ब्रह्मणि सत्त्वस्यैवानुपपत्तिः' ॥**

**॥ इति 'निर्गुणे ब्रह्मणि शास्त्रसमन्वयस्य निराकरणम्' ॥**

**॥ इति मायावाद्युक्तिनिरासे 'प्रतिज्ञातः समन्वयो न लक्षणया निर्गुणे, अपि तु वचनवृत्त्या सगुण एव' ॥**

**॥ इति मायावाद्युक्तीनां निरासः ॥**

* * *

**॥ अथ मायावाद्युक्तिनिरासस्य प्रकृतोपयोगिता ॥**

**१२२ सु०—** "ननु यथा सूत्राविवक्षितं साङ्ख्यनिराकरणं कुर्वतो मम दोषः तथा मन्निराकरणं कुर्वतो भवतोऽपि कथं न दोषः स्यात्। न हीदं कस्यचित्सूत्रस्यार्थतयोच्यते" इत्यत आह **वयमिति**।

**अनु०—** वयं त्वां श्रुतियुक्तिभ्यां बद्ध्वाऽस्मच्छास्त्रमञ्जसा।
विचारयामः श्रुतिभिर्युक्तिभिश्चैव सादरम्॥

**त्वाम्** अपव्याख्यातारं, श्रुतियुक्तिभ्यां **बद्ध्वा** निराकृत्य, **अस्मच्छास्त्रं** वेदं, सूत्रसूचिताभिः श्रुतिभिर्युक्तिभिश्च, **अञ्जसा** नैरन्तर्येण, सादरं च, शिष्यैर्विचारयाम इति।

अनेनेदमुदितं भवति। यावदापातरमणीयं परेषां व्याख्यानं शिष्याः पश्येयुः, न तावदस्मदुक्ते सूत्राणां निजार्थेऽप्यञ्जसाऽऽदरं कुर्युः, किमसौ सूत्रार्थः किं वाऽयमिति सन्देहावस्कन्दनात्। निराकृते त्वपव्याख्याने नैरन्तर्यादराभ्यामस्मदुक्तमेव (सूत्रा)अर्थ-





**मुपादाय शास्त्रार्थमीमांसायां निर्विचिकित्साः प्रवर्तेरन् । (त)अतो मा(नाम) भूदयं सूत्रार्थ-स्तथाऽपि सूत्रार्थग्रहणोपायत्वात् व्याकरणादावुदाहरणप्रत्युदाहरणप्रदर्शनादिवन्न कश्चन दोषमावहति । किं नाम गुणहेतुरेव इ(भवती)ति ॥**

**श्रीनिधि०— शिष्यैर्विचारयाम इति** । वयमिति बहुवचनानुसारेण शिष्यैरित्युक्तम् । **शास्त्रार्थ-मीमांसायामिति** । शास्त्रार्थविचार इत्यर्थः । **निर्विचिकित्साः** निस्सन्देहाः । **अयं** त्वन्निरासः ।

**वा०चं०—** ननूपसंहारेण पूर्वप्रमेयस्य समापितत्वेन विशेषव्युत्पादनानपेक्षणात् 'वयं त्वाम्' इत्युत्तर-वाक्यं व्यर्थम् । न चेयताग्रन्थेन कृतस्य मायावादिनिरासस्याप्रयोजनताशङ्कानिरासाय तदिति वाच्यम् । प्रसञ्जकाभावेन तच्छङ्काऽनुत्थानादित्यतः साङ्ख्यमतनिरासं कुर्वतो ममासङ्गत्यादिना निराकरणमेव मम निरासं कुर्वतस्तवाप्यसङ्गत्यादिना निरासस्य प्रसञ्जकम् । सूत्रविवक्षितत्वाविशेषात् । इयांस्तु विशेषः । यन्मया सूत्रार्थतया तन्निरासस्य व्याख्यातत्वात्सूत्रानानुगुण्यं ममाधिकम् । त्वया तु सूत्रार्थतया मन्निरासाव्याख्यानात्तव तदनानुगुण्याभावः । सूत्राविवक्षितार्थप्रतिपादकं तूभयोरविशेषमेव । एवं च न मां प्रत्येव पर्यनुयोगो युक्त इत्याशङ्कानिरासायोत्तरमूलस्य प्रवृत्तत्वान्न तद्वैयर्थ्यमित्याशयेन तन्मूलमवतारयति **नन्विति** । सूत्राविवक्षितत्व-स्यासिद्धिशङ्कानिरासाय **न हीति** । अत्र सूत्राणामनेकत्वात्कस्यचिदित्युक्तम् । अपव्याख्याननिरासरूपत्वा-दस्मत्कृतत्वन्निरासस्य त्वत्कृतातादृशसाङ्ख्यनिरासाद्वैलक्षण्यमित्याशयस्य मूलाल्लाभाय त्वामिति व्याख्याति **त्वामिति** । श्रुतियुक्त्यो रज्वादिवद्बन्धनासाधनत्वाद्बन्धनोक्तेरनुपयोगाच्चाह **बद्ध्वेति** । मीमांसारूपास्मच्छास्त्रस्य स्वोत्प्रेक्षितश्रुतियुक्त्यादिना यो विचारस्तस्य सूत्रेण क्रियमाणविचाररूपत्वाभावेन सूत्रेण क्रियमाणविचार-प्रतिपादनस्यैव सूत्रव्याख्यानरूपत्वेन मीमांसाविषयकविचारस्य सूत्रव्याख्यानरूपत्वाभावात्स्वव्याख्यार्थता-मुपादाय शास्त्रार्थमीमांसायां निर्विचिकित्सा शिष्यप्रवृत्त्यर्थकता नोक्ता स्यादिति तल्लाभायोक्तं वेदमिति सूत्रसूचिताभिरिति च । अपव्याख्याननिरासस्य सूत्रव्याख्यातॄनस्मान् प्रति सादरविचारसाधनत्वभ्रान्तिनिरासाय **शिष्यैरिति** । ननु मद्व्याख्याननिरासस्य कथं त्वद्व्याख्याने सादरशिष्यप्रवृत्त्यर्थता । अस्तु वा सा तथाऽपि सूत्राविवक्षितार्थप्रतिपादनरूपत्वान्मन्निरासस्य दोषहेतुत्वोक्तेः कः परिहार इत्यत आह **अनेनेदमुदितं भवतीति** । निर्दोषेऽप्यर्थ इति विरोधिशङ्कायां सत्यां स्वरूपेण निर्दोषत्वस्यादराप्रयोजकतां सूचयति **व्याकरणादाविति** । पूर्वमीमांसाभाष्यादेरादिपदेनोपादानम् । प्रदर्शनादिवदित्यादिपदेन सूत्रार्थग्रहणोपयुक्तलौकिकन्यायादेस्तद्भाष्यादौ व्युत्पादितस्य ग्रहणम् ।

**वा०र०— विशेषव्युत्पादनेति** । मायावाद्यपेक्षया स्वस्य यो विशेषस्तद्व्युत्पादनेत्यर्थः । अस्मच्छास्त्र-पदस्य वेदपरत्वेन व्याख्याने श्रुतिभिर्युक्तिभिरित्यत्र च सूत्रसूचिताभिरिति पूरणे च निमित्तमाह **मीमांसारूपेति** । यद्यस्मच्छास्त्रं मीमांसारूपं गृह्यते तर्हि स्वोत्प्रेक्षितश्रुत्यादिभिरेव विचारस्य कर्तव्यतया तस्य च सूत्रेण क्रियमाणे-





त्यादिरूपेण तद्व्याख्यानरूपत्वाभावादित्यर्थः । **उक्तमिति** । व्याख्यातमित्यर्थः । तथा च स्वव्याख्यातार्थ-मित्यादिकमुक्तं भवतीति भावः ।

**विठ्ठल०**— नन्वेतेनापव्याख्यानप्रत्याख्यानस्योत्सूत्रितत्वशङ्कापरिहारः कथमित्यतः सूत्रार्थस्थापनार्थत्वेन भवतीदमपि सूत्रव्याख्यानमिति वक्तुमाह **इत्यनेनेदमुदितमिति** । **उदाहरणेति** । उक्तार्थस्थापनाय प्रदर्श्यमानम् अनुरूपं निदर्शनं उदाहरणं, उक्तनियमानङ्गीकारे प्रतिकूलतया प्रदर्श्यमानं निदर्शनं प्रत्युदाहरणम् इति विवेकः । साकल्येन वक्तुमयोग्यत्वम् इह अवाच्यत्वं तत्तु नाश्चर्यतामात्रेण सिद्ध्यति तर्हि मेवदिरपि अवाच्यत्वप्रसङ्गादित्याशयेनाद्भुतत्वादित्यस्य निरुपचरिताद्भुतत्वविवक्षया आश्चर्यतमत्वादिति व्याख्यानम् । अत एव अनन्तगुणपूर्णत्वमद्भुतत्वोपपादकमुक्तमिति ।

**॥ इति मायावायुक्तिनिरासस्य प्रकृतोपयोगिता ॥**

* * *

**॥ अथ परेषां व्याख्यानस्य प्रत्याख्याने 'अवाच्यत्वाद्यभिधात्रीणां श्रुतिस्मृतीनां व्याख्यानम्' ॥**

**॥ तत्रादौ श्रुतिबलात्तदर्थकथनम् ॥**

**१२३ सु०— ननु यदि वाच्यमेव ब्रह्म कोऽर्थस्तर्ह्यवाच्यत्वाद्यभिधात्रीणां श्रुतिस्मृतीना-मित्यतः श्रुत्यन्तरेणैव तदर्थमाह अद्भुतत्वादिति ।**

**अनु०— अद्भुतत्वादवाच्यं तदतर्क्याज्ञेयमेव च ।**
**अनन्तगुणपूर्णत्वादित्यूदे पैङ्गिनां श्रुतिः ॥**

**आश्चर्यतमत्वात् । कथमाश्चर्यतमत्वम् । अनन्तगुणपूर्णत्वात् । दुर्लभं ह्याश्चर्यं भवति । न ह्यनन्तगुणपूर्णं सुलभम् । भासनोपसम्भाषेत्यात्मनेपदम् । वाच्यत्वस्योपपादितत्वात् ।**

**अर्थकथनमात्रेणैवालम्, श्रुत्युदाहरणं तु दार्ढ्यार्थमित्यवगन्तव्यम् ।**

**परि०**— 'वद व्यक्तायां वाचि' इत्यस्य परस्मैपदित्वादित्युवादेति प्रयोक्तव्ये कथमित्यूद इत्यात्मनेपदप्रयोग इत्यत आह **भासनेति** । **भासनं** दीप्तिः । **उपसम्भाषा** सान्त्वनम् । तथा च ऊदे उक्तशङ्का कर्तारं परिसान्त्वयतीत्यर्थः । **यद्वा भासनोपसम्भाषेति** । 'भासनोपसम्भाषाज्ञान-





यत्नविमत्युपमन्त्रणेषु वद' इति सूत्रेणार्थविशेषेषु आत्मनेपदविधानादिह भासनारूपार्थे आत्मनेपदम् । स्पष्टमुवाचेत्यर्थ इति भावः ।

**गु०दी०**— **भासनोपसम्भाषेत्यात्मनेपदम्** इत्यत्र 'भासनोपसम्भाषा ज्ञानयत्नविमत्युपमन्त्रणेषु वदः' इत्यनेन सूत्रेण भासनसान्त्वनाद्यर्थेषु वदेः तङानोर्विधानाद्वदेरात्मनेपदत्वोपपत्तेरिति भावः ।

**यादु०**— ननु वदतेः शेषात्कर्तरीति परस्मैपदित्वात्कथमूदे इत्यात्मनेपदप्रयोग इत्यत आह **भासनेति** । 'भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वद' इति सूत्रस्यायमर्थः । भासनं दीप्तिः । उपसम्भाषोपसान्त्वनम् । उपमन्त्रणमुपच्छन्दनं प्रार्थनमिति यावत् । एषु विशेषणेषु सत्सु वदतेरात्मनेपदं भवतीति । अत्र भासनोपमन्त्रणे धातोर्वाच्ये । इतरे प्रयोगोपाधयः । शास्त्रे वदते भासमानो ब्रवीतीत्यर्थः । भृत्यानुपवदते सान्त्वयतीत्यर्थः । ज्ञाने शास्त्रे वदते । यत्ने क्षेत्रे वदते । विमतौ क्षेत्रे विवदन्ते । उपमन्त्रणे भार्यामुपवदत इत्यादिकमुदाहरणं द्रष्टव्यम् । प्रकृते चायं वदतिर्भासनार्थ उपसम्भाषार्थश्च विवक्षितः । ततश्च करणे कर्तृत्वोपचारात्पैङ्गिकानां श्रुतिर्भासमाना ब्रवीति । उक्तशङ्काकर्तारं सान्त्वयतीति चार्थः सम्पद्यत इति ध्येयम् ॥

**वं०प०**— नन्विममर्थं श्रुत्यनुदाहरणे परः कथमङ्गीकरिष्यतीत्यत उक्तम् **वाच्यत्वस्येति** । **अर्थकथन-मात्रेणैवेति** । अवाच्यत्वप्रतिपादनपरश्रुत्यादीनामद्भुतत्वादिरूपार्थकथनमात्रेणैवालम् । अद्भुतवादवाच्यं तदित्यादि पैङ्गिश्रुत्युदाहरणं किमर्थं कृतमित्यर्थः ।

**आनन्दः**— ननु वदेः परस्मैपदित्वात्कथमूद इति लिडात्मनेपदप्रयोग इत्यत आह **भासनेति**।

**श्रीनिधि०**— **भासनोपसम्भाषेत्यात्मनेपदमिति** । वचनकर्तुः प्रकाशने विवक्षिते आत्मनेपदं भवति । भासनं च **प्रकाशनमिति** ।

**वा०चं०**— नन्वियता प्रबन्धेनावाच्यत्वनिरासादद्भुतत्वेनावाच्यत्वप्रतिपादनपरश्रुत्युदाहरणं प्रकृतविरुद्ध-मित्यत उत्तरवाक्यतात्पर्यं वक्तुं शङ्कामुत्थापयति **नन्विति** । अद्भुतशब्दस्यादिभूभ्यां डुतजित्यद्भवतीति वाऽद्भूयत इति वाऽद्भूतमिति कर्तरि कर्मणि वा डुतच्प्रत्ययान्तत्वेऽप्यौणादिकानां रूढिमाश्रित्य प्रवृत्तिनियमात् । आश्चर्ये तद्रूढिमाश्रित्याह **आश्चर्यतमत्वादिति** । बहुगुणस्यैव दुर्लभत्वादाश्चर्यत्वेऽप्यनन्तगुणपूर्णत्वादित्यद्भुतत्वप्रयोजके-ऽतिशयोक्त्या प्रयोज्ये आश्चर्यत्वेऽप्यतिशयो भाष्येऽभिमतः । आश्चर्यस्यैवावाच्यत्वेन व्यवहारात् । अत एव 'अवाच्यमिति लोकोऽपि वक्त्याश्चर्यतमं भुवि' इति वक्ष्यतीत्याशयेन तमबन्ततया व्याख्यातम् । अनन्तगुण-पूर्णत्वस्य हेत्वन्तरत्वे चशब्दाभावादप्रयोजकत्वापाताच्च हेतुसाधकतया तदवतारयति **कथमिति** । तस्य हेतुत्वं घटयति **दुर्लभं हीति** । वदतेः 'शेषात्कर्तरि परस्मैपदम्' इति परस्मैपदित्वादात्मनेपदानुपपत्तिरित्यत आह **भासनेति** । उपसान्त्वनरूपोपसम्भाषाया उपच्छन्दनरूपोपमन्त्रणस्य च धातुविशेषणत्वम् । भासनादीनां च





धात्वर्थविशेषणत्वम् । तत्र चोपसम्भाषायत्नविमत्युपमन्त्रणानां प्रकृतेऽसम्भवाद्भासनज्ञानयोर्धात्वर्थविशेषणत्वम् । तथा च वदते चार्बीलोकायत इत्यत्र शिष्यैः स्तूयमानो भासते । तथा चोपर्युपरि शास्त्रार्थप्रतिभासात्सुष्ठु सूत्रपदार्थान्वक्ति । तेजोभङ्गे तु न शक्नुयाद्वदितुमिति भासनस्य धात्वर्थभूतवदनं प्रति हेतुतया विशेषणत्ववत् तत्र तत्रैवोदाहरणे वदितुं जानातीति ज्ञानस्य विषयित्वेन धात्वर्थभूतवदनविशेषणत्ववद्वा स्पष्टतया भासमाना श्रुति-रिममर्थं सुष्ठु वदतीति वा स्पष्टत्वादियं श्रुतिरिममर्थं वदितुं जानातीति वा धात्वर्थविशेषणत्वेन भासनादे-र्विवक्षितत्वादात्मनेपदमित्यर्थः । अर्थकथनमात्रस्याप्रयोजकत्वादर्थकथनपरश्रुत्युदाहरणं भाष्य इति भ्रान्तिं निरस्यति **वाच्यत्वस्येति** ।

**वा०र०— शेषात्कर्तरीति** । आत्मनेपदनिमित्तहीनस्य धातोः शेषपदार्थत्वात्प्रकृते च स्वरितञित इत्याद्युक्तस्वरितेत्वादिनिमित्ताभावात्परस्मैपदं प्राप्तमित्याशयः । मञ्जर्याद्यनुसारेण सूत्रप्रमेयं वदन् प्रकृते तत्सूत्रेणार्थविशेषे आत्मनेपदमुपपन्नमित्युपपादयति **उपसान्त्वनेत्यादिना** । एतदपि तत्सूत्रविचारानुसारेण व्याकर्तव्यमस्ति । **अप्रयोजकत्वादिति** । कोऽर्थस्तर्हीति शङ्कानिरासाक्षमत्वादित्यर्थः । **भ्रान्तिमिति** । अप्रयोजकत्वं मनसि निधाय तदर्थकथनपरश्रुत्युदाहरणं भाष्ये कृतमिति भ्रान्तिमित्यर्थः । अन्यश्रुत्युदाहरणं व्यर्थमापद्येतेति भ्रान्तिमूलं द्रष्टव्यम् ।

**स०व्र०—** ननु वदतेः परस्मैपदित्वात् कथं ऊद इत्यात्मनेपदप्रयोग इत्यत आह **भासनोपसम्भाषेति** । अयं च भासनार्थकः । तथा च पैङ्गिनां श्रुतिरित्यर्थमूदे प्रकटीचकारेत्यर्थः ।

**विठ्ठल०—** ननु वदतेः शेषात्कर्तरीति परस्मैपदत्वमित्युवाचेति वक्तव्ये कथम् इत्यूदे इत्यात्मनेपदप्रयोग इत्यत आह **भासनेति** । भासनोपसम्भाषा ज्ञानयत्नविमत्युपमन्त्रेषु वद इति सूत्रस्यायमर्थः । भासनं प्राकट्यं, उपसम्भाषा = उपसांत्वनं, उपमन्त्रमुपच्छन्दनं प्रार्थनमिति यावत् । एषु विशेषेषु वदतेरात्मनेपदं भवतीति, प्रकृते भासनार्थे आत्मनेपदं श्रुतिः ऊदे = प्रकटीचकारेत्यर्थः ।

**चषकः—** अथ वदतेरात्मनेपदनिमित्तभूतङित्त्वानुदात्तत्वस्वरितेत्वञित्वविनिर्मुक्ततया 'शेषात् कर्तरि' इति परस्मैपदितैव न्याय्येति कथमात्मनेपदि निर्देश इत्यत आह **भासनेति** । भासनोपसम्भाषाज्ञानयत्न-विमत्युपमन्त्रणेषु वद इत्यस्यार्थः । उपसम्भाषोपमन्त्रणे धातोर्वाच्ये । इतरे प्रयोगोपाधयः । अस्य उदाहरणानि । शास्त्रे वदते भासमानो ब्रवीतीत्यर्थः । भृत्यानुपवदते सान्त्वयतीत्यर्थः । ज्ञाने शास्त्रे वदते तत्त्वं जानातीत्यर्थः । यत्ने क्षेत्रे वदते प्रयतत इत्यर्थः । विमतौ विप्रा वदन्ते विवदन्तीत्यर्थः । भार्यामुपवदते प्रार्थयत इत्यर्थः । प्रकृते च वदतेर्भासनार्थतयोपसम्भाषार्थतया वा करणे कर्तृत्वोपचारेण श्रुतिर्भासमाना ब्रवीति दर्शितदिशा शङ्कमानान् सान्त्वयतीति वार्थः सङ्गच्छत इति मन्तव्यम् ।

**॥ इति श्रुतिबलात्तदर्थकथनम् ॥**

* * *





**॥ ततो रूढिबलात्तदर्थकथनम् ॥**

**१२४ सु०— आश्चर्यं हि वस्तु वाच्यमपि न तेन तेनाकारेण विशेषतो निर्देष्टुं शक्यते । व्युत्पत्त्यभावात्, वाङ्मनसयोर्व्याकुलत्वाद्वेत्यतोऽवाच्यमित्युच्यते । मुख्यातिक्रमेणामुख्य-प्रयोगे किं प्रयोजनमिति चेत् । स्यादयं प्रयोजनानुयोगो यद्ययं स्वतन्त्रप्रयोगः स्यात् । नैतदस्ति, रूढत्वात् ॥ यथोक्तम्, 'रूढोपचारो रूढलक्षणोपचारो लक्षणा' इति, अन्योऽप्याह 'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्' इति । तदिदमाह अवाच्यमिति ।**

## अनु०— अवाच्यमिति लोकोऽपि वक्त्याश्चर्यतमं भुवि ॥

**परि०—** अमुख्यवृत्तौ रूढारूढभेदेन द्वैविध्यं कुत्रोक्तमित्यत आह **यथोक्तमिति** । न्याय-विवरणे । **अन्योऽपीति** । काव्यप्रकाशिकाकार इत्यर्थः ।

**आनन्दः— मुख्यार्थबाध इति** । तथा च मुख्यार्थबाधमुख्यार्थयोगरूढितः रूढौ सत्यां रूढलक्षणात्तदभावे प्रयोजनात्प्रयोजनमनुसृज्य या लक्षणा स्वतन्त्रलक्षणेत्यर्थः ।

**श्रीनिधि०— वाङ्मनसोर्व्याकुलत्वादिति** । आह्लादेनेति भावः । रूढितः प्रयोजनाच्च लक्षणेति उत्तरेण सम्बन्धः ।

**वा०चं०—** अवाच्यमित्युत्तरवाक्ये रूढप्रयोगत्वात् प्रयोजनानपेक्षाप्रतिपादनेनावाच्यशब्दे गौणी वृत्ति-राश्रितेति प्रतीतेरवाच्यादिपदाच्छब्दमर्यादया तदप्रतीतेश्चाद्भुतत्वादिति नावाच्यपदप्रवृत्तिनिमित्तकथनं नापि गुण-कथनम् । शौर्यादिः सिंहनिष्ठत्ववदवाच्यपदमुख्यार्थेऽद्भुतत्वस्याभावात् । अतो गुणप्रयोजककथनमेतदित्याशयेन तस्य गुणलाभार्थतां व्युत्पादयति **आश्चर्यं हीति** । **अवाच्यमिति** । समासेन वा यतो वाचो निवर्तन्त इति वा वाक्येन स्वावयवपदशक्यसंसर्गविशिष्टे सर्वथा वाच्यत्वाभाववति मुख्यार्थे वस्तुनि वाचकपदाभावेन निर्देष्टु-मशक्यत्वं तावद्वर्तते । स च निर्देष्टुमशक्यत्वरूपो गुण आश्चर्ये वस्तुन्यपि तेन तेनाकारेण विशेषतो निर्देष्टुमशक्ये वर्तते । न च तत्तदाकारविशेषवाचकशब्दाभावे सोऽप्यवाच्यपदादिमुख्यार्थ एव । तद्भावे वा कथं तेन निर्देष्टुमशक्यत्वमिति वाच्यम् । वाचकशब्दसद्भावेऽपि व्युत्पत्त्यभावेन वा वाङ्मनसयोर्व्याकुलत्वाद्वा तेन निर्देष्टुमशक्यत्वोपपत्तेः । तथा च तेन गुणेन निमित्तेनाश्चर्येऽवाच्यमिति प्रयोगोपपत्तिरिति भावः । नन्वेवं यदि गौणी वृत्तिरभिमता तर्हि रूढिप्रयोजकप्रयोगप्रदर्शकोत्तरवाक्यविरोध इत्यतस्तद्गौणत्वोपपादकतया तदवतारयति **मुख्येति** । ननु गौण्या अमुख्यवृत्तित्वात्कथं तत्र रूढ्याश्रयणमित्यतोऽमुख्यवृत्तावपि रूढारूढभेदं सिद्धान्त-





सम्मत्या काव्यप्रकाशसम्मत्या च दर्शयति **यथोक्तमित्यादिना**। मुख्यवृत्ताविवामुख्यवृत्तावपि बहुलप्रयोगभावाभावाभ्यां रूढारूढभेदाश्रयणे बाधकाभावादिति भावः। यथा चैतत्तथाऽऽकर एव स्फुटं वक्ष्यति॥

मध्वशास्त्रार्थजलधावामग्नो जगृहे रसम्। तद्वृष्ट्याऽतोषयत्प्राज्ञान्गुरुमेघं तमाश्रये ॥ १ ॥
मया विरचिता न्यायसुधावाक्यार्थचन्द्रिका। अनया भावि यत्पुण्यं तदाप्नोतु गुरुर्मम ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमद्वेदव्यासतीर्थपूज्यपादानां शिष्येण विद्याधीशयतिना विरचितायां श्रीमन्न्यायसुधाविवृतौ वाक्यार्थचन्द्रिकायामधिकरणपञ्चकं समाप्तम्॥

**वा०र०— अवाच्यमित्युत्तरवाक्य इत्यादि**। व्याख्येयमस्ति। **सिद्धान्तसम्मत्येति**। न्यायविवरणे तथा प्रतिपादनात्तत्सम्मत्येत्यर्थः। वृत्तिविचारस्यानन्दमयाधिकरणे करिष्यमाणत्वाद्बहूपपादनापेक्षत्वाच्च तत्रैवैतदुपपादनमवगन्तव्यम्। तथा तत्राधिकव्युत्पादनादिकं च तद्व्याख्यावसरे स्पष्टीभविष्यतीति नेह तद्विवरणादिकमित्याशयेनाह **यथा चैतदिति**।

एवं पञ्चाधिकरणीव्याख्यायान्ते स्वगुरोर्मेघश्लेषेणाश्रयणं प्रार्थयते **मध्वेति**। तं प्रसिद्धं वेदव्यासतीर्थमित्यप्यर्थः। 'अनन्दा नाम ते लोका' इत्यत्र सत इत्यस्य प्रसिद्धचर्थतया पूर्वमूले व्याख्यानदर्शनात्। एवमन्यत्रापि। स्वकृतग्रन्थनिर्माणफलं गुरावर्पयति **मयेति**। इत्यशेषमतिमङ्गलम्॥

एवं क्वचित्क्वचित्पाठशोधव्याख्यासु सेविता।
वाक्यार्थचन्द्रिका भूयान्मद्धृत्तापविनाशिनी॥

आनन्दाब्धिं प्रजातत्रिदशतरुगुरुश्रीनिवासानुजश्री-
विद्याधीशाख्यरत्नाद्भुतविदमृतगोः केशवाचार्यवर्यात्।
श्रीरुग्मिण्यायां प्रजातस्य विबुधनरसिंहस्य गुर्वीयसौध-
व्याख्यापाठादिशोधात्मकविवृतिकृता वीक्षणस्थो न योगात्॥

इति श्रीमत्सकलविद्वद्बृन्दशिखामणि श्रीपाण्डुरङ्गकेशवाचार्यवरगुरुनामक-
श्रीविद्याधीशतीर्थश्रीमच्चरणविरचित-श्रीमन्न्यायसुधापञ्चाधिकरणीविषमपदवाक्यार्थविवरणरूप-
वाक्यार्थचन्द्रिकायाः व्याख्यापाठादिशोधात्मकविवृत्तौ
श्रीगुरुराजपुत्र-पाण्डुरङ्गनरसिंहसूरिविरचितायां
वाक्यार्थरत्नमालाभिधायाम् ईक्षत्यधिकरणं समाप्तम्॥

श्रीमन्मद्गुरुराजवरगुरुश्रीमद्विद्याधीशतीर्थश्रीमच्चरणप्रीतिरस्तु॥





**विठ्ठल०**— अद्भुतत्वं कथमवाच्यत्वे हेतुर्भवतीत्यत आह **आश्चर्यं हीति** । स्वतन्त्रप्रयोगः स्यादित्यस्य लोकप्राप्तबहुप्रयोगानुसरणं विना केवलं प्रयोगमात्रं स्यादित्यर्थः । प्रयोजनमनपेक्ष्य रूढलक्षणादिकमस्तीत्यत्र न्यायविवरणसम्मतिं दर्शयति **यथोक्तमिति** । **अन्यः** काव्यप्रकाशिकाकारः । मुख्यार्थबाध इत्यस्य अन्यार्थो लक्ष्यते । यत्सा इत्युत्तरार्धेनान्वयः ।

**चषकः**— **वाङ्मनसयोरिति**। 'अचतुरविचतुर' इत्यादिना अजन्ततया निपातितत्वात्साधुताऽवसेया।

**॥ इति रूढिबलात्तदर्थकथनम् ॥**

* * *

**॥ ततश्च श्रुतिव्याख्यानस्थलस्यौचित्यम् ॥**

**१२५ सु०— नन्वेतच्छ्रुतिव्याख्यानं सूत्रव्याख्यानानन्तरमेव कर्तव्यम् । तत्रैव पूर्वपक्षश्रुतेः शङ्कितत्वात् । अत्र व्याख्यानं तु न सङ्गतमिति ॥ मैवम् । सूत्रपूर्वपक्षिणे वाऽपव्याख्यात्राऽपि लक्षणया ब्रह्मणि समन्वयं समर्थयमानेनैतच्छ्रुतिस्मृत्युपादानस्य कर्तुमुचितत्वात् । तथा च उभौ प्रति सूत्रव्याख्याऽपव्याख्याप्रत्याख्यानयोरवसाने श्रुत्यादिव्याख्यानं युक्तमेवेति ॥**

**गु०दी०**— **सूत्रपूर्वपक्षिणे वा अपव्याख्यात्राऽपि** इत्यत्र ब्रह्मणः शब्दावाच्यत्वं वदन् सूत्रपूर्वपक्षी सूत्राणां प्रकृतिनिराकरणार्थतां वदन् अपव्याख्यातेत्यर्थः ।

**वं०प०**— **सूत्रव्याख्यानानन्तरमेवेति**। न त्वपव्याख्याननिराकरणानन्तरमित्यर्थः। अपव्याख्यानकर्त्रा एवोक्तप्रमेये अशब्दमित्यादिश्रुतेरनुपात्तत्वादिति भावः । **तत्रैवेति** । समन्वयसूत्रे संशब्देन ब्रह्मणो वाच्यत्वोक्तौ सूत्रपूर्वपक्षिणाऽशब्दमित्यादिश्रुत्यवष्टम्भेनावाच्यत्वे पूर्वपक्षिते ईक्षतेरित्यादिसूत्राण्यवाच्यतानिराकरणेन वाच्य-त्वसमर्थनपरतया व्याख्याय तदनन्तरमेव पूर्वपक्ष्याशङ्कितश्रुतिव्याख्यानं कर्तव्यमित्यर्थः । **कर्तुमिति** । लक्षणया समन्वये प्रमाणत्वेनैतच्छ्रुत्युदाहरणस्य कर्तुं शक्यत्वादित्यर्थः ॥

**श्रीनिधि०**— **तथा चोभौ प्रतीति**। अन्यथा पूर्वपक्षनिरासमात्रशेषत्वं श्रुत्यर्थकरणस्य ज्ञेयतेति भावः।

**विठ्ठल०**— **सूत्रपूर्वपक्षिणे वेति** । सूत्रपूर्वपक्षित्वेनास्माभिरुक्तस्यैव वस्तुतोऽपव्याख्यातृत्वेनैत-च्छ्रुत्याद्युदाहरणं पूर्वपक्षेऽपव्याख्याने समानमिति ज्ञेयम् ।

**॥ इति श्रुतिव्याख्यानस्थलस्यौचित्यम् ॥**





**॥ इति परेषां व्याख्यानस्य प्रत्याख्याने अवाच्यत्वाद्यभिधात्रीणां श्रुतिस्मृतीनां व्याख्यानम् ॥**

**॥ इति एतदधिकरणीयस्य परेषां व्याख्यानस्य प्रत्याख्यानम् ॥**

* * *

**॥ अथ ईक्षत्यधिकरणार्थोपसंहारः ॥**

**१२६ सु०— तदेवं ब्रह्मणो वाच्यत्वाद्गतिसामान्याच्च युक्तं समन्वयसूत्रमिति सिद्धम् ॥**

**परि०**— पूर्वसूत्रसंशब्दार्थद्वयाक्षेपसमाध्यर्थमिदमित्युक्तमेतदधिकरणोपक्रमे । तत्समाधिप्रकारं व्यञ्जयन्नुपसंहरति **तदेवमिति** । **गतीति** । सर्वशास्त्रोत्पाद्यज्ञानस्यैकरूपत्वादित्यर्थः । एतच्च तृतीयतृतीये विवरिष्याम इति भावः ।

**विठ्ठल०**— उभावित्युक्तिस्तूक्तपक्षद्वयाभिप्रायेणेति उपसंहरति **तदेवमिति** । वाच्यत्वेन मुख्यार्थत्वसिद्धेर्गतिसामान्यात् सर्ववेदोत्पाद्यज्ञानस्यैकप्रकारत्वात् सर्वशास्त्रार्थत्वसिद्धेरेतत्प्रतिपादकं समन्वयसूत्रं युक्तमित्यर्थः ॥

**चषकः**— अधिकरणार्थं निगमयति **तदेवमित्यादिना सिद्धमित्यन्तेन** ।

सौधपञ्चाधिकरणीदुर्वेदतमफक्किकाः । काश्चिदार्तीथपत्कृष्णो गुरुपादाब्जसंस्मृतेः ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणश्रीसत्यप्रियतीर्थपूज्यपादतनूजसर्वतन्त्रस्वतन्त्रश्रीनिवासार्यान्तेवास्यन्तेगणगणितेन कृष्णशर्मणा विरचिता सौधचषकनाम्नी ईक्षतिनयव्याख्या समाप्तोत् ॥

**॥ इति ईक्षत्यधिकरणार्थोपसंहारः ॥**

**॥ इति वचनवृत्त्यैव सकलशास्त्रप्रतिपाद्यं ब्रह्म ॥**

## ॥ इति ईक्षत्यधिकरणम् ॥

॥ १-१-५ ॥

***

# इति जन्माधिकरणात् अधिकरणचतुष्टयम् ॥

***



# परिशिष्टानि



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# ब्रह्मसूत्रानुव्याख्यानम्

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

नारायणं निखिलपूर्णगुणैकदेहं
निर्दोषमाप्यतममप्यखिलैः सुवाक्यैः ।
अस्योद्भवादिदमशेषविशेषतोऽपि
वन्द्यं सदा प्रियतमं मम सन्नमामि ॥ १ ॥

तमेव शास्त्रप्रभवं प्रणम्य
जगद्गुरूणां गुरुमञ्जसैव ।
विशेषतो मे परमाख्यविद्या-
व्याख्यां करोम्यन्वपि चाहमेव ॥ २ ॥

ब्रह्मसूत्राणां परविद्यात्वं प्रमाणतमत्वं च

प्रादुर्भूतो हरिर्व्यासो विरिञ्चिभवपूर्वकैः ।
अर्थितः परविद्याख्यं चक्रे शास्त्रमनुत्तमम् ॥ ३ ॥

गुरुर्गुरूणां प्रभवः शास्त्राणां बादरायणः ।
यतस्तदुदितं मानमजादिभ्यस्तदर्थतः ॥ ४ ॥

वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलता ।
आप्तवाक्यतया तेन श्रुतिमूलतया तथा ॥ ५ ॥

युक्तिमूलतया चैव प्रामाण्यं त्रिविधं महत्।
दृश्यते ब्रह्मसूत्राणामेकधाऽन्यत्र सर्वशः ॥ ६ ॥

अतो नैतादृशं किञ्चित्प्रमाणतममिष्यते।
स्वयं कृताऽपि तद्व्याख्या क्रियते स्पष्टतार्थतः ॥ ७ ॥

ॐकारस्य सूत्रावयवत्वम्

तत्र ताराथमूलत्वं सर्वशास्त्रस्य चेष्यते।
सर्वत्रानुगतत्वेन पृथगोङ्क्रियतेऽखिलैः ॥ ८ ॥

## ॥ जिज्ञासाधिकरणम् ॥

**ॐ अथातो ब्रह्मजिज्ञासा ॐ ॥ १-१-१ ॥**

गुणपूर्णत्वं ॐकारार्थः

ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम्।

गुणपूर्णस्य जिज्ञास्यत्वम्

स एव ब्रह्मशब्दार्थो नारायणपदोदितः ॥ ९ ॥

स एव भर्गशब्दार्थो व्याहृतीनां च भूमतः।
भावनाच्चैव सुत्वाच्च सोऽयं पुरुष इत्यपि ॥ १० ॥

स एव सर्ववेदार्थो जिज्ञास्योऽयं विधीयते।

विष्णुप्रसादस्य मोक्षसाधनत्वम्

'ज्ञानी प्रियतमोऽतो मे' 'तं विद्वानेव चामृतः' ॥ ११ ॥





'वृणुते यं तेन लभ्यः' इत्याद्युक्तिबलेन हि।
जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यते ॥ १२ ॥

'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया' ॥ १३ ॥

'नर्ते त्वत्क्रियते किञ्चने'त्यादेर्न हरिं विना।
ज्ञानस्वभावतोऽपि स्यान्मुक्तिः कस्यापि हि क्वचित् ॥ १४ ॥

'अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः।
आनन्ददश्च मुक्तानां स एवैको जनार्दनः ॥ १५ ॥

बन्धमिथ्यात्वनिरासः

इत्युक्तेर्बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते।
मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधतः ॥ १६ ॥

मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याग्रतो भवेत्।

मिथ्यायाः साधकत्वासम्भवः

मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः ॥ १७ ॥

तच्च मिथ्याप्रमाणेन सता वा साध्यते त्वया।
सता चेद् द्वैतसिद्धिः स्यान्न सिद्धं चान्यसाधनम् ॥ १८ ॥

साधकत्वं सतस्तेन साक्षिणा सिद्धिमिच्छता।
स्वीकृतं हि

निर्विशेषस्य साधकत्वासम्भवः

अविशेषस्य साध्या साधकता पुनः ॥ १९ ॥

तच्चाविशेषमानेन साध्यमित्यनवस्थितिः ।
अनङ्गीकुर्वतां विश्वसत्यतां तन्न वादिता ॥ २० ॥

व्यवहृतेः सत्यत्वम्

तस्माद् व्यवहृतिः सर्वा सत्येत्येव व्यवस्थिता ।
व्यावहारिकमेतस्मात्सत्यमित्येव चागतम् ॥ २१ ॥

व्यवहारसतः साधकत्वासम्भवः

व्यवहारसतश्चापि साधकत्वं तु पूर्ववत् ।

सत्त्रैविध्यनिरासः

सत्त्रैविध्यं च मानेन सिद्ध्येत्केनेति पृच्छ्यते ॥ २२ ॥
तस्याप्युक्तप्रकारेण नैव सिद्धिः कथञ्चन ।

सदसद्विलक्षणत्वनिरासः

वैलक्षण्यं सदसतोरप्येतेन निषिद्ध्यते ॥ २३ ॥
वैलक्षण्यं सतश्चापि स्वयं सद्भेदवादिनः ।
असतश्चापि विश्वस्य तेनानिष्टं कथं भवेत् ॥ २४ ॥
यद्युच्यतेऽपि सर्वस्मादिति सद्भेदसंस्थितिः ।
सन्मात्रत्वं ब्रह्मणोऽपि तस्मात्तदपि नो भवेत् ॥ २५ ॥

पराभिमतज्ञानबाध्यत्वनिरासः

ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिनः ।

स्वमते ज्ञानबाध्यत्वस्वरूपं, ख्यातिवादः

विज्ञातस्यान्यथा सम्यग् विज्ञानं ह्येव तन्मतम् ॥ २६ ॥





### असतः प्रतीतिसद्भावः

असद्विलक्षणज्ञप्त्यै ज्ञातव्यमसदेव हि।
तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते ॥ २७ ॥

अन्यथात्वमसत्तस्माद्भ्रान्तावेव प्रतीयते।
सत्त्वस्यासत एवं हि स्वीकार्यैव प्रतीतता ॥ २८ ॥

तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिः।

### अज्ञानासम्भवः

निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेत् ॥ २९ ॥

मिथ्याविशेषोऽप्यज्ञानसिद्धिमेव ह्यपेक्षते।
न चावरणमज्ञानमसत्यं तेन चेष्यते ॥ ३० ॥

अप्रकाशस्वरूपत्वाज्जडेऽज्ञानं न मन्यते।
अज्ञानाभावतः शास्त्रं सर्वं व्यर्थीभविष्यति ॥ ३१ ॥

अज्ञानस्य च मिथ्यात्वमज्ञानादिति कल्पने।
अनवस्थितिस्तथा च स्यादन्योन्याश्रयताऽथवा ॥ ३२ ॥

### स्वभावाज्ञानवादः

स्वभावाज्ञानवादस्य निर्दोषत्वान्न तद्भवेत्।

### अविद्यादुर्घटत्वनिरासः

अविद्यादुर्घटत्वं चेत्स्यादात्मापि हि तादृशः ॥ ३३ ॥

### मायावादे विषयाद्यसम्भवः

अतोऽधिकारिविषयफलयोगादिवर्जितम्।
अनन्तदोषदुष्टं च हेयं मायामतं शुभैः ॥ ३४ ॥

जीवब्रह्मणोरैक्यस्य शास्त्रविषयत्वासम्भवः

सत्यत्वात्तेन दुःखादेः प्रत्यक्षेण विरोधतः।
न ब्रह्मतां वदेद्वेदो जीवस्य हि कथञ्चन ॥ ३५ ॥

यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेत्।
ब्रह्मत्वमपि जीवस्य प्रत्यक्षस्याविशेषतः ॥ ३६ ॥

सार्वज्ञादिगुणं जीवाद्भिन्नं ज्ञापयति श्रुतिः।
ईशं तामुपजीव्यैव वर्तते ह्यैक्यवादिनी ॥ ३७ ॥

उपजीव्यविरोधेन नास्यास्तन्मानता भवेत्।

ऐक्यश्रुतीनां सावकाशता

स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि ॥ ३८ ॥

सादृश्ये चैक्यवाक् सम्यक् सावकाशा यथेष्टतः।
अवकाशोज्झिता भेदश्रुतिर्नातिबला कथम् ॥ ३९ ॥

अज्ञानासम्भवादेव मिथ्याभेदो निराकृतः।

बन्धस्य विष्णुप्रसादेन निवृत्तिः

अतो यथार्थबन्धस्य विना विष्णुप्रसादतः ॥ ४० ॥

अनिवृत्तेस्तदर्थं हि जिज्ञासाऽत्र विधीयते।
यथा दृष्ट्या प्रसन्नस्सन् राजा बन्धापनोदकृत् ॥ ४१ ॥

एवं दृष्टः स भगवान् कुर्याद्बन्धविभेदनम्।

इष्टसाधनतातिरिक्तकार्यताभावः

कार्यता च न काचित् स्यादिष्टसाधनतां विना ॥ ४२ ॥

कार्यं न हि क्रियाव्याप्यं निषिद्धस्य समत्वतः।
न भविष्यत्क्रिया कार्यं स्रक्ष्यतीश इति ह्यपि ॥ ४३ ॥

कार्यं स्यान्नैव चाकर्तुमशक्यं कार्यमिष्यते।
साम्यादेव निषिद्धस्य तदिष्टं साधनं तथा ॥ ४४ ॥

कार्यं

भगवत एव इष्टत्वं इष्टसाधनत्वं च

साधनमिष्टस्य भगवानिष्टदेवता।
मुख्येष्टं वा सुमनसां 'प्रेयस्तदि'ति च श्रुतिः ॥ ४५ ॥

'प्राणबुद्धिमनःखात्मदेहापत्यधनादयः।
यत्सम्पर्कात् प्रिया आसंस्ततः कोन्वपरः प्रियः'॥ ४६ ॥

इत्यादिवाक्यैराकाङ्क्षा सन्निधिर्योग्यता यतः।
तस्मिन्नेव समस्तस्येति

इष्टे सिद्धविशेषे व्युत्पत्तिः

इष्टे व्युत्पत्तिरिष्यते ॥ ४७ ॥

अत्त्यपूपांस्तव भ्रातेत्यादावावापतोऽपि च।
उद्वापाद्वर्तमानत्वादाकाङ्क्षादिबलादपि ॥ ४८ ॥

बालो व्युत्पत्तिमप्येति नानयेत्यादि वाक्यतः।

वर्तमाने अर्थे प्रथमं व्युत्पत्तिः,
भविष्यति अर्थे पश्चात्तनी

आनीयमानदृष्ट्यैव व्युत्पत्तेः सम्भवे सति ॥ ४९ ॥

एष्यदानयनायायं कुत एव प्रतीक्षते ।
व्युत्पन्नो वर्तमाने तु क्रियाशब्दे भविष्यति ॥ ५० ॥

पुनर्दृष्ट्यैव शब्दश्रुत् पश्चाद्व्युत्पत्तिमेष्यति ।

परांभ्युपगते कार्ये न कदाचिद् व्युत्पत्तिः

वर्तमानमतीतञ्च भविष्यदिति च क्रमात् ॥ ५१ ॥

आकाङ्क्षादियुतं यस्माद्विधेर्व्युत्पादनं कुतः ।
दृष्ट्या ज्ञातपदार्थस्य स्यादाकाङ्क्षा भविष्यति ॥ ५२ ॥

व्युत्पत्तिः प्रथमा तस्माद्वर्तमानेऽगते ततः ।

इष्टस्य भगवतः मुख्यप्रयोजनत्वं, ज्ञानस्य तत्साधनत्वम्

इष्टमाकाङ्क्षते सर्वो न प्रवृत्तिमपेक्षते ॥ ५३ ॥

अपरोक्षं परोक्षं वा ज्ञानमिष्टस्य साधनम् ।
क्वापि चेष्टा तदर्था स्यादत्तिर्हि रसवित्तये ॥ ५४ ॥

वाक्यार्थज्ञानमात्रेण क्वचिदिष्टं भवेदपि ।

कार्यपरत्वेऽपि उपासनार्थत्वेन ब्रह्मणि तात्पर्यवत्त्वम्

न च स्रुक्स्रुववह्नयादावतात्पर्यं श्रुतेर्भवेत् ॥ ५५ ॥

यत्किञ्चित्करणस्यापि यज्ञतैवाऽन्यथा भवेत् ।
तस्मादुपासनार्थं च स्वार्थे तात्पर्यवद्भवेत् ॥ ५६ ॥

इतिशब्दस्य प्रकारवाचित्वम्

इतिशब्दोन्नयेऽग्नावित्यप्युन्नीते स्मृतिर्भवेत् ।





इतिशब्दव्यपेतानि ह्यपि सन्ति वचांस्यलम् ॥ ५७ ॥

आत्मानमेवेत्यादीनि योगेऽग्नावपि तत्समम्।

वेदान्ता ब्रह्मनिष्ठा अपरो वेदभागः कार्यनिष्ठ इति वाक्यभेदो न युक्तः

एकवाक्यत्वयोगे तु वेदस्यापि ह्यशेषतः ॥ ५८ ॥

वाक्यभेदो न युक्तस्स्याद्योगश्च स्यान्महाफले।
इति ब्रूयादिति वचो गतमग्नौ समीपगम् ॥ ५९ ॥

कल्पनागौरवं चेत् स्यात् पृथक्तात्पर्यकल्पने।
कल्पनागौरवादेव पदार्था न स्युरेव हि ॥ ६० ॥

प्रमाणावगतत्वं चेत्तात्पर्याणां तथैव हि।

सत्यज्ञानादिपदानां पदार्थे वाक्यार्थे चेत्युभयत्र तात्पर्यम्

तस्मात् पदार्थे वाक्यार्थे तात्पर्यमुभयत्र च ॥ ६१ ॥

पृथगेव च वाक्यत्वं पृथगन्वयतो भवेत्।
अवान्तरत्वाद्वाक्यानां वाक्यभेदो न दूषणम् ॥ ६२ ॥

अङ्गीकृतत्वादपि तैः पदानां तु पृथक् पृथक्।
क्रियापदेनान्वयस्य वाक्यभेदो हि दूषणम् ॥ ६३ ॥

प्रत्यक्षादिविरोधे तु गौणार्थस्यापि सम्भवात्।
अतात्पर्यं पदार्थेऽपि न कल्प्यमविरोधतः ॥ ६४ ॥

'अतः'शब्दार्थोपसंहारः

अतो ज्ञानफलान्येव कर्माणि ज्ञानमेव हि।
मुख्यप्रसाददं विष्णोर्जिज्ञासायाश्च तद्भवेत् ॥ ६५ ॥

कर्तव्या तेन जिज्ञासा श्रुतिप्रामाण्ययोगतः ।

आगमस्य स्वतःप्रामाण्यम्, प्रामाण्यं स्वतः अप्रामाण्यं परतः

प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि ॥ ६६ ॥

अनवस्थाऽन्यथा हि स्यादप्रामाण्यं तथाऽन्यतः ।
मिथ्याज्ञप्तिप्रलम्भादेस्तेन वेदविरोधि यत् ॥ ६७ ॥

न मानम्

वेदानामपौरुषेयत्वम्

अपि वेदानामङ्गीकार्या हि नित्यता ।
न हि धर्मादिसिद्धिः स्यान्नित्यवाक्यं विना क्वचित् ॥ ६८ ॥

अविप्रलम्भस्तज्ज्ञानं तत्कृतत्वादयोऽपि च ।
कल्प्या गौरवदोषेण पुंवाक्यं ज्ञापकं न तत् ॥ ६९ ॥

प्रत्यक्षः कस्यचिद्धर्मो वस्तुत्वादिति चोदिते ।
न बुद्धो धर्मदर्शी स्यात् पुंस्त्वादित्यनुमाहतिः ॥ ७० ॥

अधर्मवादिनो वाक्यमप्रयोजनमेव हि ।
धर्माभावोऽपि नो तेन प्रत्यक्षावगतो भवेत् ॥ ७१ ॥

अतः संशयसम्पत्तौ वाक्यं प्रत्यक्षवत्प्रमा ।

योग्येतरान्विताभिधानवादः

शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते ॥ ७२ ॥

अतोऽन्विताभिधायित्वं गौरवं कल्पनेऽन्यथा ।
न चाशक्त्याभिधायित्वं प्रवृत्तिश्च द्विधान्यथा ॥ ७३ ॥





### ब्रह्मतर्कः

एतत्सर्वं तर्कशास्त्रे ब्रह्मतर्के हि विस्तरात् ।
उक्तं विद्यापृथक्त्वाच्च सङ्क्षेपेणात्र सूचितम् ॥ ७४ ॥

प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः ।
मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम् ॥ ७५ ॥

ब्रह्मतर्कं च भगवान् स एव कृतवान् प्रभुः ।
पञ्चाशत्कोटिविस्तारान्नारायणतनौ कृतात् ॥ ७६ ॥

उद्धृत्य पञ्चसाहस्रं कृतवान् बादरायणः ।
अतस्तदर्थं सङ्क्षेपादत इत्यभ्यसूचयत् ॥ ७७ ॥

यतोऽनुभवतः सर्वं सिद्धमेतदतोऽपि च ।
देवैश्च दुर्गमार्थेषु व्यापृतो नातिविस्तृतिम् ॥ ७८ ॥

चकारैता ह्यवज्ञेया युक्तयः प्रतिपक्षगाः ।
प्रत्यक्षेक्षाक्षमः पक्षं कमेवात्राभिवीक्षते ॥ ७९ ॥

तस्मादक्षमपक्षत्वान्मोक्षशास्त्रेऽभ्युपेक्षितः ।

### ब्रह्मशब्दार्थः— विष्णुः, नारायणः

स्वयं भगवता विष्णुर्ब्रह्मेत्येतत्पुरोदितम् ॥ ८० ॥

'स विष्णुराह ही'त्यन्ते देवशास्त्रस्य तेन हि ।
आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् ॥ ८१ ॥

मध्यं तदाज्ञया शेषपैलाभ्यां कृतमञ्जसा ।
अतस्तत्रैव विष्णुत्वसिद्धेर्ब्रह्मेत्यसूचयत् ॥ ८२ ॥

दोषारच्छिद्रशब्दानां पर्यायत्वं यतस्ततः ।
गुणा नारा इति ज्ञेयास्तद्वान्नारायणः स्मृतः ॥ ८३ ॥

ब्रह्मशब्दोऽपि हि गुणपूर्तिमेव वदत्ययम् ।
अतो नारायणस्यैव जिज्ञासात्र विधीयते ॥ ८४ ॥

सिद्धत्वाद् ब्रह्मशब्दस्य विष्णौ स्पष्टतया श्रुतौ ।
'अम्भस्यपार' इत्युक्तो नारायणपदोदितः ॥ ८५ ॥

'आपो नारा' इति ह्याह स एवाप्स्वन्तरीरितः ।
कामतो विधिरुद्रादिपददात्र्या स्वयं श्रिया ॥ ८६ ॥

योनित्वेनात्मनो विष्णोस्तिष्ठन्तीत्युदितस्य च ।
यस्मिन् देवा अधीत्युक्त्वा समुद्रं स्थानमेव च ॥ ८७ ॥

नाम चाक्षरमित्येव ऋच इत्युदितं तु यत् ।
यतः प्रसूतेत्युक्त्वा च तदेव ब्रह्म चाब्रवीत् ॥ ८८ ॥

॥ इति जिज्ञासाधिकरणम् ॥

* * *

## ॥ अथ जन्माधिकरणम् ॥

### ॐ जन्माद्यस्य यतः ॐ ॥ १-१-२ ॥

अम्भ्रणीसूक्ताद्युक्तस्य इह सूत्रे लक्षणाभिधानम्

अन्तःसमुद्रगं विश्वप्रसूतेः कारणं तु यत् ।
सूक्तोपनिषदाद्युक्तं जन्माद्यस्येति लक्ष्यते ॥ ८९ ॥

### सृष्ट्यादिहेतुत्वं प्रत्येकं ब्रह्मलक्षणम्

सृष्टिः स्थितिश्च संहारो नियतिर्ज्ञानमावृतिः ।
बन्धमोक्षावपि ह्यासु श्रुतिषूक्ता हरेः सदा ॥ ९० ॥

### सर्वाणि नामानि विष्णावेव मुख्यानि

यं नामानि विशन्त्यद्धा यो देवानामिति ह्यपि ।
श्रुतेर्नामानि सर्वाणि विष्णोरेव यतस्ततः ॥ ९१ ॥

अतो न मुख्यतो नाम तदन्यस्य हि कस्यचित् ।

### विष्णोर्जन्मादिदोषो न श्रुतेरर्थः

गुणाः श्रुता इति ह्यस्मान्न दोषोऽर्थः श्रुतेर्भवेत् ॥ ९२ ॥

प्रीत्या मोक्षपरत्वाच्च तात्पर्यं नैव दूषणे ।
सर्वेषामपि वाक्यानां महातात्पर्यमत्र हि ॥ ९३ ॥

तद्विरोधे न मानत्वं फलं मुक्तिर्हि वाक्यतः ।

### श्रुतिविरुद्धार्थे पुराणादीनां न प्रामाण्यम्

न पुराणादिमानत्वं विरुद्धार्थे श्रुतेर्भवेत् ॥ ९४ ॥

दर्शनान्तरमूलत्वात् मोहार्थं च आज्ञया हरेः ।
न सर्वनामताऽन्येषां श्रुतावुक्ता हि कुत्रचित् ॥ ९५ ॥

अदोषवचनाच्चैव नियमेन हरेः श्रुतौ ।

### अन्येषामज्ञानादिदोषवत्वम्

अज्ञानं पारतन्त्र्यं च प्रलयेऽभाव एव च ॥ ९६ ॥

अशक्तिश्चोदिताऽन्येषां सर्वेषामपि च श्रुतौ ।

इदं ब्रह्मणः स्वलक्षणं न तटस्थलक्षणम्

'जन्माद्यस्ये'ति तेनैतद्विष्णोरेव स्वलक्षणम् ॥ ९७ ॥

अस्योद्भवादिहेतुत्वं साक्षादेव स्वलक्षणम्।
कृष्णध्यानच्छलेनैव स्वयं भागवतेऽब्रवीत् ॥ ९८ ॥

अनेन लक्षणेन जीवैक्यं निराकृतम्

अतो जीवैक्यमपि स निराचक्रे जगद्गुरुः।

अस्य लक्षणस्य जीवोऽपि व्यावर्त्यः

न हि जन्मादिहेतुत्वं जीवस्य जगतो भवेत् ॥ ९९ ॥

हिताक्रियादिदोषं च वक्ष्यत्येव स्वयं प्रभुः।

निर्विशेषत्वं च अनेन सूत्रेण निषिद्धम्

निर्गुणत्वं च तेनैव निषिद्धं प्रभुणा स्वयम् ॥ १०० ॥

मुख्यार्थसम्भवे लक्षणा न युक्ता

भेदेनैव तु मुख्यार्थसंभवे लक्षणा कुतः।
कथं नित्यगुणस्यास्य स्यादैक्यं गुणहानतः ॥ १०१ ॥

सदैव गुणवत्त्वेऽस्य भिन्नं स्यान्निर्गुणं सदा।
न च मिथ्यागुणत्वं स्यादनिर्वाच्यस्य दूषणात् ॥ १०२ ॥

निर्गुणत्वं तदा च स्यादासुरत्वं न चान्यथा।

विशेषं विना ऐक्यस्य निरूपणप्रकाराभावः

लक्ष्यलक्षणयोर्भेदोऽभेदो वा यदि वोभयम् ॥ १०३ ॥

इति पृष्टे तदैक्यस्य गतिरेव न विद्यते।
ऐक्याभेदे न शास्त्रेण ज्ञेयं तत्स्वप्रकाशतः ॥ १०४ ॥

भेदे मिथ्यात्वतो भेदसत्यत्वं स्याद्बलादपि।
भेदाभेदौ यदि तदा स्यादेव ह्यनवस्थितिः ॥ १०५ ॥

स्वनिर्वाहकता चेत्स्यात् वाह्यं वाहकमित्यपि।
पर्यायो भेदवान् वा स्यादनवस्थोभयत्र च ॥ १०६ ॥

सत्यज्ञानादिपदानामखण्डार्थत्वदूषणम्

सत्यज्ञानादिकेऽप्येवं न व्यावृत्त्या प्रयोजनम्।
व्यावृत्तस्याविशेषत्वे तदखण्डं च खण्डितम् ॥ १०७ ॥

निर्विशेषं ब्रह्मेति स्वक्रियाविरुद्धम्

निर्विशेषत्वमेतेन मूकोऽहमितिवद्भवेत्।
अभिन्नेऽपि विशेषोऽयं बलादापतति ह्यतः ॥ १०८ ॥

विशेषतद्वतोश्चैव स्वनिर्वाहकता भवेत्।

विशेषस्वरूपनिरूपणम्

भेदहीने त्वपर्यायशब्दान्तरनियामकः ॥ १०९ ॥

विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः।
विशेषास्तेऽप्यनन्ताश्च परस्परविशेषिणः ॥ ११० ॥

स्वनिर्वाहकतायुक्ताः सन्ति वस्तुष्वशेषतः।
अतोऽनन्तगुणं ब्रह्म निर्भेदमपि भण्यते ॥ १११ ॥

'एवं धर्मानि'ति श्रुत्या तदभेदोऽप्युदीर्यते।

॥ इति जन्माधिकरणम् ॥ २ ॥

# ॥ शास्त्रयोनित्वाधिकरणम् ॥

## ॐ शास्त्रयोनित्वात् ॐ
## ॥ १-१-३ ॥

शैवाद्यागमैरन्येषां जगत्कारणत्वं न कल्पनीयम्

शैवाद्यागमसंप्राप्तदृष्टगेन फलेन तु ॥ ११२ ॥
तद्वाक्योपमयाऽन्यच्च प्रमाणत्वेऽनुमीयते ।
ईशवाक्यत्वत इति चेत्तद्वद्व्यभिचारिणा ॥ ११३ ॥

अप्रामाण्यानुमा च स्यात्

जगत्कारणे अनुमानस्य स्वातन्त्र्येण न प्रमाणता

न पृथक् चानुमेश्वरे ।
पुंस्त्वहेतुबलादेव पूर्वोक्तेनैव वर्त्मना ॥ ११४ ॥

शास्त्रयोनित्वमेतेन कारणस्य बलाद्भवेत् ।
'नावेदविन्' 'न तर्केण मतिरि'त्यादिवाक्यतः ॥ ११५ ॥

तर्को ज्ञापयितुं शक्तो नेशितारं कथञ्चन ।
वनकृत्त्वादिरूपेण पक्षभूतस्य चेशितुः ॥ ११६ ॥

किञ्चिज्ज्ञत्वं हि पुंस्त्वेन शक्यं साधयितुं सुखम् ।
'वृक्षकृन्नाखिलं वृक्षं वेत्ति पुंस्त्वाद्धि चैत्रवत्' ॥ ११७॥

इत्याद्यनुमया स्पर्धि नानुमानं परेशितुः ।





शक्तं विज्ञापने चातिप्रसङ्गोऽनुमयेद्दशा ॥ ११८ ॥

वस्तुत्वात्तुरगः श्रृङ्गी पुष्पवत्खं सुतैर्युता ।
चित्रिणी च रसः षष्ठो रसत्वात्सोत्तरो भवेत् ॥ ११९ ॥

॥ इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

***

## ॥ समन्वयाधिकरणम् ॥

### ॐ तत्तु समन्वयात् ॐ ॥ १-१-४ ॥

उपक्रमादीनां, आगमानुगृहीतानुमानस्य च साधकत्वम्

उपक्रमादिलिङ्गेभ्यो नान्या स्यादनुमा ततः ।

उपक्रमादिभिः नारायणाख्यब्रह्मण एव शास्त्रप्रतिपाद्यत्वावगमः

त एवान्वयनामानः तैः सम्यक् प्रविचारिते ॥ १२० ॥
मुख्यार्थो भगवान्विष्णुः सर्वशास्त्रस्य नापरः ॥

॥ इति समन्वयाधिकरणम् ॥ ४ ॥

***

## ॥ ईक्षत्यधिकरणम् ॥

### ॐ ईक्षतेर्नाशब्दम् ॐ ॥ १-१-५ ॥

वचनवृत्त्यैव ब्रह्मणः सकलशास्त्रप्रतिपाद्यत्वम्

ईक्षणीयत्वतो विष्णुर्वाच्य एव





ब्रह्मणः वाच्यत्वाभावे लक्ष्यत्वासम्भवः

न चान्यथा ॥ १२१ ॥

लक्ष्यत्वं क्वापि दृष्टं हि किं तदित्यनवस्थितिः ।
माधुर्यादिविशेषाश्च तच्छब्दैरुदिताः सदा ॥ १२२ ॥

वाक्यार्थोऽपि हि वाक्यार्थशब्देनैवोदितो भवेत् ।
नावाच्यं तेन किञ्चित्स्यात्

ब्रह्मणः अवाच्यत्वस्य श्रुत्यर्थत्वे स्वक्रियाविरोधः

यत इत्यादिकैर्वदन् ॥ १२३ ॥

अवाच्यत्वं कथं ब्रूयान्मूकोऽहमितिवत्सुधीः ।
येन लक्ष्यमिति प्रोक्तं लक्ष्यशब्देन सोऽवदत् ॥ १२४ ॥

मुख्यार्थे सम्भवति जघन्यवृत्त्याश्रयणमनुचितम्

एकस्यापि हि शब्दस्य गौणार्थस्वीकृतौ सताम् ।
महती जायते लज्जा यत्र तत्राखिला रवाः ॥ १२५ ॥

अमुख्यार्था इति वदन्यस्तन्मार्गानुवर्तिनाम् ।
कथं न जायते लज्जा वक्तुं शाब्दत्वमात्मनः ॥ १२६ ॥

सगुणब्रह्मणो वाच्यत्वमिति न युक्तम्

**ॐ गौणश्चेन्नात्मशब्दात् ॐ ॥ १-१-६ ॥**

**ॐ तन्निष्ठस्य मोक्षोपदेशात् ॐ ॥ १-१-७ ॥**

आत्मब्रह्मादयः शब्दाः साक्षात्पूर्णाभिधायिनः ।





ब्रह्मणो लक्ष्यत्वे श्रुतपरित्यागः अश्रुतकल्पना च

जन्मादिकारणं ब्रह्म लक्षितं च यदा तदा ॥ १२७ ॥

वन्ध्यापुत्रोपमं मायाशबलं वाच्यमित्यपि ।
कल्पयित्वा विना मानं लक्ष्यं शुद्धं वदन्पदैः ॥ १२८ ॥

आत्मशब्दोदितस्यैव ज्ञानं मुक्तावसाधनम् ।
आह श्रुतपरित्यागः स्याचास्याश्रुतकल्पना ॥ १२९ ॥

स्यात्सर्वत्र च यत्रैकमपि लोको जुगुप्सते ।
नियमेनोभयं स्याद्धि यस्य स्वपरयोर्मते ॥ १३० ॥

श्रौतस्य परमात्मनः परित्यागे महान् प्रत्यवायः

अलंकृतः सदैवायं दुर्घटैरेव भूषणैः ।
अन्धन्तमो नित्यदुःखं तस्य स्याद्वसनद्वयम् ॥ १३१ ॥

अनन्दा नाम ते लोका अन्धेन तमसा वृताः ।
तांस्ते प्रेत्याभिगच्छन्ति येऽविद्वांसो (ऽ)बुधो जनाः ॥ १३२ ॥

असुर्या नाम ते लोका अन्धेन तमसा वृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥ १३३ ॥

इत्यादिश्रुतयो मानं शतशोऽत्र समन्ततः ।

**ॐ हेयत्वावचनाच्च ॐ ॥ १-१-८ ॥**

गौणस्य हेयत्वात् न श्रौतत्वम्

हेयत्वावचनाच्चैव नात्मा गौणः श्रुतौ श्रुतः ॥ १३४ ॥

तमेवैकं जानथान्या वाचो मुञ्चथ चेति ह।
उक्त आत्मा कथं गौणो हेयपक्षे ह्यसौ श्रुतः ॥ १३५॥

ब्रह्मादिदेवतानां परिवारतया उपादेयत्वम्

परिवारतया ग्राह्या अपि हेयाः प्रधानतः।

**ॐ स्वाप्ययात् ॐ ॥ १-१-९ ॥**

पराभिमतसगुणस्य स्वाप्ययत्वपूर्णत्वानुपपत्तिः

पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ १३६॥

इति स्वस्यैव पूर्णस्य पूर्णेऽप्यय उदाहृतः।
कथं मायाव्यवच्छिन्नः पूर्णो मुख्यतया भवेत् ॥ १३७॥

**ॐ गतिसामान्यात् ॐ ॥ १-१-१० ॥**

**ॐ श्रुतत्वाच्च ॐ ॥ १-१-११ ॥**

केवलो निर्गुणश्चेति श्रुतौ निर्गुणस्य वाच्यत्वं श्रुतम्

पदं च निर्गुण इति कथं गौणं वदिष्यति।
गुणाभावोपलक्ष्यं चेत्पदं तदपि वाचकम् ॥ १३८॥

अवाच्यत्वनिरासोपसंहारः

अतोऽनवस्थितिमुखसर्वदोषमहास्पदम्।
कथमेतन्मतं सद्भिराद्रियेत विचक्षणैः ॥ १३९॥

एतेषां सूत्राणां साङ्ख्यमतनिराकरणपरतया व्याख्यानमयुक्तम्

न च साङ्ख्यनिराकृत्यै सूत्राण्येतान्यचीक्लृपत्।
भगवान् न ह्यशब्दत्वं प्रधानेऽङ्गीकरोत्यसौ ॥ १४०॥

समन्वये प्रतिज्ञाते शब्दगोचरतैव हि।
प्रथमप्रतिपाद्या स्यात् तदभावे कुतोऽन्वयः ॥ १४१ ॥

सूत्रे समन्वयशब्दप्रयोगेण ब्रह्मणः वाच्यत्वमेव स्फुटीकृतम्

कथं च लक्षणावादी ब्रूयाद्ब्रह्मसमन्वयम्।
योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वयः ॥ १४२ ॥

पराभिमतनिर्गुणे समन्वयो न प्रतिज्ञातः

जन्मादिकारणे साक्षादाह देवः समन्वयम्।
उक्तं तदेव जिज्ञास्यं क्वावकाशोऽत्र निर्गुणे ॥ १४३ ॥

कथं चासंभवस्तस्य मुख्यार्थस्य निराकृतौ।

अवाच्ये अमेये निर्गुणे समन्वयप्रतिज्ञा व्यर्था स्यात्

मानेन केन विज्ञेयमवाच्याज्ञेयनिर्गुणम् ॥ १४४ ॥

अमेयं चेन्न शास्त्रस्य तत्र वृत्तिः कथञ्चन।

अनन्तगुणार्णवस्यैव जिज्ञास्यत्वम्

तस्माच्छास्त्रेण जिज्ञास्यमस्मदीयं गुणार्णवम्॥ १४५ ॥
वासुदेवाख्यमद्वन्द्वं परं ब्रह्माखिलोत्तमम्।

पराभिमतनिर्गुणस्य प्रमाणागोचरत्वं,
स्वप्रकाशत्वे शास्त्राविषयत्वम्

विज्ञेयवाच्यलक्ष्यत्वपूर्वाशेषविशेषतः ॥ १४६ ॥

निर्गतं मनसो वाचो यदि तत्स्यादगोचरम्।
अस्तु तन्मा वदेद्वादी न चास्मच्छास्त्रगं तु तत् ॥ १४७ ॥





अवाच्यं वाच्यमित्युक्त्वा किमित्युन्मत्तवन्मृषा।
अस्मच्छास्त्रस्य चौर्याय यतते स्वोक्तिदूषकः ॥ १४८ ॥

श्रुतिसूत्रयोरनन्तगुणप्रतिपादकत्वेनैकार्थत्वम्

जन्मादिकारणं यत्तत्साक्षान्नारायणाभिधम्।
वदन्ति श्रुतयो ब्रह्म शास्त्रं चैतत्तदर्थतः ॥ १४९ ॥
प्रवृत्तमस्तु

सर्वशब्दावाच्यस्य शास्त्रविषयत्वोक्तौ व्याहतिः

अवाच्यं ते मैवं ब्रूयाः कथञ्चन।
सर्वशब्दैरवाच्यं तदुक्त्वा तद्विषयं पुनः ॥ १५० ॥

शास्त्रं वदन्तमुन्मत्तं कथं लोको न वारयेत्।
मा वदो मा विजानीहि त्यजास्मच्छास्त्रचोरताम् ॥ १५१ ॥

वयं त्वां श्रुतियुक्तिभ्यां बद्ध्वाऽस्मच्छास्त्रमञ्जसा।
विचारयामः श्रुतिभिर्युक्तिभिश्चैव सादरम् ॥ १५२ ॥

श्रुतिस्मृतिषु लोके च अवाच्यत्वादिपदानामर्थोपन्यासः

अद्भुतत्वादवाच्यं तदतर्क्याज्ञेयमेव च।
अनन्तगुणपूर्णत्वादित्यूदे पैङ्गिनां श्रुतिः ॥ १५३ ॥

अवाच्यमिति लोकोऽपि वक्त्याश्चर्यतमं भुवि।

इति ईक्षत्यधिकरणम् ॥ ५ ॥

॥ इति अधिकरणपञ्चकम् ॥





॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

**श्रीमदानन्दतीर्थभगवत्पादविरचित-श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य प्रप्रथमटीका**

**श्रीपद्मनाभतीर्थविरचिता**

# सन्न्यायरत्नावली

## ॥ जिज्ञासाधिकरणम् ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

नारायणमसङ्ख्येयकल्याणगुणविग्रहम् ।
वन्दे भक्त्या सदाध्वस्तदूषणं परमप्रियम् ॥ १ ॥

नमो भगवते तस्मै व्यासरूपाय विष्णवे ।
यत्प्रसादात्परं ज्ञानं प्राप्यते विबुधादिभिः ॥ २ ॥

श्रीमदानन्दतीर्थाख्यान् गुरून्विद्यादिवाकरान् ।
वन्दे कुदृष्टिदुर्बोधव्याससिद्धान्तदीपकान् ॥ ३ ॥

तत्कृतां ब्रह्मसूत्राणामनुव्याख्यां यथामति ।
विवृणोम्यर्थगम्भीरां हरितत्त्वप्रकाशिकाम् ॥ ४ ॥

१* ग्रन्थादौ शिष्टाचारादिप्राप्तस्य मङ्गलाचरणरूपस्वेष्टदेवतानमस्कारस्य प्रारिप्सितग्रन्थसमाप्तिप्रचयाद्यर्थत्वात् शिष्टजनाग्रणीः आचार्यः स्वेष्टदेवतां सन्नमति **नारायणमिति**।

नारायणस्य नम्यत्वोपपादकं **निखिलेत्यादि** । गुणवत्त्वेऽपि चेतनत्वेन हिरण्यगर्भादिवत् दोषवत्त्वं मा भूदित्युक्तं **निर्दोषमिति** । एवंभूतत्वादेव अखिलैः सुवाक्यैर्ज्ञानद्वारा अतिशयेन प्राप्यम् । निखिलपूर्णगुणोपपादनाय उक्तम् **अस्योद्भवादिदमिति** । विश्वस्योद्भवादिदातारमित्यर्थः । अत एव वन्द्यम् । अशेषाद्विशिष्टत्वादपि वन्द्यम् । यो हि जननादिकर्ता यश्च गुणाधिकः स हि वन्द्यो भवति । अत एवम्भूतत्वादेव प्रियेभ्यः स्वात्मादिभ्योऽतिशयेन

---

* प्रतिपरिच्छेदं प्रारम्भे सूचिताः सङ्ख्याः अनुव्याख्यानश्लोकसङ्ख्याः इति ज्ञातव्यम् ।





प्रियम् । तेषां प्रियत्वापादकत्वात् । इतरेषां प्रायस्तथाऽनुभूत्यभावात् **मम** इत्युक्तम् । **समिति** श्रद्धाभक्त्यतिशय-पूर्वकत्वमाह नमस्कारस्य ।

अनेनैव श्लोकेन अध्यायचतुष्टयार्थं सूचितवान् । निखिलपूर्णगुणैकदेहमिति **समन्वयं** सूचयति । निर्दोषमिति **अविरोधम्** । अखिलैः सुवाक्यैराप्यतममिति **साधनम्** । अस्योद्भवादिदमिति **फलम्** ।

अनैनैव अधिकारिविषयप्रयोजनसम्बन्धान् शास्त्रारम्भेऽपेक्षितान् सूचयति । सन्नमामीति **अधिकारिणं** सूचयति । नारायणमिति **विषयम्** । आप्यतममिति **प्रयोजनम्** । उद्भवादिदमिति विषयप्रयोजनयोर्दातृदेय-लक्षण**सम्बन्धम्** ।

नारायणशब्दश्च व्याक्रियते **निखिलपूर्णेत्यादिना** श्लोकेन । नाराणां गुणानामयनत्वात् । अराणां दोषाणामयनं न भवतीति नारायण इत्याद्यूहनीयम् ।

२ एवं शास्त्रप्रतिपाद्यं नारायणं नमस्कृत्य इदानीं तमेव शास्त्रकर्तारं वेदव्यासं प्रणमति ग्रन्थारम्भं च प्रतिजानीते **तमेवेति** ।

शास्त्रप्रतिपाद्यरूपेण नमस्कृतस्यैव शास्त्रप्रवक्तृरूपेण प्रणामः तत्प्रीत्यतिशयार्थः । तं शास्त्रप्रभवं प्रणम्य परमाख्यविद्याया ब्रह्मसूत्रात्मिकाया व्याख्याम् अन्वपि करोमीत्यन्वयः । अनुव्याख्याया अन्येन कर्तुमशक्यत्वात् **अहमेव** इत्याह । **अञ्जसैव, जगद्गुरूणां गुरुम्** इति मुख्यगुरुत्वमभिप्रैति । मुख्यगुरुत्वं च भगवतो जनकत्वेन पोषकत्वेन विघ्ननिवारकत्वेन चित्तप्रेरकतया च आचार्यादिसम्पादनद्वारा ज्ञानदातृत्वात् । **विशेषतो मे** इति स्वस्य साक्षाद्भगवान् व्यासो गुरुः इत्याह ।

३ शास्त्रप्रभवमित्युक्तं विवृणोति **प्रादुर्भूत इति** ।

न विद्यते उत्तमं शास्त्रं यस्मात् तत् **अनुत्तमम्** ।

४ ननु सूत्राणां प्रामाण्ये सिद्धे सिद्धं व्याख्येयत्वम् । तच्च कथमित्याशङ्क्याह **गुरुर्गुरूणामिति** ।

गुरूणां ब्रह्मादीनां ज्ञानप्रदाता महाभारतादिशास्त्राणां कर्ता बादरायणः यतः अतः अजादिभ्यः श्रोतृभ्यः अर्थयोक्तम् । संशयविपर्ययादिरहितत्वात् । ब्रह्मसूत्राख्यं शास्त्रं प्रमाणम् ।

५ ननु पौरुषेयवाक्यानामाप्तोक्तत्वेन प्रामाण्यमवधृतम् । आप्तोक्तत्वं च कथमित्यत आह **वक्तृश्रोतृ-प्रसक्तीनामिति** ।





इदमेव ह्याप्तोक्तत्वं यद्वक्तृश्रोतृप्रसक्त्यानुकूल्यम् । वक्त्रानुकूल्यं तावद्भगवता वेदव्यासस्य वक्तृत्वादस्त्येव सूत्राणाम् । श्रोत्रानुकूल्यं च ब्रह्मादीनां श्रोतृत्वात् । प्रसङ्गानुकूल्यं च अज्ञाननिर्हरणार्थेन प्रवृत्तेः । तत्रैकैकानुकूल्याभावेऽप्यनाप्तत्वं यथा जैनवाक्येषु वक्त्रानुकूल्याभावादाप्तिशून्यत्वम् । यथा श्रोत्रानुकूल्याभावादाप्तिशून्यत्वं बुद्धवाक्येषु । यथा च प्रसङ्गानुकूल्याभावादाप्तिशून्यत्वं नर्मादिवाक्येषु । तच्चोक्तं भारते— 'न नर्मयुक्तमनृतं हिनस्ति न स्त्रीषु राजन्न विवाहकाले । प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानी'ति । न केवलमाप्तोक्तत्वात् प्रामाण्यम् अपि तु श्रुतिमूलत्वाद्युक्तिमूलत्वाच्च । अतस्त्रिविधं प्रामाण्यं ब्रह्मसूत्राणाम् । जैमिन्यादिवाक्येषु तु एकैकधा प्रामाण्यम् । अतो ब्रह्मसूत्रसदृशं न प्रमाणतममस्ति अतः प्रमाणतमत्वात् व्याख्येयम् । यद्यपि भाष्यरूपेण व्याख्यातमिदं शास्त्रम्, तथाऽपि अस्पष्टस्पष्टीकरणाय व्याख्यायत इत्यदोषः ।

८ तत्र व्याख्येयस्य शास्त्रस्य इदमादिसूत्रम् **ॐ अथातो ब्रह्मजिज्ञासेति** ।

तत्रोङ्कारश्चाथशब्दश्च मङ्गलार्थत्वात् आदितः प्रयोक्तव्यौ । ॐकारस्तु स्रवत्यनोंकृतं ब्रह्मेत्यादिवचनात् प्रत्यधिकरणमावर्तमानत्वात् पृथगुच्चारितो वेदितव्यः, नात्र अथशब्दवत् सूत्रोपनिबद्धः ।

९ इदानीम् ओङ्काराद्यखिलवेदार्थभूतशास्त्रस्य विषयं दर्शयितुम् आह **ओतत्ववाचीति** ।

ॐकारार्थो विष्णुरेव गुणबृंहितो बृहत्वाद्ब्रह्मशब्दार्थः । स एव नारायणो गुणानामयनत्वात् नारायणपदोदितः ।

१० स एव गायत्रीप्रतिपाद्यो भरणगमनयोगात् भर्गशब्दार्थः । भूरादिव्याहृतीनां तिसृणां भूमत्वाद्भावयितृत्वात् स्रष्टृत्वेन वृत्तेः स एवार्थः । स एव पुरुषसूक्तप्रतिपाद्यः । पूर्णषड्गुणत्वात् पुरुषः ।

११ स एवोङ्कारादिपञ्चरूपाणां वेदानामर्थः । एवम्भूतो नारायणः सर्ववेदार्थोऽपि तत्तत्कुबुद्धिभिरन्यथाप्रतिपन्नत्वात् जिज्ञास्यो विधीयते ।

११ एवं तावत् प्रतिपाद्यस्वरूपमुक्त्वा मुमुक्षोरधिकारिणः तज्जिज्ञासाप्रयोजनं महायाससाध्यत्वेन प्रमितमेव प्रवृत्तिकारणमिति सप्रमाणकमाह **ज्ञानीति** ।

'ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति मामि'ति भगवद्वाक्यात् भगवतस्तत्स्थत्वात् । 'तमेव विद्वानमृत इह भवति', 'यमेवैष वृणुते तेन लभ्यः', 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादिश्रुतिबलाच्च । जिज्ञासातो ज्ञानं ज्ञानादेव विष्णुप्रसादः तस्मान्मोक्षो ज्ञानिनः ॥ १२ ॥





१३ ननु ज्ञानस्वभावादेव बन्धनाशो 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे'ति वाक्यात् स्यात् । किं तत्प्रसादेनेत्याशङ्क्य तत्प्रसादैकलभ्यो मोक्ष इति सप्रमाणकमाह **द्रव्यं कर्म चेत्यादिना** ।

१४ 'न ऋते त्वत्क्रियते किञ्चनार' इत्यादिना ज्ञानस्वभावादेव मोक्षः कस्यापि न स्यात् हरिं विना । भो इन्द्रियगणपते हृषीकेश! आरे दूरेऽपि त्वदृते किञ्चन न क्रियत इत्यर्थः ।

१५ एवं तावच्छास्त्रारम्भहेतुभूतविषयप्रयोजनाद्युक्त्वा परकृतापव्याख्यानमुक्तदार्ढ्याय दूषयितुमाह **अज्ञाना-मित्यादिना** ।

१६ भगवत्प्रसादसाध्यत्वोक्तेः न मुक्तिः बन्धमिथ्यात्वमपेक्षते । राजादिप्रसादस्य सत्यशृङ्खलादिबन्ध-निवर्तकत्वदर्शनात् । ज्ञाननिवर्त्यत्वानभ्युपगमान्न मिथ्यात्वं बन्धस्य । किञ्च सत्यस्यापि ज्ञानेन निवृत्तिर्दृष्टा । यथा गरुडध्यानेन विषस्य ।

१७ प्रत्यक्षादिविरुद्धं च बन्धमिथ्यात्वं दुःख्यहमित्याद्यनुभवात् । यदि दुःखादिबन्धस्य मिथ्यात्वं तर्हि तत्प्रतिपादकस्य वाक्यस्य मिथ्यात्वं स्यादेव उभयसम्मतेः । तदा बाधकाभावात् बन्धस्य सत्यत्वं सेत्स्यति ।

१७ ननु मिथ्याभूतमपि वाक्यं मन्त्रमिव स्वप्नोपदेशो बन्धमिथ्यात्वं बोधयतु इत्याशङ्क्याह **मिथ्याया इति** ।

उभयसिद्धस्य हि साधनस्य साधकत्वम् । न च मिथ्याभूतस्य साधकत्वम् उभयसम्मतम् । रज्जुसर्पादि-ज्ञानमपि सदेव भयकम्पादिजनकम् । अन्यथा रज्जुसर्पोऽपि दंशेत् । अतो न कुत्रापि मिथ्याभूतस्य साधकत्वं दृश्यते ।

१८ मिथ्याभूतस्य साधकत्वं साध्यते चेत् केन प्रमाणेन । सता वा मिथ्याभूतेन वा । यदि सताऽऽत्मेतरेण तर्हि द्वैतसिद्धिः स्यात्, नाप्यसता, विप्रतिपन्नत्वात् ।

१९ न च वाच्यं सतोऽपि साधकत्वं मया नाङ्गीकृतमिति । साक्षिणैव सता जडसिद्ध्यङ्गीकारात् । तच्च निर्विशेषस्य साक्षिणः साधकत्वं साध्यं यदि तदपि साध्यते; केन प्रमाणेन ? सविशेषेण वाऽविशेषेण वा । अविशेषेण चेत् तस्यापि साधकत्वमविशेषान्तरेण साध्यमित्यनवस्था । सविशेषेण चेत् तस्य मिथ्यात्वाङ्गी-कारान्न साधकत्वमुभयसम्मतम् ।

२० अस्माकं पक्षे तु सविशेषत्वात् साक्षिणः साधकत्वमुपपन्नमेव । किञ्च विश्वस्य सत्यत्वमनङ्गीकुर्वतां साधनाद्यभावाद्वादित्वस्य चाभावान्न पक्षान्तरनिराकरणसिद्धिः ।

२१ अतो वा बाधकाभावाद्धानादिव्यवहारः सत्य एव स्यात् । तद्विषयोऽपि घटादिः तत एव सत्यभूतोऽवसीयते । न ह्यसति हानादिव्यवहारो दृष्टः ।





२२ नन्वसतः साधकत्वाभावेऽपि व्यावहारिकसत्त्वस्य साधकत्वं स्यादित्याशङ्क्य पूर्वोक्तमेव तत्साधकं प्रमाणं विकल्प्य दूषयितव्यमित्याह **व्यवहारसत इति** ।

प्रातीतिकं व्यावहारिकं पारमार्थिकं च सदिति सत्त्रैविध्ये किं प्रमाणमिति च प्रष्टव्यम् । न तावत् प्रातीतिकं व्यावहारिकं प्रमाणं, विप्रतिपन्नत्वात् । सदसद्विलक्षणं नाम न वस्त्वन्तरं सिद्ध्यति । यदि सद्विलक्षणत्वे सत्यसद्विलक्षणत्वमुच्यते विश्वस्य तर्हि सदसद्भ्यां ब्रह्म-खपुष्पाभ्यां विश्वस्य भेदाङ्गीकाराद्भेदवादिनो नेदमनिष्टम् । सद्वैलक्षण्यं नाम सर्वसद्वैलक्षण्यं विवक्षितमिति चेन्न । सत् बहुत्वापत्तेः । न च यत्किञ्चित्सद्विलक्षणत्वमित्यपि वाच्यम् । ब्रह्मवैलक्षण्याङ्गीकारेणापि तस्योपपत्तेः । किञ्च सदसद्वैलक्षण्येऽपि सदसद्वैलक्षण्यमस्ति न वा । यद्यस्ति तत्रापीत्यनवस्था । यदि नास्ति तर्हि सदसद्वैलक्षण्यं किं सद्वाऽसद्वा । नाद्यः, द्वैतापत्तेः । नोत्तरः, विश्वस्य सदसद्वैलक्षण्यानापत्तेः । सदसच्चेत् विरोधोऽपसिद्धान्तश्च स्यात् । नापि ज्ञानबाध्यत्वं विश्वस्य शुक्तिरजतादेरिव साध्यम् । शुक्तिरजतेऽपि तस्यासिद्धत्वात् कस्तर्हि बाध इति चेत्, अन्यथाविज्ञातस्याधिष्ठानस्य सम्यग्विज्ञानमेवेति ब्रूमः । न पुनः कस्यचिदर्थस्य नाशः असत्त्वात् । असतः प्रतीत्यभावात् कथं भ्रमविषयतेति चेन्न । असतः प्रतीत्यभावे असद्वैलक्षण्यस्यापि ज्ञातुमशक्यत्वात् ।

२३ नन्वसतोऽसत्त्वेन ख्यातिरस्त्येव, सत्त्वेन ख्यातिः क्व दृष्टेति चेत् । उच्यते । अन्यस्यान्याकारत्वम् अविद्यमानमेवास्तीति भ्रान्तौ प्रतीयत एव । न च तदस्तित्वमनिर्वचनीयमेव प्रतीयत इति वाच्यम् । भ्रान्तिप्रतीतिदशायां सत्त्वेनैव प्रतीयमानत्वात् । अन्यथा तदप्येवमित्यनवस्थाप्रसङ्गात् । अविद्यमानस्याप्रतीतावनिर्वचनीयत्वेनाभ्युपगते शुक्तिरजतेऽपि भ्रमतः प्रवृत्तिरेव न स्यात् । अर्थक्रियानर्हे तत्प्रतीतेरयथार्थत्वं स्यात् । तदेतदाह **वैलक्षण्यं सदसतोरित्यादिना** । तस्माद्बन्धमिथ्यात्ववर्णनम् अनुपयुक्तम् अयुक्तं चेति सिद्धम् ॥

२९ एवं बन्धाध्यासं दूषयित्वा इदानीं विषयप्रयोजनाद्यसम्भवं वक्तुम् अज्ञानासम्भवं तावदाह **निर्विशेष इत्यादिना** । नात्मनोऽज्ञानमावरकं स्वयंप्रकाशत्वात् ।

३० न तद्विशेषस्य । ब्रह्मैक्यादेर्निर्विशेषत्वाङ्गीकारात् । न चाध्यस्तविषयस्यापि तत्सम्भवति । प्रागज्ञानसिद्धेस्तदसम्भवात् । न चेदृशमस्त्यावरकमज्ञानं जडस्य सतोऽप्यप्रकाशस्वरूपत्वेन आवरणवैय्यर्थ्याङ्गीकारात् । तस्मात्कथमपि ब्रह्मणोऽज्ञानासम्भवाज्जिज्ञासारम्भवैय्यर्थ्यं दुर्वारं मायावादिनः ॥ ३१ ॥

३२ अपि च किमज्ञानम् अज्ञानान्तरकल्पितम् उत अकल्पितम् । नाद्यः तदपि अज्ञानम् अज्ञानान्तरकल्पितमिति अनवस्थाप्रसङ्गात् । न च अज्ञानद्वयमेव परस्य परकल्पितमितरेतराश्रयत्वप्रसङ्गात् । नोत्तरः । अद्वैतभङ्गात् । न चाज्ञानं स्वेनैव कल्पितमात्माश्रयत्वप्रसङ्गात् । अदृष्टत्वाच्च । तथाविधजीवस्य तात्त्विकाज्ञानाभ्युपगमेनानवस्थादिदूषणावकाशः।





३३ तात्त्विकस्यापि सुवर्णमलवन्निवृत्तिः सम्भवत्येवाज्ञानस्य । तथा दुःखादेरपि । बालत्वस्येव वार्धक्ये । स्वयंप्रकाशस्यापि जीवस्याज्ञानं स्वविशेषालम्बनं च युक्तमेव ।

३३ यद्यविद्याया दुर्घटत्वस्य भूषणत्वाङ्गीकारान्नोक्तदोषावकाश इत्युच्यते तर्हि तत एव निरधिष्टान-स्यासाक्षिकस्याविद्याध्यासस्यापि सम्भवादात्माऽपि दुर्घटः स्यात् । अविद्याया एवात्मत्वं दुर्घटमपि भूषणत्वेन आपाद्यते।

३४ अतो न अज्ञानस्य दुर्निरूपत्वात् अज्ञानवतोऽधिकारिणोऽज्ञातविषयस्य अज्ञाननिवृत्तिफलस्य तत्सम्बन्धस्य दुर्घटत्वात् तदुज्झितसर्वप्रमाणविरुद्धत्वात् अनन्तदोषदुष्टं मायिमतम् । अतो नारम्भणीयं किं तु हेयमेव सद्भिः ।

३५ एवं सामान्यतो निराकृतमपि परोक्तब्रह्मात्मैक्यं शास्त्रविषयं निष्प्रमाणकत्वेन विशेषतो निराकरोति **सत्यत्वादित्यादिना** । न तत्त्वमस्यादिवाक्यं जीवस्य ब्रह्मत्वप्रतिपादकं दुःखादिग्राहकप्रत्यक्षविरोधात् तस्य च पूर्वोक्तप्रकारेणायथार्थत्वात् ।

३६ यथा यजमानः प्रस्तर इति वाक्यं प्रत्यक्षविरोधान्न प्रस्तरस्य यजमानत्वाभिधायकम् । किञ्च सर्वज्ञ-त्वादिविशिष्टेश्वरं जीवविलक्षणं सदेवेत्याद्युपक्रमसिद्धं तत्पदेनाभिधीयते ॥ ३७॥

३८ तेन जीवस्यैक्यं बोधयद्वाक्यं स्फुटमुपजीव्यश्रुतिविरुद्धमेव।

३८ अपि च जगत्स्वातन्त्र्यादिपरत्वेनैक्यवाक्यस्य सावकाशत्वान्न जीवेश्वरस्वरूपाभेदपरत्वम्।

३९ यथा वशीकृतग्रामं पुरुषमधिकृत्य अयं ग्रामः स्वयमेवेति स्वातन्त्र्येऽभेदप्रयोगो दृष्टः । यथा विद्यादि-विशिष्टभूसुरमधिकृत्य अस्मिन्ग्रामे ब्राह्मणः सर्वेष्वयमेवेति वैशिष्ट्ये च । यथा च गोष्ठ एकीभूता गाव इति स्थानैक्ये च । यथा पूर्वं परस्परविरुद्धा ब्राह्मणा इदानीमेकीभूता इति मत्यैक्ये च । यथाऽग्निर्माणवक इति सादृश्ये च तथैव भगवत्स्वातन्त्र्ये भगवद्वैशिष्ट्यालम्बनत्वेन सावकाशं सर्वं खल्विदं ब्रह्मेत्यादि जीवजडाभ्या-मभेदवचनं ब्रह्मणः । परेऽव्यये सर्व एकीभवन्ति । परमं ब्रह्म वेद । ब्रह्मैव भवतीति मुक्तैरभेदवचनं भगवतः स्थानैक्यमत्यैक्यसादृश्यैक्यालम्बनत्वेन सावकाशमित्यर्थेऽभेदवाक्यं यथेष्टतः सावकाशं स्वरूपाभेदमन्तरेणापि 'द्वा सुपर्णा सयुजे'त्यादिभेदवाक्यं तु निरवकाशम्।

४० जीवपरमभेदमन्तरेण स्वयंप्रकाशे चिन्मात्रेऽज्ञानसम्भवस्य प्रागेवोक्तत्वान्नाज्ञानकल्पितभेदविषयमिति वक्तुं युक्तम् । अतः प्रमाणान्तराविरुद्धत्वात् उपजीव्यत्वात् निरवकाशत्वात् वेदवाक्यस्यानुरोधेन अभेदागमस्य तद्विपरीतत्वात् अर्थान्तरपरत्वं युक्तम् ।





४० एवं तावदद्वैतपक्षे मीमांसाऽऽरम्भासम्भवमुक्त्वा इदानीं द्वैतपक्ष एव जिज्ञासा सम्भवतीत्युक्तार्थमुपसंहरति **अत इति** ।

अतो बाधकाभावात् सत्यस्य जीवबन्धस्य विष्णुप्रसादमन्तरेण ज्ञानादिना निवृत्त्यसम्भवात् ज्ञानद्वारा तत्प्रसादार्थं जिज्ञासा कर्तव्यत्वेन विधीयते प्रथमसूत्रे । अत्र विधानं नामेष्टोपायत्वज्ञापनमेव ।

४१ दर्शनजन्यभगवत्प्रसादाद्बन्धनिवृत्तिं सदृष्टान्तमाह **यथेति** ।

४२ अत्र केचिच्चोदयन्ति । विध्यर्थवादमन्त्रात्मकस्य वेदस्यार्थः कार्यलक्षण एव न सिद्धरूपः । अतः कथं ब्रह्ममीमांसारम्भ इति तान्प्रत्याह **कार्यता चेति** ।

४३ न हीष्टसाधनतामन्तरेण कार्यं नामास्ति किञ्चित् । कृतिविषयीभूतं कार्यमिति चेन्न । ब्राह्मणहननादेरपि निषिद्धस्य कार्यत्वप्रसङ्गात् । एवं भविष्यत्कर्म कार्यमिति न हीशः स्रक्ष्यतीत्यादिप्रतीतस्य भविष्यत्सर्जनादेरपि कार्यत्वप्रसङ्गात् । न चैतदभ्युपगतं तैः । लिङ्गादिवाच्यस्यैव कार्यत्वाङ्गीकारात् ।

४४ न च कर्तुमशक्यं कार्यम् । एकादशीभोजनादेरपि कार्यत्वप्रसङ्गात् । यदुद्दिश्य कृतिः प्रवर्तेत तत्कार्यमिति चेन्न । स्वर्गादिफलस्यापि कार्यत्वप्रसङ्गात् ।

४५ किञ्चेष्टसाधनतां बोधयन् कर्तव्यतां बोधयति विध्युद्देशोऽबोधयन् वा । नाद्यः । इष्टसाधनज्ञानादेव प्रवृत्त्युपपत्तेः कर्तव्यताबोधवैय्यर्थ्यात् । नोत्तरः । विषं भुंक्ष्वेति वाक्याद्विषभोजनकर्तव्यताबोधप्रसङ्गात् । इष्टसाधने प्रवृत्तावतीते च साधनेऽपि प्रवृत्तिः स्यादिति चेन्मैवम् । कार्ये प्रवृत्तावतीतकार्येऽपि प्रवृत्तिः स्यादित्यपि वक्तुं शक्यत्वात् । न चातीतकार्यमिदानीं न सम्भवतीति वाच्यम् । तथैवेष्टसाधनस्यापि वक्तुं शक्यत्वात् । इष्टसाधनं तु अज्ञानात् कार्यज्ञानमभ्युपगच्छतोऽपि अतीतेष्टसाधनादौ व्यभिचारस्य तुल्यत्वाच्च । अथ मतम् । अनिष्टपरिहारेऽपि प्रवृत्तिदर्शनान्नेष्टसाधने प्रवृत्तिरिति । नैतत्साधु । अनिष्टस्येष्टप्रतिबन्धकत्वात् पारम्पर्येणापीष्टसाधनत्वात्तत्परिहारस्य । सीधुपानादेरपि तात्कालिकेष्टसाधनकत्वेऽपि महानिष्टसाधनत्वान्न विधेयत्वम् इत्यलमतिप्रसङ्गेन । तस्मादिष्टं तत्साधनं च कार्यमित्युच्यते । नार्थान्तरम् । एवं सतीष्टदेवता भगवान् श्रीपतिरेव मुख्येष्टसाधनम् । अनपेक्षिताशेषपुरुषार्थतया निर्मलमनसामिष्टो वेदार्थो भवितुमर्हति । इष्टत्वं च भगवतः 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्माच्च सर्वस्मादन्तरतरं यदयमात्मे'ति श्रुत्यादिसिद्धम् ।

४६ 'न श्रद्धामपि कुर्वन्ति कुशलाः स्वात्मदर्शनाः । अहैतुक्यव्यवहितां भक्तिमात्मप्रिये यथा । प्राणबुद्धिमनःखात्मदेहापत्यधनादयः । यत्सम्पर्कात्प्रिया आसंस्ततः कोऽन्वपरः प्रियः' इत्यादिभगवद्वाक्यैश्च ।

४७ तस्मादाकाङ्क्षायोग्यतासन्निधिबलाद्भगवानेवेष्टो वेदार्थः ।





४७ ननु व्युत्पत्तिवशाद्वाक्यार्थावबोधः । व्युत्पत्तिश्च व्यवहारतत्कार्य एव सम्भवति । गामानय गां बधानेत्यादिषु बालस्य व्युत्पत्तिदर्शनात् कथं वाक्यस्येत्यत आह **इष्टे व्युत्पत्तिरिष्यत इति** । इष्ट एव शब्दस्य व्युत्पत्तिरभ्युपगन्तव्या ।

४८ 'अत्यपूपांस्तव भ्राते'त्यादिवाक्येषु आवापोद्वापाभ्यां पदार्थानां वर्तमानत्वात् । अङ्गुल्यादिनिर्देशाच्च आकाङ्क्षादिबलाच्च बालस्य व्युत्पत्तिदर्शनात् ।

ननु गामानयेत्यादिषु लिङादियुक्तवाक्येषु व्युत्पत्तौ गामानयतीत्यादावेवोक्तप्रकारेण व्युत्पत्तिसम्भवात् । तत्रैष्यद्गवानयनादिदर्शनपर्यन्तप्रतीक्षणोपयोगाभावाद्व्युत्पत्त्यर्थं बालस्य वर्तमानार्थपदे व्युत्पन्नो ज्ञातशक्तिकगवादिपदसमभिव्याहारात् आनयेत्यादिवाक्यत उत्तमवृद्धादिष्टमध्यमवृद्धानीयमानगवादिकं दृष्ट्वाऽनन्तरं व्युत्पत्तिर्भविष्यति । एवं च सिद्धव्युत्पत्त्यनन्तरभावित्वादमुख्यार्थाङ्गीकारेऽपि कार्यस्य । किञ्च सर्वं हि वस्तु वर्तमानमतीतं भविष्यदाकाङ्क्षादिवशात् स्फूर्जितं जनपदचयेनावसीयते । अतः कालत्रयावच्छिन्नो विधिरित्येतदपास्तम् ।

४९ यस्मादानीयमानगवादिकं दृष्ट्वा तदन्वितेष्वानयेत्यादिषु व्युत्पन्नस्यानन्तरमाकाङ्क्षावशादानयिष्यतीत्यादि भविष्यदर्थेषु व्युत्पत्तिः ।

५१ अतो वर्तमानार्थेषु प्रथमतो व्युत्पत्तिस्तदनन्तरमतीतपदार्थेषु तदनन्तरं भविष्यदर्थेषु पदेषु च । अतः कालत्रयानवच्छिन्नमेव शब्दावगम्यम् ।

५३ अपि च सर्वोऽपि जन्तुरिष्टमाकाङ्क्षते । तदर्थत्वेन तत्साधनं च न तु व्यापारमात्रम् । अतः कार्यविधानेऽनाकाङ्क्षिताभिधानं स्यात् ।

५४ इष्टसाधनं चापरोक्षं परोक्षं वा ज्ञानमेव न तु कर्म । साक्षाद्व्यापारस्तु क्वचिज्ज्ञानार्थः स्यात् । यथा चर्वणनिगीरणादिव्यापारो रसवेदनार्थः । रसवेदनं सुखार्थम् । यथा 'पुत्रस्ते जात' इति वाक्योत्थपरोक्षज्ञानादपि सुखं दृष्टम् । एतादृशवाक्येष्वपि व्युत्पत्तिः सम्भवति । तथा हि । 'पुत्रस्ते जातः' इति केनचिदुक्तवाक्यश्रवणात् धृष्टस्य पितुर्मुखविकासादिना हर्षमनुमाय तन्निमित्तमनेनोक्तमित्यध्यवस्यति बालः । तच्च निमित्तं पुत्रजन्मव्यतिरेकेणान्यदनाकलयन्पुत्रजन्मनेति निश्चिनोति । एवमेवापोद्वापाभ्यामेतद्वाक्यगतपुत्रादिपदविभागार्थं जानात्येवेति किमनुपपन्नम् । प्रसिद्धपदसमभिव्याहारादप्रसिद्धपदार्थावगतिश्च अतीवप्रसिद्धा कार्यानुप्रवेशमन्तरेणापि 'पिकः कोकिल' इत्यत्र प्रसिद्धपदसमभिव्याहारादप्रसिद्धपिकशब्दार्थावगतिदर्शनात् । अतः प्रसिद्धपरत्वं सर्ववाक्यानां व्युत्पत्तिबलादेव सिद्धम् ।

५५ अपि च कार्यैकपरत्वे वेदस्य स्रुक्स्रुववह्न्यादिकारकेष्वतात्पर्यं स्यात् ।





५६ तथा च सति यत्किञ्चित्कर्मणो भस्महोमादिलक्षणस्याहवनीयादिरहितस्य यज्ञता स्यात् । अथ यागादिकार्यार्थत्वेन स्रुक्स्रुवादिषु तात्पर्यमस्तीत्युच्यते । हन्त तर्ह्यत्राप्युपासनत्वेन ब्रह्मणि तद्गुणेषु सत्यकामत्वादिषु तद्वदस्तीति परेण पदार्थोऽपि तात्पर्यमभ्युपगम्यतामविशेषात् ।

५७ ननूपासनाकर्मत्वेन न ब्रह्मणः सिद्धिः । अविद्यमानस्यापि ध्यातुं शक्यत्वादुपासनावाक्यस्य ब्रह्मेत्युपासीतेत्यध्याहृतेतिशब्दवतस्तत्र तात्पर्याभावाच्च । 'मनो ब्रह्मेत्युपास्त' इत्यादिवाक्यस्येव । मैवम् । एवं सति 'व्रीहीनिति प्रोक्षति', 'आहवनीय इति जुहोती'ति सर्ववाक्येषु इतिशब्दाध्याहारः स्यात् । तथा सत्यग्न्यादीनां स्मरणेनैव होमाद्यन्वयो न स्वरूपत इति स्यात् । 'मनो ब्रह्मेत्युपास्त' इत्यादेर्मन आदिषु ब्रह्मोपासनमेवार्थ इति चतुर्थे वदामः । यथा 'आहवनीये जुहोती'त्यादौ इतिशब्दाश्रवणात् नाग्न्यादिस्मरणमात्रमित्युच्यते तर्ह्यात्मानमेव लोकमुपासीतेत्यादौ इतिशब्दाभावात् तथैवाभ्युपगम्यताम् । यदि क्वचिदुपासनावाक्येषु इतिशब्दश्रवणात् तत्राप्यध्याहारः क्रियते तर्हि 'न गिरा गिरेति ब्रूयादि'त्यादि यागप्रकरणेषु इतिशब्दश्रवणात् अग्नौ जुहोतीत्यादावध्याहारः स्यात् । अतो विधिविशेषत्वेनापि सिद्धार्थे तात्पर्यमवश्यमभ्युपगन्तव्यम् । तथा हि । वेदान्तवाक्यान्युपासनाख्यकार्ये अधिकृतविशेषणभूतफलत्वेन दुःखासंभिन्नदेशविशेषरूपस्वर्गादिवत् रात्रिसत्रप्रतिष्ठादिवदवगुणशतयातनासाध्यसाधनभावादिवच्च कार्योपयोगितयैव सर्वं बोधयन्ति । तथा हि । 'ब्रह्मविदाप्नोति परमि'त्यत्र ब्रह्मोपासनाख्यकार्याधिकृतफलत्वेन ब्रह्मप्राप्तिः श्रूयते । परप्राप्तिकामो ब्रह्म विद्यादिति । अत्र प्राप्यतया प्रतीयमानब्रह्मस्वरूपं तद्विशेषणं सर्वं कार्योपयोगितयैव सिद्धं भवति । तदन्तर्गतमेव जगत्सृष्ट्यादिकं संहर्तृत्वमाधारकत्वमन्तरात्मत्वमित्याद्युक्तमनुक्तं सर्वमिति न किञ्चिदनुपपन्नम् । एवं च सति मन्त्रार्थवादगता अविरुद्धा अपूर्वार्थाश्च सर्वे विधिशेषतयैव हि सिद्धा भवन्ति । तथा हि । सर्वोऽप्यर्थवादभागो देवताराधनभूताद्यागादेः साङ्गस्याराध्यदेवतायाः श्रेष्ठानुगुणान् सहस्रशो वदन् कर्मणि प्राशस्त्यबुद्धिमुत्पादयन्ति । तेषामसद्भावे प्राशस्त्यबुद्धिरेव न स्यादिति कर्मणि प्राशस्त्यबुद्ध्यर्थं गुणसद्भावमेव बोधयन्तीत्यनयैव दिशा सर्वमन्त्रार्थवादगता ह्यन्यथासिद्धाः । न च प्रत्यक्षानुपलम्भबाधः । तेषामस्मदाद्यक्षायोग्यत्वात् । अन्यथा तन्न्यायेन वेदार्थमात्रापह्नवः स्यात् । अपि च सिद्धे शब्दस्य प्रामाण्यानभ्युपगमे ब्राह्मणो न हन्तव्य इत्यादेर्निषेधवाक्यस्याप्रामाण्यं स्यात् । अकार्यत्वान्निषेधस्य तत्रापि किञ्चित्कार्याभ्युपगमे नञः पर्युदास एवार्थो न प्रतिषेधार्थः स्यात् । तथा च निषेधशास्त्राभावप्रसङ्गः । द्वितीये कार्यपदस्य वैय्यर्थ्यमापद्येत । कार्यस्य कार्यान्वयाभावात् । सिद्धार्थे शक्त्युपगमे पदार्थानामेव परस्परान्वयसम्भवान्न किञ्चिदनुपपन्नम् । अतः कार्यानुप्रवेशमन्तरेणापि सिद्धार्थबोधकत्वसम्भवाद्युक्तं सर्ववेदपदस्य परमतात्पर्येण ब्रह्मावबोधकत्वं कर्मकाण्डस्य भगवच्छेषभूतकर्मप्रतिपादनद्वारा भगवत्येव तात्पर्यम् ।

५९ कर्मण्येव तात्पर्याभ्युपगमे वाक्यभेदः स्यात् । किञ्च सर्ववेदैर्महागुणत्वेनावबुद्धस्य भगवतो मोक्षलक्षणमहाफलदातृत्वात् तत्रैव परमतात्पर्यं युक्तं कर्मकाण्डस्य । न तु अल्पफलसाधनभूतकर्मणि ब्रह्मकाण्डस्य । फलसम्बन्धिनः प्राधान्यं दृष्टम् । ज्योतिष्टोमादौ महाफलसम्बन्धिनो महाप्राधान्यं तन्न्यायेनाङ्गीकर्तव्यमेव ।





६० ननु ब्रह्मणि कर्मादिषु च पृथक् पृथक् तात्पर्याभ्युपगमे गौरवमिति चेत् । हन्त तर्हि कल्पनागौरवादेव स्रुक्स्रुवादिपदार्थो न भूयासुः । प्रत्यक्षादिपरेण सिद्धाः कार्यपदा न स्युरिति चेन्न । तात्पर्याणामुक्तरीत्या प्रमाण-सिद्धत्वेन निराकर्तुमशक्यत्वात् ।

६१ तस्मात्पदार्थेषु वाक्यार्थेषु च तात्पर्यमभ्युपगन्तव्यम् ।

६२ शब्दस्य वाक्यैकवाक्यता चाङ्गीकर्तव्या । 'व्रीहीभिर्यजेते'त्यादिवाक्ये प्रतिपादितयज्ञादीनां 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेने'ति परमात्मज्ञानाङ्गत्वोक्तेः । एवं सत्यर्थवादे विधिवाक्येन वाक्यैकवाक्यत्वं न प्राशस्त्यमात्रलक्षकत्वेन पदैकवाक्यत्वमिति सिद्ध्यति । तथा 'सत्यं ज्ञानमनन्तमि'त्यत्र ब्रह्मपदेन सत्यादिपदानां समस्तव्यस्तान्वयसिद्धिः । अवान्तरवाक्यानां बहुत्वेऽपि महावाक्य-स्यैकत्वान्न वाक्यभेददोषावकाशः स्यात् । अन्यथा 'अरुणया पिङ्गाक्ष्यैकहायिन्या गवा सोमं क्रीणाती'-त्यत्र गवा क्रीणाति अरुणया क्रीणातीति कारकपदानां प्राधान्यस्यापेक्षितस्य पृथक् पृथक् क्रियापदेनान्वयस्य परेणाप्यङ्गीकृतत्वाद्वाक्यभेददोषापत्तेः । अरुणादिपदानां गोपदेन पार्ष्टिकान्वयो योग्यतावशादङ्गीकृतः । ननु गङ्गायां घोषः प्रतिवसतीत्यादिषु गङ्गादिपदार्थस्य प्रत्यक्षादिविरोधादर्थान्तरान्वयासम्भवात् कथं पदार्थे तात्पर्यं शब्दस्योक्तमिति चेत् मैवम् । तत्र मुख्यार्थाऽभावेऽपि गौणलाक्षणिकार्थसम्भवात् । तथाऽविरोधे तात्पर्याभ्युपगमे विरोधाभावादित्यनवद्यम् ॥ ६४ ॥

६५ तदाह **अतो ज्ञानेत्यादिना** । यस्माज्ज्ञानस्यैवेष्टसाधनत्वं दृष्टं तत्साधनत्वं च कर्मणः तस्मात् भगवतो ज्ञानार्थान्येव यागादिकर्माणि 'विविदिषन्ति यज्ञेन दानेने'ति श्रुतेर्ज्ञानमेव तस्य प्रसादजनकम् । तच्च जिज्ञासयैव भवति । करणभूतस्य वेदस्य जिज्ञासालक्षणेतिकर्तव्यताभावे ज्ञानजनकत्वासम्भवात् । अतो ब्रह्मजिज्ञासा कर्तव्या । 'तद्विजिज्ञासस्वे'ति प्रमाणभूतश्रुतिविहितत्वात् ।

६६ श्रुतेश्च प्रामाण्यं स्वत एव न संवादाधीनम् । यथा प्रत्यक्षस्य संवादाधीनं चेत् प्रामाण्यं तर्हि तत्संवादकप्रामाण्यमन्यसंवादाधीनं तत्राप्येवं तत्रापि एवमित्यनवस्था मूलक्षतिकरी प्रसज्येत । न चैवमप्रामाण्यं स्वतो ज्ञानस्य । तथा सति ज्ञानविश्वासेन न क्वाप्यर्थेषु प्रवर्तेत दृष्टेषु । तस्मात्करणदोषबाधकप्रत्ययाधीनत्वात् परत एवाप्रामाण्यं ज्ञानस्य । अत एव मिथ्याज्ञप्तिविप्रलम्भादिदोषसद्भावाद्वेदविरुद्धागमस्याप्रामाण्यं पाशुपतादेः ॥ ६७ ॥

६८ शब्दस्य स्वतो दोषाभावेऽपि वक्तृदोषेण दोषवत्त्वमवधृतम् । न चैवंविधदोषवत्त्वेनाप्रामाण्यं वक्तुं शक्यं वेदस्यापौरुषेयत्वात् । तस्य च कर्तुरप्रसिद्धेः । किञ्चेश्वरकृतत्वे वेदस्य तस्मात् धर्मादिसिद्धिः न स्यात् । विप्रलम्भादिवक्तृदोषसम्भवात् । यदि वेदस्य प्रामाण्यार्थमविप्रलम्भकसर्वज्ञवीतरागेश्वरकृतत्वं कल्प्यते । तर्हि कल्पनागौरवं दुर्वारमापद्येत । न चेश्वरस्य सर्वज्ञत्वादौ तद्वाक्यमेव प्रमाणम् । परस्पराश्रयत्वप्रसङ्गात् । नाप्यनुमानं तत्र मानम् । प्रत्यनुमानग्रस्तत्वात् । तथा हि । धर्मादिः कस्यचित्प्रत्यक्षः वस्तुत्वाद्घटवत् यस्य प्रत्यक्षः स ईश्वरो बुद्धो वेति तत्तद्वादिभिरुक्ते विमतो न धर्मदर्शी पुरुषत्वाद्देवदत्तवदिति वक्तुं शक्यत्वात् । अतोऽत्यन्ताती-





न्द्रियार्थेषु न वाक्यस्य मानत्वम् अन्वयव्यतिरेकसमधिगम्य आप्तत्वस्य तत्र ज्ञातुमशक्यत्वात् । अतो धर्मादिसिद्ध्यन्यथाऽनुपपत्त्याऽपि वेदापौरुषेयत्वमभ्युपगन्तव्यम् ॥ ७० ॥

७१ यस्तु प्रत्यक्षैकप्रमाणवादी श्रेयःसाधनं धर्मो नास्तीति वदति तद्वाक्यं निष्फलत्वाद्धेयमेव । न च तेन लोकोपकारः प्रयोजनम् । धर्माधर्माभावज्ञाने परस्परहिंसादिनाऽपकारस्यैव प्राप्तेः । न चोपकारेण तस्य प्रयोजनमदृष्टाभावात् । किञ्च धर्माभावोऽपि न प्रत्यक्षेणावसीयते । अनुमानेन चेदपसिद्धान्तः । किञ्च प्रत्यक्षातिरिक्तप्रमाणाभावे धूमदर्शनादग्न्यर्थिनः पर्वते प्रवृत्तिर्दुर्घटा स्यात् । अतो धर्मब्रह्मादिकमस्तिनास्तीति वादिविवादाल्लोकस्य संशयोत्पत्तावस्त्येवेत्थंभूतब्रह्मादिकमिति निश्चायकं वेदवाक्यमेव भवेत् । यथा प्रत्यक्षदर्शनविगमेन यस्यकस्यचित्सन्दिग्धस्य ।

७२ वेदश्च गुणक्रियादिविशिष्टमेवावबोधयति । तस्माच्छब्दानामाकाङ्क्षितसन्निहितयोग्यार्थान्तरान्विते वाचकत्वशक्तिरवसीयते लोकव्यवहारात् । अतोऽन्विताभिधायिनः शब्दाः अभिहितान्वये कल्पनागौरवमनिवार्यम् । तथा हि । पदैस्तावदनन्वितार्थानामभिधानं कल्प्यम् । तदनन्तरमभिहितानामर्थानामाकाङ्क्षादिवशात् परस्परान्वयबोधकत्वमदृष्टं कल्प्यमिति ततो वरमाकाङ्क्षादिवशादन्वितार्थबोधकत्वं पदानामेव ।

७३ न च पदानां वाचकशक्तिमन्तरेण वाक्यार्थबोधकत्वं सम्भवति । घटोऽस्तीति वाक्यस्य पटसद्भावबोधकत्वप्रसङ्गात् । यदि पदानामेव स्वार्थबोधनद्वारा लक्षणया वाक्यार्थबोधकत्वं कल्प्यते, तर्हि तेषामेव द्विधाप्रवृत्तिकल्पनाप्रसङ्गात् । न ह्यचेतनस्य शब्दस्य विरम्यव्यापारः सम्भवति । अतो योग्यार्थान्तरान्विताभिधायित्वेऽपि शब्दानामन्वितार्थविशेषस्तु वाक्यविशेषात् सिद्ध्यतीति सर्वं निरवद्यम् ॥

७४ एवं शास्त्रारम्भोपयुक्तमर्थजातं युक्तिभिः समर्थितमप्यत्यन्तं दृढीकर्तुं ब्रह्मतर्कोक्तमित्याह **एतत्सर्वमिति** ।

तर्कशास्त्रे ब्रह्मतर्क एव पूर्वोक्तयुक्तिजातस्य विस्तरेणोक्तत्वादत्र प्रथमसूत्रे सङ्क्षेपेण सूचनं कृतं सूत्रकृता । तर्कशास्त्राद्व्युत्पाद्यभेदमीमांसाशास्त्रस्य विद्यान्तरत्वान्न प्रपञ्चितम् । अत्र सूत्रारूढमेव पूर्वं विचारितं सर्वमित्याशयः ।

७५ तर्कमीमांसयोर्व्युत्पाद्यभेदमाह **प्रमाणेति**।

७६ प्रत्यक्षादिप्रमाणानामन्वयव्यतिरेकलक्षणन्यायस्य उद्देशविभागलक्षणपरीक्षारूपेण तर्कशास्त्रे सम्यङ्निरूपणं क्रियते । तद्व्युत्पादितागमादिप्रमाणन्यायैर्ब्रह्मधर्मादिप्रमेयविचार एव मीमांसेत्यर्थः । तर्कशास्त्रं च नाक्षपादादिऋष्याभासप्रणीतं किन्तु ब्रह्मतर्क एव भगवत्प्रोक्त इत्याशयवानाह **ब्रह्मतर्कमिति** ।

७७ नारायणमूर्त्या स्वेनैव कृतात्पञ्चाशत्कोटिविस्ताराद्ब्रह्मतर्कादुद्धृत्य यतः पञ्चसहस्रग्रन्थं कृतवान् बादरायणः । अतोऽपेक्षितार्थस्य तत्रैवोक्तत्वादत्यन्तसङ्क्षेपेण प्रथमसूत्रगताथ:शब्देन हेत्वर्थवाचिनाऽसूचयत् ।





७८ अथानुभवत एव पूर्वोक्तहेतुकलापस्य सिद्धत्वं मीमांसारम्भहेतुभूतमत इत्युक्तम् ।

७८ ननु तर्कशास्त्रोक्तमतःशब्देन किमित्युपजीव्यते तद्विनाऽप्यत्रैव किं नोच्यत इत्याशङ्क्याह **देवैरिति** ।

७९ यतो देवैः प्रार्थितो दुर्गमार्थेषूपनिषत्सु व्यापृतोऽन्यत्रोक्तस्य तर्कस्य न विस्तृतिं चकार व्यासः । किञ्च ब्रह्मजिज्ञासारम्भप्रतिपक्षगता युक्तयस्तुच्छत्वादवज्ञातव्या इति प्रदर्शयितुं भगवता न कण्ठोक्त्या निराकृताः । प्रतिपक्षस्यावज्ञेयत्वं कथमित्यत आह **प्रत्यक्षेति** ।

८० यो हि सर्वलोकप्रसिद्धप्रत्यक्षप्रवृत्तमपि ज्ञातुं न शक्नोति । अयथार्थत्वाङ्गीकारात् । सोऽत्र दुर्गमार्थे वेदे प्रतिपाद्यत्वेन कं पक्षमभिवीक्षेत । तस्मादयुक्तमतत्वान्मोक्षशास्त्रे तत्प्रवृत्तोऽपि प्रतिपक्ष्युपेक्षितव्य एव न तु तत्प्रकारेणैतच्छास्त्रार्थो ग्राह्यः । अतो निःशङ्कत्वान्मुमुक्षुभिर्विष्णुजिज्ञासा कर्तव्येत्यभिप्रायः ।

८० ननु ब्रह्मशब्दस्यार्थान्तरेऽपि प्रयुक्तत्वात् कथं ब्रह्मजिज्ञासेत्यत्र विष्णुजिज्ञासा प्रतिज्ञातेत्याशङ्क्याह **स्वयमिति**।

८१ देवताकाण्डस्यान्ते 'स विष्णुराह हि तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षत' इति पूर्वमेव सूत्रकृतोक्तम् ।

८२ यद्यपि देवताकाण्डस्य मध्यमभागः शेषपैलाभ्यां कृतः तथाऽपि आद्यन्तभागौ वेदव्यासेन कृतौ, अतो निरन्तरकाण्डस्यान्ते तेनैव ब्रह्मशब्दस्य विष्णावेव प्रयुक्तत्वेन तस्यैव प्रस्तुतत्वाच्च ब्रह्मजिज्ञासापदेन विष्णुजिज्ञासामेव सूत्रकृदसूचयदित्यर्थः । यद्यपि निखिलवेदविचाराधिकारत्वात् ब्रह्मकाण्डस्यैव काण्डान्तरासम्भवः, तथाऽपि कर्मदेवतामीमांसयोर्ब्रह्ममीमांसया सङ्क्षेपेण विचारितार्थानामेव तदुपयुक्तानां विस्तृतविचाराधिकारत्वाच्छास्त्रान्तरत्वमित्यदोषः ।

८३ अपि च मुख्यतया नारायणशब्दार्थवाचित्वात् ब्रह्मशब्दस्तत्पर एवेत्याह **दोषारेति**।

यतो दोषारच्छिद्रशब्दा नातिभिन्नार्था अतस्तद्विरुद्धासङ्ख्येयकल्याणगुणवान् नारायणशब्दार्थः।

८४ ब्रह्मशब्दस्य गुणबृंहितवाचित्वात् स एवार्थः। अतो नारायणस्यैव जिज्ञासाऽत्र विधीयत इत्यर्थः।

८५ इतोऽपि ब्रह्मशब्दस्य विष्णुपरत्वं श्रुतिसंसिद्धत्वादित्याह **सिद्धत्वादिति** । अस्यार्थः । 'अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयानि'ति नारायणानुवाकोपक्रमवाक्ये प्रतीयमानो जलशायित्वलिङ्गान्नारायणपदार्थ एव भवेत् । 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत' इति व्यासोक्तेः । 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधामि'ति कामतो विधिरुद्रादिपददात्र्या स्वयं श्रियेति रुद्रादिपददातृत्वेनोक्तया श्रिया लक्ष्म्या स्वकारणभूतनारायणस्यैव 'मम योनिरप्स्वन्तः





समुद्र' इति अप्स्वन्तरीरितत्वाच्च वेदान्तरे 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मिणि' इत्यैतरेयश्रुतावाज्ञाधृतमहदादिदेवतासमूहत्वेन प्रसिद्धस्य विष्णोरत्रापि तैत्तिरीयश्रुतौ 'यस्मिन्निदं सञ्च वि चैधि सर्वं यस्मिन्देवा अधिविश्वे निषेदुरि'ति सर्वदेवाश्रयत्वमुक्त्वा 'समुद्रेऽन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधस' इत्यस्य क्षीराब्धिशायित्वेनोक्तस्य विष्णोरत्रापि 'यमन्तः समुद्रे कवयो वयन्ती'ति समुद्रस्थानमुक्त्वा ऋचो अक्षरे परमे व्योमन्नि'त्यत्र अक्षरनामत्वेन सिद्धस्य विष्णोरेव अत्रापि 'यदक्षरे परमे प्रजा' इत्यक्षरनाम चोक्त्वा 'मम योनिरप्स्वन्तः समुद्र' इति प्रकृतिकारणत्वेनोक्तस्यात्रापि 'यतः प्रसूता जगतः प्रसूतिरि'ति जगत्कारणत्वं च 'यदोषधीभिः पुरुषान्पशूंश्च विवेश भूतानि चराचराणी'ति विष्णुशब्दप्रवृत्तिनिमित्तं चोक्त्वा 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनामि'ति वाक्यशेषगतेन 'अम्भस्य पार' इति समुद्रशायिनमेव 'अस्य वामस्ये'त्यादिसूक्तान्तरेषु विष्णुसम्बन्धित्वेन प्रसिद्धनामलिङ्गैर्निर्दिष्टं तच्छब्देन परामृश्य ब्रह्मशब्देन ब्रह्मत्वं विदधाति तैत्तिरीयश्रुतिः ।

८६ एवकारादन्ययोगव्यवच्छेदार्थाद्ब्रह्मान्तरनिवृत्तिः सिद्ध्यति ।

अतो नारायणजिज्ञासाविधायकं प्रथमसूत्रमिति सिद्धम् ॥

**॥ इति जिज्ञासाधिकरणम् ॥**

* * *

# ॥ अथ जन्माधिकरणम् ॥

जिज्ञासा विहिता । तज्जिज्ञासा इतःपरं क्रियते । तत्र लक्षणप्रमाणसाधनफलजिज्ञासया सहिता ब्रह्मजिज्ञासाऽभिप्रेता सूत्रकारस्य अप्रधानानुयायित्वाद्गुणस्य । लक्षणसाधनादिकमन्तरेण ब्रह्मजिज्ञासाया अनिराकाङ्क्षत्वाच्च अतो मुमुक्षोरधिकारिणो ब्रह्मजिज्ञासाविधाने सति 'किंलक्षणकं ब्रह्म, केन साधनेन प्रसीदति, प्रसन्नं च किं फलं ददाती'त्याकाङ्क्षोदेति ।

८९ निगमनिरुक्तादिना व्युत्पन्नपदपदार्थस्य मीमांसाधिकारित्वाद् बृहत्त्वगुणयोगेन स्वरूपमात्रं ब्रह्मपदादेव प्रतीतमिति 'अस्य वामस्ये'त्यादिसूक्तैः 'अम्भस्यपार' इत्याद्युपनिषद्भिरन्यैश्चागमैः प्रतिपादितं जगज्जननीप्रादुर्भवकारणं समुद्रशायिब्रह्म जिज्ञास्यमित्युक्तम् । तत् 'जन्माद्यस्य यत' इति सूत्रोक्तजगज्जन्मादिकारणत्वेन स्वेतरसमस्तवस्तुभ्यो व्यावर्तत इत्यर्थः । अस्य प्रत्यक्षादिपरिदृश्यमानप्रपञ्चस्य यतो जन्मादि । तद्ब्रह्मेति शेषः ।

९० एतच्च सूत्रं श्रुतिसिद्धस्य जन्मादिकारणत्वस्याभिधायकं न कार्यत्वहेत्वनुमितस्येत्याशयवानाह **सृष्टिरिति** । जन्म आदिः यस्य उत्पत्त्याद्यष्टकस्य तत् इदं जन्मादीति तद्गुणसंविज्ञानबहुव्रीहिसमासस्य विवक्षितत्वात् ।





सूत्रगतजन्मादिपदेन सृष्ट्यादयो मोक्षान्ता भावविकारा उपात्ताः । लब्धजन्मनो हि वस्तुनः स्थित्यादिरिति जन्म न आदित्वं च युज्यते । ते च जन्मादयो हरेरेव सकाशात् नारायणानुवाकोक्ताः । तथा हि । 'यतः प्रसूता जगतः प्रसूतिः', 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी'ति कालसृष्ट्यभिधानेन सर्वसृष्टिरुक्ता तदधीनत्वादितरसृष्टेः । 'यस्मिन्निदं सञ्च विचैधि सर्वं यस्मिन्देवा अधिविश्वे निषेदुरि'ति स्थितिः । वेनस्तत्पश्यन् 'विश्वानि भुवनानि विद्वान् यत्र विश्वं भवत्येकनीलमि'ति ज्ञानं संहारश्च । वेनस्तदित्यस्यार्थः । यत्र विश्वमेकमनीडं लोकान्तरनाशात् सूक्ष्मरूपेणैकस्थानं भवति तद्ब्रह्म पश्यन् वेनो नाम ऋषिः तत्प्रसादेन 'विश्वानि भुवनानि विद्वानभवदि'ति प्रतीतेः । 'विवेश भूतानि चराचराणी'ति नियमनम् । नियामकत्वेन ब्रह्मणश्चराचरप्रवेशप्रतीतेः । 'ऋतस्य तन्तुं विततं विवृत्य तदपश्यत्तदभवत् प्रजासु' इत्यज्ञानबन्धौ । 'ऋतस्य ब्रह्मणोऽधीनं तन्तुं प्रकृतिपाशं ज्ञानबन्धकं प्रजासु विततं विवृत्य पृथक् पृथक् वेननामको हिरण्यगर्भोऽपश्यदि'ति प्रतीतेः । 'य एतद्विदुरमृतास्ते भवन्ती'ति मोक्षः । ज्ञानान्मोक्षः श्रुतोऽप्यवान्तरव्यापारमन्तरेण न सिद्ध्यतीति भगवत्प्रसादसाध्य इत्यवगतेः । श्रौतमेवैतद्भगवतो लक्षणं जन्मकारणत्वं स्थितिकारणत्वं संहारकारणत्वं पृथक् पृथक् लक्षणमवगन्तव्यम् । अव्याप्त्यतिव्याप्तिशून्यत्वात् ।

९१ 'यो देवानां प्रभवस्य विश्वाधिको रुद्रो महा ऋषिरि'त्यादितत्तच्छाखासु रुद्रादीनापि जगत्कर्तृत्वादिलक्षणमुपलभ्यत इत्यत आह **यन्नामानीति** । 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति', 'यो देवानां नामधा एक एव सम्प्रश्नं तं भुवना यन्ती'त्यादिश्रुतेः सर्वाणि रुद्रादिनामानि विष्णावेव मुख्यानि रुद्रादिषु गौणान्येव ।

९२ अतो मुख्ये सम्भवति अमुख्ये मुख्यकल्पनायोगात् रुद्रादीनां जगत्कारणत्वेन किञ्चिदालम्बनम् । सोमः पवत इति श्रुत्यर्थः ।

९२ ननु 'सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्या । जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोरि'ति विष्णोरप्यन्यतो जन्मादिकं श्रूयते । तत्कथं तस्यैव जगज्जन्मादिकारणत्वमित्यत आह **गुणाः श्रुता इति** । 'गुणाः श्रुताः सुविरुद्धाश्च देवे संत्यश्रुता अपि नैवात्र शङ्का । चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि तथा प्रतीता' इति वचनान्न काचिच्छ्रुतिर्हरिदोषप्रतिपादनपरा स्यात् ।

९३ यत्तूक्तं 'जनितोत विष्णोरि'ति तत्सोमादिशब्दवाच्यात् क्षीराब्धिशयनात् मूलरूपात् विष्णुशब्दाभिधेयप्रादुर्भावरूपस्य व्यक्त्यपेक्षयोपपन्नमिति नान्यस्मात् विष्णुजनितत्ववाची । इतोऽपि कारणान्न विष्णोर्जननादिदोषपरत्वं श्रुतीनामित्याह **प्रीत्येति** । भगवतः प्रीत्युत्पादनद्वाराऽधिकारिणां मोक्षप्रतिपादनपरत्वात्सर्वेषां देवानां न तस्य दूषणे तात्पर्यम् । किन्तु शाश्वतादिगुणत्वेन प्रीतिसाधनत्वात् बाधस्य अन्यथा भगवदप्रीतिसाधनदोषबोधोत्पादकत्वेन नरकावहत्वात् त्याज्यमेव भवेद्वेदस्य । अतो वेदानां भगवद्गुणोत्कर्ष एव महातात्पर्यम् ।





* ननु हरौ दोषावेदकत्वेन अनर्थावहत्वात् हेयोऽपि वेदः प्रमाणं स्यादेव दुर्गन्धादिबोधजनकवदित्यत आह **उपक्रमादिवदिति**। उपक्रमादिवत्फलमपि वाक्यतात्पर्यनिश्चायकत्वेनावगतं फलं च मुख्यं कैवल्यमेव। अतः फलवदर्थबोधकस्यैव वाक्यस्य प्रामाण्यं निश्चेतुं शक्यम्। अन्यथा वाक्यतात्पर्यनिश्चयाभावाज्जरद्गवादि-वाक्यवदप्रामाण्यं स्यादेवेत्याशयः।

९४ ननु लिङ्गपुराणादिषु रुद्रादेरेव जगत्कारणत्वं तदुपसर्जनत्वं विष्णोरुच्यत इत्यत आह **न पुराणादीति**। रुद्रादेर्जगत्कारणत्वादौ न पुराणादिकं प्रमाणं श्रुतिविरोधात्। तदुक्तं जैमिनिना। 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमि'ति। न च लिङ्गपुराणादेः श्रुतिमूलत्वम्। 'शैवान्पाशुपताच्चक्रे' इति दर्शनान्तरमूलत्वोक्तेर्मोक्षधर्मे। किञ्च 'त्वं च रुद्र महाबाहो मोहशास्त्राणि कारये'ति हर्याज्ञया दुर्जनमोहनार्थं रुद्रादिभिः प्रणीतत्वस्य वाराहोक्त-त्वान्न शैवपुराणोक्तं ग्राह्यम्। विष्णुमाहात्म्यादिकं तु तत्रोक्तमपि वेदाविरुद्धत्वाद्ग्राह्यम्।

९५ इतोऽपि न रुद्रादेर्जगत्कारणत्वं सर्वनामवत्वाभावादित्याह **न सर्वनामतेति**।

९५ जगत्कर्तुर्हि मुख्यत इन्द्रादिसर्वनामवत्वं भवेत्। न च तद्रुद्रादेः श्रुतं कुत्रचित्। प्रत्युत विष्णोरन्यत्र निषिद्धम्। 'यो देवानां नामधा एक एवे'त्यत्र एवकारेण। न चैतद्वाक्यम् रुद्रादिविषयमिति वाच्यम्। 'अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुरि'ति वाक्यशेषविरोधात्। अपि च लिङ्गात्पद्मनाभ एवोक्तः।

९६ किञ्च विष्णोर्नियमेनाज्ञानपारतन्त्र्यादिदोषराहित्यश्रवणाद्वेदेषु तच्छ्रवणाच्चान्येषां न जगत्कारणत्वमित्याह **अदोषवचनादिति**।

९६ रुद्रादेरज्ञानादिमत्त्वं पाशुपताद्यधिकरणेषु श्रौतीकरिष्यत्याचार्यः।

९७ इदानीमुक्तार्थोपसंहारमुखेन जगज्जन्मादिकारणत्वं स्वलक्षणं न तटस्थलक्षणमित्याह **जन्माद्यस्येति**। एतच्च सूत्रकारेण श्रीभागवते उक्तम्— 'ब्राह्मे मुहूर्ते चोत्थाय वार्युपस्पृश्य माधवः। दध्यौ प्रसन्नकरण आत्मानं तमसः परम्।', 'यत्तत्परञ्ज्योतिरनन्यमद्वयं स्वसंस्थया नित्यनिरस्तकल्मषम्। ब्रह्माख्यमस्योद्भवनादिहेतुभिः स्वलक्षणैर्लक्षितभावनिर्वृतिमि'ति।

९८ तदाह **अस्येति**।

९९ अतः सूत्रकृदभिप्रायापरिज्ञानमूलं तटस्थलक्षणवर्णनम्। किञ्च किंविशेषणं ब्रह्मेति विशिष्टस्याकाङ्क्षित-त्वाज्जन्मादिकर्तृत्वविशेषणमेव ब्रह्माभिधातव्यं न तु तदुपलक्षणम्। अनाकाङ्क्षाभिधानप्रसङ्गात्। अपि च यत्र काकस्तद्देवदत्तगृहमिति वैय्यधिकरण्येन प्रयोगो ह्युपलक्षणस्य दृष्टः। अत्र तु जगज्जन्मादिकारणं ब्रह्मेति सामा-





नाधिकरण्येन प्रयोगादुपलक्षणत्वं प्रतीतिविरुद्धम् । अतो लक्षणव्यावृत्त्यभावादद्वैतमते लक्षणसूत्रमनुपपन्नमित्याशयवानाह **अत इति** ।

९९ यतो जगज्जन्मादिकर्तृत्वं ब्रह्मणो लक्षणमाह सूत्रकारः, अत एव जीवं व्यावर्तितवान् । न हि जगज्जन्मादिकर्तृत्वं जीवस्य सम्भवति । सर्वज्ञत्वसर्वशक्तिरहितत्वात् ।

१०० अपि च जीवस्य स्वतन्त्रकर्तृत्व इतरव्यपदेशाद्धिताकरणदोषप्रसक्तिरिति सूत्रकृता वक्ष्यमाणं दूषणं व्याहन्येत । किञ्च निर्विशेषत्वाङ्गीकारात् ब्रह्मणः तल्लक्षणसूत्रं परमतेऽनुपपन्नमित्याशयवानाह **निर्गुणत्वमिति** ।

१०० जगज्जन्मादिकर्तृत्वं वदता सूत्रकारेणैव अर्थात्सर्वज्ञत्वसर्वेश्वरत्वादेरभ्युपगमात् । ब्रह्मणो निर्गुणत्वं निराकृतम् ।

१०१ ननु 'अयो दहती'त्यत्र यथाऽग्नेर्दाहकत्वमयस्युपचर्यते एवं मायागतं कर्तृत्वं ब्रह्मण्यौपचारिकं किमिति न स्यादित्यत आह **भेदेनेति** ।

१०१ इदमत्राकूतम् । सर्वकर्तृत्वादिब्रह्मादिधर्माणां स्वाभाविकत्वे तद्विरुद्धजीवधर्माणां च स्वाभाविकत्वे विरुद्धधर्मक्रान्तत्वाज्जीवपरमयोरभेदो व्याहतः स्यात् । अतस्तत्सिद्ध्यर्थं जगत्कर्तृत्वं ब्रह्मणो मुख्यं न सम्भवतीत्यौपचारिकं कल्पितं मायिना । न च तद्युक्तम् । जीवेशयोर्भेदाभ्युपगमेन भगवद्धर्माणां स्रष्टृत्वादीनामग्निदाहकत्वस्येव मुख्यत्वसम्भवादौपचारिकत्वानुपपत्तेः । मुख्यार्थसम्भवे हि तत्सम्बन्धाल्लक्षणा दृष्टा शब्दस्य अर्थान्तरे 'गङ्गायां घोषः प्रतिवसती'त्यादौ । न च 'साक्षी चेता केवलो निर्गुणश्चे'ति निर्गुणत्वश्रवणाद्ब्रह्मणः सर्वकर्तृत्वश्रुतेर्मुख्यार्थासम्भवः । सत्त्वादिप्राकृतगुणराहित्यविषयत्वेन सावकाशत्वान्निर्गुणत्वश्रुतेः । अन्यथा 'साक्षी चेते'त्यादिपदानां प्रवृत्तिनिमित्ताभावेन वैय्यर्थ्यं स्यात् । न च निर्विशेषत्ववदिति ब्रह्मणः केनचित्सम्बन्धो वक्तुं शक्यः अतः सम्बन्धानुपपत्त्योरभावान्न लाक्षणिकं ब्रह्मणि जगत्कर्तृत्वादिपदकदम्बकम् ।

१०१ ननु जीवाद्भेदे हि ब्रह्मणः सर्वकर्तृत्वादिकं मुख्यं सिद्ध्येत् स एव कथमित्यत आह **कथमिति** ।

१०२ दोषवतो जीवान्नित्यगुणस्य ब्रह्मणो भेद एव युक्तः । अन्यथा नित्यगुणवत्त्वव्याघातात् । अथैतद्विरोधपरिहाराय निर्गुणमेकं कल्पयित्वा तस्य जीवेनाभेद इष्यते तदा नित्यगुणवतो जगत्कारणत्वाद्ब्रह्मणो नित्यं भिन्नं स्यात् तन्निर्गुणमित्यद्वैतभङ्गः ।

१०३ न च जगत्कारणमेव ब्रह्माध्यस्तगुणतया निर्गुणमिति वाच्यम् । अनिर्वचनलक्षणाध्यासस्य प्रागेव दूषितत्वात् । एवमपि निर्गुणत्वं चेदपेक्षितं तत्सकलकल्याणगुणाकराद्ब्रह्मणो व्यावृत्तं परिशेषान्निखिलदोषवद्धर्मतयाऽसुरत्वमेव स्यादित्यर्थः स्यात् ।





१०३ स्यादेतत् । यदेतज्जगज्जन्मादिकर्तृत्वलक्षणं ब्रह्मणोऽभिहितं तत्किं तद्वतो भिन्नमुताभिन्नं भिन्नाभिन्नं वा । यदि भिन्नं तर्ह्यपसिद्धान्तः । नाप्यभिन्नम् । लक्ष्यलक्षणभावव्याकोपात् । न च भिन्नाभिन्नम् । विरोधात् । अतो जगत्कर्तृत्वादिधर्माणां निर्वक्तुमशक्यत्वाद्भेदकाभावेनैक्यमेव जीवपरयोरिति । नैतत्साधु ।

१०४ ऐक्यस्यापि वक्तुमशक्यत्वात् । तथा हि । ऐक्यमपि किं तद्वतो भिन्नमुताभिन्नमाहोस्विद् भिन्नाभिन्नम् । यद्यभिन्नं न तर्हि शास्त्रेण प्रतिपाद्यम् । स्वरूपस्य स्वयंप्रकाशमानत्वात् ।

१०५ यदि भिन्नं यद्भिन्नं तन्मिथ्येत्यभ्युपगमात् । ऐक्यस्य मिथ्यात्वेन जीवब्रह्मणोर्भेदस्य पारमार्थ्यं स्यात् । परस्परविरुद्धयोरेकतरनिषेधस्यान्यतरविधिनियतत्वात् । नापि भेदाभेदौ । ऐक्यतद्वतोः तयोरपि भेदाभेदाभ्यां भेदाभेदान्तरापेक्षयाऽनवस्थापातात् ।

१०६ नन्वैक्यस्य स्वयमेव निर्वाह्यनिर्वाहकरूपत्वान्न भेदादिकल्पनावकाशोऽस्येति चेन्नैतत्साधु । विकल्पासहत्वात् । तथा हि । निर्वाह्यनिर्वाहकशब्दावेकार्थौ किं भिन्नार्थौ वा । न प्रथमः । पर्यायत्वेन सहप्रयोगानुपपत्तेः । नोत्तरः । परस्परप्रतियोगितया निर्वाह्यात् निर्वाहकस्य भेदः अनिर्वाहकान्निर्वाहकस्य भेदः तयोरपि भेदयोरन्यौ भेदौ तयोरप्येवं तयोरप्येवमित्यनेकमुखानवस्थापातात् । तस्मादैक्यप्रतिबन्दीपराहतत्वान्न लक्षणखण्डनं सम्बोभवीति । तदाह **लक्ष्येति** ॥ १०३-१०७॥

१०७ एवं तावज्जन्मादिकारणत्वस्य तटस्थलक्षणत्वं निराकृत्य इदानीं सत्यज्ञानादिपदानामखण्डार्थत्वं दूषयति **सत्येति**।

'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यत्र सत्यादिपदानामेकार्थत्वे पर्यायत्वप्रसङ्गः । न च सत्यत्वादिविशेषाभावेऽपि ब्रह्मण्यसत्यादिव्यावृत्तिद्वारा पर्यायत्वम् । व्यावर्तकविशेषाभावे ब्रह्मण्यसत्यादिव्यावृत्तेरसम्भवाद्वैय्यर्थ्याच्च । असत्यादिपदार्थापेक्षया सत्यादिपदार्थावगतिः सत्यादिपदार्थापेक्षयाऽसत्यादिपदार्थावगतिरित्यन्योन्याश्रयप्रसङ्गात् । बौद्धराद्धान्तापत्तेश्च।

१०८ ब्रह्मविदाप्नोति परमिति उपक्रमे किंलक्षणकं ब्रह्मेत्याकाङ्क्षायां 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्युत्तरवाक्यं स्वरूपमात्रपरं चेत्, प्रश्नाननुगुणत्वादवगतार्थत्वाच्चानर्थकं स्यात् । विशेषराहित्यादिविशेषवत्वात् 'निर्विशेषं ब्रह्मे'त्युक्तेः 'अहं मूक' इतिवत् स्वव्याघातकत्वं स्यात् । न च कुत्रचिच्छब्दो निर्विशेषार्थः । एकस्यापि पदस्य प्रकृतिप्रत्ययभेदेन सङ्ख्यादिविशिष्टार्थत्वात् ।

१०९ सत्यादिपदानामखण्डार्थत्वं खण्डितं बोद्धव्यम् । अतः सत्यज्ञानादिगुणकमेव ब्रह्म सत्यादिपदार्थ इत्यभ्युपगन्तव्यम् । गुणगुणिनोर्भेदस्यानवस्थादिदुष्टत्वेन अनुभवविरुद्धत्वेनाभावेऽपि विशेषबलादेव गुणगुणिभावः सिद्ध्यति । सविशेषस्तद्यथा नीलं मुखं घटस्य शौक्ल्यमित्यादि ।





११० एवंविधा विशेषाः प्रतिद्रव्यमनन्ताः स्वनिर्वाहकतया युक्ताः परस्परविशेषणविशेष्यभावेन प्रतीयमानाः सन्ति । परस्परविशेषणविशेष्यभावश्च शुक्लो घटो घटस्य शौक्ल्यमित्यादिरवगन्तव्यम् ।

१११ तस्मात्पक्षान्तरसम्भवाद्विशेषबलादेव स्वगतभेदवर्जितमपि ब्रह्म सत्यज्ञानानन्तादिगुणं भण्यते ।

११२ श्रुतिनिकरैर्गुणानां ब्रह्मणा भेदः 'एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावती'त्यादिश्रुतिसिद्धः । तदेवं स्वगतभेदवर्जितस्य भगवतः स्वनिर्वाहकविशेषबलात्सिद्धो लक्ष्यलक्षणभावः ।

**॥ इति जन्माधिकरणम् ॥ २ ॥**

* * *

# ॥ शास्त्रयोनित्वाधिकरणम् ॥

११२ इदानीमनुमानात् रुद्रादेरपि जगज्जन्मादिकारणत्वमाशङ्क्य तत्परिहारत्वेन शास्त्रयोनित्वादित्येतत्सूत्रं विवृणोति **शैवादीत्यादिना** ।

रुद्रस्य जगत्कारणत्वप्रतिपादके शैवाद्यागमः प्रमाणं रुद्रप्रोक्तत्वात् प्रत्यक्षफलकर्मविधायकशैवाद्यागम-वदिति चेत् । नैतत्साधीयः । विमतागमोऽप्रमाणं रुद्रप्रोक्तत्वात् फलव्यभिचारिकर्मविधायकशैवाद्यागमवदित्यपि वक्तुं शक्यत्वात् । विवादपदं सकर्तृकं कार्यत्वात् । यः कर्ता स च रुद्र इत्यनुमानान्तरं रुद्रस्य जगत्कारणत्वे मानमिति चेन्न । विमतो जगत्कारणं न भवति चेतनत्वाच्चैत्रवदित्यनुमानपराहतत्वात् । न चैतदनुमानमन्यतरा-श्रयासिद्धत्वादिदोषयुक्तम् । अतिप्रसङ्गरूपत्वात् ।

११५ एवमुक्तेन न्यायेन प्रमाणान्तरासम्भवाच्छास्त्रप्रमाणकत्वं जगत्कारणस्यावश्यमभ्युपगन्तव्यम् । अनु-मानागम्यत्वं चेशस्य 'नावेदविन्मनुते तं बृहन्तं सर्वानुभूमात्मानं साम्पराये । नैषा तर्केण मतिरापनेया प्रोक्ता-ऽन्येनैव सुज्ञानाय प्रेष्ठे'त्यादिश्रुतिसिद्धम् ।

११७ किञ्च कार्यत्वहेतोः पक्षधर्मताबलान्न सर्वज्ञस्यैकस्य सर्वकर्तुः सिद्धिः । लौकिककर्त्रनपेक्षोत्पत्तिकवन-कर्ता किञ्चित्कर्ता च पुंस्त्वात्सम्मतवत् ।

११८ प्रसिद्धकर्त्रनपेक्षोत्पत्तिकवृक्षस्य कर्ता तस्यैव न साकल्येन ज्ञाता पुंस्त्वात् सम्मतवदित्यनुमानकुण्ठित-शक्तित्वात् नानुमानमीशज्ञापनसमर्थम् । बहुतरातिप्रसङ्गानुमानपराहतं चेशानुमानम् ।





११९ तथा हि । तुरगः शृङ्गी खपुष्पवत् वन्ध्या पुत्रवती वस्तुत्वात् सम्मतवत् । षष्ठो रसो रसत्वात् प्रथमरसवत् । न च वस्तुत्वादित्यस्य हेतोर्घटादौ व्यभिचारः शङ्कनीयः । पक्षतुल्यत्वात् । न च प्रत्यक्षबाधितविषयत्वं वस्तुत्वहेतोः । ईशानुमानेऽपि तुल्यत्वात् । ईशस्य दृष्टचयोग्यत्वं चेत्तुरङ्गशृङ्गादेरपि तुल्यम् । तस्मादतिप्रसङ्गादिदूषणपराहतत्वान्नानुमानं जगत्कारणस्य साधकम् ।

**॥ इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥**

***

# ॥ समन्वयाधिकरणम् ॥

१२० नन्वस्तु वेदैकवेद्यत्वं जगत्कारणस्य, तद्विष्णोरेव कथमित्याशङ्क्य परिहारत्वेन तत्तु समन्वयादित्येतत्सूत्रं विवृणोति **उपक्रमादीत्यादिना** ।

एवं तावत्स्वतन्त्रानुमानस्य परवस्तुन्ययोग्यत्वात् उपक्रमोपसंहारादिन्यायैरेव वेदानां ब्रह्मण्यन्वयकारणैः करणव्युत्पत्त्याऽन्वयनामभिः सम्यगालोचने सर्ववेदमुख्यार्थो विष्णुरेवेति सेत्स्यति नापर इत्यर्थः । इत ऊर्ध्वम् आध्यायपरिसामात्योरेतस्यैवार्थस्य समर्थनं भविष्यति । अन्वीयन्त एभिरिति करणव्युत्पत्त्याऽन्वयविरुद्धत्वात् कथमितरेषां सर्ववेदवेद्यत्वम् ।

**॥ इति समन्वयाधिकरणम् ॥ ४ ॥**

***

# ॥ ईक्षत्यधिकरणम् ॥

१२१ ननु 'यतो वाचो निवर्तन्ते', 'यद्वाचानभ्युदितमेतदप्रमेयं ध्रुवमि'त्यादिवाक्यविरुद्धत्वात् कथं सर्ववेदवेद्यत्वं ब्रह्मण इत्याशङ्क्य परिहारत्वेन ईक्षतेर्नाशब्दमित्यादिसूत्रं विवृणोति भगवानाचार्यः **ईक्षणीयत्वत इत्यादिना** ।

'आत्मन्येवात्मानं पश्येत्', 'आत्मा वा अरे द्रष्टव्यः', 'तरति शोकमात्मवित्', 'परात्परं पुरिशयं पुरुषमीक्षत' इत्यादिवचनैरीक्षणीयो विष्णुः प्रतीयते । न च प्रत्यक्षादिनेक्षणीयत्वं तस्य । 'तं त्वोपनिषदं पुरुषं पृच्छामी'-त्यौपनिषदत्वावगतेः । अतो वेदवाच्यत्वं एवेक्षणीयत्वं सिद्ध्यति ब्रह्मणः । न च वाच्यत्वाभावेऽपि लक्षणयेक्षणं लक्षणं तस्य । यत्किञ्चिच्छब्दवाच्यस्यैव वस्तुनः शब्दान्तरलक्ष्यत्वनियमदर्शनात् । गङ्गायां घोषः प्रतिवसतीत्यादौ





न हि गङ्गापदलक्ष्यं तीरं तीरपदेनाप्यवाच्यं भवति । तथा हि । सति किं तत्तीरपदलक्ष्यमित्याकाङ्क्षायामन्यत्पदं वक्तव्यम् । तेनापि किं लक्ष्यमित्यनवस्थाप्रसङ्गात् । न हि तीरपदलक्ष्यं तीरमेवेति भवति । तथा सति गङ्गापद-लक्ष्यस्यापि गङ्गात्वप्रसङ्गात् । अतो वाच्यत्व एव लक्ष्यत्वं ब्रह्मणः सेत्स्यति । नान्यथा । अवाच्यत्वश्रुतेरर्थमुत्तरत्र वक्ष्यत्याचार्यः ।

१२२ नन्वीक्षणीयत्वेन न वाच्यत्वं ब्रह्मणः सिद्ध्यति । नैतत्साधु । इक्षुमाधुर्यं क्षीरमाधुर्यं गुडमाधुर्यमित्यादि-शब्दैर्माधुर्यविशेषशब्देन च वाच्यत्वात् । 'विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम् । गुडस्य पनसादीनां निर्हारीत्यभिधीयत' इति सूदशास्त्रोक्तेश्च ।

१२३ ननु नद्यास्तीरे पञ्च फलानि सन्तीत्यत्र नदीतीरफलसम्बन्धो वाक्यार्थः । न चासावेकैकपदवाच्यः । तद्वद्ब्रह्मावाच्यमिति चेन्मैवम् । वाक्यार्थपदवाच्यत्वाद्वाक्यस्य । अतो नावाच्यं नाम यत्किञ्चित्प्रामाणिकम् । न च 'यतो वाचो निवर्तन्त' इत्यादिश्रुतेः यतःशब्दनिर्दिष्टाद्ब्रह्मणः सर्वशब्दनिवृत्तिरित्यर्थः ।

१२४ अहं मूक इतिवत् स्वव्याहतत्वात् । किञ्च यः शब्दैर्लक्ष्यत्वमेव ब्रह्मणो वदति स लक्ष्यशब्दवाच्यत्वं कथं परिहरेत् । तेनाप्यवाच्यत्वेऽलक्ष्यताप्रसङ्गात् ।

१२५ अपि च सर्ववेदान्तेष्वेकस्यापि पदस्य ब्रह्मणि मुख्यवृत्तिं प्रतिपादयितुमसमर्थस्य वादिनस्तन्मार्ग-वर्तिनां च मीमांसकाभिमानो लज्जाकर इत्याह **एकस्येति** ।

१२७ नन्वीक्षणीयत्वेन वाच्यत्वं मायाशबलस्य ब्रह्मणो न शुद्धस्येत्याशङ्क्य परिहाररूपत्वेन तावत् 'गौणश्चेन्नात्मशब्दात्', 'तन्निष्ठस्य मोक्षोपदेशादि'ति सूत्रद्वयं विवृणोति **आत्मेत्यादिना** । आत्मानं पश्येदित्यादिषु द्रष्टव्यत्वेनोदित आत्मा न मायावच्छिन्नः । आततत्वेनापरिच्छिन्नत्वात् । पूर्णमेव ब्रह्मजिज्ञास्यत्वेन प्रतिज्ञातम् । तदेव जगज्जन्मादिकारणत्वेन लक्षितम् । तदेव शास्त्रप्रमाणकमुक्तम् । तत्रैव श्रुतिसमन्वयः प्रतिज्ञातः ।

१२८ अतः श्रुतिसूत्रासङ्गतेर्वन्ध्यापुत्रोपमं मायाशबलं वाच्यं शुद्धं ब्रह्म लक्ष्यमित्ययं विभागो श्रुतिसूत्र-बहिर्भूतः ।

१२९ किञ्चात्मब्रह्मादिशब्दावाच्यत्वे ब्रह्मणोऽनात्मत्वादिकं स्यात् । किञ्च 'तरति शोकमात्मविदि'ति आत्मशब्दवाच्यस्य ज्ञानान्मोक्षः श्रूयते । एतच्च लक्ष्यज्ञानान्मोक्षं वदता परित्यक्तं स्यात् । अतः श्रुतपरित्यागो-ऽश्रुतकल्पनं च बहुतरवाक्येषु तस्य स्याताम् ।

१३० स्वपरसंवादेन यद्यसाविदं दूषणं द्वयमपि प्रत्येकाकारेण लोकनिन्दितं स्वस्य भूषणमिति ब्रूयात् ।





१३१　तर्ह्येतादृशबहुतरदुर्घटभूषणैरलंकृतो वस्त्रहीनालङ्कारस्यानुचितत्वादन्धन्तमो नित्यदुःखं चोत्तरीयप्रधान-वस्त्रत्वेन स्वीकुर्यात् ।

१३२　इदमेव वसनद्वयमात्मशब्दोदितं भगवन्तमनङ्गीकुर्वतां निर्गुणवादिनां भविष्यतीत्यत्र प्रमाणमाह **अनन्दा इत्यादिना**।

१३४　इतश्च न मायावच्छिन्न आत्मशब्द इत्याह **हेयत्वेति** ।

१३५　'तमेवैकं जानथात्मानमि'त्यहेयत्वश्रवणात् न आत्मशब्दवाच्योऽस्ति गुणयुक्तः । 'अन्या वाचो विमुञ्चथे'ति गुणशब्दस्यामुख्यस्यात्मनो हेयत्वं श्रूयते । त्रिगुणयुतस्यापि ब्रह्मादेर्भगवत्परिवारतया ग्राह्यत्वेऽपि प्रधानतया हेयत्वमस्तीत्यदोषः ।

१३६　इतश्च न मायावच्छिन्न एव शब्दवाच्य इत्याह **पूर्णस्येत्यादिना** ।

१३७　'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत' इत्यात्मशब्दार्थस्य ब्रह्मणो मूलरूपस्यावताररूपस्य च पूर्णत्वं श्रूयमाणं मायावच्छिन्नत्वे व्याहतं स्यादित्यर्थः ।

१३८　इतश्च न शब्दावाच्यं ब्रह्मेत्याह **पदं (एवं) चेत्यादिना** । श्रुतत्वाच्चेत्यत्र सूत्रार्थप्रतिपादनपरेण च 'साक्षी चेता केवलो निर्गुणश्चे'त्यत्र निर्गुणपदवाच्यं त्रिगुणातीतब्रह्मणोऽन्यन्न किञ्चन गौणं भवितुमर्हति व्याहतत्वात् । यदि गुणाभावद्वारा निर्गुणशब्देन ब्रह्मोपलक्षितमित्युच्यते तर्हि गुणाभावोपलक्षितपदवाच्यं स्यात् ।

१३९　यदि गुणाभावोपलक्षितद्वारा तत्पदेनापि ब्रह्मोपलक्षितं तर्हि तत्राप्येवं तत्राप्येवमित्यनवस्थादिदूषणा-करत्वेन निर्गुणवादिमतं महाजनैरत्यन्तहेयं स्यात् ।

१४०　तदुक्तं कैश्चिदीक्षतेर्नाशब्दमित्यादिश्रुतत्वादित्यन्तसूत्रसन्दर्भेण जगतः प्रधानकारणत्ववादिमतं निराक्रियत इति तदयुक्तमित्याह **न चेत्यादिना**।

यदि प्रधानस्य जगत्कारणत्वमत्र निषिध्यते तर्हीक्षतेर्न प्रधानमिति सूत्रं स्यात्, न हीक्षतेर्नाशब्दमिति । न ह्यशब्दपदस्य प्रधाने रूढिरस्ति । स शब्दरहितत्वयोगश्चेदसिद्धः । साङ्ख्यैस्तदनभ्युपगमात् । नाप्यश्रौतत्व-मेवाशब्दपदोक्तम् । प्रधानस्याजामित्यादिना श्रूयमाणत्वेनाश्रौतत्वस्याभावात् । किञ्च यावच्छब्दावाच्यत्वं यद्वाचानभ्युदितमिति श्रुतिप्राप्तं न परिह्रीयते ब्रह्मणि न तावद्वेदानां समन्वयप्रतिज्ञानं वेदार्थत्वेन निराकाङ्क्षा । अतो ब्रह्मणः शब्दगोचरत्वप्रतिपादनमेवात्र पूर्वाधिकरणसङ्गतं, न तु प्रधानस्य जगत्कारणत्वनिषेधः । स च ईक्षतिकर्मव्यपदेशात्स इत्यादौ करिष्यते ।





१४१ अपि च यदि वेदवाक्यानां सर्वेषामपि लाक्षणिकत्वं ब्रह्मणि स्यात् । न तर्हि समन्वयप्रतिज्ञा घटेत । न ह्यमुख्यार्थे समीचीनोऽन्वयो वाक्यस्य ।

१४२ समन्वयश्च जगत्कारणे ब्रह्मणि सूत्रकृता प्रतिज्ञातः । तदेव जिज्ञास्यत्वेन प्रतिज्ञातम् । तस्मात् 'अथातो ब्रह्मजिज्ञासे'त्यादिसूत्रेषु न निर्गुणस्यावकाशः सम्भवति ।

१४३ न च लाक्षणिकत्वेनावकाश इति वाच्यम् । मुख्यपरित्यागे कारणाभावात् ।

१४४ न च वेदान्तावेद्यस्यापि निर्गुणस्य वस्तुनो मानान्तरेण सिद्धिर्वाच्या । अवाच्यत्वादज्ञेयत्वान्निर्विशेषत्वाच्च । न ह्यवाच्यत्वादिलक्षणं किञ्चिन्मेयं दृष्टम् ।

१४५ किञ्चाप्रमेयत्वान्निर्गुणस्य लक्षणावृत्तिरपि शास्त्रस्य तस्मिन्न स्यात् । न ह्यप्रमेयं किञ्चित्क्वचिल्लाक्षणिकं दृष्टम् । तस्माच्छास्त्रेण प्रतिज्ञास्यं गुणपूर्णं वासुदेवाख्यमेव युक्तम् ।

१४७ यदि विज्ञेयत्वादिशून्यं निष्प्रमाणकमपि निर्गुणमवश्यमभ्युपगम्यते । अभ्युपगम्यतां नाम मनस्येव । किं त्वेतच्छास्त्रप्रतिपाद्यमिति नोच्यताम् ।

१५१ यद्यशब्दं वेद्यत्वेनाङ्गीकृतमप्येतच्छास्त्रवेद्यमित्युच्यते तर्हि स्वोक्तिविरोधादेतच्छास्त्रापहारमात्रं स्यात् । न त्वर्थसिद्धिः ।

१५३ तर्हि ब्रह्मणोऽवाच्यत्ववचनस्य का गतिरित्यत आह **अद्भुतत्वादिति** ।

अतः सिद्धं शास्त्रगोचरत्वं ब्रह्मणः ।

**॥ इति ईक्षत्यधिकरणम् ॥ ५ ॥**





॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## श्रीमदानन्दतीर्थभगवत्पादविरचित-श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीका

## श्रीत्रिविक्रमपण्डिताचार्यविरचिता

# नयचन्द्रिका

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

विष्णुं सम्पूर्णविज्ञानपरमानन्दविग्रहम् ।
कमलाकान्तमत्यन्तमन्तर्बहिरुपास्महे ॥ १ ॥

श्रीमन्नारायणाख्यानं सज्ज्ञानानन्दलक्षणम् ।
वेदान्तवेदितौदार्यं मुख्यं ब्रह्म प्रतन्महे ॥ २ ॥

येन गोवर्धनछद्मछत्रेणात्रायि गोव्रजः ।
कृष्णं तमतसीकृष्णं वन्दे सौन्दर्यवारिधिम् ॥ ३ ॥

नमो वेदान्तराद्धान्तसूक्तिरत्नाकरात्मने ।
श्रीमदानन्दतीर्थाख्यभगवद्दुग्धसिन्धवे ॥ ४ ॥

त्रिविक्रमार्यवर्याणां गुरूणां पादरेणवः ।
दिशन्तु शश्वदस्माकं शुद्धिं बुद्धेर्गिरामपि ॥ ५ ॥

तं पद्मनाभतीर्थाब्धिं पद्मनाभप्रियं भजे ।
सन्न्यायरत्नावल्याख्याद्यतो मध्वेन्दुबृंहितात् ॥ ६ ॥

अनुव्याख्यासुधाम्बोधौ गम्भीरे विहरन्ति ये ।
तेषां परमहंसानां पद्मच्छायामुपास्महे ॥ ७ ॥

सन्न्यायरत्नावलयः सन्न्यायामृतबिन्दवः ।
श्रीमत्तत्वप्रदीपाश्च सन्तु नश्शरणप्रदाः ॥ ८ ॥

श्रीमद्गुरूणां कारुण्यकल्पवृक्षसमाश्रयात् ।
अभिप्रायोऽनुभाष्यस्य यावद्बोधमनूद्यते ॥ ९ ॥





१* 'नारायणं निखिलपूर्णगुणैकदेहं निर्दोषमाप्यतममप्यखिलैः सुवाक्यैः । अस्योद्भवादिदमशेषविशेषतोऽपि वन्द्यं सदा प्रियतमं मम सन्नमामी'त्यनेन अनुभाष्यमारभमाणो भगवानभीष्टदेवतामभिष्टुवन्नमस्करोति शिष्टाचार-परिरक्षणार्थम् । अनेनैवाधिकारिविषयप्रयोजनानि तत्सम्बन्धं च सूचयति । प्रथमत एव प्रयोजनस्यावगतौ प्रवृत्ति-स्सम्भवतीति तत्सूच्यते । अस्योद्भवादिदमित्यादिशब्देन मोक्षस्यापि विवक्षितत्वात् निर्दुःखसुखात्मके मोक्षे प्रयोजने सर्वेषामपि प्रवृत्तिः प्रसज्यते । तद्व्युदासायाधिकारिणं विशिनष्टि **सन्नमामीति** । सन्नमामीत्यष्टाङ्गविशिष्ट एव प्रणामो विवक्षितः । 'उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरित' इत्यष्टाङ्गान्युच्यन्ते । उरआदिना प्रणिपातः । मनसा सद्भक्तिकं स्मरणम् । वचसा वेदमन्त्रवचनम् । एवं च ह्यध्ययनवान् सुभक्तिमानेव अधिकारीत्युक्तं भवति । अहं सन्नमामीत्युक्ते सत्यप्यनन्ताधिकारिण इति सूचितं भवति । 'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव चे'ति वचना-दाचारस्यापि धर्ममूलत्वाच्छास्त्रप्रयोजनं च शास्त्रप्रतिपाद्याद्भवितुमर्हति । तदर्थं प्रतिपाद्यं विषयमपि सूचयति **नारायणमिति** । एवं प्रतिपादकत्वं शास्त्रस्य प्रतिपाद्यत्वं नारायणस्य प्रयोजनं दातृदेयभावं च देयत्वं ग्राह्यत्वं प्रयोजनस्य गृहीतृत्वं चाधिकारिण इति सम्बन्धश्च सूचितः । एतेऽर्था भगवतैव प्रथमसूत्रे ह्याक्षिप्ताः । अथ-शब्देन अधिकारि, अतःशब्देन प्रयोजनं, ब्रह्मशब्देन विषयः, प्रतिपाद्यप्रतिपादकत्वलक्षणसम्बन्धश्च । नारायणं सन्नमामीत्यन्वयः ।

निखिलपूर्णगुणैकदेहमित्यादिविशेषणचतुष्टयेन अध्यायचतुष्टयोपदिष्टमुपक्षिपति । (१) निखिलैः पूर्णगुणै-रभिन्नदेहं गुणात्मकदेहमित्यर्थः । तत्तत्समन्वयोक्त्या गुणपूर्णत्वमेव हि प्रथमाध्याये विवक्षितम् । (२) द्वितीये तत्तद्विरोधपरिहारेण दोषरहितत्वं विवक्षितम् । तच्चाह निर्दोषमिति । (३) सुवाक्यैः सुष्ठुवाक्यैः । आप्यतमं ज्ञेयतमम् । परब्रह्मण्यधिकृततात्पर्यत्वेन सुनिश्चितवेदवाक्याः सुवाक्याः पुरुषः सुवाक्याः । ज्ञानवचनेनैव तत्साधनवैराग्यभक्त्युपायोऽपि सूचितो भवति । अयमेव हि तृतीयाध्यायार्थः । (४) फलाध्यायार्थो मोक्षश्च अशेषविशेषतोऽप्यस्योद्भवादिदमिति सूच्यते ।

अस्य जगत उद्भवस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षप्रदमशेषैरपि विशेषैः सहेत्यर्थः । सन्ति ह्युद्भवादिविशेषा ब्रह्मादिषु तारतम्यनिबन्धनाः प्रतिक्षणविशेषाश्च मोक्षादिषु देवत्वादियोग्यताविशेषाश्च । अशेषविशेषतोऽपीत्युपरि सम्बध्यते । अशेषैर्ज्ञानानन्दादिभिर्विशेषैश्च सह मम सदा वन्द्यं प्रियतमम् । वन्दनं स्तुतिः प्रणामो वा । वदि अभिवादनस्तुत्योरिति धातुः । अनेनानन्तगुणस्य नारायणस्य प्रवचनमुपास्तौ चात्मनो मुख्याधिकारित्वं सूचयति । भक्तिं च स्नेहबहुमानरूपाम् । अत एव तस्येष्टदेवतात्वं च । प्रियतमत्वस्य विशिष्टे । स्नेहविषयत्वस्य सख्यादिष्वपि सम्भवात्तद्व्यवच्छेदाय वन्द्यमिति ॥ १ ॥

२ बहुमानविषयत्वं ह्यभिप्रेयते **तमेवेत्यादिना** । तामेव शास्त्रप्रतिपाद्यामभीष्टदेवताम् । शास्त्रगुरुत्वेन जगद्गुरूणां ब्रह्मादीनां विशेषतः स्वतः स्वगुरुत्वेनापि प्रणम्य ग्रन्थारम्भं प्रतिजानीते । शास्त्रं भावयतीति शास्त्र-

* प्रतिपरिच्छेदं प्रारम्भे सूचिताः सङ्ख्याः अनुव्याख्यानश्लोकसङ्ख्याः इति ज्ञातव्यम् ।





प्रभवः शास्त्रकर्ता । अञ्जसैव सम्यगेवेत्यनेन सर्वत्रापि मुख्यगुरुत्वं प्रतीयते । परमेत्याख्या यस्या विद्यायाः सा परमाख्यविद्या । ब्रह्ममीमांसेत्यर्थः । अथ परा यया तदक्षरमधिगम्यत इति श्रुतेः । अन्वपि च अहमेव भाष्यकारणमपि अहमेव च व्याख्यां करोमि । अन्यस्य शक्त्यभावादिति चशब्दः ॥ २ ॥

३ सूत्राणां प्रामाण्यं साधयितुमाप्तिमूलत्वादिकं दर्शयति **प्रादुर्भूत इति** ॥ ३ ॥

४ ब्रह्मादीनां शास्त्रगुरूणां गुरुत्वादस्य तद्वचनविरोधो नास्ति । प्रातिकूल्ये स्वगुरुविरोधात् तस्यैव अप्रामाण्यप्राप्तेः । शास्त्राणां भारतादीनां प्रभवत्वादस्य न तद्विरोधोऽपि । एवंभूतो बादरायण इति यतोऽतः तदुदितमाप्तिमूलत्वेन मानम् । **तदर्थतः** तत्प्रयोजनाय । तथा हि । हरिरेव व्यासरूपो वक्ता । ज्ञानवक्त्राभावादापदि विरिञ्चादीनामर्थनाप्रसङ्गः अतः स्त एव अजादयः श्रोतारोऽपि ।

५ ननु भगवताऽजाद्यर्थनाप्रसङ्गे तेभ्य उदितमित्येतावता कथमाप्तिमूलत्वमित्यत आह **वक्त्रीति** । वक्तृश्रोतृप्रसक्तीनामनुकूलताऽऽप्तिरिति यत्तस्मादेव । अनुकूलताऽऽप्तिरित्युक्तेऽनुकूलतयाऽऽप्तिरित्यर्थः । 'स वै बलं बलिनां चापरेषामि'तिवत् निमित्तनैमित्तिकयोरभेदव्यवहारसम्भवात् वक्त्रादीनामेकतमस्याप्यननुकूलत्वेऽपि आप्तिः न सङ्गच्छते । जिनादिवक्तृवाक्यानामप्रामाण्योपलब्धेः । नर्मादिप्रसङ्गे स्त्रीजने श्रोतरि वाऽनृतवचनस्य अदूषणत्वाच्च । 'न नर्मयुक्तमनृतं हिनस्ति न स्त्रीषु राजन्न विवाहकाले । प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानी'ति भारतोक्तन्यायेनाप्तवाक्यतया श्रुतिभिर्लिङ्गैश्चार्थनिर्णायकत्वाच्छ्रुतिमूलतया युक्तिमूलतया चैकधाऽन्यत्र गौतमादिसूत्रेषु स्वयं कृताऽपि तद्व्याख्या भाष्यरूपेण तत्र न किञ्चिदप्यनुक्तम् । तथाऽपि पुनः क्रियते **स्पष्टतार्थतः** स्पष्टत्वप्रयोजनाय ॥ ५-७ ॥

८ 'अथातो ब्रह्मजिज्ञासे'त्यादिसूत्रं व्याख्यायते **तत्रेत्यादिना** । तत्र परविद्यायां वर्तमानं ताराथमूलत्वं सर्वशास्त्रस्यापीष्यते । न केवलं प्रथमसूत्रस्यापि तदर्थत्वेनानुसन्धेय इत्यर्थः । तारार्थे गुणपूर्णत्व एव सर्वत्र तात्पर्यात् । अथशब्दार्थस्य मङ्गलस्यापि सर्वत्र विवक्षितत्वात् । सर्वत्र शब्दतोऽप्यनुगतत्वादोङ्कारः पृथगेवोच्चार्यते । नाथशब्दवत्सूत्रे निबद्धः । तस्मात्प्रणवानन्तरमध्ययनस्य विरामे सत्येवाध्ययनार्थं पुनरोङ्कुर्वते । 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते । अनोङ्कृतमासुरं भवती'ति वचनाच्च ।

९ तारब्रह्मशब्दयोरर्थमाह **ओतत्वेति** । यो नारायणपदोदितो विष्णुः स एवास्य ब्रह्मशब्दार्थ इति । अनयोः शब्दयोर्गुणपूर्तिवाचकत्वेन पर्यायत्वात् । असावोङ्कारश्च तद्गुणोततां वक्ति हि ।

१० स एव गायत्रीशब्दप्रतिपाद्यत्वेन भर्गशब्दार्थः । व्याहृतीनां च स एवार्थः । सोऽयं सहस्रशीर्षा पुरुष इत्युच्यते । पापस्य भञ्जनाद्भर्गः पुरुप्राणत्वात् पुरुषः । 'षकारः प्राण आत्मे'ति हि श्रुतिः ।

११ एवमोङ्काराद्यशेषवेदार्थभूतोऽयं नारायणोऽत्र जिज्ञास्यो विधीयते ।





११ अतःशब्दार्थमाह **ज्ञानीति** । 'प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति मामि'ति भागवतवाक्यं ज्ञानस्य प्रसादसाधनत्वे प्रमाणम् । 'तमेवं विद्वानमृत इह भवती'ति हि श्रुतिर्ज्ञानस्य प्रसादद्वारेण मोक्षसाधनत्वे (१२) 'यमेवैष वृणुते तेन लभ्य' इति प्रसादस्य मोक्षसाधनत्वे, आदिशब्दात् 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति जिज्ञासाया ज्ञानसाधनत्वे प्रमाणम् । एवंभूतप्रसादादेव मुच्यत इति यतः अतो ब्रह्मजिज्ञासा कर्तव्येति ।

१३ ननु ज्ञानादेवापवर्ग इत्यादेर्ज्ञानस्वभावादेव मोक्षसम्भवात् किंप्रसादेनेत्यत आह **द्रव्यमिति** ।

१४ अत्राह बन्धस्य सत्यत्वे निवृत्त्ययोगान्मुक्त्यर्थं तन्मिथ्यात्वमपेक्ष्यम्, ज्ञानबाध्यत्वाङ्गीकारात् ।

१५ सत्यस्य च तदयोगान्मिथ्या बन्ध इत्यत आह **अज्ञानामिति** ।

१६ अत्र ज्ञानानन्तरमपि बन्धमुक्तेः भगवत्प्रसादसाध्यत्वोक्तेः न बन्धः ।

१७ **तद्वाक्यस्येति** । बन्धो मिथ्येति वाक्यस्यापि स्यात् ।

१७ किं ममापि सत्यस्य साधकत्वमसिद्धमित्यत आह **साधकत्वमिति** ।

१९ प्रामाण्यादेः सिद्धिमिच्छता । ननु साक्षी सन्नपि निर्विशेष एव सन्निधानमात्राद्वस्तु प्रकाशयति । अतो वः सविशेषप्रमाणे नास्माकं सम्प्रतिपत्तिरित्यत आह **अविशेषस्येति** ।

२० तन्न वादिता तेषां तस्मान्न वादिता । सम्प्रतिपन्नप्रमाणाभावात् ।

२१ तस्माद्वादित्वान्यथाऽनुपपत्तिस्तर्काद्वचनव्यवहृतिः सत्या । एतस्माद्वचवहृतेः सत्यत्वाच्च व्यवहारविषयो विश्वं सत्यमित्येवागतम् । न ह्यर्थक्रियाकारिणो मिथ्यात्वं दृष्टं क्वापि ।

२२ ननु सम्मतमावयोर्व्यावहारिकसत्यस्य प्रमाणस्य साधकत्वम् । प्रातिभासिकस्यैव हि शुक्तिरजतादिवदर्थक्रियाकारित्वं न दृष्टम् । न च तावता परमार्थसत्यत्वं देशकालादिभिः सह बाधोपपत्तेरित्यत्रोच्यते । **व्यवहारसत इति** । **पूर्ववत्** असम्प्रतिपन्नम् ।

२३ **उक्तप्रकारेण** प्रमाणविकलत्वात् । अथ असतः ख्यात्ययोगात् सतो बाधायोगात् ख्यातिबाधान्यथाऽनुपपत्त्या सदसद्भ्यामनिर्वचनीयं हि शुक्तिरजतादिवदेव ज्ञानबाध्यत्वाद्बन्धो वाक्यं च तथा स्यादित्यत्र उच्यते **वैलक्षण्यमिति** । **एतेन** प्रमाणविकल्पन्यायेन ।





२४ **वैलक्षण्यं सत** इत्यादेरयमर्थः— सतो वैलक्षण्यम् असत इति असतो वैलक्षण्यं सत इति भावाभावात्मकस्य विश्वस्य स्वयं रूपं सन् न च वस्त्वन्तरम् । अतो भेदवादिनः कुतोऽनिष्टम् । सतो ब्रह्मणोऽसतः शशविषाणादेरिति वा । यदि सद्वैलक्षण्यं नाम सर्वस्मात्सतो वैलक्षण्यमित्युच्यते । तर्हि सतां भेदसंस्थितिः ।

२५ अथ नायमेकविशेषो विवक्ष्यते । यस्मात्कस्माच्चित्सतो विलक्षणमित्यत आह **सन्मात्रत्वमिति** । यच्चोक्तं शुक्तिरजतवज्ज्ञानबाध्यत्वं सदसद्वैलक्षण्यस्य हेतुत्वेन तदसिद्धम् । जगतो विनाशातिरिक्तस्य बाध्यत्वस्यास्माभिरनङ्गीकृतत्वात् ।

२६ तर्हि शुक्तिरजते किं बाध्यत्वमित्यत आह **विज्ञातस्येति** ।

२८ नासतोऽसत्त्वेन ख्यातिर्निषिध्यते । किन्तु सत्त्वेनेत्यत आह **अन्यथात्वमिति** । अन्यथात्वं शुक्ते रजतत्वमसत् । तस्माद्भ्रान्तावेव प्रतीयते न त्वभ्रान्तौ । एवं चासत एव रजतसत्यत्वस्य प्रतीतता ।

२९ बन्धमिथ्यात्ववादिनामधिकारादिकं न सम्भवतीत्याह **निर्विशेष इति** । स्वयंप्रकाशानात्मस्वरूपमज्ञानावृतम् । नापि तदैक्यविशेषः । निर्विशेषत्वात् । आत्मनि निर्विशेषे स्वयंप्रकाशे सति तस्याज्ञानावृतं किं वस्तु भवेत् । तस्मिन्वा किमज्ञानावृतं भवेत् । न हि स्वयंप्रकाशस्य तस्मिंश्चाज्ञानं सम्भवति । स्वयंप्रकाशत्वादेव ।

३० नापि आत्मैकदेशे तस्य निर्विशेषत्वादेव । नापि मिथ्याविशेषे । मिथ्याविशेषः अज्ञानापेक्षः, अज्ञानं मिथ्याविशेषापेक्षम्, इत्यन्योन्याश्रयत्वात् । सत्यात्मव्यतिरिक्ते वस्तुन्यावरकमज्ञानं तेनापि नेष्यते । दृश्यत्वभङ्गप्रसङ्गात् ।

३१ नापि जडाश्रितत्वेन सत्यस्यास्मदादिवदप्रकाशस्वरूपत्वादेव अनङ्गीकाराच्च अज्ञानस्याभावाच्छास्त्रवैय्यर्थ्यम् ।

३२ अज्ञस्याज्ञानाङ्गीकारात्तन्निवृत्त्यर्थं शास्त्रमित्यत आह **अज्ञानस्य चेति** । अज्ञानान्तरादिति कल्पने तस्यापि मिथ्यात्वमज्ञानान्तरादित्यनवस्था । तज्ज्ञानान्मिथ्यात्वम् अस्य तस्मादिति चेत् । अन्योन्याश्रयात् । अथवाऽज्ञानस्य स्वस्य स्वस्मादेव मिथ्यात्वादेवात्माश्रयता ।

३३ स्वभावाज्ञानवादस्याज्ञानकल्पितत्वं विना स्वयमेव भगवदज्ञानमिति वादस्य अविद्याया दुर्घटत्वात् भूषणत्वाङ्गीकारान्नोक्तदोष इत्यत आह **स्यादिति** । एवं चाश्रयविषयानपेक्षत्वात् अविद्याया आत्माऽप्यविद्यावत् दुर्घटः स्यात् । निवर्तते च ।





३४ अतः अज्ञानाभावात् अज्ञानि अधिकारि, अज्ञातो विषयः, अज्ञाननिवृत्तिः फलं च नास्ति मायिमते । आदिशब्दाद्गुरुशास्त्रादिकं च ।

३५ ननु 'तत्त्वमसि', 'अहं ब्रह्मास्मी'त्यादिवाक्यैर्जीवब्रह्माभेदावसितेर्न दुःखादेर्बन्धस्य सत्यत्वमित्यत आह **सत्यत्वादिति** । उक्तन्यायेन 'अहं दुःखी'त्यादिप्रत्यक्षेण प्रत्यक्षोपजीव्यप्रमाणविरोधे वा कस्याप्यर्थान्तरं परिकल्पनीयम् ।

३६ नाप्युपजीव्यस्य दौर्बल्यमित्याह **यजमानेति** । 'यजमानो वै पयः', 'यजमानः प्रस्तर' इति श्रुतेः ।

३८ **तन्मानता** तस्मिन्नर्थे प्रमाणता । ऐक्यवाक्यस्य गतिमाह **स्वातन्त्र्ये चेति** । स्वातन्त्र्ये वशीकृतग्रामजनानां पुरुषाह्वाने ग्राम आहूत इति । विशिष्टत्वे जनपदेषु विद्याविशिष्टानां ब्राह्मणानां समागमे सर्वे जनपदाः सङ्गता इति । स्थानैक्ये एकीभूता सेनारणाजिर इति । मत्यैक्ये पूर्वं परस्परविरुद्धानां ग्रामजनानां सम्मतौ तत्रैकीभूतो ग्राम इति ।

३९ **सादृश्ये** सिंहो देवदत्त इति । चित्रमुद्दिश्य अयमर्जुन इति वा । अत्राहुः । कार्यकारणलक्षणे विध्यर्थ एव । मन्त्रार्थवादात्मकानां सर्ववेदानां तात्पर्यान्निष्टसाधने सिद्धरूप इति ।

४२ अत्रोच्यते **कार्यतेति** । इष्टसाधकं कार्यमिति कार्यलक्षणमित्युच्यते चेत् तादृशं कार्यं सम्भवति नेतरत् । तस्य लक्षणासम्भवात् ।

४३ **क्रियाव्याप्यं** कृतियोग्यम् ।

४४ **तदिष्टम्** इत्यादेरयमर्थः— तस्मादिष्टं कार्यं तथा तत्साधनं च तदुभयमपि सिद्धमेव ।

४५ 'तदेतत्प्रेयः पुत्रात्प्रेयो मित्रात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मे'ति श्रुतिः । 'प्रियो हि ज्ञानिनोऽत्यर्थमहमि'ति भगवद्वचनमादिशब्दोक्तम् ।

४७ ननु व्युत्पत्तिवशाद्वाक्यार्थबोधो व्युत्पत्तिश्च वृद्धव्यवहारात् कार्य एव सम्भवति । गामानय गां बधानेत्यादिषु व्युत्पत्तिदर्शनात् कथं सिद्धार्थबोधकत्वं वाक्यस्येत्यत आह **आकाङ्क्षेति** । तस्मिन्नेवेष्ट एव ।

४८ 'तव भ्राता अपूपमत्ति, क्षीरं पिबती'त्यादौ क्षीराद्यर्थावापे तत्तच्छब्दावापात् अपूपाद्यर्थोद्वापे तच्छब्दोद्वापाच्च ।

४९ सिद्ध एव **बालो व्युत्पत्तिमप्येति** ।





५० वर्तमानत्वाद्देशकालसन्निधेराकाङ्क्षावस्तुन्यभिरुचियोग्यता । अङ्गुलिप्रसरणादिविषयताव्युत्पन्न इत्यादेरयमर्थः । एवं वर्तमानविषयेऽत्ति पिबतीत्यादिक्रियाशब्दो व्युत्पन्नः ।

५१ एष्यति पास्यतीति भविष्यद्विषये क्रियाशब्दे शब्दश्रुत् तदनन्तरमेव पुनरनादिदृष्ट्या पश्चाद्व्युत्पत्तिमेष्यति । वर्तमानादिकं क्रमादाकाङ्क्षायुक्तं तदिति यस्मात्तस्मात्कालत्रयावच्छिन्ने विधेर्व्युत्पादनं कुतः । तादृशवस्तुन एवाभावात् ।

५२ ननु क्वापि प्रथमतो भविष्यत्याकाङ्क्षोदयः तत्र तत्र व्युत्पत्तिः किं न स्यादित्यत आह **दृष्ट्वेति** । वर्तमानकाले दृष्ट्वेत्यादिपदार्थं विज्ञातवतस्तदनन्तरातीतकालेऽपि तव भ्राता पूर्वमपूपमघसदित्यादिपदार्थं च ज्ञातवतः पुनरपि कदा नु तदत्स्यामीत्याकाङ्क्षा भविष्यदर्थेऽपि स्यात् । पुनस्तद्बलादस्येत्यादिपदार्थं च गृह्णाति ।

५३ **इष्टं** सुखादिकम् । **प्रवृत्तिः** परेषां गवानयनादिरूपामिष्टसाधनप्रवृत्तिं न निषेधते ।

५४ तदाह **क्वापीति** । **तदर्था** ज्ञानार्था इति ।

५५ 'पुत्रास्ते जात' इत्यादिवाक्यात् परोक्षं ज्ञानमितश्च श्रुतेर्न कार्यपरत्वं सम्भवतीत्याह **न चेति** ।

५६ **तस्मात्** इत्यादेरयमर्थः । तस्मात् यागादिकार्यर्थे स्रुगादिवाचकवाक्यस्य स्वार्थे तात्पर्याङ्गीकारात् उपासनार्थमपि सर्वैर्गुणैरेक एवेशिताऽसावुपासितव्य इत्यादिवाक्यं ब्रह्मस्वरूपोपासनादिवाचकं स्वार्थेऽसावित्यादितात्पर्यवद्भवेत् ।

५७ नन्वस्मिन्वाक्ये इतिशब्दोन्नयः कार्ये मनो ब्रह्मेत्युपास्त इत्यादिवत् । एवं सति तदीशितृत्वादिकं विद्यत एवेति नियमो न स्यात् । मनसो ब्रह्मत्ववदविद्यमानस्यापि ध्यातुं शक्यत्वादित्यत आह **इतिशब्देति** । गार्हपत्ये जुहुयात् । यज्ञे यत्किञ्चित्स्मरणमात्रं भवेत् । 'वत्सतरीमार्जन्ति सोमक्रयणीं तया सोमं राजानं क्रीणन्ती'-त्यादिकर्मशेषमिति वाक्यान्तराणामितिशब्दाद्यवेद्यत्वादध्याहारो न सम्भवतीत्यत आह **इतिशब्देति** । आदिशब्दादुपास्य एकः परतः परो य इत्यादि । आत्मानमेवेत्यादिष्वप्यात्मेत्येवेत्यादिना समानप्रकरणत्वात् तद्गतेरितिशब्दस्य प्रयोगेऽपि विधित्सितेऽग्निवाक्येऽपि तद्विधानं समं स्यात् ।

५८ ननु नात्र साम्यम् अग्निष्टोमादिवाक्येषु इतिशब्दाश्रवणात् । उपास्तिवाक्येष्वेकत्र श्रुतस्येतिशब्दस्य अन्यत्राप्यध्याहारः स्यादेव । तथा सत्येकवाक्यत्वोपपत्तेरित्यत आह **एकेति** ।

५९ कर्मपरस्य चोपास्तिपरस्य च वेदस्य साम्येन वाक्यभेदो न युक्तः स्यादेवं चोपास्तिवाक्यात्कर्मवाक्ये चेतिशब्दाध्याहारो युक्तः स्यात् । कर्मणां परमात्मज्ञानसाधनत्वाज्ज्ञानस्य च मोक्षमहाफलहेतुत्वात् सर्ववेदस्यापि





तत्र तात्पर्यायोगः स्यात् । तत्रैव श्रूयते चेतिशब्द इत्यत आह **इति ब्रूयादिति** । वाघ्रि सुब्रह्मण्य इति ब्रूयादिति वाक्यमणिप्रकरणे समीपस्थमवगतं च।

६१ तस्मादितिशब्देत्यसति चोपासनायां ब्रह्मणि तद्गुणादिषु तात्पर्यं समस्ति । पृथक् तात्पर्यकल्पने कारकेषु क्रियायां च तात्पर्यमस्तीति कल्पने पदार्थानां प्रमाणावगतत्वं चेत् तस्मादात्मादिपदानां स्वार्थे स्वामित्वादौ तत्र तद्गुणविशिष्टोपास्त्यादौ वाक्यार्थे चेत्युभयत्र तात्पर्यं भवति।

६२ ननु मन्त्रात्मकपदात्मकवाक्यानां विधिवाक्येनैव ह्येकवाक्यता सम्भवति । तस्मात्तेषां स्वार्थैकतात्पर्यकल्पनायां वाक्यभेदः स्यादित्यत आह **पृथगिति** । तैरप्यरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणातीत्यत्रारुणया क्रीणाति पिङ्गाक्ष्या क्रीणातीत्यादिकारकपदानां क्रियापदेनान्वयोऽङ्गीक्रियते । पुनर्या वाऽरुणा सैव पिङ्गाक्षीत्यादिपार्ष्णिकान्वयोऽपि । न हि तेषामप्येतद्वाक्यभेदभयम् । तर्हि न क्वापि वाक्यभेदो नाम दोषो न स्यादित्यत आह **वाक्यभेद इति** । महावाक्यभेदाद्धि वाक्यभेदाख्यदूषणं न त्ववान्तरवाक्यबहुत्वेन ।

६४ नन्वादित्यो यूप इत्यादौ पदानां स्वार्थे तात्पर्यकल्पनायां प्रत्यक्षादिविरोधः स्यादित्यत आह **प्रत्यक्षेति**।

६६ **श्रुतिप्रामाण्ययोगतः** एवमेव श्रुतिप्रामाण्योपपत्तेः । अन्यथा श्रुतिप्रामाण्यानङ्गीकारे एतद्ग्राह्यप्रामाण्यग्राहकस्यापि तथात्वं तस्यापि तथात्वमित्यनवस्था ।

६७ **विप्रलम्भादेरिति**। आदिशब्देन काचकामलादयो दोषा विवक्षिताः।

६८ नित्यवाक्यानङ्गीकारे कर्तुरविप्रलम्भः तस्य सर्वज्ञत्वं वाक्यस्य तेन कृतत्वं तस्यार्थत्वम् इत्येवार्थाः कल्प्याः ।

७० नेदं कल्प्यतेऽनुमानेन ज्ञायत इत्याशङ्क्याह । तत्र प्रत्यनुमानमाह **न बुद्ध इति** ।

७२ अतो विप्रतिपत्त्या संशयसम्पत्तौ सत्यां वाक्यमपि सदागमरूपं परार्थानुमानरूपं वा प्रत्यक्षवदेव प्रमाणमित्यापतितम् । तथा हि । गृहीते हि धर्मिणि तद्गुणादौ क्वचित्संशये सञ्जाते यथा बलवत्प्रत्यक्षं प्रमाणं भवति । एवमागमेऽपि गुणाद्यन्वितार्थबोधकत्वनियमादत्राह । पदानि त्वेतानि स्वं स्वमर्थमुक्त्वा निवृत्तव्यापाराणि । अथेदानीमर्थाः परस्परान्वयं बोधयन्तीत्युच्यते ।

७२ **शक्तिश्चेति** । अन्यथा कल्पनागौरवं स्यात् । प्रकटितं चेदं श्रीमत्तत्त्वदीपिकायां गुरुभिः । स्वत एव अन्योन्यमन्वितानामर्थानामनन्वितेन पश्चाद्वाच्यत्वं कल्पयित्वा तेषामेवान्योन्यमन्वितानां वाक्यार्थलक्षकत्वकल्पनाद्वरमन्वितानामेव पदार्थानां वाक्यार्थत्वाश्रयणमनुभवानुकूल्यादिति । न च अशक्याभिधायित्वम् ।





अशक्यस्य पदानां वाचकशक्तेरविषयस्य वाक्यार्थस्याभिधायकत्वं सम्भवति । इदं च प्रपञ्चितं सन्न्याय-रत्नावल्यां श्रीपद्मनाभतीर्थभट्टारकैः । न च पदार्थानां वाचकत्वशक्तिमन्तरेण वाक्यार्थबोधकत्वं सम्भवति । घटोऽस्तीति वाक्यस्य पटसद्भावबोधकत्वप्रसङ्गात् । चेतनस्य विरम्यव्यापारः सम्भवति । यदि पदानामेव स्वार्थबोधकद्वारलक्षणया वाक्यार्थबोधकत्वं कल्प्यते तर्हि तेषामेव द्विधाप्रवृत्तिकल्पनाप्रसङ्गात् । न ह्यचेतनस्य विरम्यव्यापारः सम्भवतीति ॥ ७३ ॥

७४ नन्वेवं सति तत्तत्समयिभिरन्यथा नियमितां प्रमाणन्यायपरिपाटीं निराकृत्य प्रमाणन्यायसच्छिक्षां किमिति भगवत्तमो न कृतवानित्यत आह **एतदिति** ।

७५ **मानन्यायैः** प्रमाणलक्षणप्रकारैः प्रमेयशोधनं नाम ।

७७ अतः स्वत एव प्रपञ्चितत्वात् तदर्थं ब्रह्मतर्कार्थं न प्रापञ्चयत् । अत इत्यसूचयन्नपरं सर्वमेतन्न्यायजातं विदुषामनुभवतः सिद्धमित्यतोऽप्यत इति हृदिस्थत्वेनासूचयत् ।

७८ एतदप्रपञ्चने हेत्वन्तरमाह **देवैश्चेत्यादिना** ।

७९ यद्यप्यतःशब्देन प्रतिपक्षयुक्तीनामपि निराकरणं सूचितम् । तथाऽपि शास्त्रमूलत्वान्न ताः पृथगनूद्य निराकर्तव्या इत्याशङ्क्याह **एता हीति** । प्रत्यक्षार्थानामीक्षायामप्यक्षमो मायी सर्वैः पर्यनुयोज्यत्वात् तमेव पक्षप्रत्यवस्थानायाभिवीक्षते ।

८० एवमतःशब्दार्थं पर्यवस्थाप्य ब्रह्मशब्दार्थं विवृणोति **स्वयमित्यादिना** । यद्यपि मीमांसाशास्त्राणां त्रयाणामपि परस्परभेदस्तथाऽपि कर्मदेवतामीमांसयोर्ब्रह्ममीमांसाप्रतिपाद्यस्य ज्ञानस्य साधनप्रतिपादकत्वेन तदेकवाक्यत्वाच्च देवतामीमांसोदितस्यात्रोपजीव्यत्वं युक्तमेव ॥ ८२ ॥

८३ ब्रह्मशब्दस्य नारायणशब्दपर्यायत्वमस्तीत्याह **दोषारेति**।

८५ तद्वै तद्ब्रह्माहुर्बृहन्तो ह्यस्मिन्गुणा इति हि श्रुतिर्ब्रह्मशब्देनापि गुणपूर्तिमेव वदति । उक्तं श्रुतिसिद्धत्वं प्रतिपादयति **अम्भसीत्यादिना**। नारायणपदोदितो विष्णुरेव 'अम्भस्यपार' इति नारायणानुवाकादावुक्तः।

८६ नारायणत्वमेव अप्स्थत्वमित्यत्र व्याससमृतिं प्रमाणमाह। 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत' इति।

८७ निर्णयरूपिण्यामैतरेयश्रुतौ नारायण एव 'मम योनिरप्स्वन्तस्समुद्र' इति श्रियाऽऽत्मनो योनित्वेना-





प्स्वन्तरीरितो योनिर्मम कारणम् । कीदृग्भूतया कामतो विधिरुद्रादिपददात्र्या 'यं कामय' इत्यादेः । 'अस्येशाना जगतो विष्णुपत्नी । ईश्वरीं सर्वभूतानाम् । रेतस्त्वजायां कविरादधेऽजः । ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन् करवाम किं त' इत्यादेः श्रियः एव विद्यादिपददातृत्वं नान्यस्य । श्रीस्वामित्वं च विष्णोरेव । 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मिणी'ति विष्णुनाम्नैवोदितस्य तस्य तत्रोक्तं सर्वदेवाधारत्वम् । एषा तैत्तिरीयश्रुतिरुक्ता । तत्रोक्तं समुद्रमेव स्थानम् ।

८८ 'यमन्तस्समुद्रे कवयो वयन्ती'त्युक्त्वा 'ऋचोऽक्षरे परमे व्योमन् यस्मिन्देवा अधिविश्वे निषेदुरि'त्यत्र 'यदुदिदतमक्षरमिति नाम तदेव च तदक्षरे परमे प्रजा' इत्युक्त्वा 'अहं सुवे पितरमस्य मूर्धन्मम योनिरि'ति तत्रोक्तं जगत्प्रसूत्याः कारणत्वं च । 'यतः प्रसूता जगतः प्रसूती'त्युक्त्वा च 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनामि'ति तदेव ब्रह्माऽब्रवीत् ॥

**॥ इति जिज्ञासाधिकरणम् ॥ १ ॥**

* * *

## ॥ अथ जन्माधिकरणम् ॥

८९ **जन्माद्यस्य यत** इति सूत्रं विवृणोति **अन्तरित्यादिना सूक्तेन** । एवम् 'अस्य (चात्मी)वामी'यादि अम्भृण्यादिसूक्तैः नारायणानुवाकाद्युपनिषद्भिश्च । आदिशब्दात् 'जन्माद्यस्य यतोऽन्वयादितरतश्चे'त्यादिस्मृतिभिः समुद्रशायित्वादिलक्षणैर्विष्णुत्वेन परंब्रह्मत्वेन । एवं यद्ब्रह्म समुद्रशायित्वादिलक्षणैर्विष्णुत्वेन सूक्तोपनिषदादिभिरुक्तम्, तुशब्दात् यच्च जगत्कारणत्वादिलक्षणं परंब्रह्मत्वेन चोक्तम्, तदेवात्र सूत्रे लक्षणे लक्षणतः प्रदर्श्यत इत्यर्थः ।

९० 'अस्य वामी'यादीनि सूक्तानि, नारायणानुवाकादय उपनिषद उक्ता हि सृष्ट्यादयः । आसु श्रुतिषु तच्च प्रपञ्चितं तत्त्वप्रदीपिकायाम् । सा च ब्रह्मत्वविधात्री तैत्तिरीयश्रुतिः यानि लक्षणान्याह तान्येव अनेन सूत्रेणाह भगवान् । तथा हि । 'यतः प्रसूता जगतः प्रसूती', 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी'ति । प्रकृतिकालसृष्ट्यभिधानेन तस्मादेव सृष्टिरुक्ता । तदधीनत्वादितरसृष्टेः । 'यस्मिन्निदं सञ्च विचैषि', 'यस्मिन्देवा अधिविश्वे निषेदुरि'ति । स्थितवतेस्तत्पश्यन् 'विश्वा भुवनानि विद्वान् । यस्मिन्विश्वं भवत्येव लीनमि'ति ज्ञानं संहारश्च । 'विवेश भूतानि चराचराणी'त्यर्थान्नियमनम् । 'येनादित्यस्तपति तेजसा भ्राजसा चे'ति स्पष्टम् । 'ऋतस्य तन्तुं विततं विवृत्य तदपश्यत्तदभवत्प्रजासु' इत्यज्ञानं बन्धश्च । 'य एनं विदुरमृतास्ते भवन्ती'ति मोक्षः । 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मे'ति तैत्तिरीयश्रुतिः विष्णोरेव एतानि स्रष्टृत्वादीनि प्रसिद्धलक्षणान्याहेति ।





९१ अत्रैव 'तदेवाग्निस्तद्वायुरि'त्यादि देवतान्तरवचनात् तेषां ब्रह्मत्वं किं न स्यादित्यत आह **यं नामानीति** । 'नामानि सर्वाणि यमाविशन्ती'त्येतां श्रुतिं 'यं नामानि विशन्त्यद्धे'ति तदर्थवचनेन लक्ष्यते । इति श्रुतेः 'नामानि सर्वाणि विष्णोरेवे'ति यतः अतस्तस्य नामवाच्यत्वलिङ्गात् । अतो 'नामानि विश्वाभि न सन्ति लोके' इति श्रुतेश्च न मुख्यतोऽर्थः ।

९२ अतस्तदन्यस्य सर्वनामवाच्यत्वे 'सोऽरोदीत् यदरोदीत् तत् रुद्रस्य रुद्रत्वमि'त्यादिना रोदनादिदोष-वाचिनां शब्दानां च वाच्यत्वाद्दोषवत्त्वापात इत्यत आह **गुणा इति** । 'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का । चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि तथा प्रतीता' इत्यस्माद्वचनात् भगवद्विषये श्रुतेर्दोषोऽर्थो न भवेत् ।

९३ किन्तु तद्दोषस्वातन्त्र्याख्यगुण एव श्रुतेस्तात्पर्यं नैव दूषणे प्रीतिनाशकत्वात् तस्य ।

९४ अत्र हि भगवत्प्रीत्या दोषवचने तद्विरोधे प्रीतिनिरोधेन वेदवाक्यस्य मानत्वान्निष्फलत्वापाताल्लैङ्गयादीनि पुराणानि पाशुपतादीनि शास्त्राणि च विष्णोः क्वचित्पारतन्त्र्यादिदोषान्वदन्तीत्यत आह **न पुराणादीति** । पुराणादीनां श्रुतिविरुद्धेऽर्थे मानत्वं न भवेत् । तं न विषयीकुर्वन्तीत्यर्थः । पूर्वपक्षप्रकटनार्थं पाशुपतादिशास्त्रान्तरमूलत्वादेव तथा प्रतीतेः शैवान्पाशुपतांश्चक्र इत्यादेः । आदिशब्दपरिगृहीतानां पाशुपतादीनां तु श्रुतेर्विरुद्धार्थे वर्तमानानां प्रामाण्यमेव नास्ति । हरेराज्ञया मोहार्थं कृतत्वात् । त्वं च रुद्र महाबाहो मोहशास्त्राणि कारयेत्यादेः । अन्येषामपि क्वापि सर्वनामवत्त्ववचनासम्भवात् । अस्य पारतन्त्र्यादिदोषवचनसम्भवाच्च ।

९५ तेषां जगत्स्रष्टृत्वादिकं किं न स्यादित्यत आह **न सर्वेति** ।

९६ अस्ति च तेषां दोषवचनमित्याह **अज्ञानमिति** । इदं पाशुपतदूषणे स्वयमेवोदाहरिष्यति । उक्तार्थ-निगमनमुखेन ब्रह्मणो जगज्जन्मादिकारणत्वे 'एकं परञ्ज्योतिरनन्यमद्वयं स्वसंस्थया नित्यनिरस्तविक्रियन् । ब्रह्माख्यमस्योद्भवनादिहेतुभिः स्वलक्षणैर्लक्षितभावनिर्वृतिमि'ति स्वयं सूत्रकारो भगवानेव भागवतेऽब्रवीत् । एकं प्रधानं परं विलक्षणम् । अनन्यमन्तर्भेदरहितम् । अद्वयं समाधिकरहितम् । स्वसंस्थया स्वरूपस्थित्या ।

९८ अस्य जगत उद्भवादिहेतुभिः स्वलक्षणैः स्वरूपभूतधर्मैर्लक्षितं भावनिर्वृतिरूपमात्मानं दध्यौ । भावो ज्ञानं निर्वृतिरानन्द इत्यर्थः ।

९९ ननु तत्त्वमस्यादिवाक्यैर्ब्रह्मणो जीवैक्यमङ्गीकर्तव्यम् । तच्च जन्मादिकारणत्वलक्षणस्य हेयत्व एव सम्भवति । तस्मादेतत्तटस्थलक्षणमेवेत्यत आह **अत इति** ।





१०० स्वरूपलक्षणत्वकथनादेव वाक्यस्य विषयान्तरं स्वयमेव वक्ष्यति । **हिताक्रियादिदोषं इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरिति** जिज्ञास्य ब्रह्मणो निर्गुणत्वमनेन सूत्रेण प्रभुणैव निषिद्धम् । तत्त्वमस्यादिवाक्यैर्ब्रह्मणो जीवैक्यं प्रतिपाद्यते । तच्च तयोः परस्परविरुद्धधर्मिकत्वान्मुख्यार्थाङ्गीकारे न सम्भवति । तस्माद्ब्रह्मगुणानां जगत्कारणत्वादीनामेव जीवगुणानां दुःखत्वादीनां च मञ्चाः क्रोशन्तीत्यादिवज्जहल्लक्षणया ब्रह्मणि वृत्तेर्मुख्यतो निर्गुणं तदित्यत आह **अतो जीवैक्यमिति** । **इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरिति** वक्ष्यति ।

१०१ भवेदेतज्जीवब्रह्मणोर्भेदाङ्गीकारेणैव यथाश्रुतगुणवत्त्वेन मुख्यार्थस्य सम्भवे कुतो लक्षणावकाशः । एवंविधा लक्षणा स्वयमपि कुतः सम्भवेत् । जहदजहद्रूपेणानुपलब्धत्वात् ।

१०२ ननूपलभ्यते सोऽयं देवदत्त इत्यादौ । तत्र तत्पदार्थात् तद्देशकालविशिष्टत्वम् एतत्पदार्थात् एतद्देशकालविशिष्टत्वमिति चापहाय देवदत्तस्य स्वरूपमात्रैक्यं लक्ष्यते । न ह्येकस्मिन्नेवार्थे यौगपद्येन तदुभयं सम्भवति । परस्परविरोधादिति । मैवम् । उक्तरीत्या जिज्ञास्यब्रह्मणः सदैव गुणवत्त्वे प्राप्ते पराभिमतं निर्गुणं सदसद्भिन्नस्य तस्य खपुष्पवदनुपलम्भान्मिथ्यागुणाः स्युर्नामेत्यत आह **न चेति** । अथवा यदि निर्गुणत्वमिष्यते तर्हि पारिशेष्यादासुरत्वं स्यात् । असुराणामपि शोभनगुणहीनत्वेन निर्गुणत्वात् । लक्ष्यलक्षणयोर्भेदे तयोः सम्बन्धापेक्षत्वात् । तत्सम्बन्धस्य च सम्बन्धान्तरापेक्षयाऽनवस्थानात् । अभेदे च लक्ष्यमात्रस्य चाविशेषादभिमतभङ्गः । भेदाभेदपक्षे स्वव्याहतिर्दोषद्वयापातश्च । इत्थं दूषणविवक्षया मायिनेति पृष्टेऽस्माभिरस्यैव दूषणत्वविवक्षयैक्यवता भेदो वेत्यादि पृष्टे सति तदैक्यस्य गतिरेव न विद्यते । न त्वस्मन्मते लक्ष्यलक्षणयोर्व्याहतिः ।

१०४ अत्राभेदे विशेषाङ्गीकारेणाविरोधात् दूषणान्तरं चाह **ऐक्याभेदे नेति** । ऐक्यवता चैतन्येनैक्यस्याभेदे तदैक्यं स्वयंप्रकाशत्वाच्छास्त्रेण न ज्ञेयम् ।

१०५ भेदे त्वैक्यस्य मिथ्यात्वमेष्टव्यम् । अन्यथाऽद्वैतहानेः । तथा सति च बलादपि भेदस्य सत्यत्वं स्यात् । परस्परविरुद्धयोरेकतरनिषेधस्य अन्यतरविध्यवधिकत्वात् । ऐक्यवतोर्भेदाभेदौ यद्यङ्गीक्रियेते तर्हि दोषद्वयादिति सिद्धत्वात् । दूषणान्तरमप्याह । तयोरपि भेदापेक्षत्वात् तयोरपि तथात्वं स्यादित्यनवस्थितिः ।

१०६ ऐक्यस्य स्वनिर्वाहकता चेत् स्यात् स्वनिर्वाहकशब्दस्य स्वेन स्वयं वाह्यं स्वस्य स्वयं वाहकमित्यर्थः । तत्र वाह्यं वाहकमित्युभयरूपः शब्दो निर्विशेषैकार्थवृत्तित्वात् पर्यायः स्यात् । नो चेदभेदवान्वा स्यात् । पर्यायपक्षे वाह्यवाहकयोरैक्यस्योक्तत्वात् । अन्यतरापेक्षया भेदापातात् । सम्बन्धापेक्षया भेदवत्पक्षे च सम्बन्धापेक्षया अनवस्था ।

१०७ सत्येत्यादेरयमर्थः । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति वाक्याभिप्रेतया व्यावृत्त्या प्रयोजनं नास्ति । एवमुक्तन्यायेन व्यावृत्तस्य वस्तुनोऽविशेषत्वे । तथा च अभ्युपगतम् अयं निर्विशेषं खण्डितं दूषितम् । तथा हि ।





सत्यज्ञानादिपदैर्ब्रह्मणोऽध्यस्तात् तद्रूपानृतत्वादेर्व्यावृत्तिर्विवक्ष्यते । तत्र ब्रह्मपदेनाब्रह्मताव्यावृत्त्या यदेव च रूपं प्रतीतं सत्यादिपदैरनृतादिता व्यावृत्तावपि तदेवाप्रतीतम् । अतो विशिष्टं चाविशिष्टं चेदपसिद्धान्तः । तदेव चेत् ब्रह्मपदेनैव सिद्धत्वात् पदान्तरवैय्यर्थ्येन वाक्यस्यैवाभावः । अत एव वाक्यार्थो न स्यात् ।

१०८ एतेन वाक्यार्थस्य विशिष्टत्वनियमेन ब्रह्म निर्विशेषं मूकोऽहमितिवद्भवेत् । व्याहतेर्निर्विशेषत्वापातात् । अन्यथाऽनुपपत्तिबलाद्विशेषविशेषिणोर्भेदे सम्बन्धापेक्षयाऽनवस्था । अभेदे विशेषिमात्रमिति निर्विशेषविशेषिणौ । भेदाभेदे स्वव्याहतिः । अतो गत्यन्तराभावान्न परमार्थः सम्भवति । इष्येते चेन्माययाऽवकाशः । तस्य प्राङ्निरस्तत्वाच्च ।

१०९ विशेषलक्षणमाह **भेदेति**।

११२ 'एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति'। पृथग्दृष्टांस्तानन्वेव विपरीतं धावति । तद्दर्शनानन्तरमेव विपरीतां गतिं गच्छतीत्यर्थः । **तदभेदः** गुणिनो विष्णोर्गुणाभेदः ॥ २ ॥

**॥ इति जन्माधिकरणम् ॥**

***

# ॥ अथ शास्त्रयोनित्वाधिकरणम् ॥

११२ रुद्रादेरपि जगज्जन्मादिकारणत्वमाशङ्क्य तत्परिहारायाह **शैवादीति** । अयमर्थः । क्वापि दृष्टविषयं फलं शैवाद्यागमतः सम्प्राप्तमित्यागमोदितानुमानोपलब्धमित्यतः।

११३ **तद्वाक्योपमया** तत्फलज्ञातवाक्योपमया । तथा चायं प्रयोगः । शैवाद्यागमः प्रमाणम् ईशवाक्यत्वात् सम्प्रतिपन्नवाक्यवदिति चेन्न । तस्मिन्नागम एव गतेन क्वचिद्दृष्टफले व्यभिचारिवाक्यान्तरेण दृष्टान्तीभूतेन । विमत आगमः प्रामाण्यनियतो न भवति। **ईशवाक्यत्वत इति**।

११४ ननु विमतं सकर्तृकं कार्यत्वाद्घटवदित्यनुमानेन जगत्कर्तेश्वरः सिद्ध्यति । पक्षधर्मताबलेन तस्य सर्वज्ञत्वं सिद्ध्यतीत्यत आह **न पृथगिति** । न बुद्ध इत्यादिपूर्वोक्तेन ।

११५ **एतेन** प्रमाणान्तरभावेन। 'नावेदविन्मनुते', 'नैषा तर्केण मतिरापनेया', 'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ती'ति।

११६ न च कार्यत्वहेतोः पक्षधर्मताबलात् सार्वज्ञसिद्धिरित्यत आह **नेति** ।

११६ **आदि**शब्दात् वृक्षकृत्त्वं लौकिककर्तृचेष्टोत्पत्तिकवनादीतरकर्ताऽत्र विवक्षितः ।

११७ सूचितमनुमानं प्रयुङ्क्ते **वृक्षकृदिति** । न हि चैत्रोऽपि स्वावरोपितं सविटपशिफादलत्वेनाखिलं वेत्ति । ईदृशागमनिरपेक्षया गोवत्सरसवत् पञ्चमरसवदित्यतिप्रसङ्गानुमाने दृष्टान्ताः । तत ईशानुमानाभासत्वम् ॥ ३ ॥

**॥ इति शास्त्रयोनित्वाधिकरणम् ॥**

***

## ॥ अथ समन्वयाधिकरणम् ॥

१२० तत्तु समन्वयादित्यस्यार्थमाह **त एवेत्यादिना** ॥ ४ ॥

**॥ इति समन्वयाधिकरणम् ॥**

***

## ॥ अथ ईक्षत्यधिकरणम् ॥

१२१ 'यतो वाचो निवर्तन्त' इत्यादिना ब्रह्मणः शब्दागोचरत्वात् इत्यादियोगात् अन्ययोगव्यवच्छेदेनोदितं शास्त्रगम्यत्वं नोपपद्यते । अवाच्यत्वादेव शब्दप्रवृत्तिहेतवः स्रष्टृत्वादयो गुणाश्च न सम्भवेयुः अतो निर्विशेषस्य तस्य कथं जिज्ञासा सञ्जाघटीति । न चैवम् । तत्र व्यवहारलोपो लक्षणया वृत्त्या तत्र वेदान्तवृत्तेरित्यत्र प्रतिविधीयते **ईक्षणीयत्वत इति** । 'स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षत' इत्यादिश्रुतावीक्षणीयत्वमुच्यते । ईक्षणीयत्वं वेदैकगम्यस्यावचनेनेक्षणीयत्वम् । 'श्रुत्वाऽऽत्मानं मतिपूर्वं ह्युपास्यैहैव दृष्टिं परमस्य विन्देदि'ति श्रुतेः श्रुत्युपदिष्टस्य श्रवणादिनैव दर्शनोक्तेः । अन्यथावाच्यत्वाभावे लक्ष्यत्वं क्वापि न दृष्टं हीति पुरुषादिशब्दवाच्या एव ह्यर्था मञ्चादिशब्दैर्लक्ष्या दृश्यन्ते । किं तल्लक्ष्यमित्यनवस्थितिः । 'मञ्चाः क्रोशन्ती'त्यत्र मञ्चशब्देन मञ्चसम्बद्धानां सर्वेषामपि ग्रहणप्रसक्तेः पुरुषशब्देन तद्विशिष्यते । तस्यापि लक्ष्यत्वे मञ्चादिशब्दवदेव पुरुषसम्बद्धानां ग्राहकत्वात् । तत्रापि पदविशेषे विवक्षा स्यात् । तत्राप्येवं तत्राप्येवमित्यनवस्था ।





१२२ यथा प्रसिद्धमाधुर्यादिशब्दसादृश्येन अप्रसिद्धमाधुर्यादिकमवचनेनैव लक्ष्यते । एवमवाच्यस्यापिं लक्षणा सम्भवतीत्यत आह **माधुर्येति** । चशब्देन माधुर्यादिविशेष इत्यादिशब्दैर्वा । 'विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम् । गुडस्य पनसादीनां निर्हारीत्यभिधीयत' इत्यादि सूदशास्त्रे ।

१२३ ननु 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यत्र अनृतत्वादिव्यावृत्तं ब्रह्म हि वाक्यार्थः । न चैकैकपदेन वक्तुं शक्यते । तस्मात्तद्वाक्येन लक्ष्यत इत्यत आह **वाक्यार्थ इति** । वाक्यार्थशब्देनोदित एव भवेन्न तु लक्ष्य इति प्रागेवोक्तम् ।

१२३ यतो वाच इत्यादिपदैः ।

१२४ न मूकोऽहमितिवत् स्वव्याहतम् ।

१२५ **गौणार्थे** यत्र वेदे । **यः** मायी ।

१२६ **शाब्दत्वं** शब्दानां मुख्यार्थवचनेन समन्वयप्रतिपादकत्वम् ।

१२७ नन्वीक्षणीयत्वेन वाच्यत्वं मायाशबलस्य ब्रह्मणो न शुद्धस्येत्याशङ्कापरिहारत्वेन गौण इत्यादेरर्थं विवृणोति **आत्मेति** । पूर्णगुणं सत्त्वादिगुणहीनम् । यदा यतो तदा ततः । यदातदेति हेत्वर्थे कालार्थे च प्रकीर्तिताविति वचनात् । 'आत्मन्येवात्मानं पश्येत्', 'स एतमेव पुरुषं ब्रह्म ततमपश्यत्', 'परात्परं पुरिशयं पुरुषमीक्षत' इत्यादिश्रुतिषु तस्मिन्नीक्षणीय एव परब्रह्मणि प्रादेशशब्दोदितं ब्रह्म कारणं जन्मादिकारणत्वेन लक्ष्यं चेति ।

१२८ यतोऽतः शुद्धस्य मुख्येक्षणीयस्य वाच्यस्यैव ब्रह्मणो निर्वाच्यमायाशबलं विना स्वेच्छयैव जगत्कारण-त्वाद्युपपत्तेर्वन्ध्यापुत्रोपममनिर्वाच्यं मायाशबलं ब्रह्म वाच्यमिति मानं विनैव कल्पयति । पुनरपि मानं विनैव वन्ध्यापुत्रोपमं पदैर्लक्ष्यमपि शुद्धमिति वदति ।

१२९ एवं वदन्नेव 'तरति शोकमात्मवित्', 'यस्यानुवित्तः प्रतिबुद्ध आत्मे'त्यादिश्रुतिषु स्वनिष्ठानां मोक्षप्रदत्वेन आत्मशब्दोदितस्य ज्ञानं मुक्तिसाधनमाह । सर्ववेदवाक्येषु स्वयमेव तावच्छब्दवाच्यत्वेन श्रुतस्य मायाशबलत्वेन श्रुतस्य त्यागः ।

१३० विचार्यमाणे कस्यामपि श्रुतावश्रुतस्य निर्विशेषस्य कल्पनं साध्यमानस्य मायिनो यदि श्रुतपरित्याग-अश्रुतकल्पनादिदोषदुर्घटमपि मतं भूषणमङ्गीक्रियते, तर्हि सर्वैर्भूषणैरलङ्कृतः स्यात् । न तु केनापि सुघटेन । तथा चासतः ख्यातिश्चेतनत्वं सतो बाधो जडत्वं मुक्तावुपपद्यते चेद्दुर्घटं सर्वमपि स्यात् । वसनहीनस्यालङ्कारस्य असमञ्जसत्वात् अन्तरीयमुत्तरीयमिति वसनद्वयं च स्यात् ॥ १३१ ॥

१३२ तत्र प्रमाणमाह **अनन्देत्यादिना** । आनन्दाद्रहिता अनन्दा अविद्वांसोऽज्ञानिनः । **अबुधाः** अन्यथाज्ञानिनः ।





१३३ **असुर्या** असुरप्राप्याः । **आत्महनः** परमात्महनः । तद्गुणनिरासिन इत्यर्थः ।

१३६ 'अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते', 'ततो भूय इव ते तमो य उ विद्यायाऽ रता' इत्यादिशब्दार्थः । 'तमेवैकं जानथ । आत्मानमन्या वाचो विमुञ्चथ । अमृतस्यैष सेतुरि'त्यहेयत्वेनोक्त आत्मा कथं गौणः । औपचारिकस्त्रिगुणसम्बन्धी वा । चतुर्मुखादीति यावत् । एवं चेत् ब्रह्मादीनां हेयत्वात्तारतम्येन भक्तिविधान-वैयर्थ्यमित्यत आह **परिवारतयेति** । ब्रह्माद्याः प्रधानत्वेन हेया अपि परिवारत्वेन ग्राह्याः ।

१३६ आत्मशब्दपर्यायेण पूर्णत्वेन वाच्यमानस्य अन्यत्र लयप्रतीतेर्मुख्यस्य मायासम्भवाच्च । गौणेऽप्यात्म-शब्दः स्यान्नामेत्यत आह **पूर्णस्येति** ।

१३७ पूर्णस्यावताररूपस्य स्वस्यैव पूर्णे मूलरूपे स्वस्मिन्नेवाप्यय उदाहृतः । नान्यस्मिन् ।

१३८ 'साक्षी चेता केवलो निर्गुणश्चे'ति सर्वभूतकारणे आत्मनि श्रुतनिर्गुण इति पदं कथं गौणं वदिष्यति । य इदं वदन्ति तद्गौणमेव । अन्यस्यागोचरत्वात् । अतो निर्गुणपदेन गुणाभावोपलक्ष्यमेव मुख्यमित्याशङ्क्य परिहरति **गुणेत्यादिना** । तदुपलक्ष्यं च पदं वाचकमासीत् । न तु लक्षकम् । तथा सत्यपसिद्धान्तः ।

१३९ तदपि लक्षकं चेत् तदपि तथैवेत्यनवस्था । एवं श्रुतहान्यादिसर्वदोषश्च ।

१४० तदैक्षतेति श्रुतेः न प्रधानमत्रोच्यते । अशब्दं हि तदिति साङ्ख्यनिराकृतिः । असौ साङ्ख्यो मायी च सम्भवति ।

१४१ समन्वयवचनेन कथान्तरावकाश इत्यत आह **समन्वय इति** । **तदभावे** शब्दगोचराभावे ।

१४२ अन्यस्य तु न कदाचित्समन्वयप्रतिपादनाधिकार इत्याह **कथमिति** । समन्वयो मुख्यवृत्तिस्तस्यैव । न तु लाक्षणिके औपचारिके स्यात् । किं मुख्यब्रह्मणो निर्गुणत्वाभावात् ।

✲ तत्र लक्षणयैव शब्दवृत्तिः सम्भवतीत्यत आह **आत्मेति** । तदेव द्वितीयसूत्रेण जन्मादिकारणत्वेनोक्ते साक्षाद्ब्रह्मण्ययोगान्ययोगव्यवच्छेदेन समन्वयमाह उत्तरसूत्राभ्याम् । तदेव प्रथमसूत्रे जिज्ञास्यमुक्तम् । अपरथो-त्तरसूत्रे यत इति परामर्शायोगात् ।

१४३ **अत्र** सूत्रे ।

१४४ मुख्यार्थस्य वाच्यार्थस्य निराकृतौ निमित्तभूतोऽसम्भवश्चेत् कथम् । नन्वशब्दमस्पर्शम् । अदृश्ये अनात्म्ये । केवलो निर्गुणश्चेत्यादीनामप्रामाण्यासम्भवस्तन्निमित्तमित्यत आह **मानेति** । अवाच्यत्वादि-लक्षणान्तरं मानैः न गम्यते । अवाच्यत्वादिलक्षणत्वादेरित्यर्थः ।





१४५ एवममेयं चेच्छास्त्रस्य तत्र लक्षणया प्रवृत्तिर्न सम्भवति । लक्षणया बुद्ध्यवतारे मेयत्वप्रसङ्गात् । अस्मद्विवक्षितं ब्रह्मैव शास्त्रार्थ इति निगमयति **तस्मादिति** ।

१४७ यदि तदगोचरं स्यादित्युच्यते तर्हि तथाऽस्तु । तद्ब्रह्म वाङ्मनसागोचरत्वादशेषविशेषतोऽपि विनिर्गतमित्यपि मा वदेन्मायावादी । न च अस्मच्छास्त्रगं तु तत् तादृशं ब्रह्म वेदान्तगं नैव स्वीक्रियते ।

१४८ अस्य ब्रह्मणो विज्ञेयत्वाद्यभावादेव शास्त्रकृत्याभावान्न वेदान्तशास्त्रं तदीयम् । किन्त्वनन्तगुणब्रह्मप्रतिपादकत्वादस्मदीयमेवासीत् । तस्यास्मच्छास्त्रस्य त्यजनं चौर्यं नाम अवाच्यत्वप्रतिपादनात् वेदान्तवाक्यमिति स्वोक्तिदूषकः ।

१५० अवाच्यं ते ब्रह्म वेदवाच्यमिति मा ब्रूयाः । असकृद्वचनं तात्पर्यार्थम् ।

१५२ श्रुतियुक्तिभ्यां च निरुत्तरकरणेन स्तम्भनं च बन्धनं नाम ।

१५३ अवाच्यत्वादिवाचकानां श्रुतीनां गतिमाह **अद्भुतत्वादिति** ॥

**॥ इति ईक्षत्यधिकरणम् ॥ ५ ॥**





॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## श्रीमदानन्दतीर्थभगवत्पादविरचित-श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीका

## श्रीशङ्करपण्डिताचार्यविरचिता

# अनुव्याख्यानसम्बन्धदीपिका

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

नत्वा श्रीविष्णुमानन्दतीर्थं सर्वगुरूनपि।
अनुव्याख्यानसम्बन्धदीपिकां प्रारभामहे ॥

१* अधिकारिणां पुरुषार्थसाधनतया शास्त्राभ्यासः कर्तव्यः। तस्याविघ्नः समग्रं तावत् नारायणनमस्कारेणैव स्यादित्यादिकं दर्शयति **नारायणमिति**।

२ न नारायणनमस्कारादेव पूर्तिः किन्तु गुरुनमस्कारादपीति स्मारयति **तमिति**।

३ अथ व्याख्येयत्वसिद्ध्यर्थम् आप्तिमूलत्वं प्रदर्श्य आप्तिमूलत्वादेव शास्त्रस्य प्रामाण्यमस्तीत्याह **प्रादुर्भूत इत्यादिना**।

५ एवं वक्त्राद्यनुकूलताप्तिरिति यत्तेन आप्तवाक्यतया श्रुत्यादिमूलतया च प्रामाण्यं सूत्राणामस्तीत्याह **वक्त्रित्यादिना**।

७ व्याख्यातस्य व्याख्या कुत इत्यत आह **स्वयमिति**।

८ यस्य व्याख्या क्रियते तत्र परविद्यायां ताराथमूलत्वं सर्वशास्त्रस्य चेष्यते इत्याह **तत्रेति**।

८ तर्हि केन हेतुना पृथगोक्रियते इत्याह **सर्वत्रेति**। तार ॐकारो हि तस्यार्थः।

---

* प्रतिपरिच्छेदं प्रारम्भे सूचिताः सङ्ख्याः अनुव्याख्यानश्लोकसङ्ख्याः इति ज्ञातव्यम्।





## ॥ जिज्ञासाधिकरणम् ॥

९ क इत्यत आह **ओतत्वेति**।

९ अथोङ्कारादि सकलशब्दार्थभूतो नारायणो ब्रह्मजिज्ञासेति जिज्ञास्यो विधीयते इत्यत आह **स इत्यादिना**।

११ किमिति जिज्ञासेति चेत् ज्ञानद्वारेण मोक्षसाधनत्वादित्याह **ज्ञानीति**।

१३ तत्र ज्ञानस्वभावादेव मुक्तिर्न तु प्रसादादित्याशङ्क्य मुक्तेः प्रसादायतनत्वं प्रतिपादयति **द्रव्यमिति** ।

१५ कश्चिद्वादी पुनरप्याह । अज्ञानकार्यस्य बन्धस्य मिथ्यात्वात् केवलं ज्ञानस्वभावादेव निवृत्तिरुपपद्यते । मिथ्यात्वानङ्गीकारे च बन्धस्य ब्रह्मवन्निवृत्त्यनुपपत्तिरिति । तत्परिहरति **अज्ञानामिति**।

१६ अनुमानेन बन्धस्य मिथ्यात्वं च न स्यादित्याह **मिथ्यात्वमिति**।

१७ विपक्षे दोषमाह **मिथ्यात्वमिति**।

१७ वाक्यं मिथ्येति चेत् तदसाधकमित्याह **मिथ्याया इति**।

१९ मिथ्याभूतस्य साधकत्वं साध्यनिर्विशेषादर्थसिद्ध्यनुपपत्तेरिति प्रकटयति **अविशेषस्येति** ।

२१ मिथ्याभूतस्य साधकता नास्तीति। यत्तस्मादभिन्य(?)वदिव्यहृतिः। सर्वापि सत्त्वं (?) .......भक्ष्येत्याह **तस्मादिति** ।

२१ व्यवहृतिसम्बन्धत्वाद्व्यावहारिकमपि सत्यमिति सम्भवतीत्याह **व्यावहारिकमिति** ।

२२ वचनस्य व्यावहारिकता साधकत्वमिति चेत् न मिथ्यात्वे पूर्ववदेव साधकत्वं न सिद्धं स्यादित्याह **व्यवहारसतश्चेति**।

२२ सद्द्वयं मिथ्या एकं सन्न मिथ्येति सन्नायं न प्रामाणिकमिति प्रकटयति **सदिति**।

२३ परमार्थव्यतिरिक्तं सन्न भवति। किन्तु सदसद्विलक्षणमेवेदं सदित्युपचारमात्रमिति न युक्तम्। उभयान्यत्वे मानाभावेनेत्यभिप्रायेणाह **वैलक्षण्यमिति**।





२४ यदि सदसद्विलक्षणमित्युच्यते तर्हि सद्विलक्षणमेकस्मात्सतो वा सर्वस्मात्सतो वा सन्मात्रतो वेति विकल्प्य क्रमेण दूषयति **वैलक्षण्यमित्यादिना** ।

२६ अस्ति हि शुक्तिरजतस्य सदसत्त्वख्यातिबाधान्यथानुपपत्तिरर्थापत्तिर्मानम् । सतो मात्रानिर्वचनीये मानाभावो वाच्य इत्यत आह **ज्ञानेति** ।

२६ सदिदं रजतमिति प्रतीतस्य रजतस्य नास्ति रजतमिति प्रत्ययेन बाधो हि दृश्यते इति चेत् न । किन्तु अयथार्थत्वस्य नाश एव तेन च प्रत्ययेन रजतमसदिति ज्ञायते । तस्मान्नासद्विलक्षणमिति प्रकटयति **विज्ञातस्येति** ।

२८ यदि नेदं रजतमिति प्रत्यय उदेति तथापि रजतमसन्न । अतः सतः ख्यात्ययोगादिति चेत् । असत्त्वेन वा सत्त्वेन व्याख्याति । निषिध्यते । आद्यं चरणं दूषयति **अन्यथात्वमिति** ।

२९ अन्यथात्वमपि अनिर्वचनीयं चेदनवस्थेत्याह **तस्येति** ।

२९ अज्ञानाभावादेव तन्निवृत्तिः प्रयोजनं च नास्त्यनेन शास्त्रेण अतश्चायुक्तमेतन्मतम् । अज्ञानमस्ति चेत् किमज्ञानं स्वयंप्रकाशो वा जडं वा । नाद्य इत्याह **निर्विशेष इति** ।

३० मिथ्याविशेष इति चेत् नेत्याह **मिथ्येति** ।

३० न द्वितीय इत्याह **न चेति** ।

३१ अप्रयोजकत्वं निगमयति **अज्ञानेति** ।

३२ यदि मिथ्या न ज्ञानमङ्गीकृतं शास्त्रसाफल्याय । तर्हि तस्या मिथ्यात्वं स्वस्मादेव । अज्ञानाच्चेदात्माश्रयत्वमन्यस्माच्चेत्यस्याप्यनादित्यनवस्था । उभाभ्यां परस्परमिथ्यात्वं चेत् अन्योन्याश्रयः । परिमिताज्ञानानामेव तेभ्य एकस्मादेकस्मादेव मिथ्यात्वकल्पनायां चक्रकमित्याह **अज्ञानस्येति** ।

३३ अज्ञानसत्यत्वे कुतो दौर्घट्यं नास्तीत्यत आह **स्वभावेति** ।

३३ अज्ञानस्य दौर्घट्यं दूषणमित्यत आह **अविद्येति** ।

३४ एवं मिथ्याभूताज्ञानसम्भवान्न कल्पिताधिकारिविषयादेरप्यभावादुपेक्ष्यः सपक्षमित्याह **अत इति** ।





३५ एवं प्रत्यक्षेण दुःखादेः सत्यत्वात् तद्विरुद्धं जीवब्रह्मैक्यं तत्त्वमस्यादिवाक्यं न वदेदिति सदृष्टान्तमाह **सत्यत्वादित्यादिना**।

३७ जीवस्य ब्रह्मत्वे श्रुतिविरोधोऽप्यस्तीत्याह **सार्वज्ञेति**।

३८ जीवब्रह्मत्वं श्रुत्यर्थो न भवतीत्युक्तम्। तन्निगमयति **उपजीव्येति**।

३८ तर्ह्यैकवाचः कुत्रार्थेऽवकाशका इत्यत आह **स्वातन्त्र्ये चेति**।

३९ एवं चेद्भेदश्रुतेरपि सावकाशत्वादैक्यश्रुत्या समबलत्वमेवेत्यत आह **अवकाशेति**।

४० भेदश्रुतेर्निरवकाशत्वमसिद्धं मिथ्याभूतभेदावकाशोपपत्तेरित्यत आह **अज्ञानेति**।

४० तत्प्रसादादेव मुच्यत इत्युक्तं निगमयति **अत इति**।

४१ प्रसादान्मुक्तिदृष्टानुसारिणी चेत्याह **यथेति**।

४२ न मुक्त्यर्थं जिज्ञासा कार्या। किन्तु कर्तव्यमनुमेयमित्येतावदेवेत्यत आह **कार्यतेति**।

४३ इष्टसाधनव्यतिरेकेण कार्यमस्तीत्युच्यते चेत् तत्खण्डयति **कार्यमित्यादिना**।

४७ कार्यान्विते वा तस्य व्युत्पत्तेः तत्रैव तात्पर्यं न सिद्ध्यतीत्यत आह **आकाङ्क्षेति** ।

४८ व्युत्पत्तिप्रकारमाह **अत्तीत्यादिना**।

४९ नानयेत्यादि वाक्यत इत्युक्तम्। कार्यस्याव्युत्पादकत्वं प्रतिपादयति **आनीयमानेति**।

५० वर्तमानार्थव्युत्पत्त्यनन्तरभाविन्या एष्यदर्थव्युत्पत्तेरिदं भावपूर्वकत्वमाह **व्युत्पन्न इति**।

५१ आकाङ्क्षादिक्रमापेक्षया विध्यर्थस्य सर्वतः चरमत्वाच्च न विधेर्व्युत्पादकत्वमित्याह **वर्तमानमिति**।

५२ अतः क्रमेण वर्तमानाद्यर्थेषु व्युत्पत्तिरिति दर्शयति **दृष्टत्वेति**।

५३ आकाङ्क्षादिना व्युत्पत्तिर्नास्ति। किञ्च कार्येन किन्त्विष्ट एवेत्याह **इष्टमिति**।

५४ ज्ञानमिष्टसाधनत्वादाकाङ्क्षत इत्याह **अपरोक्षमिति**।





५४ तर्हि किमिति चेष्टेति चेत् ज्ञानसाधनत्वादिति दर्शयति **कापीति**।

५५ परोक्षमपरोक्षं च ज्ञानमिष्टसाधनमुक्तम्। तत्रापरोक्षज्ञानं च सज्ज्ञानमुक्तम्। परोक्षज्ञानेन कुत्र सुखं दृष्टमित्यत आह **वाक्यार्थेति**।

५७ तर्हि युष्माकमप्युपास्ति कर्तव्यतापरं वाक्यं तस्मान्न वाक्यस्य तात्पर्यमिति चेत् न। कुत इति चेत् युष्माकमपि अधिकर्तव्यतापरत्वेऽपि वाक्यस्य शशशृङ्गादावतात्पर्याङ्गीकारायोगादित्यभिप्रैति। सत्यज्ञानमित्याद्युपास्तिवाक्य इति शब्दो न येन स्वार्थे तात्पर्याभावः कल्प्यते। दद्ध्यादिवाक्यस्य प्रमाणे तात्पर्यं स्यादित्याह **इतीति**।

५८ कर्मवाक्य इति शब्दो नास्ति चेदुपास्ति विषयवाक्येऽपीति शब्दोज्झितवाक्यानि सन्तीत्याह। उपास्तिवाक्यैकत्रस्थेतिशब्दमन्यत्रापि नयाम इति चेत् कर्मवाक्येऽपि सर्वत्रैकस्थेतिशब्दनीतिप्रसङ्ग इत्याह **योग इति**।

५८ उपास्तिवाक्य इतिशब्दोन्नये कर्मवाक्यैकवाक्यतोपपत्तिः स्यादिति चेत् कर्मवाक्येऽपीति शब्दोन्नये ज्ञानवाक्यैकवाक्यताप्रयोजनं स्यादित्याह **एकेति**।

५८ तर्हि सर्वमपि वाक्यं कर्तव्यतापरं स्यादित्यनेन न्यायेनैकवाक्यतायोगोऽस्त्वित्यत आह **योग इति**।

५९ उपास्तिवाक्ये क्वापि शब्दसद्भावात्सर्वत्र तनी...........त्युपपत्तिरस्ति। अग्निवाक्य एकत्रापीतिशब्दाभावात् तदुन्नीत्युपपत्तिर्नास्तीति महाकर्तव्यतायामेव योग इत्यत आह **इतीति**।

६० वाक्यस्योपास्तिकर्तव्यतायां ब्रह्मत्वभावे वा पृथक्तात्पर्यं चेत् कल्पनागौरवमित्याशङ्क्य अनुवदति **कल्पनेति**।

६२ महावाक्यपृथग्वाक्याभावान्न महातात्पर्यतः पृथक्तात्पर्यमित्यत आह **पृथगिति**।

६२ तर्हि वाक्यभेदेन दूषणं स्यादित्यत आह **अवान्तरेति**।

६३ अवान्तरवाक्यं तेषामपि सिद्धमित्याह **अङ्गीकृतत्वादिति**।

६४ पदार्थे च तात्पर्यमस्तीत्युक्तं न युज्यते। 'यजमानो वै यूप' इत्यत्र यूपपदस्य यूपार्थे तात्पर्याङ्गीकारे प्रत्यक्षविरोधादित्यत आह **प्रत्यक्षेति**।

६५ कापि चेष्टा तदर्थेति प्रस्तुतं कर्मणो ज्ञानफलत्वं निगमयति **अत इति**।





६६ श्रुतिप्रामाण्यमसिद्धमिति न मन्तव्यमित्याह **प्रत्यक्षवदिति**।

६७ वेदनित्यत्वानङ्गीकारेऽतिप्रसङ्गमाह **नेति**।

६८ अनित्यत्वेऽपि वाक्यस्य तत्कर्तुरज्ञानविप्रलम्भानङ्गीकारे तत्कृतवाक्येनापि धर्मादिसिद्धिः स्यादित्यत आह **अविप्रलम्भ इति** ।

७० न कर्तृज्ञानं कल्प्यते। किन्तु अनुमानमेवाङ्गीकृतमित्याशङ्क्य परिहरति **प्रत्यक्ष इति**।

७१ यद्यनित्यवाक्येन धर्मादिसिद्धिर्नास्ति। तर्हि धर्मादिरपि नाङ्गीकार्य इत्यत आह **अधर्मेति**।

७१ धर्माद्यनुपलब्धिर्धर्मादिसत्तां विघटयतीति चेत् तदभावानुपलब्धिरपि तदभावं विघटयेदित्याह **धर्मेति**।

७२ यदि धर्मादिसिद्धिरपौरुषेयवाक्येन तथापि शब्दानामन्विते शक्त्यभावादनन्विताभिधायित्वमेवेत्यत आह **शक्तिरिति** ।

७३ वाक्यार्थोऽन्वितः पदार्थोऽनन्वित इति कल्पनायां कल्पनागौरवं स्यादित्याह **गौरवमिति** ।

७३ अन्विताभिधानं शब्दानां अशक्यमिति न मन्तव्यमित्याह **न चेति**।

७३ अन्विताभिधानं शब्दानामशक्यमिति पक्षे वाचकत्वेन लक्षकत्वेन चेति द्विधा प्रवृत्तिः स्यादित्याह **प्रवृत्तिरिति**।

७४ यदि प्रमाणविचारायत्तत्वं ब्रह्मविचारस्य तर्हि प्रथमतः प्रमाणविचार एव कर्तव्य इत्यत आह **एतदिति**।

७५ विद्यापृथक्त्वं प्रकटयति **प्रमाणेति**।

७६ तर्कशास्त्रस्येतरकृतत्वे सति यदि तदुपजीवकः शास्त्रकर्ता तर्हि धान(?) विद्यत्वं शास्त्रकर्तुः स्यादिति संशयं नुदति **ब्रह्मतर्कमिति**।

७६ तदेव स्पष्टयति **पञ्चाशदिति**।

७८ इतोऽपि सञ्चिक्षेपेत्याह **यत इति**।

७८ इतोऽपीत्याह **देवैरिति**।

७९ इतोऽपीत्याह **एता इति**।





७९ कुतोऽवज्ञेयत्वमित्यत आह **प्रत्यक्षेति**।

८० ब्रह्मनारायणपदयोः पर्यायत्वात् ब्रह्मविष्णुरित्युक्तं स एव ब्रह्मशब्दार्थ इति । इदानीं विष्णुर्ब्रह्मेति देवशास्त्रसिद्धमित्याह **स्वयमिति**।

८१ देवशास्त्रस्यान्यथाकृतत्वात् कथं भगवतो विष्णोर्ब्रह्मत्ववचने तत्र प्राप्तिरित्यत आह **आद्यन्तमिति** ।

८२ आद्यन्तयोः स्वयंकृतत्वविशेषणान्मध्यस्यान्यकृतत्वमर्थतः प्राप्तं तत्स्पष्टयति।

**॥ इति जिज्ञासाधिकरणम् ॥**

***

# ॥ अथ जन्माधिकरणम् ॥

८९ यच्छ्रीपतित्वादिगुणविशिष्टं तदेव परब्रह्मेति श्रुतावुक्तम् । न भवत्परंब्रह्म किन्तु यत्किञ्चिदनुक्तं निर्गुणं लक्ष्यमेवेत्याशङ्कापरिहारार्थं जन्माद्यस्येति सूत्रार्थमाह **अन्तरिति** ।

९० 'जन्माद्यस्ये'त्यत्र आदिशब्दाभिप्रेतमाह **सृष्टिरिति**।

९१ विष्णोरेव सर्वसृष्ट्यादये शक्ताः इति कथं इत्यत आह **यमिति**।

९२ विष्णोरेव सर्वनामानीति वचनादन्यस्य मुख्यतो नामापि नास्तीत्याह **अत इति**।

९२ सर्वपदवाच्यत्वे दोषपदवाच्यत्वाद्दुष्टत्वं ब्रह्मणः स्यादित्यतः आह **गुणा इति** ।

९३ इतोऽपि श्रुत्यर्थो दोषो नेत्याह। दूषणेन तात्पर्यं किन्तु महागुणेष्वेवेत्याह **महातात्पर्यमिति** । इतरथा वाक्याप्रामाण्यप्रसङ्गाच्च।

९४ गुण एव तात्पर्यमिति दर्शयति **तद्विरोध इति**।

९४ दुर्गन्धवेदकेन्द्रियवदीशदोषवेदकमपि वाच्यं भवति । मानमिति न मन्तव्यम् । वाक्यविवक्षितफलस्यैव मुक्तत्वात् ईशदोषज्ञानस्य मुक्तिपरिपन्थित्वात् तदशेषकथने च उक्तफलाभावात् अमानत्वं स्यादिति दर्शयति **फलमिति** ।

९४ पुराणादेः विष्णुदूषणे तात्पर्यं दृश्यत इत्यत आह **नेति**।





९५ पुराणादौ श्रुतिविरुद्धार्थः किमिति प्रोच्यते इति चेत् परसिद्धान्तमूलत्वादित्याह **दर्शनेति** ।

९५ दर्शनान्तरं कुतः प्रमाणं न भवतीति चेत् मोहार्थं हरेराज्ञया कृतत्वादित्यभिप्रैति **मोहार्थमिति** ।

९६ क्वचिद्विष्णोरन्यस्य सर्वनामत्ववचने सति तस्यापि सृष्ट्यादिकर्तृत्वं स्यादिति संशयं नुदति । इतोऽपि हरेः स्रष्टृत्वादि युक्तमित्याह **अदोषेति** ।

९६ अन्येषामपि दोषवचनं नास्तीत्यत आह **अज्ञानमिति** ।

९७ स्रष्टृत्वादिविष्णोरेवेति निगमयति **जन्मेति** ।

९८ (स्रष्टृत्वादिकथने) न स्वलक्षणं स्रष्टृत्वादिकं किन्तु भ्रान्तिकल्पितमेवेत्याशङ्क्याह **अस्येति** ।

९९ स्रष्टृत्वादिलक्षणस्य स्वज्ञानीयसजातीयविजातीयव्यावृत्तिरूपत्वेन तत्कथनाज्जीवैक्यं निराकृतमित्युक्तम् **अत इति** । तदेव प्रकटयति **न हीति** ।

१०० विपक्षे दोषमाह **हितेति** ।

१०० स्रष्टृत्वादिकथनेन जीवब्रह्मत्वं निषिद्धमित्येतावदेव । किन्तु निर्विशेषत्वाङ्गीकाराज्जन्मादिसूत्रस्य तन्मतानुसारित्वं प्रतिषिद्धमित्यभिप्रैति **निर्गुणत्वमिति** ।

१०१ अयोदाहकत्ववदन्यागतकर्तृत्वसार्वज्ञादेः ब्रह्मण्युपरितनत्वाज्जीवब्रह्मभेदाविरोध इत्यत आह **भेदेनेति** ।

१०१ केवलो निर्गुणश्चेति श्रुतेः । कारणो लोकसाक्षीत्यादिगुणवचनस्यामुख्यार्थत्वं न मन्तव्यम् । निर्गुणपदस्य सत्त्वादिगुणराहित्यविषयत्वम् । तत एव साक्षी चेतेत्यादिपदवैयर्थ्योपपत्तेः । नित्यगुणमेव ब्रह्म । तस्मात्कथं जीवैक्यं ब्रह्मण इत्याह **कथमिति** ।

१०२ यन्नित्यगुणत्वं प्रतीयते तस्मिन्मिथ्यागुणत्वं भवत्वित्यत आह **न चेति** ।

१०३ यदा निर्गुणत्वं सर्वनामविरुद्धम् । तस्मिन्पक्षे च ब्रह्मणो निर्गुणत्वमभिमतं चेत् तदासुरत्वमेव तस्य वैदिकस्य ब्रह्मणः स्यादित्याह **निर्गुणत्वमिति** ।

१०३ यदि स्रष्टृत्वादिलक्षणस्य भेदादिविकल्पे नानुपपत्तिरुद्भाव्यते तर्हि तदैक्यमेवानुपपन्नं स्यादस्मद्ब्रह्मलक्षणं त्वनुपपन्नं न स्यादित्यभिप्रैति **लक्ष्येति** ।





१०७　यथा विशेषानङ्गीकारादैक्यसिद्धिः प्रयोजनं नासीत्तथा। तथा सत्यादिपदेऽपि प्रयोजकं तस्य नास्तीत्याह **सत्येति**।

१०८　असत्यादिलक्षणवैलक्षण्यं चास्तीतिवचने स्वव्याहतिः स्यादित्याह **निर्विशेषत्वमिति**।

१०८　निर्विशेषत्ववदव्याहतं तदा किमर्थादापततीत्यत आह **अभिन्न इति**।

१०९　भेदाभावे कथं विशेषविशेषिव्यवहार इत्यत आह **विशेषेति**।

१०९　विशेषलक्षणमाह **भेदेति**।

१११　जन्मादिसूत्रप्रस्तुतमनन्तगुणत्वं ब्रह्मणो निगमयति **अत इति**।

११२　न केवलं युक्त्या गुणभेद उदीर्यते श्रुत्यापीत्याह **एवमिति**।

**॥ इति जन्माधिकरणम् ॥ २ ॥**

***

# ॥ शास्त्रयोनित्वाधिकरणम् ॥

११२　अनुमानेन शैवाद्यागमस्य मानत्वं सिद्ध्यति। ततः शिवादीनां जगत्कारणत्वं स्यादित्याशङ्कापरिहारत्वेन शास्त्रयोनित्वादिति तत्सूत्राभिप्रायमाह **शैवेति**।

११६　न केवलं युक्तिबलादेव कारणस्य शास्त्रैकगम्यत्वम्। किन्तु वा सार्वज्ञाच्च घटकर्तुः घटज्ञानदर्शनादित्यन्त आह **वनेति**।

११७　तदेवाह **वृक्षकृदिति**।

११९　अतिप्रसङ्गानुमानं दर्शयति **वस्तुत्वादिति**।

१२०　यद्येतादृगनुमातिप्रसङ्गिनी तर्हि कानि यात्यनुमेत्यत आह **उपक्रमेति**।

**॥ इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥**

***





## ॥ समन्वयाधिकरणम् ॥

१२० उपक्रमादय एव तत्तु समन्वयादिति सूच्यन्त इत्यभिप्रैति **त इति**।

॥ इति समन्वयाधिकरणम् ॥ ४ ॥

* * *

## ॥ ईक्षत्यधिकरणम् ॥

१२१ यद्वाचानभ्युदितमित्यादि श्रुतेरवाच्यत्वं मुख्यार्थत्वासम्भव इत्याशङ्कापरिहारत्वेन 'ईक्षतेरि'त्यादि-सूत्रार्थमाह **ईक्षणीयत्वत इति** ।

१२२ अवाच्या अपि माधुर्यादिविशेषा लक्ष्यन्त इत्यत आह **माधुर्येति**।

१२३ नदीतीरे फलानि सन्तीति वाक्यार्थस्यैकैकपदवाच्यत्वाभावेऽपि लक्ष्यत्वदर्शनादेव अवाच्यस्यापि लक्ष्यत्वं युक्तमित्यत आह **वाक्यार्थ इति**।

१२३ यतो वाच इति ब्रह्मणोऽवाच्यत्वश्रवणादवाच्यं किमपि नास्तीत्यनुपपन्नमित्यत आह **यत इति**।

१२४ ब्रह्मणोच्यते। किन्तु लक्ष्यमेवेत्यत आह **येनेति**।

१२५ अपि च सर्ववेदान्तेष्वेकपदस्यापि ब्रह्मणि मुख्यवृत्तिं प्रतिपादयितुं असमर्थस्य वादिनस्तन्मार्गवर्तिनां च मीमांसकाभिमानो लज्जाकर इत्याह **एकस्येति**।

१२७ गुणाभावोपलक्षितत्वे गौणश्चेत्यादिसूत्रं विवृणोति **आत्मेति**।

१३१ दुर्घटभूषणालङ्कृतस्य तदनुरूपं वासो दर्शयति **अन्धन्तम इति**।

१३२ तत्र मानमाह **अनन्दा इति**।

१३४ निर्विशेषं लक्ष्यं मायाशबलं वाच्यमिति वदतः श्रुताश्रुतपरित्यागकल्पने स्याताम् इत्यभिप्रायेण हेयत्वेत्यादिसूत्रार्थमाह **हेयत्वेति**।





१३५ हेयत्वावचनाच्चेति चकाराहेयत्ववचनमभिप्रेतम्। तद्दर्शयति **तमेवेति**।

१३६ ब्रह्मव्यतिरिक्तानां हेयत्वे रमादीनामनाराध्यत्वमित्यत आह **परिवारतयेति**।

१३६ इतोऽपि मायाशबलं न प्रतिपाद्यमित्यभिप्रायेण स्वाप्ययादिति सूत्रं व्याख्याति **पूर्णस्येति**।

१३८ इतोऽपीत्यभिप्रायेण श्रुतत्वादिसूत्रं व्याख्याति **पदमिति**।

१३८ निर्गुणपदेनापि नोच्यते ब्रह्म। किन्तु गुणाभावोपलक्ष्यमेवेत्यत आह **गुणेति**।

१३९ इतोऽपि श्रुतं मायाशबलं नेत्यभिप्रायेण द्वारा गुणाभावोपलक्ष्यमिति पदेनापि ब्रह्मोपलक्षितं चेत् गुणाभावोपलक्ष्यपदेनोपलक्षितमिति वाच्यं स्यात्। पुनरप्येकं लक्षणायामनवस्थेत्यादिदूषणं निगमयित्वा तन्मदादपि आदरणीयत्वासम्भवं द्योतयति **अत इति**।

१४० अहो बत न हि मायावादिमतं ईक्षतेर्नाशब्दमित्यादिना निराक्रियते किन्तु सांख्यो हि निराक्रियते इत्यत आह **नेति**।

१४० कुत इति तन्निराकरणे तत्प्रयुक्तहेतोरसिद्धत्वादित्याह **न हीति**।

१४१ अथ मायावादिनिराकरणपरत्वमेव सूत्रस्य प्रकृतानुसारीति दर्शयति **समन्वय इति**।

१४२ शब्दालोचनपरत्वे लक्षणया ब्रह्मणि समन्वयेति दुर्लभ इत्याह **कथमिति**।

१४२ लक्षणया समन्वयसौलभ्यं दर्शयति **योऽसाविति**।

१४३ जिज्ञास्ये जन्मादिकारणे समन्वयस्य सूत्रितत्वाच्च न निर्विशेषनिर्गुणे वेदान्तस्यावकाश इत्याह **जन्मेति**।

१४४ लक्षणयावकाशोऽस्तीत्याशङ्क्य लक्षणा च मुख्यार्थसम्भवान्न सिद्ध्यतीत्याह **कथमिति**।

१४४ वेदान्तार्थालोचनयाश्रुतवाच्याज्ञेयनिर्गुणं ब्रह्म न सिद्धं चेदपि मानान्तरेण सिद्ध्यतीत्याशङ्कां नुदति **मानेनेति**।

१४५ इतराभिमतब्रह्मासम्भवात्। स्वाभिमतं ब्रह्मैव प्रतिपाद्यमिति निगमयति **तस्मादिति**।

१४६ यदि ब्रह्मा वाच्यं तर्हि स्थाणुवत्तूर्णीं भाव एव तस्य योग्य इत्यत आह **विज्ञेयेति**।





१४८ अवाच्यं ब्रह्मेति वदतो 'वेदान्तो वेदान्तवादित्वं चौर्यादेवाततत्त्वतः' । स्वव्याहतिदृष्टत्वादित्याह **अवाच्यमिति**।

१४९ ब्रह्मश्रुतिभिरवाच्यमिति मतं विघटितम्। अथ कथमित्यत आह **जन्मेति** ।

१५० अवाच्यत्वयज्ञानुपपत्तिं लोकानुभवम...पयति **सर्वेति**।

१५१ लोको न वाव यतिद्वयमेव वाचयाम इत्याह **मेति**।

१५२ निवारितोऽपि निरुणद्धीत्यत आह **वयमिति**।

१५३ तर्हि का वाच्यश्रुतिरित्यत आह **अद्भुतत्वादिति**।

१५४ न केवलं श्रुतिरेवेत्थं वक्ति किन्तु आह **अवाच्यमिति**।

**॥ इति ईक्षत्यधिकरणम् ॥ ५ ॥**

## ॥ इति जिज्ञासाधिकरणादिपञ्चाधिकरणानि ॥



# श्रीमन्न्यायसुधा-परिमळ-प्रशंसनम्

प्रतिवाक्यं प्रतिपदमनेकाकूतगर्भिता ।
प्रतिभाति सुधाऽथापि ग्रन्थाल्पत्वाय नोच्यते ॥

ये तु न्यायसुधापानकामुका रसिका बुधाः ।
आघ्रायेमं परिमळं सेवन्तां ते सुधामिमाम् ॥

— श्रीराघवेन्द्रतीर्थाः

**श्रीकरोऽयं ग्रन्थः । तत्र वयमेव साक्षिणः ॥**

— श्रीवादिराजतीर्थाः

यदुतापसलभ्यमनन्तभवैः तदुतोपरतत्त्वमिहैकपदात् ।
जयतीर्थकृतौ प्रवणो न पुनर्भवभाग् भवतीति मतिर्हि मम ॥

— श्रीविष्णुतीर्थाः

**सुधा वा पठनीया । वसुधा वा पालनीया ॥**

धीर श्रीराघवेन्द्र त्वदतुलरसनारङ्गनृत्यत्स्वयंभू-
योषाधम्मिल्लभारश्लथकुसुमततीस्त्वद्गिरस्सङ्गिरामः ।
याभिस्सम्मिश्रिताभिर्निरवधिवसुधा विश्रुता सा सुधाऽपि
क्षोणीगीर्वाणगम्यं परिमलमतुलं साम्प्रतं संप्रपेदे ।

— श्रीवादीन्द्रतीर्थाः

Printed at : Sudha Mudrana, Bangalore.